सम्यगनुभवसाधनं प्रमाणम् । सम्यग्ग्रहणम्[1] संशयविपर्ययापोहार्थम् ।

तिह्यमात्रगोचरतामाचरति संभावनानास्पदे च, समस्तवित्तदारादिपरित्यागरूपा न संभवति प्रवृत्तिरपवर्गमार्गे प्रत्युतानर्थसंशयो निवृत्तिहेतुरिति ससाधनापवर्गपरिनिश्चयं विपश्चितः प्रार्थयन्ते ।

प्रमाणनिश्चयाधीनो भवत्येष विनिश्चयः ।
प्रमाणनिश्चयस्तु स्याल्लक्षणस्य विनिश्चयात्

॥ प्रमाणलक्षणकथनम् ॥

तदिह प्रमाणलक्षणमेवादावुपवर्ण्यते । तत्रापि सामान्यज्ञानाधीना विशेषजिज्ञासेति प्रतिज्ञाक्रमेण प्रमाणस्य सामान्यलक्षणं प्रथममाह—**सम्यगनुभवसाधनं प्रमाणमिति** । अनुभूतिरनुभवः सम्यक्चासावनुभवः सम्यगनुभवः तस्य साध्यतेऽनेनेति साधनं करणं, तत्प्रमाणम् । अत एव प्रमीयतेऽनेनेति प्रमाणपदेऽपि व्युत्पादनमाश्रयणीयम् । नच व्युत्पत्तिलभ्येऽर्थे लक्षणाभिधानान्तरमनर्थकमिति वाच्यम् । अन्यथापि व्युत्पत्तिसम्भवे नियमाय[लक्षणात्मका]भिधानान्तरोपयोगात् । एतेन समानासमानजातीयेभ्यः प्रमाणाभासप्रमेयादिभ्यो व्यवच्छेदः प्रतिपाद्यते ।

॥ सम्यक्पदप्रयोजनकथनम् ॥

तत्र समानजातीयं व्यवच्छेद्यमाह—**सम्यग्ग्रहणं संशयविपर्यासापोहार्थमिति** । सम्यगित्यस्य ग्रहणमुपादानं संशयश्च विपर्ययश्च संशयविपर्ययौ, तयोरपोहः प्रमाणफलत्वनिरासः अर्थःप्रयोजनं यस्य तत् तथोक्तम् । यद्वा संशयविपर्ययाभ्यां सकाशात् अपोहो व्यावृत्तिरनुभवस्य तदर्थमित्यर्थः । ततस्तत्साधनानां प्रमाणताप्रतिक्षेपसिद्धिः । फलस्य च सम्यक्त्वासम्यक्त्वाभ्यां प्रमाणतदाभासयोः सम्यक्त्वासम्यक्त्वे निश्चेतुं शक्येत इति सम्यगित्येतत्फलविशेषणत्वेन व्याख्यातम् । नतु सम्यक्चतदनुभवसाधनं चेति साधनविशेषणत्वेन । सम्यक्त्वं चानुभवस्य यथार्थत्वं, तद्विपरीतत्वं चासम्यक्त्वम् तच्च संशयविपर्यययोः प्रसिद्धम् ।

1. संग्रहणम्

**तत्रानवधारणज्ञानं संशयः । स च समानधर्मानेकधर्मविप्रतिपत्त्युपलब्ध्य-**

---

॥ संशयलक्षणम् तद्घटकदलप्रयोजनं च ॥

तत्र संशयविपर्यययोः किं लक्षणम्? न खलु अज्ञातरूपं हातुमुपादातुं वा शक्यत इत्यत आह—**तत्रानवधारणज्ञानं संशय इति** । अवधृतिः अवधारणं न अवधारणमनवधारणं तदेव ज्ञानमनवधारणज्ञानं तत्र तयोः संशयविपर्यययोर्मध्ये संशयो नामानवधारणज्ञानमित्यर्थः । अवधारणव्यतिरेकिणोऽपि कुम्भादेः माभूत् प्रसङ्ग इति **ज्ञानग्रहणम्** । निश्चयस्य ज्ञानात्मनोऽपि सन्देहता मा प्रापदित्यन**व-धारणग्रहणम्** । नचैवं निर्विकल्पकस्य सर्वस्यापि सन्देहताप्रसङ्ग इति सांप्रतम् । तस्याप्यनवधारणात्मकत्वासम्भवात् । तत्तु तत्प्रभवावधारणस्मरणानुमेयं, न खल्व[न]वधारणज्ञानकारणिका स्मृतिरवधारणात्मिका संभविनी । संभवति च निर्विकल्पकोपलम्भेपि अभावादाववधारणात्मकं स्मरणमिति वर्णयिष्यति । प्रथमाक्षपा[त]भाविनोऽनुभवस्यासत्यपि विशेषदर्शनादिनिमित्ते धर्मादिकारणानुरोधेनावधारणात्मकत्वं संभवेत् । अपरथाऽनवस्थाभयात् अन्तरेण विशेषदर्शनान्तरमुपजातं विशेषदर्शनमनवधारणात्मकमिति तदनुरोधिनोऽपरस्यापि नावधारणात्मकता बोधस्य संभवतीत्यनवधारणात्मकमखिलमेव विज्ञानमापद्येत । न च [1]वक्रादिविशेषानवधारणज्ञानादवधारणं स्थाणावुपलभ्यम् । तदेवमनवद्यं सन्देहलक्षणम् ॥

तस्यैव विशेषलक्षणायाह—**स च समानधर्मानेकधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिकारणभेदात् पञ्चधा भिद्यत इति** । समानः सदृशश्चासौ धर्मः परिणाहादिः समानानां वा धर्मः सामान्यादिः[न एक]मनेकं विवक्षितजातीयम् तद्विपरीतं च । अनेकस्माद्व्यावर्तको धर्मोऽनेकधर्म इति शाकपार्थिवादिदर्शनान्मध्यम पदलोपी समासः । विरुद्धार्था प्रतिपत्तिर्विप्रतिपत्तिः, सा च पुरुषसमवायिन्यत्यन्तपरोक्षा न संशयकारणमिति तत्कार्यः परस्पराहतः प्रवादो लक्ष्यते । उपलब्धिः उपलम्भः नोपलब्धिरनुपलब्धिः उपलब्धेरभावः, समानधर्मश्चेत्यादिविग्रहेणानुपलब्धि पर्यन्तानामितरेतरयोगे द्वन्द्वः । तान्येव कारणानि तेषां भेदः । तस्माद्यः सामान्य-

---

1. विशेषणान

नुपलब्धिकारणभेदात् पञ्चधा भिद्यते । तद्यथा—समानधर्मात्किमयं

---

लक्षणलक्षितः संशयः स समानधर्मादिकारणभेदात् पञ्चधा भिद्यते पञ्चप्रकारेणे-त्यर्थः । चस्त्वर्थः । समानधर्मनिमित्तत्वेऽपि सर्वसन्देहस्यान्तर्गणिक एवापरभेद इति मतान्तरं व्युदस्यति । यथैतत्तथोपपादयिष्यामः ।

॥ संशयविशेषलक्षणानि ॥

अत्र च समानधर्माद्यसाधारणकारणवचनेन पञ्चविशेषलक्षणानि द्रष्टव्यानि । तदयमर्थः—समानधर्मकारणकस्सन्देहोऽनेकधर्मादिकारणकेभ्यः सन्देहेभ्यो भिद्यत इति । विजातीयेभ्यस्तु भेदः सामान्यलक्षणसिद्धः । तदनुवादेन हि विशेषलक्षणं द्रष्टव्यम् । एवमनेकधर्मादिष्वपि योजनीयम् ।

**तद्यथेति** । कारणभेदात् पञ्चधा भिद्यत इति यदुक्तं तद्यथा भवति तथो-दाहरणद्वारेण दर्शयिष्यत इत्यर्थः । **समानधर्मा**दूर्ध्वलक्षणा**त्किमयं स्थाणुः पुरुषो वेति** जायत इति शेषः । समानधर्मपदेन तु विषयवाचिना विषय[यी प्र]त्ययो लक्ष्यते । एवमनेकधर्मादावपि योजनीयम् ।

॥ संशये विशेषकारणकथनम् ॥

तत्र च साधकबाधकवैधुर्यादिसाधारणकारणमनुसरणीयम् । तथा हि—सत्यपि समानधर्मोपलम्भे स्थाणुसाधकवक्रादिभेदकोपलम्भे तद्बाधकपाण्याद्युपलम्भे वा न भवति सन्देहः । न च साधकादिवैधुर्यमात्रात् सन्देहः संभवति अत्यन्तानु-पलब्धेऽपि तत्प्रसङ्गात् । कदाचित्तु 'तदि'ति साधारणाकारग्रहणे सत्यपि साधक-करादिभेदकाकाराग्रहे विशेषस्मरणाभावे सन्देहादर्शनात्तस्यापि सन्देहकारणताऽ-वसीयते । नच तन्मात्रादपि सन्देहः स्यादत्यन्तानुपलब्धेऽपि सदृशोपलम्भे वा तत्प्रस-ङ्गात् । नच विशेषस्मरणसध्रीचीन एव साधारणधर्मोपलम्भः सन्देहहेतुः साध-काद्युपलम्भेऽपि तत्प्रसङ्गात् ।

॥ संशयकारणानां मेलनासंभवात् संशयानुपपत्तिशङ्का तत्समाधानं च ॥

स्यादेतत्, साधारणं धर्ममुपलभ्याथ विशेषमेकमनुस्मृत्य पुनर्विशेषान्तरानु-स्मरणसमसमयं साधारणोपलम्भस्य ध्वंसात्सन्देहहेतुता कथमिति । नानुपपत्तिः ।

उभयविशेषविषयाभ्यां युगपददृष्टभेदाभ्यां[1] संस्काराभ्यामुभयगोचरैकस्मरणजनने विनश्यदवस्थस्य साधारणधर्मोपलम्भस्य विशेषस्मरणसहितस्यैकस्मिन् क्षणे सम्भवात्सन्देहहेतुतोपपत्तेः ।

॥ संशयस्य एकानेकज्ञानत्वविकल्पासहत्वेन निराकरणम् ॥

अथेदमेकं विज्ञानं, किं वानेऽकं, यद्येकं, तस्य यद्येकस्मिन्नेव धर्मिण्युभयविधिर्विषयः तर्हि स्थाणुश्च पुरुषश्चेति समुच्चयप्रतीतिप्रसङ्गः । यदि तु उभयनिषेधस्तदा न स्थाणुर्न च पुरुष इति स्यात् । अथान्यतरनिषेधावच्छेदेनान्यतरविधिः, तत्रापि नायं पुरुषः स्थाणुरेवेत्यवधारणं प्रसज्येत । यदाप्युभयविधिनिषेधौ तदा स्थाणुश्च पुरुषश्च नच ताविति निश्चीयेत ।

॥ संशयनिराकरणे युक्तयः ॥

किं चानुपलम्भमात्रात् निषेधनिश्चयेऽतीन्द्रियनिषेधावभासप्रसङ्गः । योग्यतासहितात्तु ततस्तन्निश्चये तत्त्वग्रहणे सत्यतत्त्वसमारोपणानुपपत्तिः । शुक्तिकायां रजतावभासे तदभावसंशयानुपपत्तिवदित्यपि विधिनिषेधयोः साहचर्योपलम्भासंभवः । वार्थसम्भेदेन स्थाणुपुरुषौ गोचराविति चेन्न, उन्नीतप्रकारातिरेकिणो वार्थस्यासम्भवात् । परस्परविरोधो वार्थ इति चेन्न । विरुद्धाविमाविति निश्चयेऽपि कदाचिद्वाशब्दसम्भेदापत्तेः । नचायमुपमानार्थः, स्थाणुरिव पुरुष इव च पुरोवर्तीति प्रतिभासप्रसङ्गात्, स्थाणुपुरुषाभ्यां च पुरोवर्तिसादृश्यं तात्त्विकमिति कथं तद्गोचरस्यासम्यक्त्वम् । सदृशज्ञानं च संशयजनकमिष्टं न पुनः स एव संशयः । ततोऽप्यन्य एव विकल्पात्मकोऽर्थ इति चेत्, [अस्तु] कथं तद्गोचरस्यासम्यग्ज्ञानता

नचायमन्यत्राप्यनवधारणार्थो दृष्टः येनारोप्येतापि पुरुषाकारवत् । नचात्यन्तासतोऽनुपलब्धचरस्यारोपोऽपि सम्भवी । न चात्यन्तादृष्टतत्त्वोप्यनादिवासनातो भासत इति साम्प्रतम् । माहायानिकमतापातात् । यदि त्वनेकं विज्ञानं, स्थाणुरित्येकं पुरुष इति चान्यत्क्रमेणोदीयात तदापि तात्त्विकगोचरतायां सम्यग्ज्ञानं, विपर्यये विपर्यय एवेति न ताभ्यामन्यः सन्देहः । वार्थानुपपत्तिस्त्वत्रापि तदवस्थैवेति ।

---

1. भेदप्रतिपदाभ्यां

॥ संशयज्ञानस्यैकत्वं वाशब्दः विकल्पार्थ इति सिद्धान्तः ॥

अत्रोच्यते ।

एकस्सन्देहबोधोऽयमेकस्मिन्नेव बोधकः ।
परस्परव्यवच्छेदनान्तरीयकरूपयोः ॥ १ ॥

वाशब्दोऽपि विकल्पार्थो विकल्पोप्येकधर्मिणि ।
विरोधरूपोऽभिमतः समारोपितरूपयोः ॥ २ ॥

एकः खल्वयं सन्देहानुभवः प्रत्यात्ममनुभूयते । तथा च अनेकज्ञानपक्षप्रसञ्जितदोषस्यानङ्गीकारादेव पराकृतिः । यो हि सदृशसन्दर्शनसमुद्बुद्धसंस्कारकारणं क्रमवर्त्यनेकस्मरणमेव सन्देहमाह तस्य स स्थाणुः स च पुरुष इति पौरस्त्यश्चायमारोहपरिणाहवानित्यवधारणात्मकाः प्रत्ययाः प्रसज्येरन् । यदापि उभयगोचरमेकमेव स्मरणं परम् । अपरमपि पुरोवर्तिग्रहणमास्थीयेत तदापि तौ स्थाणुपुरुषौ आरोहपरिणाहवानित्यवधारणद्वयमापद्येत । स्मृतिपरिमोषात्तदित्यनुल्लेखेऽपि यावदवभासमवधारणमेव स्यात् । न खल्ववधारणानुभवयोर्नेः संस्कारादनवधारणात्मकं स्मरणमुत्पाद्येत तस्यानुभवानुकारित्वात् ।

न च नैवास्त्यनवधारणात्मकं विज्ञानं; विवेकाग्रहनिबन्धनस्तु व्यवहार एव तथाविध इत्यनुभवानुसारिणोऽनुरूपम् । वैयात्यात्तु तथा वदन्तं वादिनमग्रे निर्भर्त्सयिष्यामः ।

॥ सन्देहसामग्रीकथनम् ॥

तदेवमेका सन्देहसंविदेक[त्रे]तरेतरनिषेधनान्तरीयकोभयरूपगोचरा । दूरत्वादिदोषविशेषाद्धि पुरोवर्तिविशेषाग्रहे सदृशसन्दर्शनसमुद्बुद्धसंस्कारकारणकस्मरणविपरिवर्तिनोस्तथाविधयोः स्थाणुत्वपुरुषत्वयोः आरोपो न विरोधी । दोषमहिम्नैव च सत्यपि योग्यानुपलम्भे सन्निकर्षाभावे रजतारोपवत्पुरोवर्तिनि पुरुषादेरपि परस्पराभावसमारोपो नानुपपन्नः । विधिप्रतिषेधसाहचर्यवदनं पुनरन्यत्रादृष्टमपि दृष्टत्वादत्रैवेष्टम् । वार्थश्चात्र विकल्पः ।

॥ वाकारार्थविवरणम् ॥

स चैकधर्मिसमारोपितरूपयोः एकतरस्येतरपरामर्शप्रापितः विरोध एव। तथा च स्थाणुश्च पुरुषश्च न ताविति न प्रतीतिः प्रसज्येत; परस्परप्रतिषेधनान्तरीयकप्रतिभासयोरनयोरेकत्र समुच्चयावभासासम्भवात्; उपदर्शितरूपविकल्पार्थवाशब्दसम्भेदिनोरेव समारोपसम्भवात्। तथा च न विरुद्धाविति निश्चयेऽपि वाशब्दसम्भेदापत्तिः। एकधर्मिसमारोपविशेषणवैधुर्यात्। स चायं अयथार्थत्वाभेदेप्य(न)वधारणात्मकाद्विपर्ययाद्भिद्यते। ततश्चैतदपास्तम्—यदुक्तं तत्त्वोपप्लववादिभिः सन्देहस्याताात्त्विकार्थत्वे विपर्ययरूपतैवेति। प्रति[प्राणि]प्रसिद्धस्य पदार्थभेदस्य गोमयपायसीयन्यायेन पराकरणे विश्ववैचित्र्यस्यैव विलोपप्रसक्तेः। विचारासहतया सर्वतत्त्वोपप्लवसिद्धेः इष्टमेवैतदिति चेन्मैवम्।

॥ सर्वस्य विचारासहत्वनिराकरणम्॥

विचारासहता ह्येषा मानमेयविलोपिनी।
यथाप्रसङ्गमस्माभिः शास्त्रेऽस्मिन्निरसिष्यते॥

किं चोपप्लवपक्षमेव विकल्पासहं पश्यामः। तथा हि—

सर्वोपप्लवसिद्धिस्ते कथं तस्यानुपप्लवे।
उपप्लवातिरिक्तं चेदिष्टं सर्वमुपप्लवम्॥ १॥

मानादृते विभागोऽयं कथमायुष्मतो भवेत्।
मानसिद्धो विभागश्चेत् तत्त्वं तदपि ते भवेत्॥ २॥

अन्तरेण तु मानं या सिद्धिः साऽतिप्रसङ्गिनी।
अविचारसहान्मानाद्यदुपप्लवसत्यता॥ ३॥

तादृशादेव सर्वेषां तत्त्वानां किं न सत्यता।
परपर्यनुयोगश्चेत्केवलं क्रियते त्वया॥ ४॥

सोऽपि यत्सिद्धये तत्त्वं तदेव भवतो भवेत्।
प्रयोजनमनुद्दिश्य प्रवृत्तिर्भवतो यदि॥ ५॥

**स्थाणुः पुरुषो वेति । अनेकधर्मादाकाशविशेषगुणत्वात् किमयं शब्दो नित्यः**

---

उपेक्ष्यःसूरिभिर्न त्वं लौकिको न परीक्षकः ।
विचारासहमेव स्यादुद्देश्यमपि ते यदि ॥ ६ ॥

विचारासहतैवैका तत्त्वमन्ते प्रसज्यते ।
सर्वोपप्लवसिद्धिस्ते तथापि कथमित्यलम् ॥ ७ ॥

॥ अर्थान्तरदर्शनादर्थान्तरे संशयोपपत्तिः ॥

अथार्थान्तरस्य समानधर्मादेः दर्शनादर्थान्तरे धर्मिणि कथं स्यात्संशयः ? न ह्यश्वोपलम्भाद्गवि संभवी संशयः ।

समानधर्मिणो दृष्टेर्धर्मिणस्तत्र संशयः ।
विशेषविषयो युक्त इति केषांचिदुत्तरम् ॥ १ ॥

अवोचदयमाचार्यस्त्वन्यथा **न्यायभूषणे** ।
अर्थान्तरस्य भेदेऽपि हेतुः कश्चन कस्यचित् ॥ २ ॥

सहकारी च नियतो भवेत्तन्तुपटादिवत् ।
तस्मान्न दूषणं किञ्चिदिति सर्वमनाविलम् ॥ ३ ॥

॥ असाधारणधर्मज्ञानस्य संशयाहेतुत्वम् ॥

**अनेकधर्मा**दसाधारणधर्मा**दाकाशविशेषगुणत्वात् किमयं शब्दो नित्यः स्यादनित्यो वेति संशयः** भवतीति शेषः । **अथ** कथमयं असाधारणो धर्मः संशयहेतुः? विरुद्धविशेषसाहचर्येणास्यानुपलम्भात् । न खल्वसहचरार्थोपलम्भे सत्यन्यस्मृतिर्युक्ता अतिप्रसङ्गात् । नचान्तरेण विशेषस्मरणं सम्भवी सन्देह इत्युदितम् । किञ्चासाधारणधर्मात् अन्यतो भवन्नपि संशयो विनश्यति; कुतः तत एवोद्भवेत् । न वै साधकं बाधकं भवितुमुत्सहेत । तस्य तु साधकत्वे न बाधकत्वमिति बाधकान्तरासम्भवादशक्योत्पादः सन्देहः स्यात् । यदि तु नित्यानित्ययोः प्रातिस्विकात् साधारणधर्मवत्तादर्शनात् असाधारणधर्मवत्त्वाविशेषेण शब्देऽपि संशयो नित्यः स्यादुतानित्य इति तदा समानपदेनैव सङ्ग्रहणादनर्थकं पृथगभिधानम् ।

॥ असाधारणधर्मदर्शनात् संशयोपपत्तिः ॥

उच्यते —

व्यतिरेकादनित्येभ्यो नित्य एष भवेद्ध्वनिः ।
किं नित्यव्यतिरेकित्वादनित्य इति संशयः ॥ १ ॥

शब्दः खल्वयमाकाशविशेषगुणत्वादसाधारणादनित्येभ्यो नित्येभ्यश्च व्यतिरिच्यते । तथा चानित्यव्यतिरेकादात्मवन्नित्यः, किंवा नित्यव्यतिरेकाद्घटवदनित्य इत्यसाधारणधर्मदर्शनेऽपि सन्देहः संभवेत् । अनित्यव्यतिरेको हि नित्यसहचारी तस्य स्मरणकारणं; नित्यव्यतिरेकोऽप्यनित्यसहभावादनित्यं स्मारयेदित्युभयं स्मरणकारणमिति भेदः ।

विशेषानुपलम्भादेर्विरहात्सहकारिणः ।
पदार्थषट्कविषयः सन्देहो न प्रसज्यते ॥ १ ॥

तथाचासाधारणधर्मो न संशयकारणं षट्स्वपि पदार्थेषु संशयप्रसङ्गादिति **प्रशस्तपादोदितं** निरस्तमित्यर्थः । नचानुत्सादप्रसङ्गः सन्देहस्य; कृतकत्वाद्यव्यभिचारिधर्मोपलम्भेन तदुत्सादसम्भवात् । तस्मादसाधारणोऽपि धर्मो नियमरहितः सन्देहहेतुरिति स्थितम् ।

॥ अनेकधर्म इत्यत्र कर्मधारयपक्षः ॥

अथवा अनेकश्चासौ धर्मश्चेति कर्मधारयाङ्गीकारात् विरुद्धानेकधर्म[स्यै]कत्रोपलभ्यमानस्यासति विशेषे सन्देहहेतु[ता]सिद्धिः । यथा अन्तःकरणं मूर्तं क्रियावत्त्वात् शरवत्, उतामूर्तमस्पर्शत्वात् आकाशवदिति । न च मूर्तत्वामूर्तत्वयोरेकत्र सम्भवःपरस्परपरिहारस्थितिधर्मकत्वात् । वस्तुवृत्त्या पुनरन्यतरस्य सम्भवत्यपि दौर्बल्ये तथाभावविवेचननैपुणविरहिणं पुरुषमपेक्ष्य सन्देहहेतुतेति हेत्वाभासचक्रे वदिष्यति ।

॥ क्रियावत्त्वास्पर्शत्वयोः निर्णायकत्वेन संशयाहेतुत्वम् ॥

कश्चिदाह—क्रियावत्वास्पर्शत्वे प्रत्येकं तावत्संशयं न जनयतो निर्णयहेतुत्वात् । सन्निपातश्च तयोः अयमसाधारण एव, संहतयोस्तयोः मनोव्यतिरेकेणान्यत्रासंभवादिति ।

॥ प्रत्येकं तयोः संशयहेतुता ॥

**तदसारम्** । संहतयोरन्यत्रासम्भवेऽपि प्रत्येकमेकैकधर्मसहचारात् एकैकगोचरां धियमन्वयमुखेन जनयन्तावेकत्रोपलभ्यमानौ क्रियावत्त्वास्पर्शत्त्वधर्मावितरेतरसाकाङ्क्षौ सन्देहहेतू । नैव साधारणः तस्यैकस्यैवोभयव्यतिरेकमुखेनोभयस्मरणप्रणाळिकया सन्देहकारणत्वनिर्णयात् । इह तु स्वयं पर्यालोचयतोऽपि किं क्रियावत्त्वाच्छरवन्मूर्तं मनः स्यादुतास्पर्शत्वादाकाशादिवदमूर्तमिति विरुद्धधर्मद्वयविज्ञानसमनन्तरभाविनः सन्देहस्य सम्भवे सति, विरुद्धाव्यभिचारिप्रयोगसम्भवात् न तयोः सन्देहहेतुतेति मन्दफलं केषांचिदुद्गारप्रयोगसम्भवमपि साक्षेपं तदवसर एव समर्थयिष्यामहे ।

॥ तयोः संशयहेतुत्वपक्षनिरासः ॥

**यत्पुनरेतदुच्यते**, तुल्यबलत्वे तयोर्विरोधानि[न्नि]र्णयानुत्पादकत्वं स्यात् नतु संशयहेतुत्वमिति । **तदसत्** । नख[लु]निर्णयानुत्पत्तौ अचेतयमानः कुड्यादिवदास्ते विपर्यस्यति वा । किं तर्हि? पर्यालोचयन् विशेषे प्रश्नं वा कुर्वन्नुपलभ्यते । न च संशयमन्तरेण पर्यालोचनं प्रश्नकरणं वा युज्यते । किं नु स्यादित्यनध्यवसायमात्रं न सन्देह इति चेत् न, अनध्यवसायस्यापि सन्देहादनर्थान्तरभावस्य वक्ष्यमाणत्वात् ।

॥ धर्मद्वयस्य संशयाहेतुत्वशङ्का ॥

यत्पुनरुदितं **निबन्धृभिः** सत्यं भवत्येव सन्देहो नतु विरुद्धाव्यभिचारिधर्मद्वयसन्निपातात्, किंतु वस्तुत्वात् तन्मूर्तामूर्ताभ्यां दृष्टसाहचर्यं मनसि प्रतीयमानं स्मृतिद्वारेण तयोरुपस्थानं करोतीति ।

॥ धर्मद्वयपरामर्शस्यापि अन्वयव्यतिरेकाभ्यां संशयहेतुता ॥

**तदयुक्तम्** । क्रियावत्त्वास्पर्शत्वलक्षणैकैकसहका[चा]रिधर्मपरामर्शसमनन्तरजातोभयस्मरणस्यासति विशेषानुपभलम्भे विनापि वस्तुत्वादिसाधारणतानुसन्धिमुपजायमानस्य सन्देहस्यान्वयव्यतिरेकाभ्यां अनेकधर्मकारणतास्थितेः । किञ्च परस्परप्रत्यनीकोभयस्मरणकारणभावाविशेषे विशेषानुपलम्भे च समाने सहकारिणि

**स्यादनित्यो वेति । विप्रतिपत्तेः एके भौतिकानीन्द्रियाण्याहुरन्ये चा**

---

वस्तुत्वमेव सन्देहकारणमुपपद्यते नेतर इति कुतो निरणायि? । वयं पुनरुभयोरपि वैकल्पिकीमेव सन्देहकारणतां वर्णयामः । परस्परप्रतिबन्धाद्धि मनसि विरुद्धोभयधर्मनिर्णायकत्वानुपपत्तावपि अनेकधर्मस्य विरुद्धोभयविशेषसहचारिणः प्रत्येकं तदनुस्मरणकारणभावेन सन्देहहेतुता न विरोधिनी । नहि सहचाराविशेषेऽपि विशेषो यदेकस्मादुभयविरोधिस्मरणं, नानेकस्मादिति ।

॥ आक्षेपसमाधानपूर्वकं उक्तपक्षनिर्णयः ॥

किञ्च प्रदेशान्तरे विरुद्धधर्मद्वयस्य सन्देहहेतुता स्वयमेवोपवर्णिता । गमनत्वं किं कर्मत्वपर्याय आहोस्विदपरं सामान्यमिति प्रश्नं, कुतः संशय? इत्यनुयोगं च विधाय सर्वेषूत्क्षेपणादिषु कर्मत्वाद्गमनमित्यनुगतप्रत्ययहेतुत्वमुत्क्षेपणादिवत् विशेषसंज्ञया पृथगभिहितत्वं च संशयहेतुत्वेनोक्तमिति, पूर्वापराहतं कथमिव पण्डिता अप्यभिदधति । तदेवं युक्त्यैव विरुद्धाव्यभिचारिणोऽपि सन्देहहेतुता । नचैवमनुमानमात्रेऽप्यनाश्वासः; सत्प्रतिपक्षस्य तदाभासतया सन्देहहेतुभावेऽपि पञ्चरूपोपपन्नस्य साध्यसाधकतोपपत्तेः । न च प्रकृतेप्यत्यन्तसंशयः; चिरं विचारयतो विशेषविज्ञानान्निर्णयोपपत्तेः । विचारचातुरीविरहिणस्तु हरिणाङ्कपरभागकलङ्कशङ्कावत् अस्तवनिर्णयः । काऽत्रास्माकं वस्तुक्षतिः ? नचैवं सङ्ख्यातिरेकात् विभागे पञ्चत्वानुपपत्तिः अनेकधर्मपदार्थतया द्वयमेकीकृत्य सङ्ग्रहे पञ्चत्वाभिधानात् । सङ्ग्रहत्वात्तु मूले निग्रहभेदस्येव कस्यचिन्न द्वितीयोदाहरणाभिधानम् । भूषणे त्वाचष्ट । भाष्यसम्मत्यनुसारेण वा सङ्ग्रहे पञ्चत्वाभिधानमिति सर्वमवदातम् ॥

॥ विप्रतिपत्तेः संशयजनकत्वनिरूपणम् ॥

**विप्रतिपत्तेः** व्याहतप्रवादात् सन्देहो भवति । तामेव दर्शयति—**एके** नैयायिकादयो **भौतिकानि बहिरिन्द्रियाण्याहुः** । **अन्ये** कापिलादयस्तु **अभौतिकानि** आहङ्कारिकाणीति । तामेतां विप्रतिपत्तिं शृण्वतः सहकार्यन्तरसद्भावे सति किं भौतिकानीन्द्रियाणि आहोस्विदभौतिकानीति सन्देहो भवतीत्यर्थः ।

**भौतिकानीति । उपलब्धेः किं सदुदकमुपलभ्यते उतासदिति । अनुपलब्धेः किं विद्यमानः पिशाचो नोपलभ्यते उताविद्यमान इति ।**

---

॥ विरुद्धाव्यभिचारिविप्रतिपत्त्योः समानधर्मेऽन्तर्भावशङ्का तद्दूषणं च ॥

स्यान्मतिः—विरुद्धाव्यभिचारिविप्रतिपत्त्योः समानधर्म एवान्तर्भावः । तथा हि—आपाततो हेत्वन्तरपराहतस्य हेतोः प्रवादान्तरपराहतस्य च प्रवादस्य कस्यचिद्यथार्थत्वमयथार्थत्वं कस्यचिदिति उभयथा दर्शनादूर्ध्वत्ववत्सन्देहहेतुतोपपत्तिः । सत्यं; तथाप्येवमस[त्य]प्युभयथाभावपरामर्शे प्रागुन्नीतनीत्या सन्देहो दृश्यत इति भेदाभिधानम् । प्रत्येकमेकैकगोचरतया च परस्परप्रत्यनीकपदार्थोपस्थानेन सन्देहहेतुताऽविशेषेऽपि, क्वचिदुभयोरप्यापातादवसितान्वयव्यतिरेकयोरर्थरूपयोः, क्वचिच्च प्रवादयोरित्यान्तरालिकभेदाद्विरुद्धाव्यभिचारिविप्रतिपत्त्योरपि विभागेनाभिधानमिति मन्तव्यम् । विप्रतिपत्तेस्तु विरुद्धहेतुद्वय[ा]समुत्थतया विरुद्धाव्यभिचारिरूपतापि न शङ्कनीयैव । विरुद्धहेतुद्वयसमुत्थत्वेऽपि वस्तुतः, श्रोतुस्तत्परामर्शमन्तरेण परस्परपराहतप्रवादश्रवणादेव सन्देहदर्शनात् । नच विप्रतिपत्तेरपि विरुद्धहेतुद्वयसमु[त्थ]त्वं नियतम् । अन्तरेणापि हेतुं विप्रलम्भकविप्रतिपत्तिसम्भवादिति ।

॥ उपलब्धेः अनुपलब्धेश्च संशयहेतुता ॥

**उपलब्धेः** सहकार्यन्तरसाहित्ये सन्देहः स्यात्—**किं सदुदकमुपलभ्यते उतासदिति । अनुपलब्धेः** सहकार्यन्तरसध्रीचीनायाः संशयो भवति **किमविद्यमानः पिशाचो नोपलभ्यते किं वा विद्यमान इति ।**

॥ शुद्धोपलब्ध्यादेः न सन्देहहेतुता, किन्तु सहकार्यन्तरसहितस्य ।
समानधर्माच्चानयोरर्थान्तरता ॥

एवं च सति सर्वत्राप्युपलब्धिगोचरेषु अनुपलब्धिगोचरेष्वपि सन्देहप्रसक्तिरिति नाशङ्कनीयम् । न खलु उपलब्धिमात्रमनुपलब्धिमात्रं वा सन्देहहेतुमाचक्ष्महे, येनैवमुपालभ्येमहि । किं तर्हि ? विशेषानुपलम्भादिसहकार्यन्तरसाहित्य एवेति । भवतु नामैवं; तथापि कथं समानधर्मादनयोरर्थान्तरता ? यदि तावदुपलब्धिमनुपलब्धिं वाऽधिकृत्य विद्यमानाविद्यमानत्वेन संशयः, तदोपलब्धित्वमनुपलब्धित्वं च

**अनवधारणत्वाविशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभावः । तद्यथा-बाह्यालिप्रदेशे पुरुषेणानेन भवितव्यमित्यूहः । किंसंज्ञकोऽयं वृक्ष इत्यनध्य-**

---

सामान्यम् । अथोपलभ्यमानानुपलभ्यमानेषु जलपिशाचादिषु विद्यमानाविद्यमानत्वेन संशयस्तथापि ज्ञानावभासित्वमनवभासित्वं च सामान्यम् । सत्यं प्रयोजनवशात् पृथक् अभिधानम् । तथाप्युपलब्धिमात्रेण शब्दे स्थायित्वं, शरीरे चैतन्यादिकं, सामान्यादेः स्वाश्रयेणाभेदः; तथाऽनुपलब्धिमात्रेण स्वर्गापूर्वदेवतादेरसत्वं मा भूदिति उपलब्ध्यनुपलब्धिमात्रस्य सन्देहहेतुत्वमुक्तमिति ॥

॥ ऊहानध्यवसाययोः संशयेऽन्तर्भावः ॥

स्यादेतत् । सम्यग्ग्रहणेन सन्देहविपर्यासनिरासेऽप्यूहानध्यवसाययोः कथं निरास इत्यत आह-**अनधारणत्वाविशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभाव इति ।** ऊहनमूहः तर्कः, अध्यवसितिरध्यवसायो, निश्चयः, नाध्यवसायोऽनध्यवसायः । अध्यवसायादन्यत्तद्विरुद्धं वा ज्ञानं, स च वक्ष्यमाणविशेष एव । प्रयोगनियमादतिप्रसङ्गिन्यामपि व्युत्पत्तावर्थनियमः, पदार्थानां प्रयोगनियमात्पङ्कजादिवत् । ऊहश्चानध्यवसायश्चेति द्वन्द्वः । तयोः **संशयादर्थान्तरभावः** अर्थान्तरता, भेदो, **नास्ति** । तस्मादनवधारणत्वाविशेषात् । व्याख्यातमनवधारणम् । तस्य भावस्तत्त्वं, स एव न विशिष्यत इत्यविशेषः तस्य वाऽविशेषोऽविशेषस्तस्मात् ।

॥ ऊहस्य संशयान्तर्भावकथनम् ॥

इदमुक्तं भवति-सन्देहस्य तावदनवधारणज्ञानत्वं लक्षणमुदितम् । तच्चानयोरपि अविशिष्टमतः सन्देहात्मानाविमावपि; न त्वर्थान्तरभूताविति संशयनिरासपरेणैव सम्यक्पदेन तन्निरासससिद्धिरिति । यत्तदनवधारणात्मकत्वमनयोः अवादिषुस्तद्यथा तथोदाहरिष्यते-**बाह्या(दि)लि[न्द]प्रदेशे** कश्चि[च्चि]दारोहपरिणाहभाजं भावमुपलभ्य **पुरुषेणानेन भवितव्यमित्येवमाकारः** प्रत्यय ऊह इत्यभिधीयते । नचासाववधारयति पुरुष एवायमिति । तस्मात् संशय एवेत्यर्थः ।

कोटिद्वयानवलम्बिनः ऊहस्यापि संशयत्वोपपत्तिः ॥

स्यान्मतं विकल्पेनोभयार्थावलम्बी संशयः । तद्विलक्षणोऽयमूहः; कथं ततोऽनर्थान्तरमिति । तदप्यवद्यम् । अन्यथापि संशयदर्शनात् । फलभेदोपलम्भे हि सन्दिहते, कोऽस्य फलस्योपाय [इति] ।

जातस्य च ध्रुवो मृत्युरिति निश्चित्य लौकिकाः ।
संशेरते कालभेदे कदा मृत्युर्भवेदिति ॥ १ ॥

श्वस्तनादिविकल्पस्य यदि न्यायेन लभ्यता ।
स्थाणुपक्षे विकल्पोऽपि न्यायलभ्यो भवेदिह ॥ २ ॥

॥ कोट्यन्तराशङ्कासंभवात् ऊहःसंशय एव ॥

तथा हि—भवितव्यं तावदनेन पुरुषेण, बाह्यालि[न्द]प्रदेशे सम्बन्धात । तत्संभवस्य तत्र बहुलमुपलम्भात् । कोट्यन्तरमपि तु शतैकाधिकं स्यात् । सम्भवत्प्रमाणत्वेन कदाचन स्थाणोरपि अविरोधादिति । सर्वथा कृते कोट्यन्तराशङ्कानिरासने निर्णय एव स्यात् । निरस्तनिखिलकोट्यन्तरस्योर्ध्वत्वस्यैव पुरुषविशेषतया निर्णयनिमित्ततोपपत्तेरिति ।

॥ ऊहे एकतरकोटेरुत्कटत्वम् । तथापि संशय एव सः ॥

अथ कोटाव(नेकः स्या)[नेकस्यां]संविदः संशयो भवेत् ।
ऊहस्त्वेकतरं पक्षं संभावयति नेतरम् ॥ १ ॥

तुरङ्गमाणां गमने योग्यदेशावमर्शतः ।
शैथिल्यात स्थाणुकोटिर्हि नैव सम्भावनास्पदम् ॥ २ ॥

सत्यं, संशयतासाम्येऽप्यान्तरालिकभेदभाक् ।
ऊहोऽयमुत्कटः कोटावेकस्यामस्तु का क्षतिः ॥ ३ ॥

सत्यपि हि संशयादनवधारण(त्वा)ज्ञानत्वादनर्थान्तरभावे, संभवत्यान्तरालिकवैचित्र्यम् ॥

यथाऽनर्थान्तरत्वेऽपि पृथिव्या गन्धवत्त्वतः ।
वृक्षपाषाणवैजात्यमान्तरालिकमीक्ष्यते ॥

॥ तर्कस्य संशयान्तर्भावेऽपि पृथगुक्तिकारणकथनम् ॥

कथं पुनः संशयान्तर्भावे तर्कं पृथगसूत्रयत्सूत्रकार इति । निग्रहस्थानान्तर्भावेऽपि हेत्वाभासानामिव प्रयोजनभेदविवक्षयेति परितोष्टव्यम् ।

प्रयोजनं तु तर्कस्य प्रतिपक्षविरोधिनः ।
अनुग्रहं प्रमाणानां पूर्वाचार्या न्यरूपयन् ॥ १ ॥

[स]खलु सम्भावनापरपर्यायः [शिथिलितसर्व]विपर्ययः प्रमाणं करणमितिकर्तव्यतांशनिवेशी सुखेन प्रवर्तयन्ननुगृह्णातीति ।

प्रवादिनां प्रवृत्त्यर्थमसत्यप्यर्थनिश्चये ।
संशयात्पृथगुद्दिष्टस्तर्क इत्याह नो गुरुः ॥

॥ नैयायिकस्य विजयनिर्णयाभावात् कथाप्रवृत्तिर्न स्यादिति शङ्कया तर्कस्य पृथगुक्तिः ॥

एके मेनिरे—न कथासु नैयायिकस्य प्रवृत्तिरुचिता । विजयनिर्णयानुपपत्तेः, यस्यापि कालेन परीक्षिता प्रज्ञा तस्यापि कदाचिदुपाध्यायादिना निरुत्तरीकरणं दृश्यते । नवा सति निश्चये विचारकस्य प्रवृत्त्युपपत्तिरिति । तन्निरासाय सन्देहान्तर्भावेऽपि तर्कं पृथगुद्दिश्य लक्षयित्वा वादादिषु प्रवृत्त्युपयोगिनं सूत्रयामास सूत्रकारः "प्रमाणतर्कसाधनोपालम्भ" इति ।

॥ प्रमाणपरिनिश्चये वा तर्कसद्भावे वा विजयो भवेदेव अतः प्रवृत्तिरुचितेति सिद्धान्तः ॥

एतदुक्तं भवति—निजविजयकारणभावेन प्रमाणपरिनिश्चितौ वा साधनोपालम्भौ तर्केण वा सुसम्भावितौ वादादिषु वदितव्यौ । तथा प्रवर्तमानस्य खल्वर्थसिद्धिरौत्सर्गिकी । शतैकांशिकस्तु विपर्ययः स न(ः) प्रेक्षावतोऽपि प्रवृत्तिं निरुणद्धीति ।

॥ स्वसामर्थ्यनिश्चयेनैव वादे प्रवृत्तिः जल्पवितण्डयोस्तु पाक्षिकी प्रवृत्तिः ॥

यः पुनरहङ्कारमात्रेण सम्यगपरीक्ष्य बाधनोपालम्भसामर्थ्यातिशयमात्मनः, परस्य च तद्विपर्ययं संभावयति सभापतिसभ्ययोरप्यन्यायप्रवृत्तिनिवारणसामर्थ्यं माध्यस्थ्यं वाऽनिश्चित्यासंभाव्य वा प्रवर्तते, तदसौ स्यान्नैयायिकपशुः। को हि नाम बुभुक्षितोऽपि [1]प्रवृत्तिस[फल]त्वाशङ्कामनिवर्त्य स्वादिष्ठमपि भक्तं भोक्तुं प्रवर्तेत। नचैतादृशि स्थले सदर्थशङ्कामात्रनिबन्धना प्रवृत्तिः। यत्र हि अप्रवर्तमानस्य महती क्षतिः, प्रवर्तमानस्य तु पाक्षिक[की]परा सिद्धिः। विपर्ययस्तु शतैकांशिकः(स्तु) तत्र शङ्कातोऽपि [2]प्रवृत्तिस्तीव्ररोगग्रस्तस्येवाभिनवेन भिषजोपदिष्टे व्याधि(वास)[निरास] साधने। जल्पवितण्डयोः पुनरप्रवर्तमानस्य नापि महती क्षतिः। प्रवर्तमानस्य तु पराजये पाक्षिकोऽपि महाननर्थ इति अनर्थशङ्कातो निवृत्तिरेवौत्सर्गिकी। निपुणानां प्रवृत्तिस्तु प्रागुक्तसम्भावनादिक्रमेण कदाचिदेवेति।

॥ सम्भावनायाः कथाप्रवृत्त्युपयोगनिर्णयः ॥

वस्तुतो वादेऽपि तावन्न प्रवर्तितव्यम्। प्रागुक्तनीतिमपहाय तत्रापि असत्साधनाद्यभिधाने जडबुद्ध्या जनानामादरशैथिल्यापातात्। योऽपि प्रथमं साधनसामर्थ्याद्यनिश्चये तन्निश्चयाय गुर्वादिभिः सह वादं विधत्ते सोऽपि शिष्य एव, ज्ञानाभिप्रायत्वात्। शास्त्रचिन्तनप्रवृत्तवदसम्यग्वादीति मतम**माचार्यस्य**।•

•सम्भावनापि जनिकैव विचारकाणां
तत्त्वावसायविरहेऽपि यतः प्रवृत्तिः।
तर्कं कथासु विजयोत्कटबोधरूपं
सन्देहतः पृथगुवाच ततो मुनीन्द्रः ॥ १ ॥

॥ अनध्यवसायस्य संशयान्तर्भावनिरूपणम् ॥

सम्प्रत्यनध्यवसायं संशयान्तर्भूतमुदाहरति—•**किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायः** संशयान्न भिद्यत इति शेषः।•

1. सविषयत्व    2. प्रतिपत्तिः

तरुसामान्यसंज्ञा हि तदवान्तरसंज्ञया ।
आम्रादौ नियता दृष्टा तस्याःस्यादनुमापिका ॥

.... .... तां चानुमाय तद्भेदमनुस्मरन् सन्दिग्धे-किं संज्ञकोऽयं तरुरिति । तद्भेदस्य च प्रसिद्धाप्रसिद्धरूपस्य बहुत्वान्न स्थाण्वादिवद्विशेषविकल्पी सन्देहः स्यात् । यथा खल्वहन्यनेकगोसहस्रपतेः प्रसिद्धप्रत्येकसंज्ञस्यापि भवदीया[1] गौः प्रसूतेति वदतोऽपि तत्सम्भवात् । कोटिद्वयविकल्पनियमस्य तु कतमेत्यादिनैव व्यभिचारात् । न च तस्या असन्देहतैवेति साम्प्रतम्, लोकविरोधात् ।

॥ किमुल्लेखिज्ञानस्यापि संशयप्रभेदता ॥

गौः प्रसूतेति गोपालसामान्यवचनश्रुतेः ।
कतमा गौः प्रसूतेति सन्देह इति लौकिकाः ।

यत्त[ाव]दुक्तमनेन, उभयविशेषानुस्मरणात्संशयो न त्वनध्यवसायः, अप्रतीतविशेषविषयत्वेनाप्यस्य भावादिति । तदप्यसत् । प्रतीतसंज्ञाभेदवदप्रतीतसंज्ञाभेदमपि संभाव्य सामान्येनानुस्मरतः प्रतीताप्रतीतसंज्ञाविषयतया समानानवधारणस्या[पि]सन्देहावान्तरभेदोपपत्तेः । अत एव प्रसिद्धास्वेवान्यतमा अस्य संज्ञा, किं वाऽप्रसिद्धेति कोटिवैकल्पेऽपि कदाचिदनुभूयते । किमुल्लेखस्तु कदाचन स्थाण्वादिसंशयेऽपि दृश्यत एवान्तराले—न जानीमः कोऽयमिति ।

नैतावतैव वैजात्यमान्तरालिकभेदतः ।
तस्योपपत्तेः प्रत्यक्षे सविकल्पादिभेदवत् ॥ १ ॥

एतेनैवेषुकारादेर्व्यासङ्गानर्थितादिना ।
जातानध्यवसायस्य ज्ञातव्या संशयैकता ॥ २ ॥

॥ संशयत्वं जातिर्वा न वेति विकल्प्याक्षेपः ॥

इदमिदानीं विचार्यते—किमनवधारणज्ञान[त्व]मेव संशयत्वमुत गुणत्वमिव द्रव्यत्वातिरेकि तटस्थमिति । यद्याद्यः कल्पः तर्हि "सन्देहत्वस्मृतित्वादिवत्परोक्षत्व-

---

1. कतमा इति शेषः

**वसायः । मिथ्याध्यवसायो विपर्ययः । तद्यथा—द्वौ चन्द्रमसौ ।**

---

जातिविशेषाभ्युपगमेऽप्यदोष" इति नोदाहरेत् । अथोत्तरः, कथमनवधारणज्ञान-त्वा(त्त)दनुगत(स्य) व्यवहारोपपत्तावतिरिक्तजातिसिद्धिरिति वाच्यम् ।

॥ संशयत्वजात्यङ्गीकारेण परिहारः ॥

**सत्यम्** । असत्यप्यवधारणेतरतापरामर्शे सन्देहव्यवहारानुवृत्तेरस्त्यपरा जातिरित्याश्रीयते । कथमन्यथा निश्चयत्वजातिनिरासेऽपि प्रतीकारः । तत्रापि संशयेतरतापरामर्शविरहेऽपि निश्चयव्यवहारानुवृत्तिरित्येव वेदितव्यम् । यस्तु[संशये](समये) तरतापरामर्श एव तद्व्यवहारानुगति(रप्य)[रित्य]ङ्गीकुरुते तस्येतरेतरव्यवच्छेदाधीनयोः इतरेतरव्यवहारयोः कथमितरेतराश्रयतापरिहारः? तत्परिहारप्रयोजनैकजातिसिद्धावपि निश्चयत्वजातिरेव सेति चेन्न । नियामकानुपलम्भात् ।

॥ संशयत्वजातिसिद्धौ ऊहादेः संशयत्वानुमानम् ॥

तस्मादनुभवानुसारादुभयत्रापि जातिसिद्धिरिति स्थिते, प्रयुज्यते–ऊहानध्यवसायौ संश(या)[यौ अ]नवधारणज्ञानत्वात्; यः उक्तसाधनः स उक्तसाध्यः यथा संप्रतिपन्नसंशयस्तथेमौ, ततस्तथेति । संशयत्वजातिसमर्थनात्तु नाप्रसिद्धविशेषणता, नापि साध्यविकलो दृष्टान्तः । तस्मात् सर्वमवदातम् ।

॥ विपर्ययलक्षणम् ॥

सम्प्रति विपर्ययं लक्षयति—**मिथ्याध्यवसायो विपर्यय इति** । मिथ्या चासौ अध्यवसायश्चेति विग्रहः । मिथ्येत्ययथार्थता दर्शिता । सा च संशयस्यापि समानेति तद्व्यवच्छेदायोक्तमध्यवसाय इति । यथार्थाध्यवसायो मा प्रापदिति मिथ्यापदम् । विपरीतिर्विपर्ययः विपरीतज्ञानम् । **तद्यथो**दाहरणं **द्वौ चन्द्रमसाविति ।**

॥ भ्रमानभ्युपगन्तृप्रभाकरमताक्षेपः ॥

केचित्तु दुर्दर्शनाभ्यासविपर्यासितमतयः सर्वलोकावसितावपि विपर्याससन्देहबोधा[व]नङ्गीकुर्वाणा विवेकाग्रहमेवाऽयथार्थव्यवहारहेतुमाचक्षते । तन्मते कथं द्वौ

चन्द्रमसाविति व्यवहारः निर्वहतीति निरूपणीयम्। द्वित्वस्य भासमानस्य चन्द्रमसा भासमानेनासंसर्गाग्रहादिति चेत्, किं ग्रहणगोचरभावेन द्वित्वमवभासते, किं वा स्मरणगोचरभावेन? आद्ये किमधिकरणस्य तस्य ग्रहणमिति निरूपणीयम्।

॥ प्रभाकरेणचन्द्रद्वित्वभानप्रकारकथनम् ॥

स्यादेतत। अङ्गुलीतिमिरादिखण्डिता नयनदीधितयो द्विधा सुधाकरमण्डलाभिमुखमुच्चलन्त्यो दोषविशेषाननाकलयन्त्यस्तदेकतां जनयन्ति। तद्गोचरचारिण्यौ द्वे धियौ तदधिकरणं द्वित्वमवभासत इति।

॥ तत्खण्डनम् ॥

नैतत्सारम्। **तिमिरारिणैवास्य** पक्षस्य पराकृतत्वात्। स खल्वेवं द्वित्वव्यवहारसमर्थनमयौक्तिकत्वादसहमा(नं)[नः] प्रतिभासमानमपि आपाततो वर्णितार्थपरतया, तथा द्विचन्द्रबोधेऽपीत्यादिग्रन्थं भिन्नचन्द्रव्यवहारसमर्थनमात्रपरतया वर्णयाम्बभूव। तथा च तस्य वचनम्—भिन्नचन्द्रव्यवहारो हि ग्रन्थे समन्वितो नतु द्वित्वव्यवहारः।

॥ चन्द्रस्य भिन्नव्यवहारसमर्थनेऽपि द्वित्वव्यवहारा संभवः ॥

तथा हि—निरन्तरोत्पन्नयोः बुद्ध्योः अभिन्नार्थग्राहिताप्रतिभासनसाम्येनाभिन्नार्थबुद्धिद्वयेन समं भेदाग्रहाद्भिन्नचन्द्रव्यवहारहेतुत्वम्। यस्तु बुद्धिगतद्वित्वानुभवात द्वित्वव्यवहारस्तस्य क्रमभाविबुद्धिगोचरत्वेनोत्पादासम्भवात ग्रहीतुमयोग्यत्वाच्च। न तावत्स्वसंवित्तिसिद्धं तत्, ज्ञानस्वभावबहिर्भूतत्वात्। नापि मानसप्रत्यक्षं, तेन समं सम्बन्धाभावादतोऽनर्थ[र्थिका]व्यवहारसमर्थना। किंतु भिन्नव्यवहार एव ग्रन्थे समर्थितः। द्वित्वव्यवहारस्तु द्वित्वस्मरणाद्वाच्य इति प्रतिषेधति स्म यस्मा**त्तिमिरारिः** प्राक्तनं पक्षं, तस्मात्तस्य निरासे नातीवास्माकमायासः।

॥ शालिकानाथमतस्य स्वयं खण्डनम् ॥

अथ पुनरवधीरिततिमिरारिवचनः कश्चित् तथा द्विचन्द्रबोधेऽपीत्युपक्रममालोचयन्नादिम एव कल्पे **शालिकानाथा**भिसन्धिमाञ्जसमभिदधानः प्रत्यवतिष्ठेत स इत्थं प्रष्टव्यः—किमिमास्तिमिरादिखण्डिता नयनदीधितयः शशधरमण्डलाभिमुख-

मुच्चलिता द्वेधा तदभिसम्बन्धात् संवेदनद्वयमपर्यायमुपजनयन्ति ? अहोस्वित्पर्यायेणेति । न तावत्संविदामपर्यायेणोत्पत्तिः उपपत्तिमती, गन्धरसादिधियां पर्यायनियमादन्यत्रापि तथानुमान(1)भावात् ।

॥ ज्ञानयोः यौगपद्यमस्तु इति शङ्का ॥

अथ तत्कारणेन्द्रियमनःसंयोगक्रमस्य कार्यक्रमहेतोस्तत्र सम्भवात् क्रमः । प्रकृते तु तिमिरादिखण्डितनयनदीधितिसुधाकरसम्बन्धयोरपर्यायमेव नयनसंयोगद्वारा मनसाऽधिष्ठितयोः अनुक्रमात्कारणयोः कार्ययोरपि संविदोरक्रम एव तदुत्पाद इत्यभिधीयेत ।

॥ विकल्प्य तद्दूषणम् ॥

हन्त भोः किमयं महिमा संप्रयोगभेदमात्रस्य? किं वा तिमिरादिखण्डनसहायस्येति । यद्याद्यः —

पञ्चाङ्गुलिपरिस्पृष्टे प्रसक्तं ज्ञानपञ्चकम् ।
स्पर्शनेन्द्रियसम्बन्धाः पञ्च तत्र स्थिता यतः ॥ १ ॥

॥ ज्ञानद्वयाभ्युपगमे कारणाभावनिरूपणम् ॥

द्वितीयेऽपि न प्रमाणम् । न च कार्यतस्तत्कल्पनं, तथाविधकार्यस्याद्यापि असंप्रतिपन्नत्वाद्दोषाणां च विपरीतकार्यकरणाभ्युपगमे प्राभाकराणां कृतान्तविरोधात् । भवतु तर्हि क्रमवतोरेव निशाकरवेदनयोः उत्पादस्तद्वर्ति च द्वित्वमवभासत इति, मैवं,

गमितो दूषणराशिः क्रमकल्पे प्रस्फुटः पूर्वं ।
तिमिरारिणैव यस्मात्तस्मान्नासावुपेतव्यः ॥ १ ॥

॥ स्मर्यमाणद्वित्वेन द्वित्वव्यवहारशङ्का तत्समाधानं च ॥

स्यात्तर्हि तिमिरारिमतमेवानुसृत्य स्मरणविपरिवर्तिन एव द्वित्वस्य चन्द्रमसा सममसंसर्गाग्रहात् द्वौ चन्द्रावित्यादिव्यवहारः । तत्राप्येवमभिधीयताम्—किं असंसर्गाग्रहनिबन्धन एव सर्वत्र तथाविधव्यवहारः? किं वा विसंवादिव्यवहार एव तन्निबन्धनः? इति । आद्ये, न शाब्दः संसृष्टबोधः सिध्येत्, यतो विशिष्टव्यवहारदर्शनात् न वृद्धस्य

विशिष्टबोधानुमानमसंसर्गाग्रहादेव व्यवहारोपपत्तेः, दूरे च तस्य शब्दानन्तर्यात्तत्कारणताकल्पनमिति न संसृष्टबोधहेतुता शब्दानामुपपत्तिमती। इतरथा अनुमानप्रामाण्यमपि समुच्छिन्नकथमेव प्रसज्यते। तत्रापि धूमदर्शनसमनन्तरसमुपजातस्मरणपरिवर्तिधूमध्वजधरणिधरासंसर्गाग्रहादेव संसृष्टव्यवहारोपपत्तेः।

॥ संवादिव्यवहारे संसर्गग्रहस्य हेतुताशङ्का ॥

स्यान्मतम्। असंसर्गाग्रहस्य संवादिविसंवादिव्यवहारद्वयकारणभावेऽपि संवादिनि व्यवहारे संसर्गबोधोऽपि सहकारिकारणं; अन्यथा कारणवैलक्षण्यमन्तरेण कार्यवैलक्षण्य[स्य]संवादित्वरूपस्यासंभवादिति।

॥ असंसर्गाग्रहेणोपपत्तौ संसर्गज्ञानं न कारणम् इति समाधानम् ॥

तदसत्। संसृष्टयोरसंसर्गाग्रहः संवादिव्यवहारहेतुर्नान्य इत्यन्यथासिद्धेः। अथाकारणमपि संसृष्टविज्ञानं तन्नान्तरीयकव्यवहार(क)विशेषदर्शनादनुमाय तत्र शब्दस्य कारणताकल्पनमित्येतावतापि शब्दप्रमाणसिद्धिः। तदपि न हृदयङ्गमम्। संसृष्टयोरसंसर्गाग्रहादुपपद्यमानस्य संवादिव्यवहारस्य संसर्गज्ञाननान्तरीयकताया एवासिद्धेः। माभूत् संसर्गज्ञानं, भवतु च संसृष्टयोरसंसर्गाग्रहरूपस्वकारणाधीनसम्भवः संवादिव्यवहार इति शङ्काकलङ्कापाकरण[ा]निरूपणात्। कथं च जातिगुणद्रव्याणामप्रत्यक्षमङ्गीकुर्वाणस्समवायं (संवादिव्यवहारः) गौरयं शुक्लः, सुरभि चन्दनमिति उपलम्भमानसंवादिव्यवहारस्य संसर्गसंवेदननान्तरीयकतामपि अभिधातुं पारयते। प्रत्यक्ष एव तत्रापि विशेषणविशेष्यभावरूपः संसर्गो गौः शुक्ल इति विशिष्टप्रत्यक्षप्रत्ययदर्शनादिति चेन्न। तस्यापि समवायाप्रत्यक्षतायामप्रत्यक्षतेति सन्निकर्षनिरूपणावसरे निरूपयिष्यमाणत्वात्।

॥ अनुमानस्य प्रमाणत्वेनोपन्यासाक्षेपः ॥

कथं चानुमा[न]प्रामाण्याक्षेपप्रस्तावे प्रकृतमप्यनुमानप्रमाणमभिधीयेत। तथा चैतदपास्तावकाशम्—यो यद्विलक्षण आभासः स तद्विजातीयप्रमाणप्रतिरूपकः यथा प्रत्यक्षाभासः शब्दाद्याभासात्। विलक्षणौ च शब्दलिङ्गाभासौ प्रत्यक्षाभासादिति। अनुमानमात्रप्रामाण्याक्षेपकं प्रत्य(क्ष)स्याप्यनुमानस्योपन्यासानवकाशात्।

|| आभासत्वनिर्वचने विकल्पोद्भावनं तन्निराकरणं च ||

किं च तत्सादृश्यं वा (1) तदाभासत्वं, विपर्यस्त[त]द्व्यवहारहेतुता वा (2) तद्विपर्ययता वा ? नाग्रिमकल्पः, व्यभिचारात् । भवति हि प्रत्यक्षाभासादि[द्वि]लक्षणस्तर्काद्याभासः न पुनः प्रत्यक्षातिरेकिप्रमाणप्रतिरूपकः । एवं च न द्वितीयस्यापि सिद्धिः तर्काभासादेरपि विपर्य(य)स्त[त]द्व्यवहारहेतोरप्रमाणप्रतिरूपकत्वात् । (यद्वा)[अथ]यो यद्विलक्षणः प्रमाणाभास इति विशेष्यत इति चेन्मैवं शब्दानुमानप्रामाण्यप्रतीतिमन्तरेण तदाभासयोः प्रमाणाभासत्वासिद्धेः परस्पराश्रयप्रसङ्गात् । शब्दादिप्रामाण्यस्य चान्यतः सिद्धौ तत एव तदाभासस्याप्यन्यथाख्यातित्वसिद्धिः ।

|| असंसर्गाग्रहस्य व्यवहारकारणत्वे अनुमानशब्दयोः अप्रमाणताप्रसक्तिः ||

नापि तृतीयः । अन्यथाख्यातिप्रसङ्गात् । तदेवमसंसर्गाग्रहस्य सर्वव्यवहारकारणभावाभ्युपगमे शब्दानुमानप्रामाण्यपरिलोपप्रसक्तेस्तत्प्रामाण्यप्रसिद्ध्यर्थमेव तावत्संवादिव्यवहाराणां संसर्गबोधैकनिबन्धनत्वस्य स्वीकरणीयत्वादसमञ्जस एवाग्रिमः कल्प इति ।

|| व्यवहाराणां संसर्गग्रहपूर्वकत्वस्य अनुमानेन स्थापनम् ||

नापि पश्चिमः, संवादिव्यवहारवदितरस्यापि संसर्गसंवेदननिबन्धनतयाऽनुमानस्य सम्भवात् । तथा हि – वि(सं)वादाध्यासितो व्यवहारो व्यवह्रियमाणार्थपरस्परसंसर्गसंवेदननिबन्धनः, व्यवहारत्वात्, य इत्थं[स]तथा, यथा संवादिव्यवहारः(स्तथे) इति शक्यमनुमानम् । इह तु संसर्गसंवेदननिबन्धनत्वमात्रे साध्ये न सिध्येदन्यथाख्यातिः । पूर्वानुभूतसंसर्गस्मरणस्य चन्द्राद्यविविक्तगोचरस्य व्यवहारहेतुभावेऽपि संसर्गधीसंवेदननिबन्धनतोपपत्तेः । उक्तं च 'यद्वा समवायोऽपि रजतजातीयोव्यक्तिस्मरणात् स्मृतिविपरिवर्ती' इति । रजतजातीयग्रहणं तु तत्र, प्रकृतानुगुण्यात् । उपपत्तिस्तु सर्वसाधारणीति । व्यवह्रियमाणादिपदोपादाने तु नायं प्रसङ्ग इति तदुपपादनम् ।

|| उक्तानुमाने पूर्वपक्षिणा उपाध्युद्भावनं तन्निराकरणं च ||

न च संवादिव्यवहारत्वमेवोपाधिरिति सांप्रतम् । केवलव्यभिचारविरहे विशेषणवैयर्थ्यात्, विसंवादिव्यवहारस्य च सर्वस्य पक्षीकरणे व्यभिचारगोचरानि-

रूपणात् । पक्ष एव व्यभिचारोद्भावनेन तद्व्यवच्छेदकविशेषणाभ्युपगमे सर्वानुमानोत्सादनप्रसङ्गात् । नच संवादित्वमेव केवलमुपाधिः, संवादिसंवेदनेनैव व्यभिचारात् । नहि तत्संसर्गवेदननिबन्धनमेवेत्यस्ति नियतिः ।

॥ धर्मयोर्वाऽसंसर्गाग्रहो धर्मिणो वेति विकल्प्य धर्मिणश्चेत् भेदस्यापि भानप्रसङ्गकथनम् ॥

एतेन पीतशङ्खादिव्यवहारो व्याख्यातः । शुक्तावपि रजतव्यवहारः किं रजतत्वजातेः स्मर्यमाणायाः पुरोवर्तिव्यक्तेश्च गृह्यमाणाया असंसर्गाग्रहात्, किं वा रजतत्वसमवायिनः स्मर्यमाणस्य पौरस्त्यवस्तुनश्च गृह्यमाणस्य भेदानध्यवसायादभ्युपेयते? प्राचीनपक्षस्तावत् प्रागुन्नीतन्यायपरास्तः । पराचीने तु यदि स्मर्यमाणगृह्यमाणयोः स्वरूपंभेदः कथं तस्यानवभासः ? नहि प्रतिभासमानभावाभिन्नः तद्भेदो न भासत इति साम्प्रतम् । प्रतिभासाप्रतिभासलक्षणविरुद्धधर्मसंसर्गस्यैकस्मिन्नसम्भवात् ।

॥ सर्वभ्रमसाधारणभेदाग्रहस्य प्रवृत्तिहेतुत्वशङ्का ॥

ननूक्तमत्र, भेदाग्रहो हि यद्रूपं ज्ञातं[स]त्प्रवृत्तिं वारयति तस्य विशेषरूपस्याग्रहे सति साधारणाकारावगाहिसर्वविभ्रमव्यापी प्रवृत्तिहेतुरिति । सत्यमुक्तम् । अयुक्तं तु तत्, निवर्तकविशेषाग्रहस्यैवात्र भवन्मते निरूपयितुमशक्यत्वात् ।

॥ भेदग्रहस्यैव निवृत्तिहेतुत्वं इदं रजतमित्यत्र भेदो भासत एव ॥

तथा हि---इ[दं]नो रजतमिति परस्पराभावपरिग्रह एव निवृत्तिहेतुरुपेतव्यः,न शुक्त्याद्याकारपरिग्रहः तस्य व्यभिचारात्। भवति च कदाचन दूरादगृहीतशुक्त्याद्यसाधारणाकारस्यापि नेदं रजतमित्याप्तवचनजनितात् अन्योन्याभावपरिग्रहान्निवृत्तिः । तथा चाव्यभिचारिणस्तस्यैव निवृत्तिहेतुभावे सति निवर्तकविशेषाग्रहात् तत्प्रवृत्तिमभ्युपगच्छत[:] परस्पराभावापरिज्ञानमेव प्रवृत्तिहेतुरिति प्राप्तम् । नचेदमिति रजतमिति च भासमानभावमात्रातिरे[की]परस्पराभावो भवतां कृतान्तमनुसरति, यदग्रहात्प्रवृत्तिरभिधीयेत । तदभिन्नस्तु तद्भाने न भासत इत्यसाम्प्रतम् । प्रतिभासाप्रतिभासयोरेकत्र विरोधात् ।

॥ अख्यातिवादिनः प्रत्यवस्थानम् ॥

स्यान्मतम् । दृश्ये(ते) च प्रतियोगिनि भावतन्मात्रधीः अभावव्यवहारहेतुः । न चेह प्रतियोगिनो रजतस्य दृश्यतेति न तेन व्यवहारः । निकटोपसर्पिणस्तु तद्दृश्य-

तायां भवत्येव नेदं रजतमिति अभावव्यवहारः रजतत्वव्यवहारोचितेन च रूपेण प्रागवभासात्प्रवृत्तिः। पश्चात्तु तदनवभासान्निवृत्तिरिति।

॥ अख्यातिदूषणम् ॥

**तदप्यभद्रम्**। तादृग्दूरनिवेशिनि रजते तथाविधकारणस्यैव पुंसो रजतप्रत्ययदर्शनात्। अन्यथा दूरस्थस्येव परस्परसन्निहितयोः रजतशुक्तिकयो रजतव्यवहारो न स्यात्। एवं च प्रतियोगिनि दृश्यतायां तदभावव्यवहारगोचरतोचितेन रूपेण प्रागपि पौरस्त्यप्रतिभासात् कथं प्रवृत्त्युपपत्तिः।

॥ अन्यथाख्यातिः प्रतिभासपराहतेति आक्षेपः ॥

स्यादेतत्। अन्यथाख्यातिरनुपपन्नैव प्रतिभासपराहतत्वात्। उक्तं हि—

अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते।
वेद्यः स एव नान्यद्धि वेद्यावेद्यत्वलक्षणम् ॥ १ ॥

इदं रजतमित्यत्र रजतं चावभासते।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरवेदनात् ॥ २ ॥

तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतम्।
परस्मिन् भासमाने हि न परं भासते यतः ॥ ३ ॥ इति

॥ दोषसहितयथार्थज्ञानसामग्र्या भ्रमःकथमुदियादित्याक्षेपः ॥

कथं च समीचीनज्ञानसाधनसन्निकर्षादन्यथाख्यानमुदियात्। कुटजबीजादावपि वटाङ्कुरोत्पादनप्रसङ्गात्। न च दोषसहकारिविशेषाददोष इति साम्प्रतम्। दोषाणां कारणसामर्थ्यमात्रविघातहेतुत्वात्। न हि कलमबीजं कलुषितमपि तैलादिना करोति यवाङ्कुरम्। कथं च स्वगोचरव्यभिचारिणोऽपि ज्ञानात् समाश्वासः? कथं वा यथाप्रतिभासमर्थाकारापह्न(न्न)वे साकारवेदनवादो न भवेत्? उक्तं हि —विपरीतख्यातिपक्षे ज्ञानं साकारमापतेदिति।

अपि च— भेदाग्रहस्य हेतुत्वं भवताप्यन्यथामतौ।
कल्प्यते, कल्प्यतामेतत्प्रवृत्तावेव लाघवात् ॥

॥ अत्र नवीनानामभिप्रायः ॥

न च वाच्यमन्यथाख्यातावपि न भेदाग्रहस्योपयोग इति । यस्मात्

भेदे प्रतीयमाने हि शुक्तिकाकलधौतयोः ।
कलधौतमतिः शुक्तौ जायते न कदाचन ॥ १ ॥

॥ उक्तपूर्वपक्षसमाधानम् ॥

अत्रोच्यते कथं तावत्प्रतिभासपराहतिः ।
शुक्त्याकारो न रूप्यत्वसम्भेदी किं प्रतीयते ॥ १ ॥

सितभास्वररूपं वा पौरस्त्यं रजताकृति ।
न भासते न पौरस्त्यपक्षोऽस्माभिरुपेयते ॥ २ ॥

पश्चिमे भवतामेव प्रतिभासपराहतिः ।
भाति रूप्यमिदंरूपसमानाधिकृतं यतः ॥ ३ ॥

॥ स्वमते अन्यथाख्यातौ सामग्रीकथनम् ॥

यत्पुनरन्यथाख्यातेः न कारणसम्भव इति । [तन्न] यतः

उत्पत्तिरिन्द्रियादस्याः कामिलादिकलङ्कितात् ।
लिङ्गाभासादितः क्वापि विभ्रान्तिरुपजायते ॥ १ ॥

यत्पुनरुदितं—न दोषसहकार्यपि विपरीतकार्यकरं कारणमिति । तदप्यलीकम् ।

वेत्रबीजं यतो दग्धं कदलीकाण्डकारणम् ।
भस्मकोपप्लुतो वह्निर्जायते बहुदाहकः ॥ १ ॥

यन्मतेऽपि यथार्थस्य व्यवहारस्य कारणम् ।
अयथार्थे तमेवात्र विज्ञानं जनयेत्कथम् ॥ २ ॥

सहकार्यनुरोधाच्चेदस्माकमपि तत्समम् ।
दोषाभिधानाल्लभते सहकारी हि तादृशः ॥ ३ ॥

॥ अन्यथाख्यातावुक्तदोषाणां अख्यातावापादनम् ॥

[यः]पुनरयं भ्रान्तिदृष्टस्यापि अन्यत्रापि योजनादनाश्वासः, सोऽख्यातिपक्षे समानः दोषभावाभावाभ्यां भेदसिद्धिरपरत्रापि स्यात्। न च दोषाभावेऽप्यग्रहाशङ्काव्यावृत्तिः; न ह्यदृष्टमित्येव कारणं कार्यं जनयेत् किन्तु समग्रे सहकारिणि। समग्रता तु कार्यप्रसवावसेया। अनयैव तु कार्यमनुमिमानस्य दुर्वार[ः]परस्पराश्रयदोष[ः]कारणानुमेयत्वे च ज्ञानानां स्वसंवेदनसमयहानि[ः।]दोषाभावाद्विपर्ययानुपपत्तिनिश्चयो युक्त एव। कारणाभावे कार्या(कारणा)भावात्। बाधाबाधाभ्यां तद्भेदसिद्धिरपि समाना। बाधकबोधेऽप्ययथार्थताशङ्का न व्यावर्तत इति चेद्भेदाग्रहशङ्कापि कथं व्यावर्तत इति समानम्। पौरस्त्यरजतज्ञा(नं)[नानां]तदर्थानां गृह्यमाणस्मर्यमाणानां च (अ)विवेकात् नेदं रजतमिति व्यवहारोपपत्तेः। साशङ्कस्य संवादविसंवादाभ्यां निर्णयः। न च सर्वत्र शङ्कोत्पत्तिर्येनानवस्थापीति चेत् समः समाधिः।

॥ अन्यथाख्यातेः आलंबनं शुक्तिरेव रजताकारेण ॥

पौरस्त्यरजताभावात् अनालम्बनतापत्तिरन्यथाख्यातेरिति चेत। न सारमेतत्।

[1]आलम्बते [ऽन्यथाख्यात्या] पौरस्त्य सितभास्वरम्।
तिरोहितनिजाकारं रजताकाररूषितम् ॥ १ ॥

तथा च बाधकादूर्ध्वमनुसन्धीयते स्फुटम्।
एषा रजतरूपेण शुक्तिका प्रत्यभादिति ॥ २ ॥

॥ तत्र ज्ञापककारकयोः सत्तानिरूपणम् ॥

अथ रजतरूपेणासती शुक्तिः कथं तदालम्बनमिति ज्ञापकपर्यनुयोगे इदमुत्तरम् अनुसन्धानादवसीयत इति। कारकपर्यनुयोगे प्रागुदितदोषमाहात्म्यमनुसरणीयम्। असत्ख्यातिरप्येतादृशी न दूषणम्। अभ्युपगमात्। अत्यन्तानुपाख्यस्य तु नाधिष्ठानतेति निरूपयिष्यामः। किं च—

कलधौतात्मना शुक्तिरसती भवतामपि।
कथं तद्व्यवहारस्य गोचरीभावमाचरेत् ॥ १ ॥

---

1. यदख्यात्या इति पाठः।

सहकार्यनुरोधाच्चेदितरत्रापि तत्समम् ।
यतो निरूपिता दोषाः प्रागेव सहकारिणः ॥ २ ॥

॥ विज्ञानवादिमतप्रवेशशङ्कानिरासः ॥

यद(च)प्यवादि—"विपरीतख्यातिपक्षे ज्ञानं साकारमापतेत्", इति तदप्यनुचितम् । नहि तदाका(र)[रे]णासन्तमर्थं तथा गोचरयतीति स्वयं तदाकारं भवेत् । अन्यथा तद्रूपेणासन्तमर्थं तथा गोचरीकुर्वन् व्यवहारोऽपि तदाकारः स्यात् । तदेवमन्यथाख्यात्यभ्युपगमेऽपि प्रतिभासपराहत्यादिदोषो न सम्भवतीति स्थितम् ॥

॥ तद्धेतोरिति न्यायेन भेदाग्रहस्य प्रवृत्तिहेतुत्वमस्तु इति शङ्कानिराकरणम् ॥

**यदप्यभिहितं** भेदाग्रहस्य भवद्भिरप्यन्यथाख्यातौ उपयोगः स्थिरीक्रियते तथाच प्रवृत्तावेव तदुपयोगोऽस्तु लाघवादिति । तदसत् । प्रत्यासन्नामपि प्रत्यक्षसिद्धां पौरस्त्यरजतप्रतीतिं परित्यज्य तत्कारणस्यैवान्वयव्यतिरेकावसितस्य प्रवृत्तिकारणताकल्पनेन लाघवोपवर्णनेन सर्वत्र साक्षात्कारणापलापेन कारणकारणस्यैव कारणताकल्पनप्रसङ्गात् । तदेवं पौरस्त्यरजतप्रतीत्या(ति)प्रवृत्तिर्भेदाग्रहस्तु विपर्ययोत्पत्तावुपयोगीति स्थितम्

॥ तद्रूपेणासतः प्रतीतौ अनुमानविरोधशङ्कासमाधाने ॥

**यत्पुनरुच्यते** शुक्तिका रजतरूपेण न प्रकाशते तद्रूपेणासत्वात्, यद्यद्रूपेणासत् तत्तद्रूपेण न प्रकाशते यथा व्योमकमलमिति । व्योमकमलस्यापि शाब्दप्रतीतिगोचरभावाभ्युपगमे दृष्टान्तस्य साध्यविकलत्वात् । किञ्च शुक्ति[:न] रजतोचितव्यवहारगोचरस्तद्रूपेणासत्वात् । यद्यद्रूपेणासत तन्न तदुचितव्यवहारगोचरः यथा घटः पटव्यवहारगोचरो न भवतीति समानम् । एतावन्तं कालमिदं रजतं व्यवहृतमिति शुक्तिकाशकलगोचरानुसन्धानबाधेन कालात्ययापदिष्टो हेतुरिति चेत् समानमेतत । यदत्रापि यदेतावन्तं कालं रजतमित्यभात् तच्छुक्तिका शकलमित्यनुसन्धानात् ।

तदेतदन्यथाज्ञानमिति यस्मात्समर्थितम् ।
निरस्ता रूप्यविषयस्मृतितापि भवेत्ततः ॥ १ ॥

॥ अन्यथाख्यातेः स्मृतित्वपक्षदूषणम् ॥

यदि खल्वन्यथाख्यातेरनुपपत्तिस्तर्हि रजतविज्ञानं स्मरणमाश्रीयेत, गत्यन्तरानुपलम्भात् । य[दा]पुनः इदं रजतमिति रजताकारेण पौरस्त्यावलम्बनमन्यथाज्ञानमुपपादितं कथं तदा स्मरणरूपतावकाशः । नचानाकलितरजतस्यानुत्पद्यमानता स्मृतित्वसाधको हेतुः तद्बोधाधेयसंस्कारेण व्यभिचारात् । सति संवेदनत्व इति विशेषणाददोष इति चेन्न, रजतप्रत्यभिज्ञानेनानेकान्तात् । न च तदपि स्मरणमेव । संस्कारमात्रजज्ञानमिति मात्रचा व्यवच्छेद्यत्वात् ।

॥ तत्रैव युक्त्यन्तरम् ॥

किञ्च रजतास्पदसमीहितसाधनतानुमानमनाकलिते रजते न जातु जायते तथापि न तत्स्मरणम् । अपि चेदङ्कारास्पदमधिकृत्यैव जायमानमपि यदि रजतविज्ञानं स्मरणमभिधीयते(ऽत)[क]स्तदा शुक्त्यादिज्ञानेऽप्याश्वासः । नैतदिदंकारास्पदमधिकृत्य जायते, किं तर्हि तदनुभवाविवेकात् तथा व्यवहारमात्रमिति चेत्, मैवम् । एतावन्तं कालमिदं रजतमित्यभादित्यनुसन्धानात् ।

॥ सन्देहस्य अविवेकनिबन्धनत्वनिराकरणम् ॥

**यदपि** वदति स्थाणुर्वा पुरुषो वेति सन्देहव्यवहारोऽपि पुरोवर्तिनः स्मर्यमाणादिकोटिद्वयाविवेकनिबन्धन इति ।

**तदपि** अयथाव्यवहाराणामविवेकनिबन्धनत्वापाकरणादयथाज्ञाननिबन्धनताप्रसाधनाच्च परास्तावकाशम् ।

॥ प्रत्ययानां यथार्थत्वानुमानखण्डनम् ॥

**यदपि** आचक्षते विवादास्पदीभूताः प्रत्यया यथार्थ[ाः]प्रत्ययत्वात्संप्रतिपन्नसमीचीनप्रत्ययवदिति । तत्र शुक्त्यादिगोचररजतादिप्रत्ययं पराभिमतमाश्रित्य तस्य यथार्थतासाधने सिद्धान्तविरोधः, नेदं रजतमित्यादिबाधानुभवविरोधाच्च कालात्ययापदिष्टो हेतुः । प्रत्ययान्तरपक्षीकरणेन यथार्थतासाधने सिद्धसाधनम् । किञ्च यथार्थत्वं नाम ज्ञानस्यार्थसमुत्थत्वं, उपदर्शितार्थसमुत्थत्वं, अबाध्यार्थत्वं वा ? नाद्यः, सिद्धसाधनत्वात् । द्वितीये तु साक्षाद्रजतसमुत्थत्वं यदि रजतज्ञानस्य साध्यं, तदा

अध्यक्षबाधो रजताभावस्याध्यक्षत्वात्। परम्परया चेत्सिद्धसाधनं, रजतानुभवजनित-संस्कारद्वारेणेदं रजतमिति ज्ञानं प्रति रजतस्य कारणस्योपपत्तेः।

॥ प्रत्यक्षबाधोक्तिः स्वमते न्यायप्रयोगश्च ॥

तृतीये तु प्रत्यक्षबाधः स्पष्ट एव। नेदं रजतमिति बाधस्य सिद्धत्वात्। नायं ज्ञानार्थयोः बाधः, किं तर्हि व्यवहारमात्रस्येति चेन्न, अतदर्थिनो व्यवहारानुपपत्तौ नेदं रजतमिति ज्ञानस्याबाधकत्वप्रसङ्गात्। तदेवं अयथार्थव्यवहारस्य कारणमयथा-ज्ञानमेव स्यान्नतु भेदापरिग्रहः। प्रयोगश्चात्र भवति-विवादाध्यासिता प्रवृत्तिः[पुरो वर्तिनि] रजतज्ञानपूर्विका रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वात्। या उक्तसाधना सोक्तसाध्या, यथा सम्यग्रजतप्रवृत्तिः तथेयं ततस्तथा। भेदाग्रहपक्षप्रतिक्षेपादेव विपक्षे बाधकसिद्धिः॥

ये बोधमाहुः सकलं यथार्थं
निराकृता निर्मलनीतिभिस्ते।
अथापरे विभ्रमबोधगम्यं
न किञ्चिदस्तीति वदन्ति धीराः॥ १॥

॥ भ्रमस्य निरालम्बनतापक्षः॥

एके हि मेनिरे—

आलम्ब्यते यदि भ्रान्त्या रूप्यसर्पादि, नास्ति, तत्।
न च शुक्त्यादि भातीति किं विश्रान्तिपदं भवेत्॥ १॥

शुक्त्यादिगोचरत्वे हि यथार्थत्वान्न विभ्रमः।
भाति शुक्त्यादि रूप्यादिरूपेणेत्यप्यसङ्गतम्॥ २॥

नह्यन्यदन्यरूपेण प्रतिभातीति युज्यते।
न जा[तु](ति)कुम्भःस्तम्भादिरूपेण प्रतिभासते॥ ३॥

तस्मादुन्नी(यता)[तया]नीत्या विषयस्यानिरूपणात्।
रूप्यसर्पादिविभ्रान्तेर्निरालम्बनतोचिता॥ ४॥

॥ तत्पक्षनिराकृतिः ॥

अत्रोच्यते कश्चन विभ्रमस्य
[न]गोचरश्चेदविशेषनिष्ठः ।
रूप्यभ्रमोऽसौ समजायतेति
कथं विशेषव्यपदेशभागी ॥ १ ॥

यदि खल्वयं रूप्यादिविशेषनिष्ठः तदा युज्येतास्य रूप्यादिविशेषेण व्यपदेशः रूप्यभ्रमोऽयं सर्पभ्रमोऽयं सलिलभ्रमोऽयं जात इति । यदा त्वयं विषयविशेषानालीढ एव, तदा कथमस्य रूप्यादिविशेषैर्व्यपदेशः ।

॥ अत्र नवीनानामभिप्रायः ॥

अत्र केचिदभिनवा उन्नयन्ति ।

रजतालम्बनज्ञानसमानाकारयोगतः ।
अनालम्बनमप्येतज्ज्ञानं तद्व्यपदेशभाक् ॥ १ ॥

नाभिजातं यथा पद्मं देवस्य मुरभेदिनः ।
पङ्कादजातमपि तत् पङ्कजं कथ्यते बुधैः ॥ २ ॥

नाभिजातं तथा ज्ञानं रूप्यसर्पादिगोचरैः ।
एकाकृतित्वाद्रूप्यादिविशेषव्यपदेशभाक् ॥ ३ ॥

अहो बहिर्मुखं वस्तु रूप्यमित्यवलम्बितम् ।
रूप्यभ्रमापदेशस्य न निबन्धनमुच्यते ॥ ४ ॥

रजतालम्बनज्ञानसमा[ना]कारसङ्गतिः ।
अप्रतीतापदेशस्य हेतुरित्यतिशोभनम् ॥ ५ ॥

नहि कश्चन बोधानां बोधत्वादिविलक्षणः ।
आकारो भासते यस्माद्व्यपदेशः प्रवर्तते ॥ ६ ॥

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
इत्येतदत एवोक्तमन्यैरपि मनीषिभिः ॥ ७ ॥

सत्यं बहिर्मुखं रूप्यं प्रतिभाति न तत्र सत् ।
तस्मान्न रूप्यमत्रेति बाधबोधोऽनुभूयते ॥ ८ ॥

अतो निरालम्बनता यद्यप्यस्या न युज्यते ।
असदालम्बना त्वेषा विभ्रान्तिरिति शोभते ॥ ९ ॥

अविद्यमानमेवात्र रूप्यं मे प्रत्यभादिति ।
अनुसन्धानमप्यूर्ध्वं बाधकात्, कथमन्यथा ॥ १० ॥

नासतो भासनं युक्तं नरशृङ्गवदित्यपि ।
न युक्तं नरशृङ्गेऽपि तच्छब्दाद्भासनं यतः ॥ ११ ॥

॥ असतः प्रतिभासो नास्तीति मतम् ॥

यत्त्विदं कैश्चिदुच्यते—

नैवास्ति नरशृङ्गादेरसतः प्रतिभासनम् ।
विकल्पमात्रमत्रेष्टमविद्याक्रीडितं तु तत् ॥

भवतु वा प्रतिभासनमसतोऽपि, तथापि न तत् रूप्यादिवत् प्रतिभाति ॥ उक्तं हि—नहि नरशृङ्गं भाति गवीवेति । तदप्यवद्यम् । तथा हि—कः खल्वयं विकल्पो नाम? शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति चेत्स किमप्रत्ययः प्रत्ययो वा ।

॥ विकल्पस्य प्रत्ययत्वव्यवस्थापनम् ॥

अप्रत्यय इतीदं स्यादनुभूतिपराहतम् ।
शब्दश्रवणजन्मायं प्रत्ययो ह्यनुभूयते ॥ १ ॥

अपि चाप्रत्ययादेष प्रयोगोऽपि कथं भवेत् ।
नहि जातु स्वतन्त्राणां प्रयोगः प्रत्ययादृते ॥ २ ॥

प्रत्ययश्चेदिदं श्वनिर्गमोक्तिसमं वचः ।
अस्माभिरेतदेवोक्तं यत्कर्णकटुकं तव ॥ ३ ॥

॥ ज्ञानप्रतिभास्यत्वरूपं विषयत्वं असत्यपि स्यात् ॥

नचास[तः]प्रत्ययं(ः) प्रति विषयभावानुपपत्तिः। नो खलु विषयत्वं नाम कारणत्वं येनासति निरस्तसमस्तसामर्थ्ये तन्न स्यात्।

विषयत्वं स्वतो वित्तिप्रतिभास्यत्वलक्षणम्।
अहेतुष्वपि तद्दृष्टमतीतानागतादिषु ॥ १ ॥

स्वप्रत्ययासादितेन महिम्ना प्रत्यया[ःपुनः]।
स्फुटमर्थमिवासन्तमपि गोचरयन्त्यमी ॥ २ ॥

प्रतिभासगतो भेदो यो रूप्यनरशृङ्गयोः।
अस्त्वसत्ताविशेषेऽपि विचित्रैः कारणैरसौ ॥ ३ ॥

सत्त्वाविशेषेऽपि यथा कुम्भादावपरोक्षधीः।
परोक्षा परमाण्वादौ कारणानां विभेदतः ॥ ४ ॥

॥ असतो माननिरूपणम् ॥

किं च—

असन्न भात्यसद्रूपं किं वा सद्रूपमुच्यताम्।
आद्ये कथं न भातीति त्वया तदभिधीयते ॥ १ ॥

द्वितीये,बाधबोधेन विरोधो भवतो भवेत्।
नहि सद्वदभाद्रूप्यं अतो नास्तीत्यबूबुधत् ॥ २ ॥

॥ असत्ख्यातिनिरासः ॥

अत्रोच्यते—

असदालम्बना ख्यातिः कथमेषाऽभिधीयते।
भवत्यसदधिष्ठा[नं](य) किंवाऽऽरोपयतीत्यसत् ॥ १ ॥

न तावदग्रिमः कल्पः, न खल्वसदेवाधिष्ठानमस्याः। यदि स्यात्, कथमसौ रजतार्थिनः सत्यामेव शुक्तौ प्रवर्तयेत्। यतस्तत्र प्रवर्तयति, ततो जानीमः, तत्र

रूप्यमारोपयतीति। अथ चेदमिति पुरोवर्तिवस्त्वङ्गुल्या निर्दिश्य तस्य रजततां पुरुषो निषेधति नेदं रजतमिति। यदि तत्रानारोपितं रजतं, अप्रसक्तनिषेधो हि तदा स्यात्।

रूप्यमारोपितं तत्रेत्यतो जानीमहे वयम्।
यत्र चारोप्यते किंचित्तदधिष्ठानमुच्यते ॥

॥ असतः आरोप्यत्वनिराकरणम् ॥

अथाभिधीयते—शुक्तिमधिष्ठाय समारोपयत्यसद्रूप्यम्, अतोऽसत्ख्यातिरुच्यते।

किमसद्रूप्यमेवात्र किं वान्यत्रापि गीयताम्।
का वस्तुक्षतिरस्माकं कल्पो यद्यादिमो भवेत् ॥ १ ॥

नहि वयमन्यथाख्यातिवादिनोऽपि रजतमत्रैव यथाप्रतिभासमभ्युपगच्छामो येनात्रासत्वापादनं दोषः स्यात्। यथाप्रतिभासं हि तत्सत्त्वे न तद्गोचरप्रत्ययो मिथ्येति न बाध्येत। सतीमेव तु शुक्तिकां सदन्तररूप्यात्मना प्रतिभासय[न्ती](त) ख्यातिरन्यथाख्यातिः अधिष्ठानारोपणीययोश्च शुक्तिरजतयोः सत्त्वेन सत्ख्यातिरिति चाभिधीयते।

॥ शुक्तौ रूप्यस्यासत्वं चेत् तदिष्टमेव अन्यत्र सत्त्वसाधने तात्पर्यात् ॥

भासते शुक्तिकायास्तु या सदन्तररूप्यता।
न सती सेत्यसत्ख्यातिः काममेषाभिधीयताम् ॥ १ ॥

अत एव नि[षे](बो)धोऽपि सावकाशो भविष्यति।
प्रतिषेधति रूप्यस्य स हि पौरस्त्यरूपता[म्] ॥ २ ॥

अन्तिमश्चेदभिप्रेतः कल्पः का युक्तिरुच्यताम्।
ननूक्तं बाधबोधेन तथाभावोऽवसीयते ॥ ३ ॥

मैवं वादीः स पौरस्त्यं न रूप्यमिति बोधयन्।
रूप्यस्यात्यन्तिकासत्वे कथं मानं भविष्यति ॥ ४ ॥

नहि रूप्यं स्वरूपेण न कुत्रापीति बाध्यते ।
अनुसन्धानमप्यूर्ध्वमत्रासत्प्रत्यभादिति ॥ ५ ॥

तस्मादात्यन्तिकासत्वे तस्य मानं न विद्यते ।
अन्यत्र तस्य सत्त्वे वा किं प्रमाणमुदीर्यताम् ॥ ६ ॥

स्वरूपेणानिषेधेन विशे[षे च](ष्य)निषेधनात् ।
अन्यत्र सत्तासंसिद्धिस्तस्य कुम्भादिवस्तुवत् ॥ ७ ॥

॥ स्वरूपेणानिषेधपदप्रयोजनम् ॥

यद्धि स्वरूपेणानिषिद्धं एकत्र(न)निषिध्यते तदन्यत्र भविष्यति, यथा क्वचिद्देशे काले वा निषिद्धः कुम्भो भवत्यन्यत्र । तथा चेदं रूप्यमित्यर्थः । किं पुनः स्वरूपेणानिषेधेनेति विशेषणव्यवच्छेद्यम् ? उच्यते—

स्वरूपेण निषिद्धस्तु शुक्तिकाकलधौतयोः ।
तादात्म्यभेदो न क्वापि, स व्यवच्छिद्यते ततः ॥

तदेवं तावद्व्यवस्थितं नात्यन्तासतः ख्यातिर्भ्रान्तिरिति ।

॥ भ्रमे भासमानस्य यथार्थत्ववादिमतप्रदर्शनम् ॥

केचित्तु प्रमाणप्रसिद्ध एव विचित्रोऽर्थो विभ्रान्तिगोचर इत्याचक्षते । तथा हि—

प्रतीतिव्यतिरेकेण नार्थसत्ताव्यवस्थितिः ।
सा च तद्रूप्यसर्पादि भासयन्त्यनुभूयते ॥ १ ॥

नचास्य विचारेणासत्त्वनिश्चय इति वाच्यम् ।

प्रतीतिबाधितो नालं विचारस्तत्त्वबुद्धये ।
अन्यथा दुर्विचाराणां नावकाशः क्व वा भवेत् ॥ १ ॥

न च तस्योत्तरकालमप्रतिभासनादसत्त्वसिद्धिरिति साम्प्रतम् । यदा न प्रतिभाति तदा तस्य माभूत् सत्ता, यदा तु प्रत्यभात्तदा प्रतिभासबलेन[1] तत्सत्ताऽऽश्रयणीया ।

1. छलेन—मा

अन्यथा विद्युदादीनां न स्यात्सत्ता कदाचन ।
अनन्तरमदृष्टत्वान्नाशस्तत्रापि वै समः ॥ १ ॥

यदि विद्युदादेराशुविनाशित्वाद्दर्शनं तदत्राप्यस्त्विति भावः ।

॥ सत्ख्यातिमतखण्डनम् ॥

नैतदप्युपपन्नम् । तथा हि—सर्वज्ञानयथार्थत्वे हि भ्रान्त्यभ्रान्तिव्यवस्थितिः लोकप्रसिद्धा केनैषा भविष्यति ?

किं च यद्युत्तरत्र स्यादुदकादेर्विनाशतः ।
अदर्शनं, निरीक्ष्येत चिह्नं भूस्निग्धतादिकम् ॥

न खलु विद्युदादिवत् आशुभावी निरन्वयो विनाशः क्वाप्युदकादेरुपलभ्यते । तद्देशस्थित[1] सर्वपुरुषावि[2] संवादश्च विद्युदादिवदेव प्रसज्येत । बाध्यबाधकभावश्च न स्यात्, सर्वविज्ञानानामपि तथात्वाविशेषादिति ।

तस्मादेषा प्रसिद्धार्थख्यातिरित्यप्यशोभनम् ।
अलौकिकस्तु विभ्रान्तावर्थो भातीति केचन ॥ १ ॥

॥ भ्रान्तौ अलौकिकार्थो भातीति मतखण्डनम् ॥

तदसत् । अलौकिकार्थस्याप्रामाणिकत्वात् । अत एवायमलौकिक इति चेत् । मैवम् । अलौकिकत्वव्यवस्थाया अप्यन्तरेण प्रमाणमसिद्धेः ।

सिद्धौ वा सर्वसिद्धान्तसिद्धिः किं न भविष्यति ।
सर्वतीर्थिकतुण्डानां नहि कश्चिदवग्रहः ॥ १ ॥

॥ अलौकिकार्थसिद्धौ विपर्ययस्य प्रमाणत्वशङ्का ॥

अस्तु तर्ह्यलौकिकार्थसिद्धये विपर्ययाख्यं प्रमाणम् । न चासावर्थो नार्थक्रियाकारी । यतो दर्शनार्थक्रियां चन्द्रादिवदसौ करोतीति चेत् । तदप्यसत् ।

1. मा. स्थिति
2. मा. पुरुषादि संवा

चन्द्रादिदर्शनवदबाध्यत्वप्रसङ्गात्, बाध्यमानस्य च न प्रमाणत्वं लोके शास्त्रे वा सिद्धम्। अतो नालौकिकार्थत्व(।)ख्यातिरप्येषा।

आत्मख्यातिमतेन पूर्वपक्षः

अस्तु तर्हि आत्मख्यातिरित्यपरः[1]। तथा हि—रजतज्ञानं संवित्, ज्ञानमित्यादि विशिष्टव्यवहारो विशेषाभावे न भवेत्। विशेषस्तु रजतादिर्नेदं रजतमिति बाधकप्रत्ययेन बहिर्निषेधात् [2]अर्थान्तरज्ञानाकारोऽवतिष्ठते। न च स्वरूपमेव रजतस्य बाधकेन निषिध्यते। तस्य हि धर्मिणो निषेधे तद्धर्मस्येदन्ताया अपि प्रतिषेध इति उभयनिषेधाङ्गीकारगौरवम्। रजतरूपानुवादेन नेदमिति तस्य पौरस्त्यसंभेदमात्रप्रतिषेधेन लाघवम्। तावता चोपपत्तौ नाधिककल्पनावकाशः। तथा चानुभवो रजतमिदं न भवति, न पुना रजतमेव नेति।
तस्मात्—

इदंसंभेदमात्रस्य निषेधादवसीयते।
अनिदंरूपविज्ञानरूपता रूप्यवस्तुनः॥ १॥

तथा च रजतादेरापरोक्ष्यमप्युपपन्नं अपरोक्षसंविदाकारत्वात्।

अत्यन्तासन्निधाने तु वणिग्वीथ्यादिगामिनः।
रूप्यादेरापरोक्ष्यं न कथञ्चिदुपपद्यते॥ १॥

तस्मात्स्वाकारमेवैषा विश्रान्तिरवलम्बते।
बाह्यत्वेनेति तामाहुः आत्मख्यातिं मनीषिणः॥ २॥

॥ आत्मख्यातिवादखण्डनम् ॥

एतदप्यसमञ्जसम्। तथा हि—

प्रतिषेधादिदन्ताया अनिदंरूपता भवेत्।
वणिग्वीथ्यादिगामित्वे तस्य सा किं न सिध्यति॥

---

1. वादीत्यर्थः 2. बाह्यभिन्नेत्यर्थः

द्वेधा खल्वनिदंरूपता, अत्यन्तासन्निधानाद्वा देशान्तरगामितालक्षणात्, आत्यन्तिकसन्निधानाद्वा प्रतित्त्यात्मकात्। तत्र देशान्तरादिगतत्वेनाप्यनिदंरूपतोपपत्तौ आत्यन्तिकसन्निधानं तु प्रतिपत्त्यात्मकं अर्थस्यानुपलब्धचरं कथमाश्रीयेत।

॥ अन्यथानुपपत्त्या संवित्तिरूपत्वशङ्का तत्परिहारश्च ॥

नन्वन्यथाऽपरोक्षत्वं तस्य यस्मान्न युज्यते।
ततोऽपरोक्षसंवित्तिरूपतेत्युदितं पुरा॥ १॥

सत्यमुक्तम्। अयुक्तं तु तत्॥

यतो विचित्रसामर्थ्याद्दोषा देशान्तरस्थितम्।
अपरोक्षपुरोवर्तिरूपेणाभासयन्त्यमी॥ १॥

दोषादेव हि बाह्यत्वमान्तरस्यापि भासते।
आध्यात्मिकादविद्याख्या[दा](ता)परोक्ष्येऽपि तत्समम्[1]॥ २॥

यथा खल्वाध्यात्मिकदोषसामर्थ्यादान्तरस्य बाह्यतावभासः तथैवासन्निहितानामपरोक्षरूपावभासो रूप्यादीनामिन्द्रियदोषसामर्थ्यादुपपद्यत इत्यर्थः। न च अपरोक्षतैव भासमानतैव वा संविदात्मतां साधयति, बाह्यत्वेन व्यभिचारात्। न च बाह्यरूपतापि रूप्यादेः संविदेव, बाधकाभावप्रसक्तेः संप्रतिपन्नसंविदाकारवत्। तस्मान्नात्मख्यातिरपि भ्रान्तिः।

॥ वेदान्तिसम्मताया अनिर्वचनीयख्यातेः उपक्षेपः तन्निराकरणं च॥

अस्तु तर्ह्यनिर्वचनीयार्थख्यातिः विभ्रान्तिरित्यपरे। [ते]पृष्टा व्याचक्षतां केयमनिर्वचनीयता नामेति। न तावन्निर्वचनानर्हतैव। मूकभावप्रसक्तेः। सदसद्रूपाभ्यां निर्वक्तुमशक्यतेति चेत्। तदप्यसत्। भ्रान्तिकाले सत्त्वेन बाधकाले चासत्त्वेन पौरस्त्यस्य रूप्यात्मनो निरुच्यमानत्वात्।

---

1. दोषसामर्थ्याधीनत्वं तुल्यं इत्यर्थः

॥ वेदान्तिना शुक्तिरजतादेः अनिर्वचनीयत्वोपपादनम् ॥

स्यादेतत् । सत्त्वेनासत्त्वेन सदसत्त्वेन वा तद्युक्त्या निश्चित्य वक्तुमशक्यम् । तथा हि–सच्चेद्रूप्यं तत्प्रतिभासो न मिथ्येति न बाध्येत सत्यरूप्यान्तरप्रतिभासवत् । असत्त्वेऽपि तथाविधप्रतिभासप्रवृत्तिगोचरभावो न स्यात् । नचैकस्य सदसद्रूपता सम्भविनी(ति)विरोधात् । अतो न सत् नासत् नापि सदसत्, किं तु अनाद्यनिर्वाच्याविद्याक्रीडितं रजतमिति पश्यामः ।

॥ रूप्यादेरनिर्वचनीयत्वनिरासः ॥

तदेतदनुचितम् । तथा हि-यत्तावत्सत्वे न भ्रमः स्यान्नापि बाध इत्युदितं; तत्र किमिदं सत्त्वमभिप्रेतमारोपणीयस्य रजतस्य? स्वरूपेण सत्त्वं, किं वा पौरस्त्यवस्तुसंभेदेन ? आद्ये कुतो न विभ्रमः ? कुतश्च न बाधः ? । स्वरूप(1)-सतोऽपि रूप्यस्य पौरस्त्यवस्तुसम्भेदेन प्रतिभासमानस्यातथात्वाद्भ्रान्तिबाधव्यवस्थोपपत्तेः । द्वितीये तु अनङ्गीकार एव । न हि वयमपि पौरस्त्यरूपेण रूप्यं तात्त्विकमङ्गीकुर्मः ।

॥ पौरस्त्यस्य सदन्तरात्मना भानाङ्गीकारः तत्र ज्ञापकं पाश्चात्यमनुसन्धानं, कारकं च दोषा एव ॥

यदप्यसतस्तथाविधप्रतिभासादिगोचर(ता)भावो न स्यादिति । सत्यमेतत् । अत एव पौरस्त्यस्य सतः सदन्तररूप्यात्मना प्रतिभासप्रवृत्तिगोचरभावमङ्गीकुर्मः । कथं पुनः पौरस्त्यस्य सतोऽपि स्वरूपेण सदन्तररूप्यात्मनात्वसतः तथा प्रतिभासगोचरभाव इति चेत ; ज्ञापकपर्यनुयोगश्चेन्नेदं रजतमिति पौरस्त्यस्य रूप्यरूपेणासत्वनिश्चयात्, बाधानन्तरमेतावन्तं कालं[इदं रजतं]इत्यभादित्यनुसन्धानादिति च वदामः । कारकपर्यनुयोगे तु कार्योन्नेयं दोषसामर्थ्यमनुसरणीयम् । असत्ख्यातिरप्येतादृशी न दूषणमभ्युपगमादित्युक्तम् । अत्यन्तासतस्तु सद्रूप्यरूपेण प्रतिभासः पौरस्त्यशुक्तिगोचरप्रवृत्त्याद्युपपत्त्युपदर्शनेन पराकृतः ।

॥ सदसद्विलक्षणत्वमेकस्य विरुद्धमित्युपपादनम् ॥

सदसद्रूपसमुच्चयश्च यथैकस्य विरोधी, तथा तन्निषेधसमुच्चयोऽपि ।

तथा हि—

सदसद्रूपयो रूपं परस्परनिषेधनम् ।
तेनोभयोर्निषेधेन विधिरेवोभयोर्भवेत् ॥ १ ॥

सदसद्रूपयोर्हि परस्परविरह एव रूपं, तथा लोके प्रतीतेः । नासन्नात्मेति असद्रूपनिषेधं हि सद्रूपातिरेकिणं न पश्यामः, प्रतिषेधद्वयस्य प्रकृत एवार्थे प्रवृत्तेः । तथा, न सन्नरविषाणं, नात्र सन् पट इत्यादौ नासद्रूपातिरेकिणं उपलभामहे । तदनयोः परस्परनिषेधरूपयोः एकत्र निषेधे द्वयोरपि विधानं प्रसज्यते । ततश्च न सन्नासद्रजतमित्युक्ते सच्चासच्चेत्युक्तं स्यात् । एकस्य च सदसद्रूपतां विरोधिनीमभिधाय तामेवोभयनिषेधद्वारेणोपपादयन् कथमयमव्याहतवदनः श्लाघनीयप्रज्ञो देवानांप्रियः ।

॥ असद्रूपनिषेधस्य सद्रूपत्वे कुम्भादिनित्यत्वापादनम् ॥

स्यान्मतम्—

असद्रूपनिषेधश्चेत्सद्रूपान्नातिरिच्यते ।
प्राप्तं कुम्भादिनित्यत्वं प्रागभावस्य चोद्भवः ॥ १ ॥

यद्धि कुम्भस्य प्रागसद्रूपं तत्प्रतिषेधश्चेत्कुम्भः सद्रूपान्नातिरिच्येत, कृतकस्यापि कुम्भस्य नित्यता प्रसक्ता प्रागसद्रूपप्रतिषेधस्य पश्चात् कदाचिदपि अपरावृत्तेः प्रागभावोन्मज्जनं केन वार्यते । अन्यथा तदभावो न तद्विधिरिति प्रतिषेधद्वयस्य प्रकृतार्थगामिता हीयेत ।

किं च—

प्रध्वंसप्रागसद्रूपं कुम्भसत्त्वं यदीष्यते ।
कुम्भस्यानादिता प्राप्ता प्रागभावस्य वा जनिः ॥

प्रध्वंसप्रागभावश्चेत् कुम्भाभिन्नस्तस्यानादित्वात् कुम्भोऽप्यनादिः स्यात् अन्यथा प्रागभावस्योत्पत्तिप्रसक्तिः । तथा च प्रध्वंसस्य प्रागभावत्वप्रसङ्गः [1]तद(ा)भावाभावस्यैव तद्विधित्वात्, अन्यथा प्रतिषेधद्वयस्य प्रकृतार्थगामिताव्याघातादिति ।

---

1. घटध्वंसप्रागभावस्य घटरूपत्वात् तस्य च यः प्रागभावः घटध्वंसप्रागभावप्रागभावः स घटध्वंसरूपः अभावाभावस्य प्रथमाभावप्रतियोगिरूपत्वात् ।

अत्रोच्यते—

अन्योन्यमविशेषेण निषेधे नियतो विधिः ।
एकाभावनिषेधस्तु कदाचिदतिरिच्यताम्[1] ॥

कुम्भवत्तस्य नाशोऽपि प्रागभावपराकृ [तिः[2]] ।
प्रध्वंसप्रागभावोऽपि कुम्भवत्तदनुद्भवः ॥[3]

यत्तावत्प्रागभावासद्रूपप्रतिषेधस्य कुम्भसद्रूपानतिरेके कुम्भनित्यता प्रागभावोन्मज्जनं[4] वा प्रसज्येतेति । न तत्सारम् । अविशेषेणासन्मात्रनिषेधो हि सद्रूपविधानमिष्यते[स च कुम्भे] नियमेन नास्ति कुम्भसत्ताप्रतीतेरव्यभिचारात्-प्रागभावनिषेधस्तु भावविधानात्[5] कदाचिदतिरिच्येतापि । कुम्भवत्तद्ध्वंसस्यापि तत्प्रागभावप्रतिषेधात्मकत्वात् । अन्यथा कुम्भभङ्गेऽपि प्रागभावप्रतिषेधबुद्ध्यपरावृत्तेरनुपपत्तेः । यदि पुनः प्रागभावप्रध्वंसयोः कुम्भादिव्यतिरेकेण प्रध्वंसः प्रागभावाभावश्च स्वीक्रियेत तदा तयोरपि प्रागभावः प्रध्वंसश्चापरः स्यात् । ततस्तत्रापि प्रध्वंसान्तरं प्रागभावान्तरमित्यनवस्थितिरपरिहार्या । तस्याश्च मूलक्षयो भवतु मा वा भूत् । सर्वथाप्यनवस्थितपदार्थस्वीकारगौरवं दूषणं दुष्परिहरमेव । नचैवमव्यवस्थिताः प्रध्वंसादयो भवन्त्यनुभवमार्गारूढाः इत्ययुक्तैवेयं कल्पना ।

॥ वस्तुनाशकालीनावयवानामपि प्रागभावध्वंसत्ववादिश्रीधराचार्यमतं, तत्खण्डनं च ॥

न्या य क न्द ली कारस्तु वस्तु [नाशकालीनावयवानामपि] आरब्धकार्याणां प्रागभावविनाशलक्षणत्वं ब्रुवाणो निवृत्तेऽपि वस्तुनि प्रागभावोपलब्धिप्रसङ्गं प्रतिचिक्षेप तस्य वस्तुकालेऽपि तदवयवानामारब्धकार्याणामवस्थानात्

---

1. घटध्वंस प्रागभावस्य, घटप्रागभावात्मकस्य, घटप्रागभावध्वं सस्य घटध्वंसात्मकस्य च भावात्मताविरहादिति भावः ।

2. प्रागभावध्वंसः

3. घटप्रागभावः

4. घटप्रागभावध्वंसः घटरूपः तस्य ध्वंसरूपत्वात् नित्यत्वापत्तिः तस्य ध्वंसाङ्गीकारे प्रागभावध्वंसध्वंसेन प्रागभावोन्मजनं स्यात्

5. विधिरूपत्वात्

प्रागभावस्य युगपद्ध्वंसद्वयाङ्गीकारगौरवप्रसङ्गात्। नचैकेन तन्निषेधबोधोपपत्तावुभयाङ्गीकारगौरवं युक्तम्। कुम्भभङ्गे तदुन्मज्जनप्रसङ्गस्तु कुम्भध्वंसस्यापि तन्निषेधरूपतामभ्युपगम्य शक्यं पराकर्तुम्।

॥ किञ्च परमाणूनामेव घटप्रागभावध्वंसरूपत्वं प्रसज्य गौरवेण तद्दूषणम् ॥

किंच कुम्भवत् स्वावयवानामपि कदाचिदवयवित्वात् भङ्गे पुनस्तत्प्रागभावोन्मज्जनं[1] केन वार्येत। तदवयवपरम्परानुमिताः परमाणव एव परम्परया कुम्भारम्भकत्वात् तदवयवा विवक्षिताः; न च ते कदाचिद्भङ्गभाज इति चेत्। अहो महानस्य प्रमादो यदेष कुम्भ [तद्भङ्गा][2] भ्यामेव क्रमभाविभ्यां प्रत्यक्षपरिदृष्टाभ्यां प्रागभावोन्मज्जनप्रसङ्गपराकरणोपपत्तावपि अवयवानुमानपरंपरापरिप्रापितातीन्द्रियानेकपरमाणुरूपतां प्रागभावध्वंसस्य गरीयसीमाद्रियत इति। नच तेष्वेक एव परमाणुरारब्ध(:)कुम्भप्रागभावध्वंसो, विशेषानुपलम्भात्। भवन्मतेप्येकस्य[3] क्रमभाविनौ ध्वंसौ अन्यत्राक्लृप्तौ कल्पनीयाविति चेत्। किमेकस्य युगपदनेकध्वंसा अन्यत्र क्लृप्ताः? समाने तु अक्लृप्तकल्पने, युगपदनेकध्वंसानां [कल्पनं तेषां अनन्तावयवरूपत्वकल्पना] गौरवं चातिरिच्यते भवतः। भाव एवाभावध्वंस इति अस्मन्मते नियमसिद्धिः। भवन्मते हि भावः कदाचित्, कदाचिदभाव इति अर्धवैशसमापद्यते इति चेत् समानमेतत्। स्वप्रागभावनिरोध एव भाव इति नियमभ्रंशेन नित्यानामप्यवयवानां केषाञ्चिदन्यप्रागभावनिरासरूपता। कुम्भादयस्तु स्वप्रागभावनिरासरूपा इति भवन्मतेऽप्यर्धवैशसापातात्।

॥ पक्षान्तरे गौरवप्रदर्शनं स्वपक्षे लाघवसमर्थनं च ॥

तथापि भावस्य कुम्भादेरभावध्वंसतासिद्धावन्येऽपि भावा एव तदुन्मज्जनपरिहारार्थं तद्ध्वंसाः कल्पनीयाः सजातीये शीघ्रबोधोत्पादात्। नतु [4]घटाभावः, तस्य विजातीयत्वेन तत्र बोधस्य मन्थरत्वादिति चेत्। मैवम्। प्रत्यक्षपरिदृष्टेनैव

1. तत्प्रागभावः कुम्भावयवप्रागभावः
2. तद्भाग—मा.
3. एकस्य-प्रागभावस्य
4. घटध्वंसः

कुम्भभङ्गेनोपपत्तावनुमानपरिप्रापितातीन्द्रियपरमाणुगोचरबोधाङ्गीकारस्यैवातिमन्थरभावदूषितत्वात् । तथाप्येकस्य ध्वंसस्योभयप्रतियोगिकत्वमकॢप्तं कल्पनीयं प्रसज्यते भवतामिति चेन्न । स्वप्रागभावध्वंसः सर्वोत्पत्तिमानिति साधारण्येन कॢप्तत्वात्कुम्भध्वंसस्य च कुम्भवत्तत्प्रागभावोऽपि [प्रतियोगी] इति चावश्याश्रयणीयत्वात् । अन्यथा कुम्भोत्पत्तेः प्राक् ध्वंसविधानप्रसक्तेः[1] ।

॥ घटध्वंसप्रागभावस्य अनारब्धकार्यकारणरूपत्वापेक्षया अनारम्भरूपत्वौचित्यं अनन्तपरमाणुरूपत्वे गौरवं च ॥

अथानारब्धकार्याणि कुम्भकारणान्येव तदा तद्ध्वंसप्रागभावौ नतु [कुम्भपरमाणवः] । तथापि कुम्भप्रागभावस्यैव तदनारम्भपदार्थत्वेन निरूपणात्तन्मात्रेणोपपत्तौ तन्निरूपणाधीननिरूपणतद्विशिष्टकारणानां घटध्वंसप्रागभावरूपतापरिकल्पनस्य गौरवदोषदूषितत्वात् । कारणानां च सादित्वेन प्रागुक्तदोषानुषङ्गात अनादिपरमाणुरूपताश्रयणे तेषां कदाचिदप्यपरावृत्तेः प्रागभावलक्षणविरहात् । कार्यानारम्भविशिष्टाकारेण परावृत्त्यभ्युपगमे प्राप्ताप्राप्तविवेकेन कार्यप्रागभावापरपर्यायस्यैव तदनारम्भस्य कार्यप्रध्वंसप्रागभावतोपपत्तेः । तदुपपत्तौ च तद्विशि[ष्टा]निर्धारितविशेषानेकातीन्द्रियपरमाण्वादिगोचरप्रागभावबोधाङ्गीकारस्यातिगौरवदूषितत्वात् । तदेतत् व्यवस्थितं, कुम्भप्रागभावस्य कुम्भवत्तद्ध्वंसोऽपि ध्वंसस्तस्य ध्वंसस्य कुम्भवत्तत्प्रागभावोऽपि प्रागभाव इति ।

॥ कुम्भस्यानादित्वनिराकरणम् एकस्य भावाभावोभयात्मत्वप्रसङ्गनिराकरणं च ॥

**एतेनै**तदप्यपहस्तितम् यदुक्तं प्रध्वंसप्रागभावश्चेत कुम्भाभिन्नः, तस्यानादित्वात् कुम्भोऽप्यनादिः स्यात् अन्यथा प्रागभावस्योत्पत्तिप्रवृत्तिरित्यादि, कुम्भोत्पादात्प्राक् तत्प्रागभावस्यापि तद्ध्वंसप्रागभावतोपवर्णनेन सकलदोषनिरासात् । नच तत्प्रागभावस्य कुम्भाभावनिषेधात्मकत्वात्तदुभयात्मता[2]प्रसङ्ग इति वाच्यम् । सर्वाभावनिषेध-

---

1. अवयवात्मकस्य ध्वंसस्य संभवादिति भावः
2. भावात्मकतयेत्यादिःभावाभावोभयात्मतेत्यर्थः

स्यैव भावविधित्वाश्रयणात् प्रध्वंसनिषेधात्मनोऽपि भावरूपत्वाप्रसक्तेः। एतेन कुम्भप्रध्वंसस्याप्युभयनिषेधरूपतयोभयात्मताप्रसङ्गपर्यनुयोगः परास्तः।

॥ वेदान्तिमते रजतस्य असद्विलक्षणस्य सद्रूपताप्रसङ्गः ॥

अनिर्वाच्यवादिनस्त्वसन्मात्र[ता]व्यतिरेकं वर्णयन्ति स्म रजतादेरिति तस्योभयात्मता प्रसज्यत एवेति वैषम्यम्। अन्यथा विशिष्टासद्रूपतादिनिषेधे परिशिष्टासद्रूपताद्यङ्गीकारप्रसङ्गात्। मा वा भूदसन्मात्रनिषेधस्सत्स्वरूपमेव। तथापि तन्नान्तरीयकतया तत्प्रतिभासः केन वार्यते। लोके हि सदसद्रूपयोरेकतरप्रतिषेधे सत्यन्यतरविधानमवर्जनीयं दृश्यत इति। अथालौकिकावेवात्र सदसच्छब्दौ विवक्षितौ। तथा च तयोरेकतरनिषेधेऽपि नान्यतरविधानप्रसङ्ग इत्यभिधीयेत काम[म]स्तु स्वमनोरथपरिकल्पितात्यन्तालौकिकविषयसहस्रविनिवृत्तावपि विज्ञानोप[दर्शि]तयोः लौकिकसदसत्त्वयोः अत्यन्ता(न)पह्नवानुपपत्तौ अन्यथाख्यातिसिद्धिः। तदपह्नवे न लौकिकाः सदसदादयः शब्दाः तदनुविद्धाश्च प्रत्ययास्तत्र भवेयुः। नहि निमित्तानुवृत्तिमन्तरेण नैमित्तिकार्थानुवृत्तिः संभविनी। नच अलौकिकार्थगोचरत्वेनापूर्वासङ्गतिरवसीयते। येनात्र सदसदादिपदं प्रवर्तेत।

॥ रजतस्यालौकिकत्वे भ्रान्तानां तत्र कामनाभावेन तद्विषये प्रवृत्त्यनुपपत्तिः ॥

कथं च लौकिकरजतसलिलाद्यर्थिनः तत्र तत्र विभ्रान्तिगोचरे प्रवर्तेरन्। न खलु लोकोत्तरा[र्थं](र्थं)ते कामयन्ते। किं तर्हि? पूर्वावसितसमीहितसाधनभावं भावमनुस्मृत्योपलभ्यमानस्यापि तज्जातीयतया तमनुमाय ततः कामनया तत्र प्रवर्तन्त इति युक्तम्। नच अलौकिकस्य तज्जातीयता तथा,[1] तस्या लौकिकत्वव्याघातात्।

॥ सदसत्वादिजातीनामेव अलौकिकत्वे रजतत्वादेः तद्व्याप्यत्वजातित्वभङ्गः
अलौकिकस्यैव लौकिकात्मना भानेऽन्यथाख्यातिप्रसङ्गः ॥

**स्यादेतत्**, सदसद्रूपमेव न तत्र लौकिकमनुवर्तते। रजतत्वादिजातयस्तु लौकिक्य एवानुवर्तन्त(त) इति। **तदप्यभद्रम्।** तासामलौकिकार्थप्रवृत्तित्वे लौकिक-

---

1. युक्तेत्यर्थः

सत्वापरजातिभावेन[1] तदेकार्थसमवायनियमस्य प्रागवसितस्य भङ्गप्रसङ्गात् । कथं चित्तद्भङ्गेऽपि अर्थक्रियासामर्थ्यविरहिण्यलौकि[के]प्रवृत्त्यनुपपत्तेः । अथालौकिकमेव लौकिकात्मना प्रतीयत इति तदर्थिनां तत्र प्रवृत्तिस्तत्र च गृहीतसङ्गतिकानां च शब्दानां तदनुविद्धानां च प्रत्ययानामुपपत्तिरिति । हन्त एवमन्यथाख्यातिरेषा ! तथा च किमलौकिकरजतादिपरिकल्पनदुर्व्यसनेन । लौकिकस्यैव शुक्तिशकलादेः लौकिकरजतादिरूपेणावभासमान[स्य]तदुचितप्रवृत्त्यादिगोचरतोपपत्तेः ।

॥ सदसद्विलक्षणभाने सत्तोचितप्रवृत्त्याद्यनुपपत्तिः ॥

किं चालौकिकस्य लौकिकरजताद्यात्मता(न)भासमाना[न]सती विरोधादित्यसत्ख्यातिरापद्येत । नाप्यसती भासमानत्वादेवेति चेत्तर्हि न सती नाप्यसतीति भासेत न पुनः सतीति । तथा च न तत्सत्तोचिताः प्रवृत्त्यादयस्स्युः । सदसद्विलक्षणाया अपि तस्याः सत्तादात्म्यमारोपितं भासत इति चेत् । तत्तादात्म्येऽपि समानः प्राचीनप्रसङ्गः । तत्रापि सत्तादात्म्यान्तरारोपे स्यादनवस्था ।

॥ प्रवृत्तेः भेदाग्रहनिबन्धनत्वाक्षेपः ॥

यदा त्वलौकिकस्य लौकिकरजताद्यविवेकनिबन्धनप्रवृत्त्यादिरुपवर्ण्येत । तद[ा]पि एतदेव वाच्यं लौकिकयोरेव पौरस्त्यरजतयोर्भवत्वविवेकनिबन्धनप्रवृत्त्या[दिः ।] किमलौकिककल्पनेनेति । प्रतिषिद्धश्चायमविवेकात्प्रवृत्तिपक्षः ।

॥ सत्तात्रैविध्यमङ्गीकारेण शुक्तिरूप्यादेः अविद्यामयस्य प्रातिभासिकत्वोपपादनम् ॥

एवं च यदाहुरेके त्रिविधा सत्ता ब्रह्मणस्तात्त्विकी प्रपञ्चस्य त्वर्थक्रियासामर्थ्यलक्षणा मायामयी । तद्विपरीता तु शुक्तिरजतादेरविद्यामयीति सच्छब्दस्तदनुविद्धश्चानुभवस्तत्र घटते । मायाविद्याविकारयोश्च रजतत्वादिजात्यनुवृत्तेः प्रवृत्तिसाम्यम् । परमार्थसद्वैलक्षण्याभिप्रायेण चानयोः अनिर्वाच्यलक्षणमुपपद्यते । तदेवमान्तराळिकवैलक्षण्ये सति, सार्वसांसारिकव्यवहाराविसंवादित्वं मायामयस्य घटस्तम्भादेः । शुक्तिरजतादेः पुनरविद्यामयस्य व्यवहारविसंवादित्वं प्रतिनियत-

---

1. अपरजातिः व्याप्यजातिः

पुरुषोपलभ्यत्व[श्च ।] परमात्मनस्तु परमार्थसतो न कदाचिद्बाध इत्युपपद्यत इति ।

॥ सत्तात्रैविध्यखण्डनम् ॥

तदपि परास्तावकाशम् । एकनिमित्ताभावे सर्वत्र सच्छब्दस्य प्रतिनिमित्तं सङ्गतिसंवेदनभेदप्रसक्तेः । नचैवं दृष्टमिष्टं वा । नच लौकिकपरमार्थरजतादिसत्वापरजातिभावनियमेनावस्थिता रजतत्वादिजातयस्तदतिक्रम्यान्यत्र व[र्त्ति]तुमीशत इति कथं प्रवृत्तिसाम्यमभ्युपपद्येत । कथं चासति सद्वैलक्षण्ये परमात्मसद्वैलक्षण्येन प्रपञ्चेऽप्यनिर्वाच्यतोपवर्णनम् । बाधाबाधलक्षणं तु प्रपञ्चपरमात्मनोरग्रे निराकरिष्यामः । याऽपीयमान्तरालिकसद्वैलक्षण्यमवलम्ब्य व्यवस्थितिरुपवर्णिता सार्वसांसारिकव्यवहाराविसंवादितामात्रं मायामयस्य, भ्रान्तरजतादेस्तु अविद्यामयस्य व्यवहारे विसंवादः । परमार्थसतस्त्वात्मनो न कदाचिद्बाध इति । साप्यसति सत्तात्रैविध्ये कथं सालम्बना । नचैतद्व्यवस्थात्रैविध्येनैव सत्तात्रैविध्यकल्पनं; व्यवस्थात्रैविध्यस्यैवासिद्धेः । सत्तात्रैविध्ये च सङ्गतिसंवित्तिभेदप्रसक्तेः वज्रलेपायमानत्वात् । बाधाबाधव्यवस्थि[तिः[1]] पुनरन्यथाख्यातिपक्षेऽप्यसति सद्वैलक्षण्ये समारोपिततत्त्वरूपाभ्यामेवोपपद्यते । यत्र हि सदेव रूप्यसर्पादिरूपं सदन्तरे समारोप्यते तस्य तद्रूपता नेदं रजतमित्यादिबाधबोधेन बाध्यते । यत्र तु तात्त्विकमेव रजतं न तत्र बाधावकाश इति कुतः सत्तान्तरपरिकल्पनप्रसङ्गः ।

॥ सत्ताद्वैविध्यपक्षनिराकरणम् ॥

येऽपि मायाविद्याभेदमनाश्रित्य द्विरूपामेव सत्तामाचक्षते ब्रह्मणस्तात्त्विकीं, मायामयी दृश्यजातस्येति । तेषामपि तदवस्था सङ्गति[ग्रहो]च्छेदप्रसक्तिः । नचैकत्र मुख्यं सत्पदमपरत्रौपचारिकमिति साम्प्रतम् । सन्नात्मा घटस्सन् इत्युभयत्रा[पि प्रयोगसाम्यात् उप] चा(रा)[रे]मानाभावात् ।

॥ एकसत्तापक्षेऽपि अधिष्ठानसत्तानुवेध इति पक्षः ॥

यदि मतम्—अधिष्ठानेदमंशसंसर्गवत् तत्सत्तासंसर्गोऽपि अविद्यामये रजते

---

1. स्थितः मा.

समारोप्यते। ततस्तन्निमित्तः सच्छब्दस्तदनुविद्धश्च प्रत्ययस्तत्रोपपद्यते। न तु तदर्थमलौकिकाविद्यामये रजते सत्तामभ्युपगच्छाम इति।

॥ अधिष्ठानसत्तायाः सद्व्यवहारप्रवर्तकत्वे लौकिकरजतस्यैव रजतव्यवहारप्रवर्तकत्वमस्तु इति तन्निरासः॥

अत्रोच्यते। यद्यधिष्ठानगतैव तात्त्विकी सत्ता रजतादिष्वारोपिता सद्व्यवहारं प्रवर्तयेत् रजतरूपमपि तर्हि लौकिकमेव प्रागवसितमिदमंशे संभेदेनारोप्यताम्। यथा च सत्तारूप्यसंसर्गमात्रं भवन्मते बाध्यं, तथा रूप्यस्यापि पौरस्त्यसंसर्गसंभेदमात्रं बाध्यं भविष्यतीत्येवमप्युपपत्तौ किमलौकिकाधिष्ठानाविद्याजनितरजतान्तरकल्पनव्यसनेनेति। पौरस्त्यरजतसम्भेदमात्रबाधे बाधबोधादूर्ध्वं उभयोरप्यत्रैवोपलम्भप्रसङ्गो बाधितसंभेदयोरिव वनस्पत्योरिति चेत्। मैवम्। अन्यथाप्युपपत्तेः। यत्र हि सन्निहितयोरेव वनस्पत्योरेकतारोपः तत्र तद्बाधे सत्युत्तरकालं तयोरुपलम्भः। यत्र त्वसन्निहितमेव रूप्यं पौरस्त्यसंभेदेनारोप्यते तत्र नेदं रजतमिति रूप्यरूपनिषेधे न पौरस्त्यवद्रजतमत्रानुभवगोचरो भविष्यत्यसन्निहितत्वादित्यस्तु व्यवस्था। पूर्वमेव चासन्निहितस्यापि पौरस्त्यसंभेदेनापरोक्ष्यं दोषमाहात्म्यादुपपद्यत इत्युपपादितम्। तदेवं सद्रूपवद्रजतरूपस्यापि लौकिकस्यैव समारोपसम्भवात् न तस्यापूर्वस्य कल्पनावकाशः।

॥ किञ्च अलौकिकरजताङ्गीकारे कालत्रयेऽपि रजताभावः इति प्रतीत्यनुपपत्तिः॥

किंच यदीदङ्कारास्पदसम्भेदेनाविद्याजनितमलौकिकमेव रजतमत्रासीत् कुतस्तर्हि तदुत्तरकालमपि नोपलभ्यते? पौरस्त्ययाथात्म्यविज्ञानेन विनिवर्तितत्वादिति चेत्। न तावद्विज्ञानं तस्य निवर्तकमिति वक्ष्यामः। अस्तु वा, तथाप्येतावन्तं कालमिहासीद्रजतं नाधुना तदिति प्रतिभासेत। यथा खलु मुद्गराभिघातादनन्तरमेतावन्तं कालमिहासीत्कुम्भो नाधुनेति प्रतीतिः। न पुनर्नेदं रजतमित्यविशेषेण पौरस्त्यरजतसंभेदप्रतिषेधो भवेत्।

॥ लौकिकपरमार्थरजतप्रतिषेधे भ्रमबाधयोः वैयधिकरण्यापत्तिदूषणम्॥

**यः पुनराह** नायं प्रतिपन्नरजतप्रतिषेधो नेदं रजतमिति, किं तर्हि? लौकिकपरमार्थरजतस्याविशेषेण निषेध इति। **स इदं प्रष्टव्यः।** तस्य किं पौरस्त्य-

सम्भेदेनासतोऽपि तथा प्रसक्तस्य प्रतिषेधः? किमप्रसक्तस्येति। पूर्वस्मिन्नन्यथाख्यातिः उत्तरस्मिन्नप्यनुभवविरोधः। प्रसक्तप्रतिषेधरूपो हि प्रत्ययः नेदं रजतमिति प्रतिपुरुषमनुभूयते। न पुनः प्रतिपन्नैककुम्भाभ्युपगमेन नेह भूतले स घट इति निषेधवत् प्रतिपन्नरजतानुपमर्दनेन रजतान्तरप्रतियोगिप्रतिषेधोऽनुभूयते। तथा सति न तद्रजतमेतदिति स्यात्। न तु अविशेषेण नेदं रजतमिति।

॥ स्वमते प्रतिपन्नस्य नेदमिति प्रतिषेधोपपत्तिः ॥

कथं पुनः प्रतिपन्नस्यापि निषेधः प्राचीनज्ञानविरोधादिति चेत्। ज्ञापकपर्यनुयोगे तद्विरोधिनोऽपि तस्य तदुपमर्देनोत्पादः प्रत्यक्षसिद्ध इति वाच्यम्। कारकपर्यनुयोगे पुनरपेताशेषदोषादिन्द्रिया(द्विव)दिति वदितव्यम्। न चानुमानवदबाधितविषयता प्रत्यक्षबोधेषु कारणं येन प्रत्ययान्तरविरोधे न जायेरन्। वस्तुतस्त्वनुमानमप्यारोपरूपेणान्यथासिद्धमवबोधमपबाध्यैव जायत इत्यग्रे निवेदयिष्यामः।

॥ रजतज्ञानस्य शुक्तिज्ञानेन निवृत्तिर्न संभवतीति सदृष्टान्तमुपपादनम् ॥

किं च नेदं रजतमिति चेत्प्रतिपन्नं तत्प्रतिषेधः न भवेत्तस्य बाध इति वाच्यम्। इयं शुक्तिरिति पौरस्त्ययाथात्म्यविज्ञानेन विनिवृत्तिरिति चेत्। कथं पुनः विज्ञानान्तरव्यवस्थापितबहिरर्थनिवर्तकं विज्ञानान्तरम्। नो खलु स्तम्भयाथात्म्यज्ञानेन कुम्भविनिवृत्तिः। स्यान्मतं पौरस्त्ययाथात्म्यापरिज्ञानजनितं रजतमतः तज्ज्ञानेनाज्ञाननिवर्तनद्वारेण निवर्तते, न तु स्तम्भयाथात्म्याज्ञाननिबन्धनः कुम्भ इति।

॥ ज्ञानाभाव एवाज्ञानम् इत्याक्षिप्ते वेदान्ती भावरूपेऽज्ञाने प्रमाणमाह ॥

तदप्यसत्। अज्ञान[म]स्य ज्ञानाभावः स्यात्। उपादान[1भूतस्य] अन्यस्याज्ञानस्याप्रमाणत्वात्। कार्यतस्तु सिद्धिरिति चेत्। किं पुनः तत्कार्यं? कथं वा तदभिप्रेतमज्ञानमाक्षिपेत्? यदि मतं, पौरस्त्यसंभेदेन प्रतिभासमानं रजतं तज्ज्ञानं च कादाचित्कत्वात्कारणसापेक्षं, न च निमित्तकारणमात्रात् कार्यसिद्धिः, ध्वंसातिरेकिणः कार्यस्योपादानाविनाभावात्। नचात्यन्तासतो गगनकमलिनीकल्पस्योपादान[ता] संभविनी। न च सदेव साक्षादुपादानं, सदुपादानत्वे वस्त्वन्तरवत्

---

1. उदादानत्वादन्य मा.

सत्यतापातात् । तथा च कार्यानुसारिकारणमपि अनिर्वाच्यम् । नचास्य सादिता । तथा सति तस्यापि तादृगुपादानान्तरं तस्यापि त[द इत्य](दा) व्यवस्थितानेककारण-कल्पनप्रसङ्गात् । एकेन चानादिनोपपत्तौ तदयोगात् । लाघवतर्कसाहाय्यानुसरणे-ना[ना]द्यनिर्वाच्यं रजताद्युपादानं कार्यकल्पितम् । तच्च ज्ञानविरोधित्वादज्ञान-मिति गीयत इति ।

॥ अन्यथाख्यात्यैवोपपत्तौ रजतोपादानत्वानुपपत्त्या अज्ञानकल्पनं न युक्तमिति तत्खण्डनम् ॥

तदपि मन्दम् । तथा हि—प्रागुन्नीतया नीत्या पूर्वावसितस्यैव रूप्यस्य पौरस्त्यसम्भेदेनासतोऽपि तथा प्रतिभासे नेदं रजतमिति तस्य पौरस्त्यसम्भेदमात्र-बाधादन्यत्र व्यवस्थोपपत्तौ अपूर्वरजतस्यैवोत्पादे प्रमाणाभावात्कुतस्तस्योपादानचिन्ता । कुतस्तरां तस्य परिशेषादनाद्यनिर्वाच्यता । कुतस्तमां च ज्ञानविरोधित्वादज्ञान-तेति । तस्माज्ज्ञानाभावातिरेक्यज्ञानं न कार्यतश्शक्यमवसातुम् ।

॥ अनिर्वाच्यभावरूपाज्ञाने साक्षिरूपनित्यानुभवस्य प्रमाणत्वोपन्यासः ॥

**यदपि मतं**—ज्ञानाभावातिरिक्तमज्ञानं तत्कार्यं च नित्यानुभवमात्रात्सिद्धम् । स [1]चात्मैव, नान्यथा ज्ञानसुखादीनामपि सांसारिकाणां प्रसिद्धिः स्यात् । न च ज्ञानं ज्ञानान्तरप्रत्यक्षं सुखादयश्चेति शक्यं वक्तुम् । ज्ञानं हि ज्ञातुर्गुणोऽभ्युपे-यते भवद्भिः सुखादयश्च । यस्य च यो गुणो न स तं तद्गुणं च समानजातीयं विजातीयं वा विषयीकुर्यात् । यथाग्न्यादिगुणः प्रकाशादिः । एवं ज्ञानमपि ज्ञानान्तरं सजातीयं तद्वत्तद्गुणांश्च अन्यान् सुखादीनपि विजातीयान् न विषयीकर्तु-मुत्सहते । तस्मादनादिनिधन एवात्मानुभवोऽपि ज्ञानसुखादीनां साधकः स्वी-करणीयः । तत्प्रसादादेव च[अ] ज्ञानमपि ज्ञानाभावातिरेकि सकार्यमवभासते । तथा च तस्य भावाभावप्रमाणागम्यत्वेन सदसत्वाशङ्काव्यावृत्तिसिद्धिः । ज्ञानमात्रा-पनोद्यत्वाच्चानिर्वाच्यतासिद्धिः । न हि सद्वस्तु ज्ञानापनोद्यमतिप्रसङ्गात् । नापि शशविषाणं ख्यात्यभावात् । अनिर्वाच्यत्वे तु न विज्ञानविनिवर्त्यता विरोधिनी । तत्पुनरेकमनेकं भिन्नमभिन्नं सावयवं निरवयवमित्यादिप्रकारैश्च निश्चित्य वक्तुमशक्य-त्वादनिर्वाच्यमुच्यत इति ।

---

1. नित्यानुभवश्च

॥ साक्षिरूपनित्यानुभवे प्रमाणाभावः आत्मगुणस्यापि सुखादेः तद्गुणेन ज्ञानेन प्रकाश्यत्वं, अग्निगतप्रकाशेन तद्गतसङ्ख्यादिप्रकाशवत् ॥

तदप्यभद्रम् । तथा हि— न तावत्संसारगोचरो नित्यः कश्चिदस्मदाद्यनुभवः समस्ति । न चानुभवरूप आत्मेत्यात्माधिकारे निरूपयिष्यते । अतो न नित्यात्मानुभवादज्ञानसिद्धिरिति साम्प्रतम् । **यदपि** नान्यथा ज्ञानसुखादीनामपि सांसारिकाणां प्रसिद्धिरिति **तदपि** तेषां वक्ष्यमाणनीत्या मानसप्रत्यक्षप्रवेदनीयतोपपादनेन पराकरणीयम् । **यदपि** ज्ञानं हि ज्ञातुर्गुणोऽभ्युपेय इत्याद्यभिधायाभिहितं यस्य यो गुण इत्यादि **तदप्यसत्** । अग्निगुणस्यापि भास्वररूपापरपर्यायस्य(।) प्रकाशस्य स्वाश्रयप्रकाशकत्वात् तद्गतसङ्ख्यापरिमाणादिविजातीयगुणगणप्रकाशकत्वाच्च । अन्यथाऽनुद्भूतभास्वररूपस्यापि तेजसस्तद्गुणानां च स(ं)ङ्ख्यादीनां चक्षुषैव प्रकाशप्रसङ्गात् ।

॥ सजातीयगुणस्य सदसत्वविकल्पासहत्वेन आत्मगुणानां सजातीयप्रकाशकत्वोपपत्तिः ॥

सजातीयं तु तद्गुणं सन्तमपि किं न प्रकाशयति अथासन्तं? नाद्यमः, एकत्र भास्वररूपद्वयोपलम्भाभावात् । पश्चिमे तु पक्षे न तस्य सजातीयत्वादप्रकाशः । प्रकाश्याभाव(य)निबन्धनस्याप्रकाशस्य विजातीयेष्वपि क्लृप्तत्वात् । आश्रयान्तरसमवायि तु सजातीयमपि प्रतिभासयत्येव भास्वरं रूपम् । तथा च स्वसंवेदननिराकरणप्रसङ्गेनावोचदा**चार्यः** । प्रकाशस्यापि सजातीयानपेक्षत्वमसिद्धं तदवयवावयविरूपायाः अन्योन्य(म)सहकारित्वान्नयनरूपापेक्षत्वाच्चेति । कुत एतदिति च पर्यनुयोगं विधायोपापीपदत, प्रकाश्यमानस्य तदर्थान्तरेण प्रकाशनात् पटादिवदित्यादि । तस्मान्न ज्ञानसुखादीनां मानसज्ञानवेदनीयतायां काचिदनुपपत्तिरिति न तत्प्रसिद्धये नित्यानुभवरूप आत्माऽभ्युपेत[व्यः । ]

॥ अनुभवरूपत्वमात्मनः अभ्युपेत्यापि भावरूपाज्ञानं न सिद्ध्यतीति प्रतिपादनम् ॥

तदभ्युपगमेऽपि कथमभिप्रेतस्याज्ञानस्य(।)सिद्धिः? अज्ञानं मे निवृत्त(य)मित्याद्यवभासस्य ज्ञानाभावगोचरतोपपत्तेः तदतिरेकिणस्त्वज्ञानस्यानुपलम्भपराहतत्वात् । न च सत्यां वादिविप्रतिपत्तौ अनुभवगोचरोऽसावर्थ इति वचसैव संप्रतिपत्तिः सम्भविनी । विप्रतिपन्नो हि संप्रतिपन्नेन प्रमाणेन प्रतिपादनीयो न वाङ्मात्रेण, अति-

प्रसङ्गात् । तथा च तस्य भवाभावप्रमाणागम्यत्वेन सदसत्वाशङ्काव्यावर्तनं विज्ञानमात्रापनोद्यत्वेनानिर्वाच्यतोपपादनमेकानेकत्वादिनिर्वचनानर्हताभिधानं च निरालम्बनम् । नो खल्वसति धर्मिणि तत्प्रका(श)[र]भेदानां चिन्तावकाश इति ।

॥ शुक्तिं नाज्ञासिषमिति प्रत्यक्षं भावरूपाज्ञाने प्रमाणम् तस्य अभावरूपत्वे अनुपलब्धिगम्यत्वात् प्रत्यक्षविशेषणतयैव वा प्रत्यक्षत्वात् ॥

आत्मनः अप्रत्यक्षत्वात् ॥

**स्यान्मतं**—नाज्ञासिषं शुक्तिमित्यवभासत एवाज्ञानम् । न च ज्ञानाभाव एवायम् । अभावप्रमाणागम्यत्वात् । अपरोक्षाभावगोचरं हि प्रत्यक्षं प्रमाणं भवन्मते । प्रत्यक्षविशेषणमेवाभावः प्रत्यक्षज्ञानगम्यः नचात्मा प्रत्यक्षगम्यो घटादिवदनात्मत्वप्रसङ्गात् । एकस्य च प्रमातृत्वप्रमेयत्वानुपपत्तेः । प्रमात्रन्तराभावाच्च । भावेऽपि तस्यैवात्मत्वात् । अतो नाज्ञानं प्रत्यक्षविशेषणमिति कथमभावत्वेन प्रत्यक्षपरिच्छेद्यमिति ।

॥ आत्मनः मानसप्रत्यक्षत्वेन तन्निराकरणम् ॥

**तदपि न मनोहरम्** । यत आत्मनो मानसप्रत्यक्षप्रमेयत्वम् । अनात्मताप्रसङ्गस्य चाभाव[ः], एकस्य च प्रमातृत्वप्रमेयत्वोपपत्तिः, प्रमातृभेदश्चेत्यादिकमात्माधिकारे निरूपयिष्यामः । भवतु वा नित्यानुभवरूपः स्वयंप्रकाश एवायमात्मा, तथापि सांव्यवहारिकोऽपि ज्ञानाभावः कथं भवतोऽपि सिध्येत् । नित्यानुभवादेवेति चेत् । हन्तैवं नाज्ञासिषं शुक्तिमित्यप्यवभासमानं स एवास्तु किमज्ञानान्तरपरिकल्पनदुर्व्यसनेन ।

॥ अज्ञानस्य अभावरूपत्वे विकल्पासहत्वात् भावरूपत्वमिति पक्षोपन्यासः ॥

अथापि स्यात् नाज्ञानं ज्ञानाभावः इतरेतराभावादिविकल्पासहत्वात् । नहि तावदितरेतराभावस्य अज्ञानता, तस्य विषयेऽपि भावात् । ज्ञानानिवर्त्यत्वाच्च । अज्ञानस्य चात्मैकाश्रयत्वाज्ज्ञाननिवर्त्यत्वाच्च । नच प्रध्वंसस्याज्ञानता, तस्योत्पत्तिसम्भवात् । अज्ञानमुत्पन्नं ममेति च प्रतीत्यभावात् । अज्ञानस्य च निवृत्तिप्रतीतेः । प्रध्वंसस्य च तदसिद्धेः । नापि ज्ञानप्रागभावोऽज्ञानम् । भावत्वात्प्रध्वंसवदित्युक्तम् ।

॥ नञः तदभावतदन्यतद्विरुद्धार्थकत्वेन अज्ञानस्य ज्ञानाभावादिरूपतां प्रतिक्षिप्य तस्य ज्ञानप्रागभावरूपतास्वीकारः ॥

**तदप्यविचारितरमणीयम्** । तथा हि [नञ]स्तावदर्थत्रयमाश्रीयते तदभावस्ततोऽन्यस्तद्विरुद्धश्चेति । तत्र न तावदज्ञानपदमभावार्थं, प्रकृते ज्ञानप्रागभावस्य ज्ञानाभावरूपताप्रतिषेधतानुपपत्तेः । प्रतिज्ञापदयोर्व्याघातात् । इतरेतराभावेन च हेतोरनैकान्तिकत्वात् । प्रध्वंसवदिति च दृष्टान्तस्य साध्यविकलत्वात् । अन्यार्थत्वेऽपि स नाज्ञानं इत्यस्य न ज्ञानादन्य इत्यर्थः स्यात् । तथा सति अत्रापि प्रागुक्तदोषत्रयानुषङ्गः । ज्ञानप्रागभावस्य ज्ञानादन्य(था)[ता]विरोधात् । इतरेतराभावस्य चाभावत्वेऽपि ज्ञानादन्यत्वात् प्रध्वंसस्य च तथाभावादिति । विरुद्धार्थत्वेपि न ज्ञानप्रागभावो ज्ञानविरुद्ध इत्यर्थः स्यात् । नैवमपि प्रागुक्तदोषान्निवृत्तिः । प्रागभावाद्यभावत्रयस्यापि प्रतियोगिविरोधित्वाज्ज्ञानविरोधिभावान्तरमसदभिप्रेतं चाज्ञानं न भवतीति (साध्य)..........जानेन विवर्तनादज्ञानं विज्ञानप्रागभाव एवेत्युपगमे न कोऽपि दोष इति स्थितम् ।

॥ अज्ञानस्य क्वचित् ज्ञानध्वंसरूपता ॥

कदाचित्तु ज्ञानप्रध्वंसाद्यभिप्रायेणापि नाज्ञानपदप्रयोगविरोधं पश्यामः स्वसम्बन्ध्यभावमात्रबोधनशीलत्वान्नञः । तदुक्तं—

नञश्चैष स्वभावो यः स्वसम्बन्धिनोऽभावं [बोधयतीति । निवृत्तमज्ञा]नमित्यादिनिवृत्तिसामानाधिकरण्ये तु प्रागभाव एवावसातव्यः । तस्यैव निवृत्त्युपपत्तेः तदेवं न ज्ञानाभावातिरेक्यज्ञानं नित्यानुभवाभ्युपगमेऽपि प्रसिद्ध्येत् ।

॥ अज्ञानस्य भावाभावप्रमाणागम्यत्वेन असद्वैलक्षण्यस्य उद्भावनपूर्वकं निराकरणम् ॥

**यदपी**दमुच्यते–भवेन्नाम विज्ञानप्रागभाव एवाज्ञानं तथापि तस्य भावाभावप्रमाणागम्यत्वादसद्वैलक्षण्योपपत्तिरिति । किमिदमभावप्रमाणागम्यत्वं असद्वैलक्षण्यं वाऽभिप्रेतम्? तत्र यदि प्रमाणपदं करणपरं फलपरं वाभिप्रेत्य प्रसज्यते असद्वैलक्षण्यं वाऽभाववैलक्षण्यमभिप्रेतं, तर्ह्यस्तु नामान्यत्र क्लृप्तयोः अभावगोचरयोः करणफलयोः अयमगोचरो यद्ययं नित्यानुभव [गोचरः]....न पुनरस्यैतावतैवाभाववैलक्षण्यसिद्धिः-नित्यानुभवतोऽपि अभावात्मनैवास्य भासनात् । नान्यथा ज्ञानाभाव इत्येतत् सिद्ध्येत् ।

तथा च सति नासीत् ज्ञानं, नष्टं ज्ञानमित्यादितदभावप्रतिभास उच्छिद्येत। शाश्वतिकं च सांव्यवहारिकमपि ज्ञानं प्रसज्येत। तथाच न शुक्तिज्ञानोदयात्तदज्ञाननिवृत्तिरित्यादिव्यवहारोऽपि सिद्ध्येत्।

॥ अज्ञानस्य निरुपाख्यवैलक्षण्ये व्यभिचारसिद्धसाधनत्वयोरुद्भावनम् ॥

अथासद्वैलक्षण्यं नाम निरूपाख्यवैलक्षण्यमभिप्रेतं, न तर्ह्यभावप्रमाणागम्यत्वं साधनं, अनु(भवा)[पा]ख्यस्यापि तत्सम्भवेन तु सव्यभिचारत्वात्। न खल्वाकाशकुसुमं कस्यापि प्रमाणस्य गोचरः। सिद्धसाधनता च, अस्माभिरपि सोपाख्यतास्वीकारात्।

॥ अभावानां तुच्छातिरेकतः अनिर्वाच्यत्वशङ्का तन्निराकरणं च ॥

नन्वेवं सत्यभावानां चतुर्णामविवादतः।
सदसद्भ्यां विभिन्नत्वात् सिद्धाऽनिर्वचनीयता ॥

एतदप्यसत्। न खलु सत्तुच्छातिरेकमात्रमनिर्वाच्यलक्षणमविद्याव्यावृत्तेरप्यनिर्वाच्यतापातात्। तस्यां च तदनङ्गीकारात्। तदेवं स्थितं न तदनाद्यनिर्वचनीयानुरूपाज्ञानमस्तीति। तथा च न तन्निवर्तनद्वारेण तत्कार्यस्य रूप्यादेर्विज्ञानविनिवर्त्यतोपपत्तिः

॥ सविलासाज्ञाननिवृत्तिः बाध इति पक्षनिरासः ॥

एतेनैतदपास्तम्—यदाहुः[स]विलासाज्ञाननिवृत्तिरेव बाधः तद्गोचरभावश्च बाध्यत्वम्। तदेव चानिर्वाच्यत्वं, सदसद्वैलक्षण्यमप्येतादृशमेवानिर्वाच्याज्ञानलक्षणं, नतु सत्तुच्छातिरेकमात्रं, येनाविद्याव्यावृत्तेरप्यनिर्वाच्यता प्रसज्येतेति। सविलासस्य कस्य चिदज्ञानस्य तस्य विज्ञानविनिवर्त्यतायाश्च निरस्तत्वात्। बाधश्चारोपितविषयत्वापहार एव।

॥ विषयापहारलक्षणबाधस्य समानगोचरभिन्नगोचराभ्यामसंभवात्
पूर्वोक्तबाधस्वीकारावश्यकताशङ्का ॥

**यत्पुन**रत्राभिधीयते, न विज्ञानस्य विज्ञानान्तरेण विषयापहारः सम्भवी। तस्य समानगोचरभिन्नगोचराभ्या[मसंभवात्। न तावत्]समानगोचरान्तरेण तत्सम्भवः

धारावाहिकेऽपि तत्प्रसङ्गात्। नापि विभिन्नगोचरेण, स्तम्भानुभवेऽपि कुम्भानुभवगोचरापहारप्रसङ्गात्। सति विरोध इति विशेषणाददोष इति चेत नैवम्। स्वगोचरशूराणां बोधानां विरोधाभावादिति।

॥ यत्र यदारोपितं तत्र तदभावं विषयीकुर्वन् अनुभवस्तदपहारक इति विषयापहार एव बाध इति स्वपक्षः ॥

**तदप्यसत्**। यतो यद्यत्रारोपितं तद्गोचरेणानुभवान्तरेण तदपहारः प्रत्यक्षः। न खल्वारोपितरूपप्रतिषेधादन्यस्तदपहारः समारोपिततत्प्रतिषेधानुभवयोश्च धर्म्यपेक्षयैकगोचरभावेऽपि भावाभावरूपधर्मापेक्षया भिन्नगोचरताऽभ्युपेयते। एतदुक्तं भवति। यत्र धर्मिणि यदारोपितं तत्रैव तदभावं विषयीकुर्वन् अनुभवस्तदपहारकः, तदभावविषयीकार एव च तदपहार इति। नचास्य प्रत्यक्षसिद्धस्यार्थस्य गोमयपायसीयन्यायमनुसरता विकल्पजालेन वालाग्रमात्रमपि खण्डयितुं शक्यम्।

॥ प्रतिपन्नोपाधौ त्रैकालिकनिषेधो बाध इति वेदान्तिपक्षः ॥

केचित्तु—प्रतिपन्नोपाधौ प्रतिषेधं बाधं तत्प्रतियोगितां च बाध्यतां, बाधकप्रत्यक्षं चानिर्वाच्यलक्षणमाचक्षते। नचैतादृशी निषेधप्रतियोगिता सदात्मनः, नापि नरविषाणादेः प्रतिपत्तिविशेषशून्यत्वात्। ततो नातिप्रसङ्गः नाप्यप्रसङ्गः, लक्ष्यस्य रज्जुभुजङ्गादेः सर्वस्यापि प्रतिपन्नोपाधौ प्रतिषेधगोचरभावोपलम्भादिति वदन्तः।

॥ एतत्पक्षनिराकरणम् ॥

तेषामपि न युक्तः पक्षः सत एव सदन्तररूपेणासतोऽपि तथा प्रतिभासमानस्य तादृशनिषेधगोचरतोपपत्तेरुक्तत्वादिति।

कथितो दूषणराशिर्यस्मादस्यापि पक्षस्य।
तस्मान्नानिर्वाच्यख्यातिर्विश्रान्तिरेष्टव्या ॥ १ ॥

निर्युक्तिकत्वं पक्षाणामन्येषां यन्निरूपितम्।
अतोऽन्यथाख्यातिमेव विश्रान्तिं रोचयामहे ॥ २ ॥

॥ अन्यथाख्यात्युपपादनम् ॥

तथा हि—

शुक्तिशकलमेवैतदेतावन्तं कालं रजतमित्यभात् स्थाणुरेवायं पुरुष इत्यभादिति अन्यस्यान्यात्मना प्रतिभासगोचरभाव[:]प्रतीतिसिद्धो न पराकर्तुं शक्यः ।

उदीरितानि यान्यत्र दूषणानि प्रवादिभिः ।
प्रागेव तानि सर्वाणि परास्तानि प्रसङ्गतः ॥ १ ॥

॥ स्वप्नविषयप्रदर्शनम् ॥

कस्तर्हि स्वप्नादिज्ञानेष्वन्यथा भासमानो विषयः इति चेत् । तद्देशस्थः शयनीयादिरित्येके । तदयुक्तम् । प्रमाणाभावात् । न खलु सन्निहितत्वादेव विज्ञानस्य विषयः । किं तर्हि, यः प्रतिभाति यश्चोत्तरकालभाविप्रतिसन्धानबलेन च तथा व्यवस्थाप्यते । न च शयनीयादौ प्रतिसन्धानमप्यस्ति । तन्नासौ विषयः । किं तर्हि, यः प्रतिबुद्धावस्थायां तथाऽनुसन्धीयते स एव स्थाण्वादिर्विषयो युक्तः । स खलु देशकालस्वभावान्यत्वेन स्वप्नविज्ञानेषु भासमानो विषयः सम्भवी । यथाप्रतिबुद्धः सन् कथयति, "मयाद्य स्वप्ने देशान्तरस्थोऽपि पुत्रः सन्निहितो दृष्टः, मृतः पिता जीवतीति दृष्टः, अन्धोऽनन्ध" इत्येवमादि ।

॥ अन्यत्र सत एव भ्रान्त्यालम्बनत्वसिद्धान्तः ॥

एवं चानालम्बनमेव स्वप्नज्ञानमिति ये मन्यन्ते, ते पराकृताः । केशोण्डुकज्ञानेऽप्यत्रानुभूतकेशसमूह एव तत्रासन्नपि सदाकारतया प्रतिभाति । नचैवं असत्ख्यातिरनालम्बनख्यातिर्वा प्रसज्यते । सत एवान्यत्र केशसमूहस्य तद्देशकालसम्बन्धेनालम्बनत्वात् । तत्सम्बन्धमात्रासत्तायास्तु शुक्तिकारजतरूपताऽसत्ताया इवाविरोधात् ।

एवं सर्वत्र विभ्रान्तिर्वर्णनीयान्यथामतिः ।
आलम्बमाना वस्तूनि विचित्राण्यन्यथान्यथा ॥

॥ बुद्धीनां स्वविषयपर्यवसायित्वात् भ्रमो नास्तीति मतनिराकरणम् ॥

**एतेनैतदपाकृतम्**—यदाहुः [1]एके सत्योदकमसत्योदकं चेति स्वविषय-पर्यवसायिन्यो बुद्धयः। तस्मान्न [वि]पर्ययोऽस्तीति। न खल्वसत्योदकं नाम किञ्चिदस्ति। किं तर्हि ? तरणिमरीचय एवोदकाकाराः प्रतिभासन्ते। यदि वास्ति तत्र तथापि यद्यसत्योदकमिति निश्चीयेत, तदा भवेदभ्रान्तं ज्ञानम्।

यदा तु पानादिसमर्थोदकाकारेणाध्यवसीयते तदा कथमभ्रान्तं ज्ञानं विपरीतार्थताध्यवसायस्य विभ्रान्तिताप्रसिद्धेरिति।

॥ स्वप्ने गजादिदर्शनोदाहरणस्य स्वप्नज्ञानं संशयादिभ्योऽर्थान्तरमिति मतप्रतिषेधार्थत्वम् ॥

**सुप्तस्य गजादिदर्शनं** चेति द्वितीयोदाहरणस्य तर्हि किमर्थं सङ्ग्रह इति चेत्। पक्षान्तरप्रतिषेधार्थम्। केचिदाहुः—स्वप्नविज्ञानं प्रमाणफलस्मृति-संशयादिभ्योऽर्थान्तरमिति। ततस्तन्निषेधः क्रियते। नो खलु विपर्ययलक्षणेन संगृहीतस्य ततोऽर्थान्तरता संभविनी। यत्पुनरुपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्यायं भवतीति। तदप्यवान्तरवैधर्म्यमात्रं, न पुनरेतावताऽस्य विपर्ययाद्-व्यवच्छेदसिद्धिः।

॥ स्वाप्नसंशयः असतोऽपि समानधर्मस्य ज्ञानात् जायते।
प्रत्यक्षानुमानाविषयेऽपि च सन्देहो भवत्येव ॥

यत्तु स्व(स)[प्न]ज्ञानं विपर्ययात् विलक्षणं तदपि नाविद्यान्तरम्। तथाहि—यत्तत्रानवधारणात्मकं(:) तत्संशयान्तर्गतम्। समानधर्मादिकारणासम्भवात्कथं तत्र संशय इति चेत्; न, [2]विषयशब्देन विषयिणस्तद्बोधस्याभिधानात्। यथा धूमेन धूमध्वजोऽध्यवसीयत इति। समानधर्मादिबोधस्तु सम्यङ्मिथ्यार्थो[3] वा भवतु। उभयथापि सहकारिसहितः सन्देहहेतुरभिप्रेतः यतः कार्यदर्शनेन कारणसामर्थ्याव-

---

1. एते—मा.
2. संशयसूत्रस्थ समानधर्मपदेत
3. विवर्यय:

धारणम् । न च प्रत्यक्षानुमानविषय एव विपर्ययसन्देहयोरुत्पत्तिनियमः जाग्रतोऽपि तद्विषये तद्दर्शनात् । निमीलितनेत्रद्वन्द्वोऽपि कामी कामिनीमतिविदूरवर्तिनीमप्यन्तिकस्थामपरोक्षीकुरुते । यथोक्तम्—

पिहिते कारागारे तमसि च सूचीनखाग्रनिर्भेद्ये ।
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥ इति ।

॥ पित्ताद्यभावेऽपि संस्काररागादिवशात् भ्रमोत्पत्तिर्भवति ॥

एतेन पित्ताद्युपघातनिबन्धन एव विपर्यास इ(त्यु)[त्ययु]क्तम् । संस्काररागातिशयवशादपि कामिनीविभ्रमोपलम्भात् । सन्देहोऽपि बहुलमप्रत्यक्षानुमानविषयेऽपि उपलभ्यते । यथा देवयान्यास्तनयो भविष्यति नो वेत्यादि ।

॥ अत्यन्ताप्रसिद्धे स्वप्नज्ञानं उत्प्रेक्षाविपर्यासवत् विपर्यय एव नान्यः ॥

**यदप्याहु** :—अत्यन्ताप्रसिद्धे स्वप्नज्ञानमुत्पद्यते, नैव विपर्यासादिरिति । **तदप्यसत्** । उत्प्रेक्षाविपर्यासस्यान्यथापि दर्शनात । भवति हि कदाचिदत्यन्ताप्रसिद्धाप्युत्प्रेक्षा । विलसन्ति हि बहुळं कविकाव्यानि तन्मूलानि । स च विपर्यासविशेष एव । अन्यथा तस्यापि अविद्यान्तरत्वे संशयादिभेदेन भवतामप्यविद्याचातुर्विध्यनियमानुपपत्तेरिति । य(द्य)[द]प्यनुभूतार्थमात्रावभासि स्वप्नविज्ञानं तस्यापि स्मृतितोपपत्तेः नाविद्यान्तरता । यत्तु सम्यगनुभवात्मकं [ तत् ]प्रमाणफलं यथा सुखादिसंवेदनमिति । एवं च यत्स्वप्नज्ञानं यल्लक्षणेन [युक्तं]तत्तत्रैवान्तर्भूतं द्रष्टव्यं जाग्रज्ज्ञानवत् । तस्मान्नाविद्यान्तरं तदिति सिद्धम् ।

॥ जागरस्वप्नयोः लक्षणभेदकथनम् ॥

कस्तर्हि जागरस्वप्नयोर्लक्षणभेद इति चेत् । निद्रावस्थाप्रभवं विज्ञानं स्वप्नः अन्यस्तु जागर इति । निद्रापि निरिन्द्रियात्मप्रदेशे मनसोऽवस्थानमिति ।

इत्थं विधाय विपरीतमतेर्विचारं
विश्रान्तिसंशयमितिसरणातिरेकी ।

न स्वप्न इत्यपि निरस्तकलङ्कनीत्या
[1]निर्णीय जागरिततो निरणायि भेदः ॥

॥ ज्ञानस्य भ्रमत्वनिश्चायकप्रमाणविचारः । तत्र प्रत्यक्षानुमानाभ्यां तदसंभवपूर्वपक्षः ॥

इदमिदानीं विचार्यते ।

कुतः प्रमाणा[त्]विज्ञप्तेर्विभ्रान्तित्वविनिश्च(ये)[यः] ।
इति, प्रत्यक्षसंवित्तेरत्र तावन्न सम्भवः ॥ १ ॥

इति । इह हि प्रत्यक्षं प्रवर्तमानं भ्रान्तिसमसमयं वा प्रवर्तते, किं वा बाधोदयादनन्तरम्? न तावदाद्यः कल्पः, न खलु विभ्रान्तिकाले विभ्रान्तिरियमित्यनुभूयते । तथा सति तदर्थविपर्ययात् भ्रान्तिभाजां प्रवृत्त्यभावप्रसङ्गात् । नाप्युत्तरः, तत्काले भ्रान्तेरतीतत्वात् । नचातीतमसदादिप्रत्यक्षेण शक्यसंवेदनम् । नचानुमानात् तदध्यवसायः सम्भवी । तेनात्यन्ताप्रत्यक्षेण बाधोत्पादस्यान्यस्य वा व्याप्त्यसिद्धेः । न खलु सामान्यतोऽपि कार्यकर्तृत्वादिवदत्र व्याप्तिः क्वचिद्दृष्टचरी ।

॥ प्रमायां प्रमात्वस्यापि प्रत्यक्षानुमानाभ्यामसिद्धिरिति पूर्वपक्षः ॥

सर्वत्र चानुमानेन व्याप्तिमभ्युपगच्छतः ।
न कदाचन मुक्तिः स्यादनवस्थि[ति]दूषणात्[2] ॥ १ ॥
एतेनाभ्रमविज्ञानेष्वभ्रमत्वविनिश्चयः ।
प्रत्यक्षादनुमानाद्वा न भवेदिति सिद्ध्यति ॥ २ ॥

किमदुष्टकारकोत्पाद्यत्वमत्र लिङ्गं, [उत[3]]बाधानुत्पादः किं वा प्रवृत्तिसामर्थ्यमिति? **न तावदाद्यः** [4]नयनादिकारकाणां अदुष्टत्वनिश्चयायोगात् । विभ्रमहेतुदोषाणां च विचित्रतोपपत्तेः अशेषदोषनिषेधस्याशक्यत्वात् । अनिश्चितस्य चालिङ्ग-

---

1. निर्णीत—मा.
2. वस्थितदू—मा.
3. कुतः—मा.
4. नयनदृष्टादिकार—मा.

त्वात्। नच तज्जनितविज्ञानवैशिष्ट्यादेव कारकादुष्टत्वमवसीयत इति साम्प्रतम्। परस्पराश्रयापातात्। **नापि द्वितीयः**, बाधानुत्पादस्य पुरुषाप्रवृत्तिदेशान्तरप्रयाण-मरणादिनिमित्तादप्युपपत्तेः। किञ्च बाधानुत्पादो लिङ्गं भवत्सर्वपुरुषावच्छिन्नं, किं वा कतिपयप्रतिपत्तृवर्ती ? । नाद्यः सर्वज्ञमन्तरेण शक्यावगतिः । द्वितीयश्च कञ्चित्कालं चेदनैकान्तिकः, कतिपयपुरुषाणामप्यनेककालं बाधानुदयदर्शनात्। कदाचिदपि बाधानुत्पादस्तु नास्मदादिज्ञानगोचरः। **नच अन्तिमं** युक्तम्। प्रवृत्ति-सामर्थ्यं हि अप्राप्तिपरिहारलक्षणम्। तत्तावन्नासिद्धं गमकं अतिप्रसङ्गात् सिद्धं चेत् तत्सिद्धेरप्यव्यभिचारिता[1] कथं निश्चीयते । अपरिहार्या प्रागुक्तविकल्पपरम्परा प्रसज्येत ।

किं च चन्द्रादिबोधस्य कथमभ्रान्ततामतिः ।
न हि प्रापयितुं शक्यः प्रवृत्त्या स कयाचन ॥

॥ समर्थप्रवृत्तिलिङ्गेन ज्ञानप्रामाण्यानुमानप्रतिक्षेपः ॥

वस्तुतः पुनरुदकाद्यर्थस्यापि न प्रथमप्रतिभातस्य प्राप्तिरुपपद्यते। तस्य पवनादिभिः प्राणिविशेषैश्च झषमहिषादिभिः परिवर्तमानैरभिघाते सत्युपजातावयव-क्रियादिद्वारेणाशुविनाशसम्भवात्। अथ तज्जातीयोदकप्राप्त्या प्राथमिकविज्ञानस्या-भ्रान्तताऽवगम्येत। तर्ह्यसत्योदकज्ञानेऽपि जाते कदाचिदासादयत्युदकमिति तदप्य-वितथं स्यात्। अथ तद्देशकालसंलग्नमुदकं न प्रापयति मिथ्याज्ञानं, सम्यग्ज्ञानं तु तथाविधमुदकं प्रापयतीत्येवमभ्रान्तताधिगम्येत । तथापि दूरप्रदेशविनिवर्तिनः कुम्भादेः[2] उपलम्भानन्तरभाविभङ्गस्य कथमभ्रान्तताधिगम्येत। तादृशस्यार्थस्यासम्भव-त्प्राप्तित्वात्। नच तद्देशस्थोदकप्रापकत्वमपि शक्यनिरूपणम्। देशस्याप्युदकवद-वयवक्रियादिन्यायेनाशुविनाशसम्भवात। न च तद्वंशजोदकप्राप्तिरभ्रान्ततामधिगमयतीति वाच्यम्। अन्त्यावयविनामजनकत्वेन तद्वंशजार्थानुपपत्तेः। नच तदसिद्धौ तद्वंशजो-ऽयमर्थः सिध्यतीत्येवमादिभिः दूषणैरभ्रान्तताधिगतेः अपाकृता लैङ्गिकतापीति **तत्वोपप्लववादिनः।**

---

1. अव्यभिचारिता—प्रमात्वं

2. कुंभादिज्ञानस्येत्यर्थः

॥ विदितमिदं मया तथ्यं त्वया अतथ्यमित्यादिव्यवहारान्यथानुपपत्त्या प्रमात्वभ्रमत्वादिज्ञानावश्यकत्वम् ॥

ते पृष्टा व्याचक्षताम्—

भ्रान्त्यभ्रान्तिविवेकगोचरमतिः प्रामाणिकी नास्ति चेत्
लोके सत्यमिदं मयाऽध्यवसितं व्यज्ञायि मिथ्या त्वया ।
इत्येषा भवतां कथं व्यवहृतिः पक्षेऽपि विभ्रान्तितः
यद्येषा, विदितो भवद्भिरपि तद्विभ्रान्तिभावः कथम् ॥ १ ॥

इह खलु निखिललोकव्यावर्तिनी व्यवहृतिरियमुपलभ्यते " विदितमिदं मया तथ्यमतथ्यं त्वया" इति । नचेयमन्तरेण वित्तेर्विभ्रान्तिं विपरीततत्वाध्यवसायमुदयमुदयितुं पारयते । कथं चान्तरेण तदध्यवसायं विभ्रमाध्यवसायनिबन्धनेयं व्यवहृतिरिति चेत् । कथं पुनरध्यवसायस्य विभ्रान्तिभावो भवद्भिरपि विज्ञात इति वाच्यम् । न खलु विभ्रान्तिभावविनिश्चयमन्तरेण विभ्रममूला व्यवहृतिरिति वाचोयुक्तिः युक्तिमती ॥

यदि कश्चिदुपायोऽस्ति भ्रान्तिभावविनिश्चये ।
स एवास्मन्मतेप्यस्तीत्यायाता तुल्यकक्ष्यता ॥ १ ॥

अभ्रान्तित्वावसायश्च यद्यभ्रान्तो न सिद्ध्यति ।
भ्रान्तिरेवेयमित्येषा नैव सिद्ध्येद्व्यवस्थितिः ॥ २ ॥

तस्मादभ्रान्तिभावोऽपि निश्चेतव्यो भवन्मते ।
यश्च तन्निश्चयोपायो भवद्भिः कश्चिदिष्यते ॥ ३ ॥

स एवास्मन्मतेऽपीति न कथं तुल्यकक्ष्यता ।

॥ विकल्पपरम्परोद्भावनेन दूषणैकनिरतस्य प्रतिक्षेपः ॥

यदि पुनरिमे मन्येरन्, न वयमेकत्रापि प्रमाणमुपवर्णयामः । सम्पादयामस्तु सर्वत्र(ा)सन्देहं अनेकविकल्पपरम्परोपन्यासेन परेषामिति । तत्रापीत्थं

प्रतिबोधनीयाः । न खलु विकल्पाः सन्देहहेतुभावेनानिश्चि[ता]ः उपादानपदवी-मधिरोहन्ति । हेतुभावविनिश्चयविरहिणामप्युपादाने यस्य कस्याप्युपादानापातात् ।

॥ सन्देहात् प्रवृत्तिपक्षदूषणम् ॥

यति मतं—

" तन्त्वादीनामुपादानं सन्देहेऽप्युपलभ्यते ।
कार्यभेदाय तन्नाङ्गमुपादाने विनिश्चयः ॥ १ ॥ "

तदप्यचारु । तन्त्वादीनामपि पटादिकार्योत्पादनयोग्यभावेन विनिश्चितानामुपादानात् । तदभावे पटाद्यनुत्पादनिश्चयेन च नियतोपादानासम्भवात् । फलसन्देहस्यापि कोटिद्वयानिश्चये[1] सत्युपपत्तेः । भवन्मते तु न क्वचित् कुतश्चिन्निश्चय इत्यप्रवृत्तिरव्यवस्थि(ति)[त]प्रवृत्तिर्वा दुष्परिहरेति । तत्सिद्धिमेतत् वाञ्छा वः परिहर्तुं साऽसम्बन्धप्रलापित्वं यद्यस्ति, तदा क्वापि प्रमाणमुपवर्णनीयं स्यात् । नच तदनिश्चितमुपवर्णयितुं युक्तमित्यवश्याश्रयणीये तन्निश्चये सति, आस्थायास्तिकपदमपास्तालीकनिर्बन्धा विदाङ्कुर्वन्तु भवन्तोऽपि प्रमाणगणनिर्णयोपायम् ।

॥ भ्रान्तित्वादिज्ञानं निर्विकल्पकमेव समनन्तरमुपजायत इति पक्षः ॥

इह हि विज्ञानोदयसमनन्तरसमुपजातमविकल्पकं प्रत्यक्षं भ्रान्तत्वादिविशिष्टविज्ञानविषयमुपगन्तव्यम् । कथमयमपरथा विभ्रमाविभ्रमव्यवहारो भवेन्न निर्मूलः । न खल्वेवं विपर्ययः तस्याप्रवृत्तिप्रसङ्गात् । विभ्रान्तत्वाध्यवसायस्य तदानीमस्फुटत्वेनापि प्रवृत्त्युपपत्तेः । तद्यथा धावतः पथि पतितकण्टकादिगोचरमविकल्पकं ग्रहणमस्फुटत्वादनि(र्व)र्तकं तद्वदत्रापीति न कामपि दोषकलां पश्यामः ।

स्पष्टं स्मरणमूर्ध्वं तु बाधसन्देहदर्शनात् ।
अस्पष्टानुभवोत्पाद्यादपि संस्कारतो भवेत ॥ १ ॥

तद्यथा प्रथमगोपिण्डपरिकल्पनाकालमस्पष्टमाकलितमपि गोत्वं अपरपिण्डानुभवनादनन्तरं अनुगतव्यावृत्ततया स्फुटतरस्मरणगोचरभावमाचरतीति ।

---

1. द्वयनिश्चये—मा.

एतेन सदृशो दृष्टो मयासौ तद्विलक्षणः ।
अनेन तस्य सादृश्यं वैलक्षण्यं परैरिति ॥ १ ॥

स्मरणं तद्वदत्रापि सहकारिविशेषतः ।
स्पष्टमुत्पद्यतामूर्ध्वं बाधसंवादबोधतः ॥ २ ॥

॥ बाधकनिश्चयानन्तरं पूर्वोत्पन्नज्ञानस्य भ्रान्तित्वनिश्चयो मानस इति पक्षः ॥

अथ वा बाधकबोधोदयादनन्तरमेव भविष्यति भ्रान्ततादिप्रत्यक्षम् । अतीतस्यापि तस्य, मनसः त्रिकालविषयत्वेन मानसप्रत्यक्षप्रवेदनीयतोपपत्तेः । कथमन्यथा योगिनोऽपि जानीयुरतीतमनागतमप्यर्थं अध्यक्षेण । योगजधर्मसामर्थ्यादमीषामध्यक्षमत्रोपपद्यत इति चेत्; भवतु तर्ह्यसदादेरपि अदृष्टभेदमहिम्ना [पूर्वोत्पन्नभ्रमज्ञानम्], कार्यानुसारपरिकल्पनीयानि हि कारणसामर्थ्यानीति ।

॥ बाधनिश्चयलिङ्गात् भ्रान्ततानिश्चय इति पक्षान्तरोपन्यासः ॥

यद्वा (बो)[बा]धोत्पादादिलिङ्गसङ्गत[1] गोचरभावमेवानुभवतु भ्रान्ततादि । न तथापि काचित् क्षतिः । व्याप्तिरप्यनुमानपरंपरात एव भविष्यति । अनादितयैव संसारस्यानवस्थितेरपि परिहारः । प्रथममाहारादिसमीहितसाधनतास्मरणवत् प्राचीनभवानुभवभावितसंस्कारादृष्टसहितात् व्याप्त्यनुस्मरणमप्यस्तु । का नो हानिः ?

॥ दृष्टान्तपरम्पराधीनानुमानेन कथं साध्यसिद्धिरिति प्रश्नसमाधानम् ॥

कथं पुनर्दृष्टान्तपरम्पराप्रधानस्यापक्षीणस्य प्रकृतसाध्यसिद्धिः ? नानुपपत्तिः । दृष्टान्तस्य प्रागेव प्रसिद्धत्वात् । न वै कश्चन वह्न्यनुमानसमसमयमेव महानसादिषु वह्निधूमयोर्व्याप्तिं अनुभवति । ननु चैवमपि परं प्रत्यनुमानकाल एवावश्यं दृष्टान्तः साधनीय इति तदवस्थैवानवस्था । नैवं, न खलु (पु)[परोऽपि] सर्वत्रैव विप्रतिपत्तिं विधातुमुत्सहते । तथा सति तस्य न कोऽपि दृष्टान्तः सिद्ध्यतीति

---

1 लिङ्गकानुमितिरित्यर्थः.

न तन्मूला भ्रान्ताभ्रान्तविनिश्चितिः। तदभावे च सकललौकिकपरीक्षकप्रसिद्ध-तद्व्यवहारापलापचापलमेवावशिष्येत । प्रसिद्धधूमादिप्रतिबन्धबोधस्याप्यपह्नवं कुर्वाणो हि सकललोकव्यवहारपराकरणप्रसङ्गेन [उन्मत्त] समानोऽत्रापीति परस्यापि प्रसिद्धच-स्यैव क्वचिद्दृष्टान्तः, तदवष्टम्भेनापरोऽपि साध्यत इति । नचात्यन्तजडं प्रति पाषा-णायमानमनुमानव्यवहारमूरीकुर्म इति ।

॥ प्राथमिकसर्वज्ञोपदेशमूलकत्वमस्मदादिव्याप्तिज्ञानस्येति पक्षान्तरोपन्यासः ॥

अथवा प्रथमं तावत् सर्वप्रत्यक्षदर्शिना ।
केनचिद्ग्राहितां व्याप्तिं अपरे मितदर्शिनः ॥ १ ॥

तैरप्याप्तोपदेशेन यज्ज्ञानं बाधितं भवेत् ।
तद्भ्रान्तं यस्य संवादः तदभ्रान्तं तु निश्चितम् ॥ २ ॥

एवमाप्तोक्तिसन्तानाद्घटादिप्रतिबन्धवत् ।
[1]प्रतिबन्धावसायोऽस्तु प्रकृतेऽपीति शोभनम् ॥ ३ ॥

॥ बाधाभावस्य अभ्रान्तित्वे लिङ्गतासंभवः ॥

[यत्] पुनरेतदभिहितमदुष्टकारणसम्पाद्यत्वमभ्रान्ततालिङ्गं न भवतीति । भवत्वेवम् । बाधाभावस्तु भवत्येव तत्र लिङ्गम् । यत्रावसितार्थवैपरीत्यमन्तरेण निपुणमपि निरूपयतः प्रतिपत्तुः बाध(म)[क]भावो न सम्भाव्यते । यथा खलु कामालादिभेदयुक्तस्य प्रतिपत्तुः (भीश) [शश]धरैकतावबोधे सलिलादौ चान्ति-कावलोकिते ।

॥ बाधाभावनिश्चयानुपपत्तिपूर्वपक्षः ॥

कथं पुनर्बाधाभावाध्यवसायः ? कथं वा तस्यावसितार्थतथाभावमन्तरेण यथोक्तविषयेऽप्यनुपपत्तिरधिगम्येत ? बाधाभावस्तावद्बाधानुपलम्भाधीनसिद्धिरिति चेत् । तदयुक्तम् । सर्वानुपलम्भस्यासर्वज्ञविज्ञानागोचर [त्वात् । अ]नन्तरभावि. बाधाभावाध्यवसायवैभवाभावात् । आरकूटघटितकटकादावुपजातकनकवेदनस्य(।)

1. व्याप्तिनिश्चय इत्यर्थः

प्राचीनबाधानुपलम्भेऽपि पराचीनस्य तस्योपलम्भात् । न च अनागतसमयसंसर्गि-(क)[त]या सम्भाव्यमानस्यापि साम्प्रतमेव योग्यानुपलम्भसम्भवः तस्य सम्प्रत्य-योग्यत्वात् । न च कदाचित्क एव बाधाभावो भवति अर्थतथाभावमन्तरेणा-नुपपद्यमानतया शक्याधिगतिः तस्यान्यथापि संभवतः स्वप्नादावुपलम्भादि[ति । ]

॥ बाधनिश्चयस्य अनुभवसिद्धता ॥

नैतत्सारम् । बाधकोत्पत्तिविरोधिनो निद्रोन्मादादेराध्यात्मिकस्य दूरत्वादे-रप्युदकादिवर्तिनो बाह्यस्याभावनिश्चये सति अर्थश्चेदयमन्यथा स्यात कस्मादधुनैव बाधो न जायेत नोपलभ्यते च । नचायोग्यत्वादेवम् । एवमप्ययोग्य....?........ तायां वा कथमन्यथा भविष्यत्यन्तिकबाधाभावनिश्चयात् अर्थतथाभावनिश्चयस्या-प्युपपत्तेः । अथैवमपि बाधानुदयनिदानदोषसन्दोहस्य पूर्वावसितस्याभावाधिगमेन यगादिकारकसंपत्तौ च सत्यामप्यत्यन्तातीन्द्रिय ............... भविष्यति । न भविष्यत्येव वा कदाचिदपीति शङ्काकलङ्कापाकरणं कथमिति चेन्न । समानधर्मादि· निश्चयशून्यस्य शङ्कानुत्पादात, अन्यथाऽतिप्रसंगात् । बाधकानुपलं [भो] वोभय-सहचारी समानधर्म इति चेन्न। ........ निश्चयस्य क्वाप्यभावेन तत्साहित्यानुपलम्भे कोटिद्वयसंस्पर्शशून्यस्य समानधर्मतानुपपत्तेः । हन्तैवं बाधनिश्चय एवास्मात् भविष्यति एककोटिनियतादिति चेत् । ........सिद्धिस्तु देशकालान्तरभा(वी)[वि] व्यभिचाराभावस्यावसातुमशक्यत्वात । शक्यत्वे वा कथय कथं तवैव कालान्तर-भाविबाधाभावोऽपि नावसीयेतेति निखिलव्यभिचारशङ्कानिराकरणं त्वेककोटिसाहि-त्येनोपलम्भगोचरभूतावबोधो जायमानः सन्नगृहीताव्यभिचारहेतुजनितः स्यात् ।

॥ सर्वज्ञानेषु बाधकशङ्कायां लोकव्यवहारविलोपप्रसङ्गात् सर्वत्र शङ्काभावः ॥

अथ सतोऽप्यसतश्च घटादेरनुपलम्भाद्बाधकेऽपि शङ्केति चेत । नैवम् । इत्थं शङ्काया घटादेरपि सत्त्वासत्त्वयोः अनिश्चय [ प्रसङ्गात् ], तत्साधकस्यापि शङ्कितबाधकत्वात् । एवं च न क्वापि कुतश्चिदर्थ(र)तथाभावविनिश्चितिरित्यशेष-प्रमाणव्यवस्थापरिलोपप्रसङ्गः । भवत्वेवं न खल्वभ्युपगमा एव दोषा भवन्ति । न हि वयमेकत्रापि प्रमाणव्यवस्थामभ्युपगच्छाम इति चेत्; मैवं वादीः । न खलु सर्वमेवाप्रमाणं, प्रागेवास्य पक्षस्य प्रतिषेधात् ।

॥ सर्वमप्रमाणमिति ज्ञानस्य प्रामाण्यतदभावाभ्यां व्याघातात् न सर्वाप्रामाण्यम् ॥

किं च सर्वं [अ]प्रमाणमित्यस्यैव ज्ञानस्य प्रामाण्यतदभावयोः व्याघातः। न खल्वेकस्मिन् प्रमाणे सर्वमेवाप्रमाणमिति शक्यं वक्तुम्। अस्यैव प्रमाणत्वविरोधात्। नाप्येकस्मिन्नप्रमाणे सर्वमप्रमाणमिति ज्ञानस्य[1]। कस्य चित्प्रामाण्यमन्तरेणाप्रामाण्यानुपपत्तेः। सर्वं सन्दिग्धप्रामाण्यमिति चेन्न। प्रामाण्ये सन्देहनिर्णयस्यैव निराशङ्कत्वात्, अन्यथा निर्विचिकित्सस्य सन्देहव्यवहारस्याभावप्रसङ्गात्। सर्वत्र सन्देहपरंपरामेवाभ्युपगम्य सन्देहमपि सन्दिहानः तपस्वी नासौ लौकिको न परीक्षकः इत्युपेक्षणीयो विचक्षणैः। न च सर्वत्र सन्देहाभावेऽपि सर्वमनिर्णीतप्रामाण्यमिति साम्प्रतम्। एतन्निर्णयस्य[2] प्रामाण्यनिर्णयानिर्णययोः विरोधात्। पूर्वस्मिन् अत्रैव प्रामाण्यनिर्णयाभ्युपगमात्। उत्तरस्मिन् सर्वमनिर्णीतप्रामाण्यमिति [3]अवधारणानुपत्तेः। कस्मच्चानिर्णीतप्रामाण्यं सर्वं? तन्निर्णयकारणविरहादिति चेत्। हन्त भोः प्रामाण्यनिर्णयकारणविरहविनिर्णयस्य प्रमाण्यानिर्णये तु तेनैव विरोधः तस्मादस्त्येव क्वचित्प्रमाणव्यवस्थितिरिति, सकलप्रमाणव्यवस्थोच्छेदप्रसङ्गात्। तेन प्रागुक्तानु [भवेषु] कालान्तरादिपरिवर्त्यपि बाधाभावोऽधिगन्तुं शक्यत इति सिद्धम्।

इत्थं बाधाभावः सिद्धः प्रागुक्तनीत्यैव।
सिद्धव्याप्ति च लिङ्गं बोधानां तथ्यभावस्य ॥

॥ बाधविरहस्य बाधसद्भावावेदकत्वमिति तु यत्र कुत्रचित् तत्सद्भावेनोपपन्नं न यत्र बाधस्तत्रैव सद्भावः ॥

**यदप्याहुः** बाध(ा)विरह एव बाध(ा)सद्भावावेदकः तदुपलक्षकत्वेन तत्सद्भावोपलब्धेरिति। **तदप्याकाशरोमन्थमेव**। न खलु तद्विरह एव तत्सद्भावमापादयितुं पारयते। ........ भूभागभेदे न भवति कुम्भ इत्यनुभवे तदभावोपलक्षकत्वेन भवति कुम्भसद्भावः तस्यान्यत्रानुभूतस्यैव स्मरणपरिवर्तिनस्तदुपलक्षकत्वात्। अन्यथा भावाभावयोरेक[ाधार]स्वीकारस्य प्रत्यक्षादिपराहतत्वात्।

---

1. शक्यं वक्तुमिति शेषः।
2. एनदनिर्णयस्य—मा.
3. अनवधारण—मा.

॥ घटादिज्ञानानां बाधकज्ञानप्रतिबन्धकत्वेन बाधनिश्चयानुत्पादः
न तु यथार्थत्वेनेति पक्षखण्डनम् ॥

**यद**प्येतदभिधीयते। तद्विपर्ययज्ञानं तथाविधमेवोत्पन्नं स्वप्रभवस्वभावानुरोधेन यद्बाधकविज्ञानोत्पादककारकप्रतिबन्धकृत्। तद्ध्वंसोऽपि तथाभूत एव यःपरेष्टः सम्यग्ज्ञानवदिति। **तदपि वार्तम्**। न हि परेण बाधकविज्ञानोत्पादकारकप्रतिबन्धकारि सम्यग्ज्ञानमभ्युपेयते किं तर्हि यथानुभवमर्थसद्भावो विभ्रमानुत्पादश्च। तथा च तत्र बाधानुत्पादोऽप्यर्थतथाभावात्। न पुनः सम्यग्ज्ञानेनास्य हेतुप्रतिबन्धादिति। न च तद्यद्यस्य प्रतिबन्धकृत्तद्ध्वंसोऽपि तस्य तथा भवति। नहि गुरुत्वादिप्रतिबन्धकसंयोगादेर्ध्वंसोऽपि गुरुत्वादेः प्रतिबन्ध[कः], किं तर्हि सहकार्येव सम्पद्यतइति। ना[पि]सम्यग्ज्ञानतद्ध्वंसयोः बाधोत्पादककारकप्रतिबन्धकता सम्भविनी, यन्निरणायि पुरस्तात्।

बाधोऽबोधो स्य चाकारक .... ....
नानेककविकल्पैः बाधस्यापाकृतिर्युक्ता ॥ तथा च—

यद्बुद्धिभ्रान्तित्वे लिङ्गं बाधो भवेदेवम्।
अभ्रान्तित्वे लिङ्गं क्वापि स्याद्बाधकाभावः ॥

क्वचित्पुनः प्रवृत्तिसामर्थ्यं अवबोधस्याभ्रान्ततामधिगमयति। यथा खलु सलिलाद्यर्थः प्रागुपजाततद्बोधस्येति।

॥ अवभातस्यार्थस्याप्राप्तावपि तत्सन्तानप्रभवस्य प्राप्तिरस्ति
कुत्रचित्तस्यैव च प्राप्तिरस्त्येव पाषाणादौ ॥

यदप्युदितमवभा[त]ार्थस्यावाप्तिर्न सम्भवतीति। तदप्यवद्यम्। अवभातस्यैव कस्यचित् पाषाणादेः प्राप्तिसम्भवात्। सलिलाद्यर्थस्य तु विनाशेऽपि तज्जातीयार्थप्राप्तेः। अनैकान्तिकत्वेऽपि च तत्सन्तानप्रभवार्थप्राप्तिर्भविष्यत्यभ्रान्तताधिगतिहेतुः। कः पुनरेष सन्तानो नाम ? सदृशनिरन्तरोत्पत्तिः तदेवेदमिति लौकिकाविसंवादिप्रतिभासहेतुरिति ब्रूमः। यः पुनर्विभ्रमादर्थमवधार्य प्रवृत्तः असौ न तत्सन्तानभाविनमप्यर्थं प्राप्नोति। तस्मात् प्रतिभातार्थप्राप्तिस्तद्वंशप्राप्तिर्वा अभ्रान्तत्वे लिङ्गं प्रागुत्पन्नावबोधस्य।

एवं सन्ताननीत्यैव तद्देशत्वं व्यवस्थितम् ।
तादवस्थ्यात्क्वचिद्व्यक्तेरिति सर्वमनाविलम् ॥ १ ॥

॥ प्रवृत्तिसामर्थ्यपरिज्ञानात् ज्ञानानामव्यभिचारपरिच्छेदोपपत्तिनिगमनम् ॥

यत्पुनरेतदनिश्चये कुतस्तत्सन्ततिभावित्वमप्यवगन्तुं पार्यत इति, तत्रोत्तरं— तदेवेदमिति उत्तरकालीनावभासस्य लोकव्यवहाराविसंवादादिति । न तत्सद्भावं तत्सन्तानप्रभवभावित्वं वा विना तदेवेदमित्यवभासपूर्वकव्यवहारस्यानेकपुरुषसन्निधानेऽप्यविसंवादः संभवति । तथा सति तस्यैवावयवविशेषादिसम्भवादसम्भवः तत्र तत्सन्तानप्रभवभाववैभवादेवायमविसंवाद इत्यवसीयते । तदेवं प्रवृत्तिसामर्थ्यपरिज्ञानादपि विज्ञानानामव्यभिचारपरिच्छेदोपपत्तिः ।

॥ प्रवृत्तिसामर्थ्यादव्यभिचारितानिश्चये चक्रकापत्तिप्रसञ्जनं तत्समाधानं च ॥

नन्वेवमपि न प्रवृत्तिसामर्थ्यात् अव्यभिचारिताविनिश्चयो विज्ञानानां दुरुत्तरचक्रकापत्तेः । तथा हि—अव्यभिचारपरिज्ञाने प्रवृत्तिः प्रवृत्तस्य प्रवृत्तिसामर्थ्यपरिज्ञानं तत्परिज्ञानादव्यभिचारपरिच्छित्तिरिति । नैवम् । अर्थसन्देहादप्यादौ प्रवृत्त्युपपत्तेः । अनर्थकं तर्हि अ[व्य]भिचारपरिज्ञानं अन्यथैव प्रवृत्त्युपपत्तेरिति चेत ; नानर्थकं, कर्षकस्येव बीजपरीक्षार्थं अव्यभिचारपरीक्षार्थमेव प्रवृत्तस्य तत्परिच्छेदादेव नैराकङ्क्ष्योपपत्तेः अन्यत्र च तज्जातीयेषु अव्यभिचारानुमानबीजत्वात् । यथा खलु दृष्टार्थेष्वायुर्वेदादिषु प्रवृत्तिसामर्थ्यादव्यभिचारपरिज्ञाने सत्याप्तोक्तत्वेन तज्जातीयेष्वव्यभिचारानुमानमिति । यः पुनरर्थप्राप्त्यर्थमेवार्थसन्देहात् प्रवर्तते तस्यार्थप्राप्तिमात्रपरितुष्टस्यासत्यामपि जिज्ञासायामव्यभिचारावधारणं वस्तुसामर्थ्याद्भवन्न(नु)[नि]योगपर्यनुयोगावर्हतीति ।

॥ प्रवृत्तिसामर्थ्यं विनापि क्वचित् ज्ञानप्रामाण्यावगतिः ॥

कदाचित् पुनरन्तरेणापि प्रवृत्तिमध्यवसितार्थतथाभावाविनाभूतविशेषोपलम्भेन तद्बोधानामभ्रान्तभावमध्यवस्यति । कथमन्यथा तरणिमरीचिषूच्चावचमुच्चलत्सु स्वच्छसलिलाभिमानादापीयेदं पिपासामुपशमयाम इति तदभ्यर्णमेव प्रचलतो बालानपरे निवारयन्तो दृश्यन्ते मरीचिष्वेवैष सलिलाभिमानो भवतां, न तात्त्विकं न तत्सलिलमिति । तथा च दूरादधिगतानन्तरभग्नानामपि कुम्भाद्यर्थानामसत्यामपि प्राप्तौ तत्र-

त्यस्यैव विशेषोपलम्भात् पुरुषान्तरवचनसंवादादिना वा तथाभावविनिश्चि[ते](तै)-रुपपत्तेः ।

॥ ज्ञानप्रामाण्यनिश्चये अनवस्थाचोद्यपरिहारः ॥

**या पुन**रियमनवस्था चोद्यते । प्रवृत्तिसामर्थ्यादिबोधस्याप्यन्यत एवाव्यभिचारिताज्ञाने तत्राप्यन्यदन्यदनुसरणीयमिति । **साप्ययुक्ता** । सर्वत्र सन्देहजिज्ञासयोरनुत्पत्तेः । द्वित्रिविशेषोपलम्भेन निराकाङ्क्षाणां व्यवहारदर्शनात् । [यत्र]देशान्तरवार्तादौ च न त्रिचतुरसम्भावितपुरुषवचनमुपलभ्यते तत्र सन्देहप्रसरो[रः] । नच निश्चिताव्यभिचारमेव सर्वं ज्ञानमर्थनिश्चायकमिति शक्यं वक्तुम् । तन्निश्चयेनैव व्यभिचारात् । अस्यापि स्वाव्यभिचारनिश्चयापेक्षया स्वार्थनिश्चायकत्वेऽनवस्थादौस्थ्येन निश्चिताव्यभिचारमेव सर्वं निश्चायकमित्यस्यैव नियमस्यासिद्धिप्रसङ्गात् । नच ज्ञानं स्वरूपनिश्चयमप्यपेक्षते स्वार्थावभासे । ज्ञानज्ञाना[न]वस्थायां तत्रैव परिक्षीणायुषः पुरुषस्य विषयान्तरवेदनविरहप्रसक्तेः । नच [1]स्वसंवेदनं संवेदनमिति वक्ष्यामः । तत्र कुतःस्वनिश्चयमप्यनपेक्षमाणं विज्ञानं स्वाव्यभिचारनिश्चयमपेक्षेत स्वार्थावभास इति वदितुं शक्यम् ।

॥ यत्र ज्ञाने सन्देहः तत्रैवाव्यभिचारनिश्चयापेक्षा । प्रवृत्तिसामर्थ्यज्ञानादौ च न सन्देहः अतो नानवस्थेति ॥

तस्माद्यत्र क्वचिदावर्तितप्रमाणेनार्थे परिच्छिद्यमानेऽपि ज्ञानस्योभयथादर्शनाद्विशेषानुपलम्भाच्च यथार्थमिदमयथार्थं वेति सन्देहसम्भवस्तत्रैवाव्यभिचारनिश्चयापेक्षायां प्रवृत्तिसामर्थ्याद्यनुसरणेन तन्निश्चयः । तत्र तूत्तरप्रवृत्तिसामर्थ्यादिपरिज्ञानेष्वपि सर्वत्र[न]सन्देहः समस्तीति नानवस्था । कुतः पुनस्तत्रापि न सन्देहस्समुत्पद्यत इति चेत् । कारणपौष्कल्याभावात् इति ब्रूमः । तदपि तु कस्मान्न सर्वत्रेत्यादिपर्यनुज्ञानस्य[2] भावस्वभावैरेवोत्तरं वाच्यम् । यत एवं व्यवस्थया भवति न भवति च । वयं तु यथादृष्टमर्थमाचक्षाणाः कथमु[पालभ्यामहे[3]] इति ।

---

1. स्वस्य संवेदं स्वविषयमित्यर्थः

2. पर्यनुयोगस्य

3. उपलभामहे—मा.

॥ क्वचित्तु ज्ञाने प्रामाण्यसंशयाभाव एव ॥

क्वचित्पुनरादित एव सन्देहानुत्पत्तिः यत्रातिशयेनाभ्यासपाटवमादित एव च विशेषग्रहणग्रस्ततया च निरोध एव सन्देहस्य। न हि स्थाण्वादावप्यादावेव वक्रादिविशेषोपलम्भे भवति सन्देहः। यस्तु क्वचिज्ज्ञानस्योभयथा दर्शनमात्रेण तादृश्यपि विज्ञाने बलात्सन्देहमारोपयति, स न शक्नोत्येवारोपयितुमपास्ताशेषशङ्का-कलङ्केनार्थनिश्चयेनैवानुभवसिद्धेन विरोधात्। यदाहुरत्रभवन्तो **मण्डनमिश्राः**—

अनाश्वासो जायमानो ज्ञानेनैवावबाध्यते। इति।

॥ निगमनम् ॥

तदेवं सर्वत्र सन्देहाभावात्, यत्र सन्देहस्तत्रापि त्रिचतुरविशेषोपलम्भेन पुरुषाणां निराकाङ्क्षतोपपत्तेः, अर्थनिश्चये च बोधतदव्यभिचारपरिच्छेदस्य सर्वत्रानुपयोगात्, न लभत एवावकाशमनवस्थितिरिति स्थितम्।

अनवस्थितिपरिहारो यस्मादुक्तेन मार्गेण।
तस्मान्न प्रामाण्यं स्वत इति तद्भीतितो वाच्यम् ॥

॥ स्वतः प्रामाण्यपक्षनिरासः ॥

ये पुनरनवस्थापरिहरणमार्गानुसरणकातरतया तरलितान्तःकरणा मार्गान्तरमपरिकल्पयन्तः तदर्थमेव स्वतः प्रमाणानां प्रमाणतामुपवर्णयाम्बभूवुः। तेषां न पक्षः प्रेक्षावतां चित्तमनुरञ्जयितुं क्षमते। प्रामाण्यं हि सर्वप्रमाणानामुत्पत्तौ ज्ञप्तौ स्वकार्ये च स्वत इति ते वर्णयन्ति। तत्रोत्पद्यमानप्रामाण्यस्वरूपानिरूपणादेव[1] तावत् उत्पत्तौ स्वतः प्रामाण्योपवर्णनमयुक्तम्।

॥ प्रामाण्यस्य उत्पत्त्यर्हस्य निरूपणासंभवः ॥

यदि हि प्रामाण्यं नाम शक्तिभेद एव, यथाह[1] **वि प्रः**—प्रामाण्यं च शक्तिरूपमेवेति; न तस्योत्पत्तिप्रकारचिन्ता युक्तिमती। पराभिमतायाः शक्तेः प्रमाणविरहितायाः स्वावसर एव निरसिष्यमाणत्वात्। अथाविसंवादिपरिच्छेदापर-

---

1. स्वरूपनिरूपणादेव—मा.    2. यथाहि—मा.

पर्यायप्राकट्यजननोपधानस्वरूपमेव प्रामाण्यमभिमतं; तथाविधस्यापि तस्य स्वरूपत एवानुपपत्तिः, प्राकट्यस्य पराकरिष्यमाणत्वात्। यदि च प्रमाणवती [1]तदितरव्यावृत्तिसामान्यभेदः प्रामाण्यम्, तस्याप्युत्पत्त्यसंभवः। तस्यानादित्वात्। अव्यभिचारगोचरोपधानस्वरूपमेवानुभवानां प्रामाण्यमिति चेत्। न तावदिदं मीमांसको वक्तुमुत्सहते। यस्मात्स्वतः प्रामाण्यं सर्वप्रमाणानां प्रतिज्ञाय न हि स्वतोऽसतीत्यादिना शक्तिमेव स्वतः सतीं प्रत्यपीपददाचार्यः[2]। तच्च शक्तिप्रामाण्यपक्षे युक्तम्। अन्यथा प्रकृतासङ्गतेः। सा च निरसिष्यत इत्युक्तम्।

॥ स्वमते उत्पत्तौ परतः प्रामाण्यस्वरूपकथनम् ॥

भवन्मतेप्युत्पत्तौ परतः प्रामाण्यं किमभिप्रेतमिति चेत्। एतदेव च विज्ञानकारणनयनादेः परापेक्षत्वं [3]प्रमित्युत्पन्नत्वे, बोधसमवायिनः प्रामाण्यस्य परत उत्पादः। [न च] यत्रापि हि बोधः प्रमासाधनतया प्रमाणकोटिनिवेशी तत्रापि तत्समवायिनः प्रामाण्यस्योत्पत्तौ परापेक्षा। तस्योत्पत्तियोग्यस्यानिरूपणात् तदुत्पत्तौ च बोधस्य कार्यसमवायितया द्रव्यतापत्तेः। प्रमित्युत्पादे तु सर्वत्र परापेक्षा युक्तिमती। न हि प्रबोधमात्रसाधारणकारणाधीनतद्विशेषप्रमित्युत्पादः सम्भवी; सर्वकार्याणामसाधारणकारणाधीनत्वात्। भवति चात्र प्रयोगः—

विवादपदं [अ]साधारणकारणकं कार्यत्वात्, यदित्थं तत्तथा यथोभयसिद्धं, तथैतत्, ततस्तथेति। यदि पुनर्बोधमात्रसाधारणैव प्रमितिसामग्री, तर्ह्यप्रमितिरपि प्रमितिरेव भवेत्, यतस्तत्रापि अस्ति बोधहेतुः अन्यथा बोधोऽपि सा न भवेत्।

॥ अप्रामाण्यस्य परतस्त्वेनोपपत्तौ प्रामाण्यपरतस्त्वं मास्तु इति शङ्कानिरासः ॥

सत्यपि बोधहेतौ दोषात् विशेषहेतोरेव[ा] प्रमितिः सेति चेत्। प्रमितावपि तर्हि दोषाभावो विशेषहेतुः किं नेष्यते। भाववदभावस्याप्यन्वयव्यतिरेकाभ्यां कारणभावविनिश्चयस्याशक्यनिरासत्वात्। दोषाभावस्यावर्जनीयतया सन्निधिर्न हेतुतयेत्यपि न वाच्यम्। दोषेऽपि तथाभावप्रसङ्गस्याशक्यपरिहारत्वेनाप्रमितिरपि स्वत

---

1. प्रमाणेतरव्यावृत्तजातिविशेष इति प्रमाणेतरव्यावृत्तिरूपसामान्यविशेष इति वाऽर्थः।
2. वार्तिककारः श्लोकवार्तिके
3. प्रमित्युत्पत्तावित्यर्थः

इति प्रसक्तेः। तथापि तस्य विरोधिदोषनिरासितयैवान्यथासिद्धः सन्निधिर्न हेतुतयेति चेन्न, दोषस्यापि विरोधितदभावनिरासितयैवान्यथासिद्धः सन्निधिः अप्रमितौ, न हेतुतयेति प्रसङ्गात्। न च दोषस्य स्वाभावनिरासरूपेणान्यथासि(द्धि)[द्धे]रहेतुता; तथा सति विरोधिस्वाभावनिरासहेतुतयैव सर्वहेतूनामहेतुताप्रसङ्गादिति चेत्, न तर्हि दोषाभावस्यापि स्वाभावदोषनिरासरूपेणान्यथासिद्धिरविशेषादिति दुर्वारो हेतुभावः।

॥ दोषाभावस्य अभावरूपत्वेऽपि हेतुता भवतीति निरूपणम् ॥

कथमभावस्य तुच्छात्मनो हेतुभाव इति चेन्न। तस्यापि स्वात्मना तुच्छभावाभावात्। न ह्यसावभावात्मनापि तुच्छः। परात्मना त्वस्य भावरूपेण तुच्छीभावादहेतुत्वे भावस्याप्यभावरूपेण तुच्छीभावात् अहेतुताप्रसक्तिरशक्यपरिहारा। तथापि भावत्वेन व्याप्तो हेतुभावस्तन्निवृत्तौ कथं न निवर्तेत इति चेन्न। विपरीतव्याप्तेरपि[1] शक्यवचनत्वात्। अन्वयव्यतिरेकाभ्यां भावस्य हेतुभावनिश्चयदार्ढ्येण तादृशव्याप्तिभङ्गेऽभावस्यापि ताभ्यामेव तन्निश्चयदार्ढ्यात् भवदभिमतापि व्याप्तिर्भज्यत एवेति तुल्यम्। कथं चाभावस्यासति हेतुभावे दृश्यादर्शन[2]निबन्धनमभाववेदनमभिधीयते। कथं वा विहितमकुर्वतः प्रत्यवा(ये)[य]प्रसवः। तत्कालीनान्यक्रियाकरणादिति चेत्। न तदन्यकरणमात्राधीनः प्रत्यवायोदयः विहितं कुर्वता उच्छ्वासाक्षिपाणिपरिस्पन्दादिकक्रियान्तरकरणे प्रत्यवायप्रसङ्गात्।

॥ विहिनाकरणकालीनक्रियादेः प्रत्यवायहेतुतानिराकरणम् ॥

विहितानुष्ठानविरुद्धादितरकरणात् प्रत्यवायो, न तन्मात्रात्, न चोच्छ्वासादिकं विरुणद्धि विहितानुष्ठानमिति चेत्। न तर्हि विहितमकुर्वाणस्याप्यस्योच्छ्वासादिक्रियापरम्परामेवारभमाणस्य प्रत्यवायप्रसक्तिः। विहिताकरणे सत्यन्यकरणात्प्रत्यवाय इति चेत्प्राप्तं करणत्वं तदभावे; सत्यप्यन्यकरणे कार्याभावात्। तद्भावे च भावात्।

---

1. अभावत्वेन व्याप्तो हेतुभावः तन्निवृत्तौ भावेपि स निवर्ततेति भावः।
2. विधान—मा.

॥ दोषसंसर्गाभावस्य प्रमितिहेतुत्वं, तस्य क्वचित् भावरूपत्वं च ॥

तथापि न दोषाभावः प्रकृतकार्ये कारणं प्रागभावादेः प्रत्येकं व्यभिचारात् समुदायासम्भवाच्च । दोषाभावमात्रप्रयोजकतोपादानस्य [1]परस्पराभावेऽपि कार्यानुत्पत्तिपरास्तत्वादिति चेन्न । दोषसंसर्गाभावस्य प्रयोजकतोपादाने दूषणानिरूपणात् । भवतु तर्हि दोषाभावो विशेषहेतुः प्रमाणविज्ञाने, भावः पुनरधिको नेष्यत इति चेत् । न, विशेषादर्शनादेरभावस्य सन्देहविपर्यासहेतुतया दोषत्वे, तदभावस्य भावरूपस्यैवापेक्ष्यमाणत्वात् ।

॥ प्रमायाः दोषाभावव्यतिरेकेण तत्र तत्र विशेषहेतुजन्यत्वनिरूपणम् ॥

यत्रापि च भावरूपा एव च दोषाः कामिलादयस्तत्रापि न तदभावमेवाधिकमासाद्य जायते प्रमितिः, प्रकाशदेशादिविशेषापेक्षत्वात् । न खलु यादृशाः प्रकाशादयः प्रमितिजनने नयनादिभिरपेक्ष्यन्ते तादृशास्ते बोधमात्रासाधारणाः । तथा हि—

तरणकिरणश्रेणी यत्र प्रभूतिमुपागता,
निकटमटतस्तत्र स्थाणौ तथार्थविगाहिनी ।
प्रभवति मतिर्मन्दा यत्र प्रभाकरभानवः,
पुरुषधिषणा [ऽ]तत्रामुष्मिन् विदूरविवर्तिनः ॥ १ ॥

किं च—

धातुवैषम्यसंस्थानशरीराः कामिलादयः ।
यद्यप्रमाणविज्ञानं तदपेक्षमुपेयते ॥ १ ॥

सम्यक्संस्थानसापेक्षं सम्यग्ज्ञानमुपेयताम् ।
यतस्तद्भावभावित्वं नोभयत्र विशिष्यते ॥ २ ॥

---

1. भेदेऽपीत्यर्थः

|| अनुमानादावपि प्रमाया गुणजन्यत्वनिरूपणम् ||

तथा चानुमानेऽपि लिङ्गविपर्यासादिदोषाभावादतिरेकिभावरूपमेव लिङ्गादितत्त्वज्ञानं अन्तःकरणादिरर्थ्यते । शब्दोऽपि यथा विपरीतोपलम्भादिदोषोपेतपुरुषप्रणीततामपेक्ष्याप्रमाजनकः तथैव यथार्थोपलम्भादिगुणकपुरुषमपेक्षमाणः प्रमामुपजनयतीत्यन्वयव्यतिरेकाभ्यां अधिगम्यते । गुणानां दोषनिरासार्थः सन्निधिर्न प्रमाणज्ञानकारणरूपेणेति चेन्न । दोषाणां गुणापाकरणार्थः सन्निधिरप्रमायां न कारणभावेनेति विपरीतस्यापि शक्यवचनत्वात् । तस्मादेतत्सिद्धम् —

विज्ञानकारणकलापविभिन्नमूर्तेः
दोषाद्यथोदयमुपेत्य यथार्थबोधः ।
तद्वद्गुणादुदयमेति यथार्थबोधः
तद्भावभावनियतेरुभयाविशेषात् ॥ १ ॥

तदेवं नयनादेरेव प्रमितिसाधनतया प्रमाणीभवतस्तत्सिद्धौ तदसाधारणधातुसाम्यादिसापेक्षत्वमेवोत्पत्तौ परतः प्रामाण्यमभिमतम् । स्वमतेन तु ज्ञाने समवायिनः प्रामाण्यरूपस्य धर्मस्यैव च परत उत्पत्तिः साध्यते ।

|| भूषणाचार्यग्रन्थस्य स्वतः प्रामाण्यवाद्यभिमतज्ञानप्रामाण्याभिप्रायकत्वेन सङ्गमनम् ||

यत्पुनरिदमाचार्यो [[1]व्याजहार]—प्रामाण्यं परतो भवति अभूत्वाभावित्वात्[त् अ]प्रामाण्यवदिति तत् पराभिमतवेदनाधिकरणप्रामाण्याङ्गीकरणेऽपि परत एवोत्पत्तिप्रसक्तिपरम् । "प[व]नकर्मादिष्विव कथं न दोषाभावापेक्षित्वेऽपि चक्षुरादेः प्रामाण्योत्पत्तौ सापेक्षत्वं"इत्यादिग्रन्थोऽपि पराभिमतप्रामाण्याभिप्रायेणैव प्रयोगवद्योजनीयः । प्रयोगे तु परतो भवतीत्यस्य विज्ञानकारणादतिरिक्तहेतोर्जायत इत्यर्थं व्याचक्षाणाः केचन विज्ञानेन व्यभिचारपरिहारार्थमभूत्वा भावित्वादिहेतुं ज्ञानधर्मत्वे सतीति विशिंषन्ति । वयं तु साधारणादन्यवचनपरशब्दमभिप्रेत्य, परतो भवति असाधारणकारणात् भवतीति साध्यार्थोपपादनेन निर्विशेषणस्यापि हेतोः व्यभिचारविरहात् विशेषणाध्याहारमप्रमाणं वर्णयामः । तदेवं उत्पत्तौ तावन्न स्वतः प्रामाण्यसिद्धिः ।

1. व्यवहार—मा.

॥ ज्ञप्तौ स्वतः प्रामाण्यविचारः ॥

स्वत एव प्रामाण्यं प्रतीयत इत्यस्यापि कोऽर्थः । किं स्वयमेव वेदनं स्वप्रामाण्यग्रहणमित्यर्थः । किं वा स्वग्राहेण प्रामाण्यग्रहणमिति । नाग्रिमः कल्पः, यतः स्वसंवेदनताभावात् संवेदनमात्मागोचरं नात्मप्रामाण्यगोचरं भवितुमुत्सहते । स्वसंवेदनत्वं तु संवेदनानामग्रे निवारयिष्यामः । स्वसंवेदनाभ्युपगमेऽपि न तदधिकरणप्रामाण्यवेदनम् । अन्यथा त्वप्रामाण्यस्यापि स्वसंवेदनाधिकरणस्य तद्वेद्यतापत्तेरप्रमाणवेदना[द्]प्रवृत्तिप्रसक्तेः ।

॥ स्वग्राहकेण प्रामाण्यग्रहणमिति द्वितीयकल्पनिरासः ॥

नापि पश्चिमः । संवेदनग्राहकं हि संवेदनं ज्ञाततान्यथानुपपत्तिप्रसूतं [1]परेष्टम् । तच्च न(।)प्रामाण्यगोचरमुत्पत्तुमुत्सहते । ज्ञानमात्रपरिकल्पनेनैव ज्ञाततानुपपत्तिपरिक्षयात् । अन्यथा त्वप्रमाणज्ञानात्तदुत्पत्त्यनुपपत्तेः । तदनुपपत्तौ च [[2]अप्रमाणज्ञानस्या]सिद्धिप्रसक्तेः । स्यान्मतम् । बाधकाभावविशेषिता ज्ञातता प्रामाण्यमाक्षिपतीति । हन्तैवमविशिष्टा विज्ञानमाक्षिपति, विशिष्टा तु तत्प्रामाण्यमिति कथं न परतःपक्षानुप्रवेशः । एवमपि तदनुप्रवेशाभावे बाधकावच्छिन्नज्ञातताक्षिप्तं अप्रामाण्यमपि परतो न स्यात् । किं च वेदनग्राहकेणैव सर्वत्र तत्प्रामाण्यग्रहणे न कदाचनापि तद्व्यभिचाराव्यभिचारसन्देहः समुत्पद्येत । दृश्यते च दृष्टव्यभिचाराणां कदाचन दूरे नीरादिदर्शनेषु तत्सन्देहः । नचासावादित एव निश्चितैककोटिकस्यापि साधारणधर्मावबोधमात्रेण सन्देहः सम्भवी । नो खलु निश्चितेऽपि स्थाणावूर्ध्वतोपलम्भमात्रेण स[न्दिह]ते[3] । तथा सति सन्देहानिवृत्तिप्रसक्तेः ।

॥ स्वतः प्रामाण्ये उत्तरत्र प्रामाण्यसन्देहानुपपत्तिप्रदर्शनम् ॥

प्रमाणवदप्रमाणेऽपि आपाततस्तत्प्रत्ययात् असति विशेषोपलम्भे भवति सन्देह इति । हन्त भोः [किं]प्रमाणप्रत्ययप्रतीतावसौ सन्देहः किं वा तदप्रतीतौ ?

---

1. ज्ञानमतीन्द्रियं तज्जन्यज्ञाततयाऽनुमीयत इति भट्टमतमनुसन्धेयम् ।
2. प्रामाण्यस्या—मा.
3. सन्निहिते—मा.

प्रथमे तत्प्रत्ययप्रतीतिरेव तत्प्रामाण्यगोचरा, नो वेति । नाद्ये सन्देहसम्भवः, विशेषोपलम्भात् । द्वितीये तु, कथं सर्वत्र स्वतःप्रामाण्योपवर्णनम् ? चरमे तु, तदप्रतीतौ कथं सन्देहः सम्भवी ? एतेनैतदपास्तम् यदाचक्षते बोधात्मकत्वेनैव स्वकीयेन बोधानां प्रामाण्यप्रतीतिः स्वतः प्रामाण्यमिति । नहि बोधात्मकत्वमेव बोधानां प्रामाण्यमधिगमयति । तथा सति तत्र सन्देहस्य कदाचिदपि अनुपपत्तेः । कथं च प्रामाण्यव्यभिचारिणो बोधात्मकत्वात् तन्निश्चयः तदव्यभिचारे वा न कोऽ(वतो)प्यप्रमाणं बोधो भवेत् ।

॥ बोधमात्रे स्वतः प्रामाण्यमुत्सर्गसिद्धमिति पक्षनिरासः ॥

अथोत्सर्गतो बोधमात्रे प्रामाण्यवेदनं स्वतः प्रामाण्यं, बाधकादिना त्वप्रामाण्यवेदनं क्वचिदापवादिकमित्यभिधीयते । तदप्यपेशलम् । तद्धि न लैङ्गिकं अनुपपद्यमानधर्मप्रसूतं वा ? तादृशः क्वाप्यपवादानुपपत्तेः । न बहुशः परिदृष्टसाहचर्य[स्य] काकतालीयव्यभिचारवतो बोधत्वादेव तदुत्पादः । काकतालीयस्यापि तद्व्यभिचारस्या(न)धिगमे बहुधोपलब्धसाहचर्यात् ततः सम्भवविपर्यय एव स्यात् । अनधिगतव्यभिचारस्य पार्थिवत्वाध्यवसायनिबन्धनलोहच्छेद्यतावेदन[वत्] न लिङ्गाभाससम्पाद्या प्रमितिरुपपत्तिमती ।

॥ प्रामाण्यज्ञानस्य कदाचित्संभवेऽपि प्रामाण्यप्रमितिः परत एव ॥

यदि मतम्, अस्तु नामायं विपर्ययस्तथापि प्रामाण्यस्य प्राचुर्याद्बोधेषु आपाततस्तत्प्रत्ययो, न त्वेवं अप्रामाण्यप्रत्ययः बाधोपलम्भादिसापेक्षत्वादित्येतावतैव भेदेन स्वतः प्रामाण्यं प्रतीयते; परतस्तु अप्रामाण्यं' इति गीयते । भवत्वेवं, प्रमितिस्तु प्रामाण्यस्य परत एवेत्यकामैराश्रयणीयमिति वयं प्रतिपादयामः । प्रामाण्यप्रतीतिमात्रं पुनरारोपरूपमप्यापाततो भवत् नास्माभिरपाकरणीयम् । अभिप्रेताविरोधात् । इदमेवाभिमतमाचार्येणापि । यथा बाहुल्येन साधुपुरुषान् दृष्टवतः पुरुषमात्रे प्रथमं साधुत्वाध्यवसायो भवति, असाधुत्वाध्यवसायस्तु निमित्तान्तरोपलम्भात् तथा बोधानां बाहुल्येन सम्यक्त्वदर्शनात् तदभ्यासजनितपटुसंस्कारस्य बोधमात्रे प्रथमं सम्यक्त्वाध्यवसायो भवति । मिथ्यात्वाध्यवसायस्तु तत्संस्कारपाटवाभावात् निमित्तान्तरोपलम्भमपेक्षते । नचैतावता निमित्तेन स्वतः परतः प्रामाण्याप्रामाण्यसंज्ञाकरणे प्रकृतार्थसिद्धिरिति ।

॥ स्वतस्त्वं चतुर्धा विकल्प्य सर्वथा प्रामाण्यस्य स्वतस्त्वमेवेति शङ्का ॥

**यदपि** मतं तथाभूतार्थानुभवत्वमेव प्रामाण्यं; तच्च स्वत एव निरूप्यते। तथा हि—किमर्थस्य तथाभावो जातिः उपाधिसामान्यं, विपर्ययव्यावृत्तिः विद्यमानार्थता वा? प्रथमे, सामान्यादिके वेदनानामयथार्थतापत्तिः, निस्सामान्यानि तानीत्यभ्युपगमात्। द्वितीयोऽपि, श्यामलधवलादिवस्त्वनुवर्तिनो यथार्थत्वोपाधेरनुपलम्भात। उपलम्भे वा तस्य यथार्थतासिद्ध्यर्थमुपाध्यन्तरानुसरणे सत्यनवस्थाप्रसङ्गादपाकरणीयस्तथा। तृतीये तु, स्वरूपविपर्ययव्यावृत्तिर्विद्यास्वरूपमेव, न वस्तुन इति तदवच्छिन्नत्वं विज्ञानस्य स्वत एव शक्यनिरूपणमिति स्वतः प्रामाण्यम्। चतुर्थे तु विद्यमानार्थत्वं नामार्थस्य(ा)वर्तमानत्वं आहो स्वरूपसत्त्वं, आद्यं चेदतीतादि[1]प्र[तीते]रयथार्थताप्रसक्तिः। द्वितीये तु पदार्थस्वरूपस्य परानपे[क्षे]ण प्रत्य[ये]नोपदर्शितत्वात्तदवच्छिन्न एवासौ स्वग्राहकेण निरूप्यते। विपरीतानुभवत्वं तु बाधकालीनवेदनमिति परतोऽभिधीयत इति।

॥ उक्तशङ्कानिराकरणम् ॥

**तदपि** न साधु। यस्मादर्थस्य बाधकागोचरता तथात्वम्। तच्च नापाततः प्रत्ययेनावभासत इति कथं तदवच्छिन्नस्य स्वतो निश्चयः। किञ्च पौरस्त्यरजतरूपप्रत्ययत्वं प्रमाणतदाभाससाधारणम्। तथार्थानुभवत्वं तु तदाभासव्यावृत्तमिति कथं तयोः अनुवृत्तिव्यावृत्तिधर्मतया विरोधिनोरेकता सम्भविनी। न खल्वन्यथा तथाभूतार्थगोचरभावः शक्यः प्रतिषेद्धुं पौरस्त्यरजतप्रतीतेः कदाचिदपीति। तदेवमुन्नीतन्यायेन प्रतीतावपि न स्वतः प्रामाण्यमिति सिद्धम्।

तथा च—

प्रमीयते प्रमाणत्वं परस्मादिति [यौक्तिकम्][2]।
धर्मिग्राहकसामग्रीव्यतिरिक्तं परं मतम् ॥ १ ॥

॥ प्रमाकरणत्वरूपप्रामाण्यस्य परतस्त्वसाधनम् ॥

इह खल्विन्द्रियादेः प्रमाणसाधनत्वं प्रामाण्यमभिमतम्। न पुनः प्रतीतेरेव पराभिमतप्राकट्यभेदकारणभावः प्रामाण्यं, तस्य निरसिष्यमाणत्वात्। यच्च

---

1. प्रसक्तेः—मा.  2. लौकिकम्—मा.

तदिन्द्रियादिप्रामाण्यं न तद्धर्मिग्राहकसामग्रीमात्रावसेयं सम्भवति। रूपादिगोचरापरोक्षानुभवेन च चक्षुरादिस्वरूपपरिज्ञानेऽपि तत्प्रामाण्यानिश्चयात्। प्रमात्वोपहितकार्यपरिज्ञानमन्तरेण तदुपधानस्य तत्साधनभावस्यावसातुमशक्यत्वात्। तत्र यथा परिकलितस्वरूपे नयनादौ तत्कार्यानुभवव्यभिचारावगमसापेक्षं तदप्रामाण्यपरिज्ञानं, तथैव तत्कार्यानुभवाव्यभिचारपरिज्ञानसापेक्षं प्रामाण्यपरिज्ञानमपीति परत एवोभयं युक्तम्।

॥ प्रमितिगतप्रमात्वरूपप्रामाण्ये परतस्त्वसाधनम् ॥

यदापि प्रमितिः प्रमाणमिति व्युत्पादनेन प्रमात्वमेव प्रामाण्यमभिमतं, तदापि न तस्य धर्मिग्राहकसामग्रीमात्रसंवेदनीयता; धर्मिनिश्चयेऽपि तत्संशयदर्शनात्। दर्शितश्च दूरे नीरादिवेदनविनिश्चयेऽपि तत्प्रामाण्यसन्देहः। तत्सिद्धमेतत्-अनभ्यासदशापन्नवेदनप्रामाण्यं परतः प्रमीयते, तत्र सांशयिकत्वात् अप्रामाण्यवदिति। एवं सत्यभ्यासदशापन्नान्यपि प्रमाणवेदनानि परतः प्रमेयप्रामाण्यानि प्रमाणवेदनत्वादनभ्यासदशापन्नप्रमाणवेदनवदिति प्रयोक्तव्यम्। तदेवं प्रमितावपि परापेक्षमेव प्रामाण्यमिति स्थितिः।

॥ महाव्रतोक्तं स्वार्थतथात्वव्यवस्थापकत्वं स्वतः प्रामाण्यमिति पक्षः ॥

यः पुनरेष स्वतः प्रामाण्योपवर्णनप्रकारः। तथाभूतार्थसम्बन्धः[प्रामाण्यम्][1] तादृगर्थव्यवस्था पुनरर्थवेदनेनैव क्रियते, उतार्थाव्यभिचारादिवेदनापेक्षेणेति विचारणीयम्। न तावत्तदपेक्षेणेति साम्प्रतम्। अपेक्षणीयवेदनानामपि स्वार्थतथात्वव्यवस्थितये वेदनान्तरव्यपेक्षाप्रसक्तावनवस्थादौस्थ्यप्रसङ्गात्। तस्मात् परानपेक्ष[स्वा]र्थतथात्वव्यवस्थापकत्वमेव स्वतस्त्वमिति।

तदाह-**महाव्रतः**—

तथाभूतादर्थात्प्रमितिमनुमानादधियतां
इदं न प्रामाण्यं ननु परत एवेत्यनुमतिः।
तथाभूतोऽर्थात्मा पुनरपरः सिद्ध्यति मते
[2]रसौ तस्या एवेत्ययमिह विवादस्य विषयः॥ १॥

---

1. किं प्रामाण्यं—मा.	2. रासे—मा.

तथाभूतार्थसम्बन्धः प्रामाण्यमभिधीयते ।
प्रमाणसहजो धर्मः सन्नान्यस्मान्न पश्चिमः ॥ २ ॥

॥ ज्ञानस्य अर्थतथात्वव्यवस्थापकत्वे बाधकाभावज्ञानापेक्षणात्
परतस्त्वादविमोक्षः ॥

अयमप्यतिस्थवीयानेव । स्वभावतो हि वेदनानां अर्थतथाभावव्यवस्थापकत्वे बाध्यबाधकभावो न भवेत्, द्वयोरपि तादृगर्थगोचरभावेन तुल्यबलत्वात् । बाधकाभावसध्रीचीनस्य तादृगर्थपरिच्छेदकता न सर्वस्येति विशेष इति चेत्, न तर्हि परतः पक्षाद्विमोक्षसम्भवः । प्रतिपक्षात् अन्यथात्वं न, बाधकविरहकरम्बितादर्थतथात्वव्यवस्थितेरेव तथात्वात्[1] । न चासावविदित एव बाधकाभावस्तथाभूतार्थव्यवस्थितौ सोपयोग इति साम्प्रतम् । यस्मादबाध्यतैवार्थस्य तथाभाव इति निवेदितम् । न च बाधाभाववेदनमन्तरेण तदवच्छिन्नत्वमबाध्यत्वमवसातुं शक्यते, अगृहीतविशेषणाया विशेष्यबुद्धेरनुत्पादात् । तस्मात् बाधाभाववेदनसापेक्षमेव संवेदनमर्थतथाभावव्यवस्थापकमिति कथं परतः पक्षपरित्यागः ।

॥ अत्रानवस्थाशङ्का तत्परिहारश्च ॥

यत्पुनरेतदपेक्षणीयवेदनानामपि अन्यापेक्षाप्रसक्त्या[व]नवस्थेति । तदसत् । यतः स्वतः प्रामाण्यपक्षेऽपि पुरुषवचनादिजनितवेदनेषु बहुळमुपलब्धव्यभिचारित्वादागन्तुकशङ्काकलङ्कितशरीरेषु शङ्कितव्यभिचारविनिवारणद्वारेण स्वाभाविकप्रामाण्यप्रतिष्ठावग(ता)मार्थं आप्तपुरुषाधीनविरचनादिना दोषाभा(वे)वावधारणमुपेयते ।

गदितं हि **काशिकाकृता**—"यदि परं शङ्कितव्यभिचारनिवृत्त्यर्थमाप्तोक्तत्वेन दोषाभावमात्रमाश्रीयते । सर्वप्रमाणसाधारणं चेदं शङ्कितदोषनिवृत्त्यौत्सर्गिकं प्रामाण्यमिति" इति । तत्र शङ्कानिवृत्त्यर्थमपे(क्ष)क्ष्यमाणदोषाभावावधारणस्यापि दुष्टकारणप्रसूतत्वाशङ्कायां तन्निवृत्त्यर्थमपि तत्कारणदोषाभावावधारणव्यपेक्षायामनवस्थादौस्थ्यस्य तुल्यत्वम् । यश्चोभयोर्दोषो न तमेकश्चोद्यो भवति । यश्चात्र परिहारः

---

1. प्रतिपक्षत्वात् परतः पक्षत्वादिति यावत्

सर्वत्र संशयाभावात् निराकाङ्क्षत्वेन विचारकाणामपि व्यवहारदर्शनान्नानवस्थेति सोऽपि समान एवास्माकम्। यत्र च पर्यनुयोगपरिहारयोरुभयसाम्यं न तत्रैकः पर्यनुयोगमर्हतीत्युदितं स्वयमेव ॥

यश्चोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥

इति। प्रपञ्चितश्च प्रागनवस्थापरिहारः।

॥ स्वकार्ये स्वतः प्रमाण्यपक्षस्यापि दूषणम् ॥

स्वकार्ये नैरपेक्ष्यं यदि तथाभूतार्थपरिच्छेदमेव प्रमाणवेदनानां कार्यमभिप्रेत्य वर्ण्यते। तदयुक्तम्। अर्थवेदनातिरेकिणः परिच्छेदस्य पराकरिष्यमाणत्वात्। यदि तु तथाभूतार्थव्यवहारमेव कार्यमभिप्रेत्य तथोच्यते, तथाप्यनुपपत्तिरेव। विशेषण-वेदनामन्तरेण विशिष्टव्यवहारानुपपत्तेः। बाधाभावापरपर्यायतथाभावविशेषणप्रति-भासस्य विशिष्टबोधाधानद्वारेण वेदनार्थमवश्यापेक्षणीयत्वात्। अर्थमात्रव्यवहारो-त्पा[दा]दौ परानपेक्षत्वमप्रमाणेऽपि समानम्। उपकारापकारसाधनसंवेदनापेक्षा समानैव समीचीनसंवेदनेष्वपीति स्वकार्येऽपि स्वतः प्रामाण्योपवर्णनमसाम्प्रतमेवेति सिद्धम्।

ततश्चैतत्सिद्धान्तश्रद्धामात्रविजृम्भितम्।
स्वतः सर्वप्रमाणानां प्रामाण्यमिति भाषितम् ॥ १ ॥

॥ अनुमानमानसप्रत्यक्षयोरेव स्वतः प्रामाण्यमिति मतं तत्खण्डनं च ॥

**ये** पुनराहुः—माभूत्सर्वप्रमाणानां स्वतः प्रामाण्यमनुमानमानसावसायादे-स्त्वर्थाव्यभिचारलक्षणं प्रामाण्यं स्वत एवावसेयमिति। **ते प्रष्टव्याः**। प्रामाण्याविशे-षेऽप्यनुमानस्य[मानसा]नुभवस्य स्वतः प्रामाण्यावधारणम्, नचेतरस्ये[त्ये]तस्यां व्यव-स्थायांकिं प्रमाणमिति। निरस्तव्यभिचाराशङ्कत्वादनुमानादेः स्वतः प्रामाण्यमवसेयम्, नान्यस्य। निरस्तव्यभिचाराशङ्कताप्यनुमानादेः अव्यभिचारिलिङ्गसमुत्थत्वादिना विशेषदर्शनग्रस्तत्वादिति चेत्, न, अव्याप्तेः। न खलु निरस्तव्यभिचाराशङ्कत्वं स्वतोऽवसेयप्रमाणभावेन क्वचिद्व्याप्तमुपलब्धम्। प्रत्युत करतलादिबाह्यप्रत्यक्षवेद-

नस्यापि परतः प्रमेयप्रमाणभावतया सम्प्रतिपन्नस्य निरस्तव्यभिचाराशङ्कत्वाद्व्याप्तिनिश्चय[1] एव सुलभ इति ।

॥ अनुमितेः स्वतः प्रामाण्यपक्षान्तरम् ॥

यत्पुनरेतदभिहितं-अनुमितिज्ञानं ह्यतथात्वव्यवच्छेदादेवोत्पद्यतेऽग्निमानेवायमिति । तथा चानुव्यवसायेनावसीयमानमिदं स्वार्थावधारणात्मकमेवावसीयते । न च अविपरीतार्थत्वमनुभवस्यानवस्यताऽवधारणात्मकत्वं अवसितं भवति । तथाचावश्यमवसेयं तदेव[2] प्रामाण्यम् । कदाचिदेवंभूतावसायेऽपि विपर्ययत्वशङ्का [तमास्कन्दती] त्ववशिष्यते । सा च लिङ्गसमुत्थत्वादेव नास्ति । नहि विशेषदर्शनप्रस्तोत्पत्तौ शङ्कावकाश इति ।

॥ अस्य पक्षस्य विकल्प्य दूषणम् ॥

तदेतदनुकूलतर्कमात्रमुपन्यस्तम् ? प्रमाणं वा किञ्चन प्रकृतार्थसिद्धये प्रदर्शितं? प्रथमे निरनुग्राह्यस्य न तर्कस्योपयोगः । चरमे तु न प्रत्यक्षं असम्प्रतिपत्तेः । नाप्यनुमानं, व्याप्तिलिङ्गानुपदर्शनात् । नचाविपरीतार्थत्वमनारोपितगोचरतापर्यायमनिश्चित्यानुभवस्यार्थावधारणात्मकत्वं शक्यं[3] निश्चेतुं, यतः प्रागुक्तवर्त्मना प्रामाण्यमनुमानादौ स्वतोऽवसीयते । न खलु अविपरीतार्थत्वमेवानुभवस्यार्थावधारणात्मकत्वं यतः तदसिद्ध्या तन्न सिध्येत् । अन्यथा रजतमेवेति शुक्तावुपजायमानोऽपि प्रत्ययो भवत्यर्थावधारणात्मक इति भवेदस्याविपरीतार्थत्वमेवंविधम् । तथा च क(था)थं विपर्ययवार्तावकाशोऽपीति यत्किञ्चिदेतदिति ।

॥ अनुमानादेः परतः प्रामाण्ये प्रमाणप्रदर्शनम् ॥

तदेवमनुमानादेरपि न स्वतः प्रामाण्यावधारणं प्रामाणिकम् । विपर्यये[4] तु प्रमाणम्—अनुमानादि परतःप्रमेयप्रामाण्यं प्रमाणत्वादुभयाभिमतप्रमाणवदिति ।

---

1. निरस्तव्यभिचाराशङ्कत्वे स्वतोऽवसेय प्रमाणभावव्याप्तेरभाव इत्यर्थः
2. अविपरीतार्थत्वमित्यर्थः
3. अशक्यं—मा.
4. अनुमानादेः स्वतः प्रामाण्यविपर्यये परतः प्रामाण्ये इत्यर्थः

विपक्षे को दोष इति चेत् । विज्ञानग्राहकसामग्रीमात्रेणानुमानादौ तत्प्रामाण्याव-धारणे सर्वत्र तथाभावप्रसङ्गः । तत्रैव त्वागन्तुकसहकार्यनुप्रवेशात्प्रामाण्यसिद्धावपि स्वतः प्रामाण्योपवर्णने कदाचित् अप्रामाण्यस्यापि तथा[1] सिद्ध्युपपत्तेः तदपि स्वतः प्रसज्येतेति ।

॥ अनुमानादीनां वस्तुगत्या स्वतः प्रामाण्यग्रह इति पक्षः ॥

एवं च यदुच्यते-यद्यपि च अनुमानोपमानानुव्यवसायधर्मिज्ञानानामपि प्रामाण्यं परतोऽपि शक्यग्रहं; सन्ति हि तत्रापि यथायोगं लिङ्गसमुत्थत्वादीनि तज्जातीयलिङ्गानि । तथापि कोष्ठगत्या[2] स्वत एव प्रामाण्यग्रहोऽत्र स्वयमिति स एव प्रकारो दर्शितः । विप्रतिपन्नं प्रति तु परत एव साधनीयं तदिति परमार्थ इति ।

॥ उक्तमतखण्डनम् ॥

तदप्यनुचितम् । स्वयमपि स्वतः प्रामाण्यावधारणस्यानुमानादौ प्रागुक्त-प्रमाणेन पराकरणोपपत्तेः । किं चानुमानाद[वि]प्यन्ततः स्वतः प्रामाण्योपवर्णने —

कस्यचित्तु यदीष्यते स्वत एव प्रमाणता ।
प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥ (श्लोक वा· 1-2-76)

इति वदन्तो विजयेरन् मीमांसका इति तन्निरासार्थं सर्वप्रमाणानां परत एव प्रामाण्यमुपवर्णनीयमिति न्यायसम्प्रदायः ।

॥ अनुमानादेः स्वतः प्रामाण्यवादिवाचस्पतिभावः ॥

अत एव **त्वाचार्यवाचस्पते**रनुमानादिस्वतःप्रामाण्योपवर्णनपरं वचनमा-ञ्जस्येनैवापाततो व्याख्याय अस्य अनुशयात् अनु [3]स्वयं अनुमानप्रामाण्यावधारणेऽपि प्रसक्तानवस्थामन्यथैवो **द य नः** परिजहार । तथा च तस्य वचनव्यक्तिः ' तत्रा-

1. आगन्तुकदोषानुप्रवेशेनेत्यर्थः
2 वस्तुगत्येत्यर्थः
3. स्वयं उदयन इत्यर्थः

सुप्तस्य गजादिदर्शनं चेति । स्मरणाज्ञानव्यवच्छेदार्थमनुभवग्रहणम् ।

---

प्यनवस्थेति चेत्, न तावदसौ दृष्टान्तद्वारिका, प्रागेव तन्निश्चया[त्]फलद्वारिका[1] तु स्यादपि यद्यवश्यज्ञेयं प्रामाण्यमभ्युपेयेत। अज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमिति चेत् यथा विषयवेदनम् । अस्तु तर्हि धर्मिलिङ्गद्वारिका ताभ्यामनिश्चिताभ्यामननुमानात् । तन्निश्चयस्य च प्रामाण्यनिश्चयमन्तरेणानुपपत्तेः । न त्वेतत् । अभावात् । यत्र हि लिङ्गज्ञाने धर्मिज्ञाने वा तथ्यातथ्यभावेन द्वैतमुपलभ्यते तत्र तथ्यत्वानिश्चये लिङ्गमाभासशङ्काक्रान्ततया न निश्चीयते । यत्र तु ज्ञानं तदेकनियतं, तत्र तावतैव लिङ्गनिश्चयः, तदाभासशङ्कानुत्थानात् । एककोटिनिश्चयतो हि अनुभवो निश्चयः ज्ञानतद्धर्मग्राहिणि च ज्ञाने न द्वैतमिति व्यवस्थितिरेव । प्रामाण्यनिश्चयस्तु तस्यापि परत एवेति न्यायसंप्रदाय" इति । कथं पुनः असौ स्वत एवेति वर्णयामासुराचार्य**वाचस्पतिमिश्राः** इत्यत आह—इत एव विशेषात्तादृशस्य स्वत एवेति तात्पर्याचार्या इति [च] ।

तस्मात् सर्वप्रमाणानां प्रामाण्यस्यावधारणम् ।
शक्यं पराधीनमिति स्थितं सर्वमनाविलम् ॥ १ ॥

एवं सम्यगसम्यक्त्वे सङ्ग्रा[ह्या]पोह्यरूपतः[2] ।
सिद्धे, ततः सम्यगिति युक्तमुक्तं विशेषणम् ॥ २ ॥

॥ प्रमाणलक्षणे अनुभवत्वनिवेशकारणकथनम् ॥

स्यादेतत् । सम्यक्साधनमित्येवास्ताम् । किमनुभवग्रहणेनेत्यत आह— **स्मरणाज्ञानव्यवच्छेदार्थमनुभवग्रहणमिति ।** स्मरणं स्मृतिः न ज्ञानमज्ञानं ज्ञानादन्यत् स्मरणमज्ञानं च स्मरणाज्ञाने, तयोर्व्यवच्छेदस्तथोक्तः स एवार्थः प्रयोजनं यस्येति विग्रहः । एतदुक्तं भवति—स्मरणस्य चाज्ञानस्य च यागादेः प्रमाणफलत्वमनुभवग्रहणेन परास्तम् । न हि तयोर्भावव्युत्पत्त्याऽनुभवशब्दवाच्यत्वं क्वचित्

---

1. अनवस्थेति शेषः
2. सङ्ग्राह्येति । लक्षणेनेत्यादिः

प्रसिद्धम् । भावव्युत्पत्तिश्च [1]अनुभवशब्दस्यासत्यपि विशेषणप्राधान्ये प्रयोजनप्राचुर्यानुसारात् स्वतोऽवसीयत इति ।

॥ अनुभूतिलक्षणम् ॥

अथानुभूतेः किं लक्षणं ? स्मृतीतरज्ञानत्वमिति ब्रूमः । स्मृतेरेव तर्हि किं लक्षणम् ? न तावत् गृहीतमात्रग्राहित्वं, धारावाहिकवित्तीनां स्मृतित्वापत्तेः । तासां तु तथात्वमुपपादयिष्यामः । नापि तत्तावच्छिन्नपदार्थावभासित्वं, नेह भूतले कुम्भ इत्यादौ अनुल्लिखिततदंशस्यापि स्मरणस्योपयोगात् । नापि संस्कारमात्रजत्वं, उद्बोधकसहितसंस्कारजन्यत्वेन तन्मात्रजन्यत्वासिद्धेरिति ।

॥ स्मृतिलक्षणकथनम् ॥

सत्यम् । जनकानुभवाधीननियतविषयत्वं स्मृतिलक्षणं यद्विषयोऽस्यानुभवः कारणं तन्मात्रगोचरं स्मरणम् । नच तस्य तथात्वे तद्गोचरचारिपूर्वा(जा)नुभवं विहाय हेतुरस्ति । धारावहनवेदनानां पुनरिन्द्रियसन्निकर्षविशेषवलेन विषयनियम इति ।

॥ स्मृतेरप्रमात्वे स्मृतिकरणस्याप्रमाणत्वे च कारणप्रश्नः ॥

[के]न[2]पुनः कारणेन स्मृतितत्साधनयोः प्रमाप्रमाणते नाश्रीयेते । यथार्थज्ञानतत्साधनतयाऽविशेषात् तदन्ययथार्थज्ञानतत्साधनवत् । नच वाच्यमनधिगतार्थतावच्छिन्नस्य तथाविधव्यवहारनिमित्तत्वात, इह तदभावादिति । धारावहनवेदनतत्साधनयोरव्याप्तेः । नच तत्तत्कालक(ा)लाधिकांशाद्याकलनेन तयोरपि अनधिगतार्थगोचरचारितेति, क्षणोपाधीनामनाकलनात्, ते हि क्षणिका वा ? तदितरे वा ? पूर्वत्र, तेषामिन्द्रियसन्निकृष्टानां अतीतत्वेन[न] प्रत्यक्षत्वं, असन्निकृष्टानां तु न प्रतिभासः सम्भवी । उत्तरत्र कथं क्षणोपा[धीनामक्षणिकत्वमु]चितं वक्तुम् । क्षणद्वयव्यपितायामुपाधीनां पूर्ववेदनसमये सन्निकर्षस्तदनन्तरवेदने चावभास इत्यप्यनधिगतार्थता न दुष्यतीति । न । तादृशोऽपि दिनकरनयनपरिस्पन्दादेरिन्द्रियसन्निकर्षाभावात्, अप्रतिभासनाच्च । नच द्विविधोपाधिप्रसूता विशिष्टता भासते तदप्रति-

---

1. अभावश—मा
2. अस्य पूर्वपक्षस्य अत्रोच्यते इति समाधानं ९३ पुटेद्रष्टव्यम्

भासेऽपीति साम्प्रतम्। विशेषणाप्रतिभासे विशेष्यप्रतिभासानुत्पादनियमात्। नच कालोपाधिप्रसूतमिदन्तारूपं इह धर्मान्तरं भासत इति युक्तम्। धर्मिवदभेदेन प्रत्यभिज्ञायमानस्य भेदप्रतीतिविरोधात्। नच वचनीयं वर्तमानत्वं घटादेरवभासते, तच्च प्रतिवेदनं[1]भिन्नमित्यनधिगतार्थत्वमिति। वर्तमानत्वं विनाशानाक्रान्तं गलितप्रागभावं च भावरूपम्? यद्वा निजकार्यकरणे शक्तिः? सामान्यभेदो वा? सर्वथापि कथमनधिगतार्थतावकाशः धर्मान्तरत्वेऽपि तदेव साधकाभावेन सन्दिग्धं, प्रतिक्षणं तूत्पद्यत इति कथमुपपादनीयम्।

॥ कालोपाधिभेदात् धारावाहिकबुद्धीनां भिन्नविषयत्वशङ्का तद्दूषणं च ॥

स्यादेतत्। सन्ति केचित्कालोपाधय एव भिन्नाः, यत्रेदानीं इति प्रत्ययः तदवच्छेदभेदादधिकार्थता भविष्यतीति। तदप्यसत्। प्रतिसंवेदनं तद्भेदे प्रमाणाभावात्। यदि मतं धारावहनवेदनान्य[न]धिगतार्थानि, प्रमाणत्वात् पुरप्रा[कार]वारिविहङ्गमगमनवेदनवदिति। तदप्यसत्। तथा हि-यदि प्रमाणत्वमनधिगतार्थग्राहित्वमभिमतं तत्साध्याविशिष्टम्। यथार्थवेदनत्वं चेत् सव्यभिचारं स्मरणेन। यथार्थानुभवत्वं चेत् अंशे बाधितविषयत्वं वेदस्मृतीतिहासपुराणप्रसूतानुभवधाराणां अभिन्नार्थगोचरत्वेनैव भासनात्। नच तत्रापि कालकलाभेदः स्फुरतीति साम्प्रतम्। तत्तद्वाक्येषु तत्प्रतिपादकपदादर्शनात्। अपरोक्षज्ञानत्वादिति हेतुरिति चेन्न। सकलधारावाहिकसंवित्पक्षीकरणे भागासिद्धेः। प्रत्यक्षमात्रपक्षीकरणेऽपि व्यतिरेकसन्देहात्परोक्षज्ञानवदपरोक्षस्यापि ज्ञानस्य कस्यचित् अधिगतार्थत्वशङ्कायां बाधकादर्शनात्। प्रागुक्तनीत्या वा प्रतिभासमानार्थातिरेकानिरूपणेन बाधितविषयत्वात्। नच ज्ञाततैवाधिका भासत इति युक्तं निराकरिष्यमाणत्वात्।

परोक्षधारावाहिषु द्वितीयादिबुद्धीनामप्रामाण्यम्।

कथञ्चित्प्रामाण्ये स्मृतेरपि प्रामाण्यप्रसङ्गः ॥

किं चापरोक्षधारावाहिष्वधिकार्थसिद्धावपि गृहीतवि[स्मृ]तार्थानां वेदादिवचनश्रवणसमनन्तरानुभूतौ का गतिः? अप्रमितिरेवासाविति चेत्। गतसङ्कथैव

---

1. प्रतिवेदनमभिन्नं, यद्वा विशेषणाभिन्नमित्यर्थेन यथाश्रुतमेव साधु।

तर्हि तपस्विनी वेदप्रामाण्यप्रत्याशा। न खल्वनादौ संसारे स्वर्गकामो यजेतेति वाक्यार्थः कदाचिदपि नानुभूत इति संभाव्यते। तत्सन्देहेऽपि प्रामाण्यसन्देहात्कथं निरातङ्कः तद्व्यवहारः प्रवर्तेत। न चैकजन्माभिप्रायेणेदं लक्षणम्।

तत्राप्यधिगतविस्मृतवेदार्थं प्रत्यप्रमाणतापत्तेः।

तस्मादव्यापकत्वेन नापूर्वार्थविशेषणम्।
प्रमाणलक्षणे युक्तमिति सम्यगुदीरितम्॥ १॥

अतोऽपूर्वार्थशून्यापि धारावाहिकधीर्यथा[1]।
प्रमितिस्स्मृतिरप्येवं नेष्यते केन हेतुना॥

ज्ञप्तौ सापेक्षं ज्ञानं स्मृतिः इति मतोपपादनम्

**यदपि** केचिदूचिरे ज्ञप्तौ सापेक्षं ज्ञानं स्मृतिः। अतः सा न प्रमा सापेक्षत्वं च नियमेन स्वविषये परप्रमाणविषयत्वम्। धारावाहिकसंविदां पुनरधिगताव-गाहित्वेऽपि तत्परिच्छेदसामर्थ्यमस्ति पूर्वज्ञानसामग्र्यधीनोत्पत्तिकत्वात् दैवात्तु पूर्व-ज्ञानपरिच्छिन्नमित्यधिकपरिच्छेदो न जायत इति।

स्मरणस्य पूर्वानुभवविषयकत्वनिरासः

**तदप्यचारु**। तथा हि—भवतु नाम नियमेन वेदनान्तरं स्मरणगोचरे, तथापीदमत्र संप्रधार्यम्। स्वगोचरपरिच्छेदे वेदनान्तरं वीक्ष्यते ? किं वा तदवीक्ष-माणमेव कटाक्षेणापीति। न प्रथमः कल्पः कल्पेत। यतो यद्गोचरानुभावभावित-भावनाप्रभवं स्मरणं तद्गोचरमेव तत्। नचार्थानुभवप्रभवा भावना भवत्यनुभवानुभव-योनिः[2] अर्थानुभवयोरनुभवभेदात्। स्वसंवेदनस्य निरसिष्यमाणत्वात्। तथा च कथमनुभवमपि स्मरणमभिवीक्षते नियमेनेति। ततश्चैतदपास्तम्। यदुच्यते स्मृतेर-प्यर्थांशे सापेक्षत्वात् न प्रामाण्यं, ज्ञाने च प्रामाण्यमिति।

स्मृतेः प्रमाणान्तरवीक्षणेऽपि स्वगोचरे प्रामाण्यमेव धारावहनवत्

पश्चिमे तु पक्षे प्रविशदपि नियमेव तद्गोचरे प्रमाणान्तरं, स्वगोचर-परिच्छेदाय स्मरणेनावीक्ष्यमाणं, कथमर्थपरिच्छेदे सापेक्षतामापद्य प्रामाण्यं हन्तुमलम्।

---

1. मा. गीर्यथा 2. अनुभवविषयकानुभवजन्येत्यर्थः

न खलु स्वगोचरे वेदनान्तरप्रवेश एव दोषःतस्य धारावाहिष्वपि अविशेषात्। तत्प्रवेशः पुनः एकत्र नियमेन अपरत्रानियमेनेति वैधर्म्यमात्रं, न पुनः फलतो विशेषं पश्यामः।

एतावता तु विशेषेण स्मृतेरप्रामाण्यपरिभाषणे गृहीतमात्रगोचरत्वाविशेषेण धारावाहिकवेदनानामप्यप्रामाण्यं परिभाषमाणस्य न मुखं व्यक्ती [1]भवति परिभाषणानां निरङ्कुशत्वात्।

संशयादिव्युदासोऽपि स्मृतेरेव स्वगोचरे।
यथार्थज्ञानतासाम्यान्नानुभूत्यनुमानतः ॥ १ ॥

साक्षात्संभवे सति परम्पराश्रयणे प्रमाणाभावात् अनुभवविरोधाच्चेत्यर्थः।

अत्रोच्यते—

प्रसिद्धव्यवहारस्य निमित्तमनुगम्यते।
उत्प्रेक्षितनिमित्तेन न कृतस्य व्यवस्थितिः ॥ १ ॥

अन्यथा विप्लवः स्पष्टव्यवहारे प्रसज्यते।
सम्भाव्यते निमित्तेषु यदुत्प्रेक्षा निरङ्कुशा ॥ २ ॥

अभियुक्तप्रयोगस्तु स्मृतौ तत्साधनेऽपि न।
प्रमाप्रमाणपदयोः, पृथगुक्तिप्रसक्ति तत् ॥ ३ ॥

न च प्रत्यक्षादिप्रमाणगण एवान्तर्गतेः न पृथग्वचनमिति वचनीयम्। प्रत्यक्षस्य परोक्षफलत्वानुपपत्तेः लिङ्गशब्दादेश्च सत्तामात्रेणाप्रमापकत्वात्[2]।

ननु प्रमाणभेदस्य परोक्षस्य विशेषवत्।
स्मरणेऽपि वदन्त्येव दिगम्बरमतानुगाः ॥ १ ॥

---

1. भवतीतिवत्परि—मा.
2. तथा च स्मरणसाधनं न प्रमाणान्तर्गतमिति भावः।

**सत्यमेत**न्महर्षीणां बहूनां विमतेरिह ।
अयुक्तवादिनो युक्तिव्यवायेन दिगम्बराः ॥ २ ॥

॥ स्मरणस्य प्रमाणताङ्गीकारे पूर्वपक्षः ॥

ननु स्मरणप्रमाणतानादरणे कुतः पूर्वानुभवाध्यवसानं ? न तावत्स्मरणान्यथानुपपत्तित इति युक्तं, ततः कारणमात्रनिश्चितेः अननुभवरूपाणामपि कारणानामुपलम्भात् । नचैवं सत्यननुभूते स्मृतिप्रसक्तिरित्यपि दूषणम् । अनुभूत एव स्मृतिरित्यस्यैव नियमस्यैवं सत्यसिद्धेः । स्मरणपरिव(र्ती)र्तिपूर्वानुभवोल्लेखबलतस्तत्प्रतिलम्भ इति चेत् । किमिदानीं वेदनवर्तिविषयाकारवशेन विषयसिद्धिः सौगतवत् ? किं वा वेदनमेव तथाविधं तत्सिद्धिः ?

आदिमे तद्वदेव स्यादनैकान्तिकदूषणम् ।
आकारो नहि वित्तिस्थो विषयेण नियम्यते ॥ १ ॥

विभ्रमानागतज्ञाने व्यभिचारोपलम्भनात् ।
अन्तिमे तु प्रमाणत्वं स्मरणस्य प्रसज्यते ॥ २ ॥

नचेदमुचितं वक्तुं, मैव भूत्पूर्ववेदनम् ।
इत्येवं सति, तत्कार्यं स्मरणं नहि सिद्ध्यति ॥ ३ ॥

॥ स्मृतेः प्रमाणत्वनिरासः ॥

अत्र ब्रूमः प्रमाणं न स्मरणं यद्यपीष्यते ।
पूर्वापरपरिज्ञातृविषयप्रत्यभिज्ञया ॥ १ ॥

पूर्वानुभवभावित्वं विषयस्यावसीयताम् ।
योऽहमन्वभवं पूर्वं संस्मराम्यधुनापि सः ॥ २ ॥

इति मानससंभूता प्रत्यभिज्ञा हि युज्यते ।
अतः प्रमाणता नास्ति स्मरणस्येति मङ्गळम् ॥ ३ ॥

# प्रमातृप्रमेयव्यवच्छेदार्थं साधनग्रहणं फलात् भेदज्ञापनार्थं च

॥ लक्षणे साधनग्रहणस्य प्रयोजनम् ॥

अथैवमपि सम्यगनुभवः प्रमाणमित्यास्तां किं साधनग्रहणेनेत्यत आह— **प्रमातृप्रमेयव्यवच्छेदार्थं साधनग्रहणमिति** । प्रमाता च प्रमेयं च ते तथोक्ते । तयोस्ताभ्यां वा प्रामाण्यस्य व्यवच्छेदस्तथोक्तः । स एवार्थः प्रयोजनं यस्येति विग्रहः । प्रयोजनान्तरमाह—**फलाद्भेदज्ञापनार्थं चेति** । भेदस्य ज्ञापनमर्थः प्रयोजनं यस्य तत् । तथोक्तम् । एतदुक्तं भवति—अनुभवत्यनुभूयते अनुभूतिरिति त्रेधा व्युत्पत्ति-सम्भवेनातिप्रसङ्गिनीं बुद्धिमपाकर्तुं साधनग्रहणमिति । कथं पुनरसौ अर्थः साधारणादपि साधनपदादवसीयते ? विवक्षात इति वदामः । शब्दविदो हि विवक्षातः कारकपरिग्रहं बोधयन्ते तदयं साध्यतेऽनेनेति करणविवक्षया प्रयुक्तः साधनशब्दः कर्तृकर्मणी फलं च व्यवच्छिद्य करणमेवाभिधत्ते ।

॥ प्रमायां करणविशेषपरीक्षा ॥

**केचिदाचक्षते ।**

किं पुनः करणं नाम ? साधकतममिति सस्मार **भगवान् पाणिनिः** । किं पुनः प्रमायां साधकतमं, कश्च तमबर्थ इति संप्रधार्यम् ।

॥ तत्र केषांचिदभिप्रायः ॥

कर्तृव्यापारः सर्वकारकोत्पाद्यः साधकतमः प्रमायाम् । तमबर्थश्च तस्याव्य-वधानेन फलजननात् । सर्वाणि हि संभूय कर्तृव्यापारमेव विज्ञानापरपर्यायं सम्पाद्य चरितार्थानि । कर्तृव्यापारः पुनरचरितार्थः प्रमितिमव्यवधानेन जनयति । कर्तापि कारकान्तरमनपेक्षमाणः तेन व्यापारेण क्रियां निष्पादयन् स्वतन्त्रः कर्तेत्युच्यते । कथमन्यथा सम्भूय सर्वकारकाणां क्रियाजनने तुल्यव्यापारत्वात् साधकतमार्थः स्वतन्त्रार्थो वा कश्चिदेव शक्यनिरूपण इति सर्वपारिषदं व्याकरणं विरुद्ध्येतेति ।

|| तत्खण्डनम् ||

**तदेतदयुक्तम्** । यदेव हि विज्ञानमात्मनि मनस्संयोगादिजं सैव प्रमितिः प्रमाणफलमिति चाख्यायते । न पुनस्ततोऽन्या प्रामाणिकी प्रमितिः यत्र नैरपेक्ष्येण साधकतमं ज्ञानमभिधीयेत ।

|| प्राकट्यस्य प्रमाणफलत्ववादिभट्टमतम् ||

**स्यादेतत्** । अनुपकारकं चेदर्थस्य ज्ञानं न तदीयमिति[आ]ख्यातुं शक्यं, अतिप्रसङ्गात् । न च अनुपकार्येऽप्यर्थे ज्ञाना[न]न्तरमेव व्यवहारः सम्भवी । ज्ञानमात्राधीनतायां तु तस्य स्वरूपतः सर्वसाधारण्यात् सर्वगोचरव्यवहारप्रसक्तेः । यश्चासावुपकारः भवति भावाधारः, सैव प्रमितिरितिः, प्राकट्यमिति चाख्यायते ।

|| प्राकट्यखण्डनम् ||

**तदसत्** । स्वभावनियमादेव विज्ञानस्य तदीयत्वात् कथमन्यथा तमेवोपकारं क्वचिदेव जनयेत् । अवश्याश्रयणीयं चैतत् । अतीतादिज्ञानं प्रति नियमानुरोधात् । न हि तत्र ज्ञानेन किंचिदाधीयत इति शक्यं निरूपयितुं, असति धर्मिणि धर्मानुपपत्तेः[1] कुम्भादीनां भङ्गानन्तरमपि मधुधारणप्रसङ्गात् । न च [2]तद्धर्मसामान्याधिकरणं तदाधीयत इति युक्तम् । तथा सति तदीयत्वेऽपि वेदनविशेषासिद्धिप्रसक्तेः । सामान्यतादात्म्याद्विशेषस्यापि सिद्धिरिति चेत् । हन्त भोः कुम्भे चाक्षुषे तत्तादात्म्यात् रसोऽपि तथा स्यात् । कुम्भाकारेण तथैवासाविति चेत्, किं न तथा रसाकारेण ? तेनाकारेणोपकारानाधारत्वादिति चेत्, न तर्हि सामान्योपकारजननेऽपि ज्ञानेन विशेषः सिद्ध्येत् तस्य स्वरूपेण तदनाधारत्वात् । व्यवहारमप्युपकारमिव स्वभावनियमादेव विज्ञानं क्वचिदेवाधत्तां, किमन्तर्गण्डूयमानेनोपकारेण ।

|| क्रियाजन्यातिशयः प्राकट्यमिति पुनः शङ्का तद्दूषणं च ||

कर्मणि क्रियया किंचित् करणीयमिति स्थिते ।
ज्ञेयाधारोपकारस्य सिद्ध्यति ज्ञानजन्यता || १ ||

---

1. अन्यथेत्यादिः
2. अतीतादिनिष्ठघटत्वाद्यधिकरणकमित्यर्थः

मैवं, धात्वर्थरूपत्वं क्रियात्वं यदि सम्मतम् ।
नाश्यातिशयशून्येन नाशेन व्यभिचारिता ॥ २ ॥

यदि क्रियात्वं स्पन्दत्वं हेतोः साध्याविशिष्टता ।
व्यापारत्वेऽपि शब्दादिव्यापारैर्व्यभिचारिता ॥ ३ ॥

आदधत्युपकारं ते कर्तर्येव न कर्मणि ।
विवक्षितं फलत्वं चेदन्त्येन[1] व्यभिचारिता ॥ ४ ॥

न खल्वन्तिमेनापि फलेन फलान्तरजननम्, अन्तिमत्वासिद्धेः, अनवस्थानाच्च । आशुविनाशधर्मत्वमाशुकारकत्वं वा विवक्षितमिति चेत् । पूर्वत्र द्वित्वादिनाऽनैकान्तिकत्वम् । उत्तरत्र शब्दादिगव्यापारैः व्यभिचारितेति ।

प्राकट्यस्य प्रत्यक्षसिद्धत्वशङ्का, समाधानं च

यस्तु ब्रूते प्रत्यक्षसिद्धमेव प्राकट्यं ज्ञातोऽयमर्थ इति सामान्यतः, साक्षात्कृतोऽयमिति विशेषतः प्रतिभासादिति ।

स इत्थं शिक्षणीयः । ज्ञात इति ज्ञानतद्विशेषविशिष्टप्रतिभासतोपपत्तौ किं परप्राकट्यपरिकल्पनदुर्व्यसनेनेति । कथमसंबद्धयोः विशेषणविशेष्यभावावगतिरिति चेत् । नाशघटयोरिवेति वदामः । घटाधीननिरूपणस्तन्नाशः स्वभावादेव तथेति चेत्, प्रकृतेऽप्येवमस्तु । विज्ञानव्यापारस्य तु जनने विज्ञानजनने च विज्ञातुर्व्यापारान्तराभ्युपगमे व्यापारपरम्पराप्रसक्तिः निर्व्यापारत्वे प्रमामेव तथा निर्व्यापारः पुरुषो जनयिष्यति सहकारिसध्रीचीन इति किमन्तर्गण्डूयमानव्यापारेणेति सर्वमवदातम् ।

॥ साधकतमपदस्य वैवक्षिकार्थत्वम् ॥

अन्ये मन्यन्ते-वैवक्षिकं साधकतमं तमप्(ब)अर्थं(त्वं) वदति, विवक्षातः कारकाणि भवन्तीति । तद्यथा मृत्पिण्डो घटं करोति मृत्पिण्डमासाद्य घटो भवति

1. फलेन

मृत्पिण्डेन कुलालः घटं करोति, मृत्पिण्डाद्घट उत्पद्यते मृत्पिण्डस्य घटो विकारो, मृत्पिण्डे घटो भवतीति ।

॥ विवक्षातः कारकपदप्रवृत्तिः न तु अविद्यमानकारकोत्पत्तिः ॥

तैरपीदं वाच्यं–विवक्षातः कारकमविद्यमानमेव जायते? किं वा व्यवस्थित एव तस्मिन् तदभिधायिपदप्रवृत्तिः विवक्षाधीनेति । पूर्वत्र मृत्पिण्डस्य सम्प्रदानत्वं कुम्भकारस्य करणत्वमपि स्यादिति न क्वचित् कारकाप्रयोगप्रसक्तिः । उत्तरत्र कारकभेदे व्यवस्थाहेतुः [1]कारकभेदो वदनीयः । येन तुलायां(म)प्रमाणप्रमेय-पदवन्निमित्तसमावेशद्वारेण कारकविभक्तीनामपि बह्वीनां एकत्र समावेशः स्यादिति ।

नीलाकार एव प्रमाणमिति सौत्रान्तिकपक्षः

सौत्रान्तिकाः पुनराहुः, वेद्यसारूप्यस्य वेदनवर्तिनः साधकतमत्वं, इत्यव्यवधानेन व्यवस्थाहेतुत्वात् स एव तमवर्थः । संविद्रूपस्य च फलत्वं, व्यवस्थापनीयत्वात् । सर्वसाधारणं हि बोधं बोधाकारेण नीलाकारस्तद्व [तीं] प्रतिकर्म[2] नियच्छति नीलस्येदं पीतस्येदमिति । तस्मादयं नियामकीभवन्नाकार एव प्रमाणमिति ।

॥ वेद्यवेदनयोः सारूप्यस्य निर्वक्तुमशक्तेस्तदभावः ॥

तदप्यसाधु । वेद्यवेदनयोः सारूप्यस्यानिरूपणात् । तथा हि-किं वेदनवेद्य-वैजात्यमभ्युपगम्य गोगवययोरिव सादृश्यं सारूप्यं? किं वा सर्वथा तथाभावः? इति । पूर्वत्र, न सादृश्यं विधिरूपं, तस्यानङ्गीकारात्[3] अनीलव्यावृत्तिः नील-वेदनयोः सादृश्यमिति चेत् । किमिदमनीलं नाम बाह्यनीलाकारव्यावृत्तम्? अथ नीलसंवेदनाकारव्यावृत्तं? अथवा ज्ञानाज्ञानसाधारणनीलमात्रव्यावृत्तम्? नाग्रिमः, वेदनस्य बाह्यनीलव्यावृत्तिनिवृत्त्यभावात्[4] । न मध्यमः, बाह्यस्य नीलवेदननिवृत्ति-

---

1. निमित्तभेदः
2. प्रतिविषयमित्यर्थः
3. वेद्यवेदनयोः अभावरूपं सादृश्यमित्यर्थः ।
4. बाह्यनीलव्यावृत्तम् वेदनं अनीलं ततो निवृत्तिः वेदने नास्तीति भावः ।

निवृत्त्यभावात् । नापि पश्चिमः वेद्यवेदनसाधारणस्य नीलमात्रस्यासिद्धेः । सिद्धौ वा परस्पराश्रयापातात् । तद्रूपसिद्धौ हि तद्व्यावृत्तिरूपा नीलत्वसिद्धिः, तत्सिद्धौ च तद्व्यावृत्तवेदनवेद्यसाधारणनीलरूपसिद्धिरिति ।

॥ ज्ञानस्य साकारत्वे सारूप्यासिद्धिः ॥

किं च—साकारत्वे न वित्तीनां बाह्याकारः प्रसिद्ध्यति ।
तथा च केन सारूप्यं वेदनस्याभिधीयते ॥ १ ॥

न खल्वनुभवादेव बाह्यनीलव्यवस्थितिः ।
नीलद्वयं न जातु स्यादनुभूतिपदं हि नः ॥ २ ॥

आकारः पुनरेकोऽयं भासते वेदनस्य चेत् ।
बाह्यसिद्धिः कुतस्त्या ते न चात्रानुमितिर्भवेत् ॥ ३ ॥

न च नीलाकारकादाचित्कत्वात् बाह्यनीलाद्यनुमितिरिति साम्प्रतम् । भ्रान्तिगोचरस्थूलाद्याकारवन्नीलाद्याकारस्यापि कुतश्चिदुपपत्तेः । उत्तरत्रापि[1], बोधात्मकम(र)बोधात्मकमेव वा विश्वमिति न द्वैतसिद्धिः । किं च यदि वेदनवर्तिनीलाद्याकारः प्रमाणं केशाद्याकारोऽपि विभ्रमवर्ती प्रमाणं स्यात् ।

अविसंवाद्येवाकारः प्रमाणमिति चेत्; कः पुनरस्याविसंवादः? तदुपलम्भः तदर्थक्रियोपलम्भः तदबाधो वा? न पुनस्तस्यैवोपलम्भः सम्भवी, तदेकज्ञाननियतत्वात् क्षणिकत्वाच्च । न च तत्सदृशाकारप्रवाहोपलम्भः संवाद इति साम्प्रतं; सर्वविज्ञानेषु स्वाकारमात्रगोचरेषु पूर्वापरज्ञानवर्तिनामाकाराणां सादृश्यप्रवृत्त्यनुपपत्तेः । न च सर्वत्र सदृशोपलम्भनियमोऽस्ति, विलक्षणाकारोपलम्भस्याप्यनन्तरं कदाचन सम्भवात् ।

॥ अविसंवादस्य द्वितीयविकल्पनिषेधः ॥

तदर्थक्रियोपलम्भ इत्यपि न, तस्य संविदाकारस्यार्थक्रियोपलम्भो यदि विवक्षितः तर्हि स्वप्नकामिनीसम्भोगाद्याकारोऽपि वेदनवर्ती प्रमाणं भवेत् । भवति तत्रापि

---

1. वेद्यवेदनयोः सर्वथा तथाभावः सादृश्यमिति द्वितीयपक्ष इत्यर्थः ।

सुखचरमधातुविनिर्गमादिरूपतदधीनार्थक्रियोपलम्भाः। यदि त्वर्थाकारस्यार्थक्रियोपलम्भोऽभिमतः, कथं तदननुपलभ्य[1] तदर्थक्रियेति शक्योपलब्धुम्। न चास्मिन् नये वेदनातिरेकिणो वेदनीयस्योपलम्भः शक्य इत्युदितम्।

॥ तदबाध इति तृतीयविकल्पखण्डनम् ॥

तदबाध[2] इत्यपि कोऽर्थः? किं तस्यैव ज्ञानाकारस्याबाधः, किं वाऽर्थाकारस्य, किं वा तदर्थक्रियायाः? प्रथमे केशादिवेदनस्यापि अविसंवादितया प्रमाणताप्रसक्तिः। तत्राप्याकारबहिष्टस्यैवावबाधनात। तदर्थतदर्थक्रिययोरबाधः पुनरर्थनिश्चयं विनाऽशक्यनिश्चयः। बोधमात्राधीनायास्त्वर्थक्रियायाः अबाधोऽपि नाविसंवादित्वं, सुखाद्यर्थतदर्थक्रियाणामबाधेन स्वप्नविज्ञानानामपि प्रमाणभावप्रसङ्गादिति।

॥ बाह्यासिद्धौ अर्थक्रियासमर्थवस्तूपदर्शनस्याप्यसिद्धिः ॥

एतेनार्थक्रियासम[र्थ]वस्तूपदर्शनमविसंवाद इत्यपास्तम्। सर्वथा बाह्यासिद्धौ तदसिद्धेः।

तदेवमविसंवादो यदशक्यनिरूपणः।
संविदाकारमात्रस्य तत्प्रसक्ता[3] प्रमाणता ॥ १ ॥

संवित्तीनां व्यवस्थापि प्रतिकर्म प्रसिद्ध्यति।
स्वभावनियमादेव विना बाह्यसरूपताम् ॥ २ ॥

आकाराणां व्यवस्थापि संविदां कथमन्यथा।
स्वहेत्वासादितादेव स्वभावादिति चेत्समम् ॥ ३ ॥

---

1. अर्थाकारमिति शेषः।
2. तदभिबाध—मा.
3. तत्प्रयुक्तेति युक्तम्

॥ अर्थसारूप्यस्य ज्ञाने प्रमाणत्वखण्डनम् ॥

योऽपि हि नीलाद्याकारबलेन वेदनानां [1]नैल्यादिकल्पने नियमं ब्रूयात् । तेनापि क्वचिदेव वेदने नीलाकारः क्वचित्पीताकार इति व्यवस्था किंकृतेति वचनीयम् । स यदि ब्रूयात्, नीलसन्निधानादिना नीलाकारादिवेदनं पीतसन्निधानादिना पीताकारादिवेदनमिति तं प्रति ब्रूयात्, कथं पुनर्नीलसन्निधानेऽपि पीताकारवेदनं न भवेदिति । तत्रैव तस्य सामर्थ्यात् तत्सामर्थ्यनियमोऽपि स्वहेतुसामर्थ्यनियमादिति चेत् । किमिदानीं वेदनाकारकल्पनव्यसनेन । तादृशादेव सामर्थ्यनियमात् तत्तद्गोचरनियतस्य निराकारस्यैव वेदनस्य सम्भवात् ।

तदेवमन्यथासिद्धा प्रतिकर्मव्यवस्थितिः ।
तेन नीलादिरूपत्वं कल्पनीयं न संविदाम् ॥ १ ॥

तद्वेदनीयसारूप्यं प्रमाणं वेदनेष्विति ।
असारं सौगतोन्नीतं मतमेतदिति स्थितम् ॥ २ ॥

॥ आत्मानात्मप्रकाशनं प्रमाणफलमिति वैभाषिकपक्षः ॥

**वैभाषिकास्त्वाचक्षते**—व्यावृत्तिभेदपरिकल्पितविभागानां वेदनानामात्मानात्मीयप्रकाशकशक्तिः साधकतमा तदसाधारण्यं च तमबर्थः । आत्मानात्मप्रकाशनं प्रमाणफलमिति ।

॥ वैभाषिकमतखण्डनम् ॥

**तदप्यसत्** । निवृत्तिप्रसक्तेः अस[त्त्वा]द्धेतुवेदने शक्तिरेव नावकाशं लभते । कुतस्तस्याः शक्यनिरूपण[म्] (वदा)आत्मप्रकाशनं वेदनमित्यस्य पक्षस्य निरसिष्यमाणत्वात । अनात्मनस्तु भवत्येव तत्प्रकाशनं न पुनः स्वीयायाः शक्तेः शक्यमिति साम्प्रतम् ; सिद्धासिद्धावस्थयोः तदसम्भवात। शक्तया हि साध्यं शक्यमभिधीयते । नच सिद्धस्यैव साध्यता तस्या अवसर इति ।

---

1. नील्यादिकल्प्यं—मा.

**विज्ञानवादिनस्तु** वदन्ति-वेदनमेवालीकाकारयुक्तं प्रमेयं; प्रमेयप्रकाशनं प्रमाप्रकाशनशक्तिस्तत्र साधकता तमबर्थोऽपि पूर्ववदिति । **तत्र** प्रमेयं बाह्यमेवेति निवेदयिष्यामः । तत्प्रकाशनं प्रमाणफलमिति न विवादपदम् । प्रकाशनशक्तिर्विज्ञानवर्तिनी न सम्भवति[इति]निर्णीतमेवेति ।

॥ साङ्ख्यमतनिरूपणं तत्खण्डनं च ॥

**साङ्ख्याचर्यास्तु** चिदाकारपुरुषप्रतिबिम्बरूपायां प्रमायामन्तःकरणपरिणतिभेदं साधकतममाचक्षाणाः प्रतिबिम्बोदयं [1]प्रत्यव्यवधानेन करणं तमबर्थमाचक्षते । **तदेतत् कपिल**मुनिप्रपञ्चितप्रक्रियाया उपरि निरसिष्यमाणत्वात् निरस्तं भविष्यतीति ।

॥ चरमकारणमेव साधकतममिति उद्योतकरपक्षः तत्खण्डनं च ॥

**केचित्तु** आचार्यो **द्यो त का रो दी**रितविविधपक्षेषु सारमुपादाय वर्णयामासुः । चरमकारणभाव एव तमबर्थः । तथा च यदनन्तरं प्रमा जायत एव तत्प्रमायाः साधकतममिति । **तदसत् ।** प्रमेयस्यापि सुखादेः स्वप्रमितौ चरमकारणत्वात् । रूपाद्युत्पत्तौ चावयविनां तथात्वेऽप्यधिकरणत्वेनैव प्रसिद्धेः रूपाद्युपलब्धौ च नयनादिसन्निकर्षस्यैव चरमत्वेन नयनादेः अकरणत्वप्रसक्तेः । तस्य करणत्वेनानुमानव्याघातात् । लोकेऽपि दारुविदारणे कुठारसंपर्कस्य चरमत्वेऽपि कुठारस्यैव करणत्वप्रसिद्धेरिति ।

॥ कर्मकर्तृविलक्षणमेव साधकतमशब्दार्थ इति केषाञ्चित्पक्षः ॥

केचित्पुनरूचिरे । कर्मकर्तृविलक्षणं साधकतमम् । तद्वैलक्षण्यं च तमबर्थ इति । **तदप्यसत् ।** कर्मकर्तृवैलक्षण्यमात्रस्य तमबर्थत्वस्यानुपपत्तेः, अन्यथा तयोरपि परस्परवैलक्षण्यमात्रेण साधकतमत्वप्रसङ्गात् सम्प्रदानादिकारकविलोपप्रसङ्गाच्च । न च गोबलीवर्दवत् करणभेदेऽपि[2] संप्रदानव्यवहार इति साम्प्रतम् । न खलु बलीवर्दव्यवहार इव गोभेदे करणभेदेऽपि सम्प्रदानव्यवहारो लौकिकानाम् । वाङ्मात्रेण

---

1. प्रत्यायव्य—मा
2. करणविशेषेऽपि

तु तथा व्यवहाराभ्युपगमे कर्मादेरपि करणत्वमस्तु समयस्य निरङ्कुशत्वादिति तद्व्य-वच्छेदो व्यर्थः स्यादिति ।

॥ सामग्री साधकतमपदेनोच्यत इति पक्षः तत्खण्डनं च ॥

**केचिदाहुः** स्वनिष्पत्त्यनन्तरमेव कार्यसाधनं तमबर्थः तथा च सामग्री साधकतमेति । **तदप्यलीकम्** । कर्मकरणादिसामस्त्यं खलु सामग्री नाम कथं कारण-मेव स्यात् । नचोचितं वक्तुं अजनकावस्थायामेव कर्मादेः तत्त्वं, जनकावस्थायां तु करणतैवेति । कर्मादिरूपस्यापि क्रियासम्बन्धोपाधित्वात् । नच वचनीयं कार्यो-त्पादकाल एव समस्तापेक्षया करणत्वं, भागापेक्षया तु कर्मादिव्यवहार इति । सामस्त्यस्य काल्पनिकत्वेन वास्तवकारणाभावप्रसक्तेः । नच कर्मादिसामस्त्यादन्यैव सामग्री सा कारणमिति साम्प्रतम् । सामग्र्या एव कार्यसम्भवे कर्मादेरकारणत्व-प्रसक्तेः । चरमकारणकल्पोक्तदूषणदुष्टत्वाच्चेति ।

॥ साक्षात्कर्त्रधिष्ठितस्य साध्यस्य क्रियासाधकत्वं तत् इति भूषणपक्षः ॥

**आचार्याः** पुनराहुः साक्षात्कर्त्रधिष्ठितस्य साध्यस्य सतः क्रियासाधकत्वं साधक-तमत्वमिति । साक्षात्कर्त्रधिष्ठितस्येति सम्प्रदानादिव्यवच्छेदार्थमुदितम् । न खलु दानं कुर्वाणेन साक्षाद्भूमिदेवा अधिष्ठीयन्ते । किं तर्हि ? वाङ्मनसे हस्तादिकं चेति । सुखादिकर्मणोऽपि साक्षात्कर्त्रधिष्ठितस्योपलम्भक्रियासाधकतमत्वात् करणत्वं मा प्रासाङ्क्षीदि(त्य)[ति]साध्यपदोपादानम् । साध्यपदेन चात्र निर्वर्त्यविकार्यादि सर्व-मपि कर्माभिप्रेतम् । न च साक्षात्कर्त्रधिष्ठितत्वं मनस एव, नयनादेस्तु तदभावा-दसाधकत्वप्रसङ्ग इति साम्प्रतम् । तस्याप्युद्देश्यकर्माद्यपेक्षया साक्षात्कर्त्रधिष्ठितत्वोप-पत्तेः । तथा सति कदाचिदधिकरणादेरपि करणत्वप्रसङ्ग इति चेत् । का हानिः ? लक्षणसमावेशेन कदाचित्करणाधिकरणव्यवहारयोः एकत्रैवोपपत्तेः । स्वप्रतीतौ पुरुषस्य कर्तृकर्माधिकरणव्यवहारगोचरभाववदिति न किंचिद्दुष्यति । यत्र पुनः एतल्लक्षणमेव न संभवति न तत्र मुख्यः कारणव्यवहारः कारकान्तरे कर्तृव्यवहार-वत् । स्वातन्त्र्यं हि कर्तृत्वं, तदपि स्वेच्छया क्रियासाधकत्वम् । तत्पुनः अचेत-नेष्वौपचारिकं यथा कूलं पिपतिषतीति कृतं प्रसक्तानुप्रसक्त्या ।

**सम्यगनुभवः प्रमा । प्रमाश्रयः प्रमाता । प्रमाविषयः प्रमेयमिति ।**

---

एवं वर्णितमार्गेण यत्साधकतमं मितौ ।
बोधाबोधस्वभावं तत्प्रमाणमिति निर्मलम् ॥

तस्मात्सम्यगभिहितं प्रमात्रादिव्यवच्छेदार्थं साधनग्रहणमिति ।

॥ प्रमात्रादीनां लक्षणम् ॥

किं तर्हि प्रमात्रादीनां लक्षणं ? न खल्वमीषां अविज्ञातरूपाणामेव शक्यो व्यवच्छेदः इत्यत आह—**सम्यगनुभवः प्रमेति** प्रथमाभिहितमपि प्रमातारमति-ल[ङ्घ्य[1]] फलपदेन चरमाभिहितैव प्रमा प्रथमतो लक्षिता । यतो लक्षितायामेव तस्यां तदाश्रयत्वं तद्विषयत्वं च प्रमातृप्रमेययोः शक्यपरिज्ञानं लक्षणमिति । इह चानु-भूतिरनुभवः सम्यक्चासावनुभवश्चेति व्युत्पादनीयम् । सम्यक्पदमपि प्रागिव संशयादि-व्यवच्छेदफलमिति । प्रमातारं लक्षयति—**प्रमाश्रयः प्रमाता ।** प्रमाया आश्रयः समवायी यः सः प्रमातेत्यर्थः ।

॥ प्रमेयलक्षणम् ॥

प्रमेयलक्षणमाह — **प्रमाविषयः प्रमेयमिति ।** प्रमाया विषयः तस्यां तत्प्रमेयमित्यर्थः । तदेवमनाकुलमेतत् सम्यगनुभवसाधनं प्रमाणमिति ।

॥ प्रमाणप्रभेदकथनम् ॥

मानलक्षणमिदं गदितं परिशोधितं प्रतिपदम् । तदनु अधुना पुनः कति-विधं तदिति प्रतिपादनीयमत आहगुरुः—**त्रिविधं प्रमाणमिति ।** तिस्रो विधाः प्रकारा यस्येति विग्रहः ।

त्रिविधग्रहणमवधारणार्थम् । याः काश्चन प्रमाणव्यक्तयः ताः सर्वा अपि तिसृभिरेव विधाभिः संगृहीतार्था इत्यर्थः । तथा चोपमानादीनामपि शङ्कितबहिर्भा-

---

1. अतिलक्ष्य—मा.

**त्रिविधं प्रमाणं, प्रत्यक्षमनुमानमागम इति ।**

वानामास्वेव यथायथं अन्तर्भावमभिधास्यामः । काः पुनस्ता विधा इत्यत आह- **प्रत्यक्षमनुमानमागम इतीति ।** इह च सर्वप्रमाणमूलत्वात्प्रथमं प्रत्यक्षमुदितम् । तत्पूर्वकत्वात्तदनन्तरमनुमानं, तदधीनप्रमाणतया चागमः तदनन्तरमभिहित इति मन्तव्यम् ।

॥ प्रत्यक्षमेव प्रमाणमिति वदतः चार्वाकस्य मतखण्डनम् ॥

प्रत्यक्षमेव प्रमाणं अतस्तिस्रो विधा न सम्भाव्यन्त इति चेत कथं तर्हि परप्रतिपादनार्था भवतामपि प्रवृत्तिरुपपत्तिमती । विप्रतिपन्नाप्रतिपन्नसन्दिग्धा हि प्रेक्षावद्भिः प्रतिपाद्यन्ते । न च परपुरुषाधारा विप्रतिपत्त्यादयः प्रत्यक्षगोचराः गौरत्वादिवत् । किं तर्हि वचनचेष्टादिलिङ्गानुमेयाः । तथा च कथमनुमानमप्रमाणम् । अविज्ञाय तु परवर्तिविप्रतिपत्त्यादिकं, तत्प्रतिपादनाय प्रवर्तमानाः कथमिव लौकिकपरीक्षकप्रक्रियामतिक्रामन्तः न भवेयुरनादेयवचनतया च प्रेक्षावतामुपेक्षणीयाः ।

॥ अनुमानप्रामाण्याङ्गीकारस्यावश्यकत्वोपपादनम् ॥

किं च हिताहितप्राप्तिपरिहारौ प्रार्थयमानाः पशवोऽपि कोमलशष्पश्यामलामवनिमधिकृत्य प्रवर्तन्ते परिहरन्ति च प्रालेयकण्टकप्रकरसङ्कीर्णाम् । वराकाः पुनः चार्वाकाः हिताहितप्राप्तिपरिहारकारणानुसरणसरणिमनुमितिमनङ्गीकुर्वाणाः कथं न पशुभ्यः व्यवहीयेरन् । कथं चानुमानादिकमप्रमाणमिति अमी शक्नुवन्ति निश्चेतुम् । नो खलु धूमादिरूपमिव तदिन्द्रियसन्निकर्षात् तदप्रामाण्यमपि शक्यमधिगन्तुम् । किंतु कालान्तरादिभाविव्यभिचारोत्प्रेक्षया । न च कश्चन कालं भाविनमन्तरेणानुमानमाकलयितुमलम् । भाविनो हि मुहूर्तादयो [1]भवन्मुहूर्ताद्यनुमेयाः । तथा च कथमनुमानमप्रमाणम् । किञ्चानुमानं न प्रमाणमित्येतदेव वचनं प्रमाणमप्रमाणं वा, प्रथमे पक्षे प्रत्यक्षातिरेकिप्रमाणस्वीकारः । चरमेऽप्यनुमानप्रामाण्यसिद्धिः । कथमन्यथा

1. वर्तमानमुहूर्तेत्यर्थः

तदप्रामाण्यवाचोयुक्तेः अप्रामाण्यम् । अपि च माभून्नाम नास्तिकानां भवान्तरम् । अस्मिन्नेव भवे प्राप्तः प्रवृत्तिनिवृत्तिव्याहारविरहरूपो महानरकः । कृतमनया पापीयसां कथयेत्युपरम्यते ।

॥ अनुमानमात्रप्रामाण्यवादस्य शब्दमात्रप्रामाण्यवादस्य च निराकरणम् ॥

यदि कश्चन वैयात्यादनुमानमेवैकं प्रमाणमाचक्षीत, सोऽपि प्रतिबोधनीयः प्रत्यक्षमन्तरेण[कथं] अनुमानस्यात्मलाभः । दूरमप्यध्वानं परिधाव्य धर्मादीनां प्रत्यक्षापरिच्छेद्यत्वादागम एव प्रमाणमित्यप्ययुक्तम् । प्रत्यक्षादिना पदतदर्थाद्य-प्रतिपत्तावागमार्थप्रतिपत्त्यनुपपत्तेः ।

॥ प्रत्यक्षपरोक्षभेदेन प्रमाणद्वैविध्यमतखण्डनम् ॥

योऽपि प्रत्यक्षपरोक्षभेदेन प्रमाणद्वैविध्यमाचष्टे, सोऽपि न लौकिकपरीक्षक-व्यवहरणसरणिमनुसरति । नो खलु प्रत्यक्षेण जानीम इतिवत् परोक्षेणामुमर्थमीक्षामहे इति व्यवहरन्ति । न चेत्थंद्वैविध्यस्याभिधाने प्रयोजनं पश्यामः । त्रैविध्याभिधाने तु पृथक्प्रामाण्यप्रतिपादनं प्रयोजनं; आगमप्रमाणता खलु अनुमानाधीननिर्णया ।

न खल्वाप्तप्रणीतत्वमन्तरेणैव साधनम् ।
आयुर्वेदादिदृष्टान्तैः वेदप्रामाण्यनिर्णयः(म्) ॥ १ ॥

प्रत्यक्षव्यतिरेकेण [1]प्रतिबन्धावधारणम् ।
अन्ततोऽप्यनुमानस्य न स्यादेवानवस्थितेः ॥ २ ॥

न खल्वनुमानत एवाविनाभावावधारणं, तस्याप्यनुमानान्तरपूर्वकत्वे सत्यनवस्था-प्रसङ्गात् । तथा च न्यायमञ्जर्यां **भ ट्ट ज य न्तो** व्याजहार ।

प्रतिबन्धग्रहे तस्य प्रत्यक्षमुपयुज्यते ।
कोऽन्यः सन्तरणे हेतुरनवस्थामहोदधेः ॥ इति । (न्या-म. १ )

---

1. प्रतिबन्धः व्याप्तिः

यदि पुनरयमन्तरेणापि प्रयोजनं अतिक्रान्तनिखिलप्रामाणिकव्यवहारमर्यादः स्वकक्षीकृतपक्षरक्षारागेण प्रमाणद्वैविध्यसिद्ध्यर्थं परोक्षमभिधाय सामान्यं तद्भेदमनुमानादि प्रत्येकं किं[ञ्च]न लक्षणमभिदधीत; काममभिधत्ताम् । नो खल्वेवमपि अस्मदभिप्रेतं प्रमाणत्रैधं परावर्तते । परस्परासङ्कीर्णलक्षणत्रैविध्याभिधानादिति । प्रत्यक्षानुमानभेदेन द्वैतमेवेत्यपि न साधीयः । आगमस्याप्यनुमानानन्तर्भावेण प्रमाणभावस्य निरूपयिष्यमाणत्वात् । त्रैविध्याभिधानस्य तु [1]सूत्रविरोधमन्तर्भावविचारावसरे समाधास्याम इति ।

॥ प्रमाणसंम्प्लवशङ्का तत्समाधानं च ॥

ननु भोः किमेतास्तिस्रोऽपि मानविधाः संप्लवन्ते, उत व्यवतिष्ठन्त इति वचनीयम् । क्वचन संप्लवन्ते क्वचन व्यवतिष्ठन्त इति निशम्य शाम्यतु भवान् । तथा **चाचार्योऽपि** स्वयं सूचयामास प्रमाणमित्येकवचनेन सम्प्लवं, प्रत्यक्षमनुमानमागम इति च व्यस्ताभिधानेन व्यवस्थाम् । क्व तर्हि सम्प्लवः ? क्व च व्यवस्था ?

॥ प्रमाणसम्प्लवोदाहरणानि ॥

उच्यते । हिमगिरिशिखरकुहरपरिवर्तिनि वह्नावाप्तवचनविनिश्चिते, धूमभेदेन[2]चानन्तरमनुमिते, निकटमटतामस्ति प्रत्यक्षस्यापि प्रवृत्तिरिति त्रीण्यपि सम्प्लवन्ते । तथा चाप्तव्यवहारपरिकलितपुरुषरूपे[3] विशेषगुणलिङ्गावगमिते दीर्घकालनैरन्तर्यसंसेवितसमाधेरध्यक्षमपि निष्पत्स्यत इति संप्लुतिः ।

॥ प्रमाणव्यवस्थितेरुदाहरणानि ॥

व्यवस्थितिरप्युपलभ्यते । तद्यथा — स्वर्गादिसाधनभावे यागादेरस्मदादेरागम एव प्रमाणम् तथेन्द्रियपरमाण्वादावनुमानमेव । परस्परपरावृत्ततरतमादिभेदभागिगौरमधुरगान्धारादिभेदेषु प्रत्यक्षमेवेति व्यवस्थितिः ।

कश्चिदाह व्यवस्थैव मानानामौपपत्तिकी ।
अपूर्वतत्त्वविज्ञानस्वभावा हि प्रमाणता ॥ १ ॥

---

1. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति न्यायसूत्रेत्यर्थः
2. धूमविशेषेण
3. आत्मरूपे

नैरपेक्ष्यात्प्रमाणत्वे परत्रापि हि तत्समम् ।
न नूनमेव प्रागुक्तन्यायमार्गावलोकना ॥ २ ॥

दधाति च पुनः साक्षात् पूर्वमेव निराकृतम्[1] ।
धारावहनविज्ञप्तिमितितावगतेरिति ॥ ३ ॥

न च पूर्वाविशिष्टत्वादुत्तरस्याप्रमाणता ।
माभूत्पराविशिष्टत्वा[त्पूर्वक]स्याप्रमाणता[2] ॥ ४ ॥

परिच्छिन्नपरिच्छेदे न साधकतमं भवेत् ।
चक्षुरादि यथा भिन्न दारुणि छेदसाधनम् ॥ ५ ॥

इति चेन्न, फलोत्पादतदनुत्पादभेदतः ।
प्रमात्रपेक्षावैकल्यात्तत्फलं न प्रमेति चेत् ॥ ६ ॥

न वै प्रमात्वं पुरुषव्यपेक्षामनुरुध्यते ।
उपेक्षणीयवित्तीनां अप्रमात्वप्रसक्तितः ॥ ७ ॥

नियमेन निराकाङ्क्षः पुरुषोऽपि न वस्तुनि ।
प्रथमावसिते भूयः [स्व]यमेव[3] प्रमीयति ॥ ८ ॥

परिच्छिन्नपरिच्छेदे तत्त्वान्न भवति प्रमा ।
यथा स्मरणमित्येतदपि साधु न लक्ष्यते ॥ ९ ॥

यथार्थानुभवत्वस्य निषेधे बाधितत्वतः ।
अपूर्वार्थावगाहित्वनिषेधे सिद्धसाधनात् ॥ १० ॥

प्रमितिव्यवहारस्य गोचरो नेति साधने ।
निमित्तविरहोपाधिसम्भवाद्बाधनादपि ॥ ११ ॥

---

1. अज्ञातार्थबोधकत्वं प्रमाणत्वमित्येतदिति शेषः
2. उत्तरस्याप्रमाणता—मा.
3. स्त्रियमेव—मा.

## तत्र सम्यगपरोक्षानुभवसाधनं प्रत्यक्षम् ।

नचापूर्वावगाहित्वं निमित्तमिति वर्णितम् ।
निःशङ्कवेदप्रामाण्यव्यवहारापहारतः ॥ १२ ॥

व्यवस्थासंप्लवावित्थं प्रमाणेषु व्यवस्थितौ ।
उक्तप्रकारनियतावितिशब्दः प्रवर्तते ॥ १३ ॥

अनेनैव प्रकारेण त्रैविध्यमुपपद्यते ।
ऐकध्यमन्यथा तु स्याच्चातुर्विध्यादि वा भवेत् ॥ १४ ॥

न्यूनातिरेकपरिहारपरां त्रिसङ्ख्यां,
मानेषु संप्लवमुदीर्य तथा व्यवस्थाम् ।
तद्भेदलक्षणकृतौ हृदयङ्गतायां,
प्रत्यक्षमाद्यमथ लक्षयति प्रधानम् ॥ १५ ॥

॥ प्रत्यक्षलक्षणम् ॥

**तत्र सम्यगपरोक्षानुभवसाधनं प्रत्यक्षम् ।** तत्र तेष्वपि प्रमाणेषु मध्ये, यदेवंलक्षणकं तत्प्रत्यक्षमित्यर्थः । तत्रापरोक्षपदस्यानुभवपदेन साकं कर्मधारयं विधाय सम्यक्पदस्यापि तेन सह स एव समासोऽनुसन्धेयः । ततश्च साधनपदेन सह षष्ठीसमासो द्रष्टव्यः । प्रत्यक्षपदे तु प्रतिगतमक्षं प्रत्यक्षमिति तत्पुरुषः कुगतिप्रादयः (पा. सू 2-2-18) इत्यनेन वर्णनीयः । न पुनरव्ययीभावः पञ्चमीतृतीयासप्तमी-व्यतिरिक्तविभक्तीनामम्भावप्रसङ्गेन प्रत्यक्षस्य लक्षणं प्रत्यक्षा पुरन्ध्रीत्याद्यनुपपत्तेः । न च वचनीयं तत्पुरुषपक्षेऽपि परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (पा. सू 2-4-26) इत्यनेन परवल्लिङ्गताप्रसक्तावक्षपदस्य चेन्द्रियवचनस्य नियतनपुंसकतया प्रत्यक्षो घट इत्याद्यघट-मेवेति, यतः द्विगुप्राप्तापन्नालं पूर्वगतिसमासेषु (वा-1545) इति परवल्लिङ्गप्रतिषेधं व्याकरणनिपुणा वर्णयन्ति ।

॥ प्रत्यक्षपदव्युत्पत्तिकथनम् ॥

(सा)कथमेतदक्षं प्रतिगतमिति चेत् फलं चेद्विवक्षितमक्षजन्यत्वेन । साधनं

त्वक्षसहकारित्वेन। विषयस्तु तद्गोचरत्वेनेति। नचेदमुचितमभिधातुं[1] अक्षसहकारित्वेन चेत् प्रत्यक्षं साधनमभिप्रेतं कथं तर्हि अक्षस्य प्रत्यक्षस्य प्रमाणतोपवर्णनम् न खलु तदेव तत्सहकारीति साम्प्रतम् बाह्यरूपादिपरिच्छेदे नयनमनसोः परस्परसहकारित्वेन तदुपपत्तावपि सुखदुःखसाक्षात्कारकारणान्तः करणे कथं तदुपवर्णनीयम्। कथं च प्रमातुरक्षसहकारित्वेन प्रत्यक्षप्रमाण(का)ताप्रसक्तिर्वारणीया। कथं संशयसुखादेरक्षजन्यस्य प्रत्यक्षफलत्वं पराक्रियत इति।

॥ प्रत्यक्षपदस्य रूढ्यङ्गीकारावश्यकता ॥

व्युत्पत्तावप्रङ्गातिप्रसङ्गिन्यामपि पदानां [2]निमित्तभेदादर्थभेदे नियमदर्शनान्मण्डपपङ्कजादिपदवत्। न खलु मण्डं पिबतीति व्युत्पत्त्यर्थः संभवी प्रसिद्धतदर्थे नापि पङ्काज्जायत इति व्युत्पत्तिरिन्दीवरेपि न सम्भविनी। तथापि संस्थानभेदतामरसत्वादिनिमित्तभेदानुरोधेन नियतार्थवृत्तिरुपलब्धा। सम्भवति चात्र निमित्तभेदः फलप्रमाणयोः प्रत्यक्षपदप्रवृत्तौ, सम्यगपरोक्षानुभवफलत्वं फले, तत्साधनभावः प्रमाण इति। सम्यगादिपदव्यवच्छेद्यं पुनः प्रागिव योजनीयम्। अपरोक्षग्रहणमनुमानागमव्यवच्छेदाद्यर्थम्।

॥ अपरोक्षत्वस्वरूपकथनम् ॥

किमिदमपरोक्षत्वं नाम? बोधाधारो जातिभेद इति ब्रूमः। कथमसौ प्रत्येतव्य इति चेत्। अनन्यथासिद्धापरोक्षप्रत्ययानुवृत्तेः। भवति हि नयनरसनादिसाधनेषु वेदनेष्वपरोक्षमपरोक्षमित्यनुवृत्तिप्रतीतिः। कथमेषा जातिमन्तरेणोपपत्तिमती निरुपधानप्रकाशतोपाधिनेति चेन्न; तस्यैवानिरूपणात्। न तावदन्यानुपरक्तार्थगोचरता तस्य निरुपधानप्रकाशता नाम। तथा सति रूपाद्युपरागिगवादिवेदनस्य नयनजनितस्यापि परोक्षतापातात्। नापि वेदनान्तराव्यवधानेनोत्पादः विशेषणवेदनसहकृतनयनमहिमसमासादितात्मनो दण्डिवेदनस्य परोक्षतापत्तेः। अदृष्टमात्रसमुद्बुद्धसंस्कारकारणकस्य स्मरणस्यापरोक्ष्यापत्तेश्च। तत्राप्यनुभव-

---

1. अस्य पराक्रियत इत्यनेन सम्बन्धः

2. प्रवृत्तिनिमित्तविशेषादित्यर्थः

व्यवधानं पारम्पर्येणाभिप्रेत्य परोक्षत्ववर्णने, प्रत्यक्षफलस्यापि सविकल्पकस्य निर्विकल्पकपूर्वतया परोक्षभावप्रसक्तेः। नच [1]स्वपरजातीयपरोक्षव्यावृत्तवेदनत्वमपरोक्षत्वं स्मृतेरपि तादृश्या अपरोक्षत्वप्रसङ्गात्।

॥ पक्षान्तरनिरासपूर्वकं प्रत्यक्षत्वं जातिभेद इति व्यवस्थापनम् ॥

एतेन निर्देश्यानिर्देश्यविशेषविशिष्टार्थावभासित्वं अपरोक्षत्वमित्यपास्तम्। [2]गौरमधुरगान्धारादिगोचरचारिणः स्मरणस्यापि कस्य चित्तथा[त्वात्](र्था)जातिपक्षप्रसक्तेश्च। न खलु तदवभासित्वमपि वेदनधर्ममृते जातिभेदात् पश्यामः। वेदनस्यैवार्थविशेषसम्बन्धोऽसौ न जातिभेद इति चेत्। अहो महानयं प्रमादो महानुभावस्यापि। नवै वेदन(स)मर्थसम्बन्धितया तदवभासि गीयते। तथा सति अतीतादिवेदनस्य तदवभासिताव्याहतेः। न च षट्पदार्थातिरेकी वेदनानां वेद्यैः सह विषयविषयिभावो भवति। आचार्यमतादन्यत्र। यथा पुनराचार्यमते तदुपपत्तिस्तथा तदवसर एव वर्णयिष्यामः। न तत्कर्मजन्यता तदवभासिता, माहेश्वरवेदनस्याजन्यस्यार्थावभासिताहानेः।

॥ अत्राचार्यसम्मतिः ॥

तस्मात् अनिच्छताप्यच्छमतिना तदवभासिता नाम वेदनानां जातिरेवाभ्युपेया। एतदेवाभिप्रेत्याभिहितमा**चार्येणा**पि "तदवभासित्वशब्दवाच्यं ज्ञानस्य जातिविशेषात् अन्यं धर्मं न पश्याम" इति। यदि च निर्देश्यानिर्देश्यविशेषविचिष्टार्थावभासित्वमपरोक्षत्वं निर्विशेषविषयावभासि वेदनमक्षजं न स्यात्। तत्रापि च विशेषाश्रयणे भवेदनवस्थादौस्थ्यम्। नचेन्द्रियार्थसन्निकर्षजत्वं तदुपाधिरिति साम्प्रतम्। चिरनिर्दग्धकामिनीगोचरचारिकामातुरसाक्षात्कारस्य तदभावेऽपि अपरोक्षत्वात्। तद्भावे च लैङ्गिकपुरुषानुभवस्य परोक्षत्वात्। भवति हि तत्रापि पुरुषान्तःकरणसंपर्कः कारणम्। भवतु तथापि नेन्द्रियतया तत्रान्तःकरणमुपयोगीति चेत्; केन पुनराकारेणास्येन्द्रियतया भविष्यति। साक्षात्कारिवेदनसाधक-

---

1. मा· स्वपरजातीयपरार्धे
2. तद्गततरतमभावस्यानिर्देश्यत्वं पूर्वमुक्तमनुसन्धेयम्

तमत्वेन, अत एव सुखादिसंवेदने तस्येन्द्रियतेति चेत्; हन्त भोः! साधु समर्थितं साक्षात्कारिवेदनसाधकतममिन्द्रियं, तत्सन्निकर्षमहिमसमुत्थं संवेदनं साक्षात्कारीति ।

राजमार्गे हि विश्रान्तः को हि नाम न बुध्यते ।
परस्पराश्रयापातं प्रस्पष्टं भवता विना ॥ १ ॥

तस्मादन्यत एकस्य परिच्छेदात्स कल्प्यताम् ।
जातिभेदोऽपरोक्षत्वं साक्षात्कारित्वसंज्ञितम् ॥ २ ॥

॥ अत्रैव न्यायप्रयोगः ॥

तत्सिद्धमेतत् — विवादाध्यासितापरोक्षप्रत्ययानुवृत्तिर्जातिनिमित्ता; अनन्यथासिद्धप्रत्ययानुवृत्तित्वात्, यदुक्तसाधनं तदुक्तसाध्यं यथा गौरिति प्रत्ययानुवृत्तिः । प्रत्ययानुवृत्तिश्च विवादपदम् । तस्मात्तथेति ।

तथा च वेदने मुख्यमपरोक्षपदं भवेत् ।
जातिभेदनिमित्तेन कालाक्ष्यामिव गोपदम् ॥ १ ॥

तादृशज्ञानवेद्यत्वादर्थस्याप्यपरोक्षता ।
व्यवहाराङ्गतां याति लोकानामुपचारतः ॥ २ ॥

तत्त्वतो जातिरर्थेषु न भवत्यपरोक्षता ।
तस्यैव नरभेदेन पारोक्ष्यानुपपत्तितः ॥ ३ ॥

एकस्य नीलमन्यस्य पीतं न खलु सम्भवि ।
अपरोक्षज्ञानवेद्यमपरोक्षं यदोच्यते ॥ ४ ॥

तदा तस्यैव तज्ज्ञाने तं प्रत्येवापरोक्षता ।
तथा हि यस्य सन्देहो यद्वस्तुन्युपजायते ॥ ५ ॥

तत्तं प्रत्येव सन्दिग्धं तथैवात्रापि वर्ण्यताम् ।
एवं चैकमपेक्ष्यापि दूरे नीरादिवस्तुनः ॥ ६ ॥

पारोक्ष्यमापरोक्ष्यं च समीप उपपद्यते ।
अथाश्रितायां जातौ तु भवेन्नैषा व्यवस्थितिः ॥ ७ ॥

नह्येकः केसरी दूरे समीपे स्यात्स वारणः ।

एवं चैतदप्यनाशङ्कनीयमेव । यदुतानुमानाद्यनुभवस्याप्यपरोक्षत्वात् सुखादिवत्तत्साधनस्यापि प्रत्यक्षप्रमाणतापत्तिरिति । यस्मादपरोक्षानुभवगोचरभावादुपचारतस्तत्रापरोक्षव्यवहारः स्वारसिकं तु तस्य पारोक्ष्यमेवेति ।

॥ अनुभवपदप्रयोगस्य कृत्यम् ॥

नन्वेवमपरोक्षत्वमनुभवभेद एव [1]भाविकमित्यपरोक्षपदेनैव स्मरणमपि परास्तं भविष्यति; किमनुभवग्रहणेनेति । सत्यम् । साध्वेवाभिहितं भवतापि । यः कोऽपि दर्शनकथन्तासम्बोधनरहितो यथादर्शनपूजको निजपुरन्ध्रीपरिरम्भसम्भवसुखं कटुविपाकतया सम्यगपरोक्षं च मन्यमानो मन्दमतिस्तत्साधनमपि प्रत्यक्षं प्रमाणमापद्यत इति प्रत्यवतिष्ठेत । तद्भ्रममप्यपनेतुं विरचितमल्पप्रयत्नेन अनुभवपदमाञ्जस्या वृत्त्या स्मृतिमप्यपाकु[र्यात्[2]] । सुखादीनां हि प्रत्यक्षफलताभ्रमो माभूदित्यनायासव्युत्पादनायानुभवपदमुपादीयमानमाञ्जस्यैव वृत्त्या स्मृतिमप्यपाकर्तुमुत्सहत इति नापरोक्षपदस्य तद[पा]करणे स्वव्यापकानुभवसामान्यानुसरणद्वारेण मन्थरो व्यापारः स्वीकरणीयः । तथाच अनुभवपदस्यैव स्मरणव्युदासे तात्पर्यमभिसन्धाय वर्णयाम्बभूवाचार्योऽपि ।

तदेवमनुभवत्वादिजातिविशेषैः स्मरणा(म)नुमानादिज्ञानेभ्यः प्रत्यक्षफलं व्यवच्छिन्नम्, [3]प्रत्यक्षमप्यतीन्द्रियं समानासमानजातीयेभ्यो व्यवच्छिनत्तीति ।

॥ विशेषलक्षणेषु सम्यक्त्वादिदलप्रयोजनम् ॥

स्यादेतत् । सामान्यलक्षणप्रकरण[प्रति]लब्धसम्यगादिपदव्युदसनीयतोपपत्तेः संशयादीनां, किमिह पुनस्तदुपादाने निमित्तमिति ।

---

1. स्वाभाविकमित्यर्थः
2. अपाकुर्वन्
3. इन्द्रियरूपं प्रत्यक्षमतीन्द्रियमित्यर्थः

तद्द्विविधम्—योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति। तत्रायोगिप्रत्यक्षं

---

सत्यं तथापि सुखबोधिविधौ प्रवृत्तः
प्रस्तावलाभमतिगौरवतोऽतिलङ्घ्य ।
साक्षाद्विवक्षितसमर्पणदक्षमेतत्
सम्यक्पदादि वदति स गुरुः कृपालुः ॥ १ ॥

सामान्यलक्षणपदानि विशेषचिह्ने-
ष्वन्येष्वपीत्थमनुवादपदं गतानि ।
श्रोतुः सुखेन धिषणां जनयन्ति सन्ति
न प्राप्नुवन्त्यवगतार्थतया कलङ्कम् ॥ २ ॥

॥ प्रत्यक्षस्य द्वैविध्यकथनम् ॥

तदेवं सामान्वतः प्रत्यक्षलक्षणमभिधाय तद्भेदं प्रतिपादयन्नाह—**तद्द्विविधमिति**। द्वैविध्यमेवोदाहरति—**योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति**। योगः समाधिः। स विद्यते येषां ते योगिनः अयोगिनस्तद्विपरीताः। तेषामुभयेषां प्रत्यक्षमिति विग्रहः। चशब्दः सविकल्पकनिर्विकल्पकभेदेनापि वक्ष्यमाणद्वैविध्यावरोधार्थः। द्विविधग्रहणात् पराभिमतं चातुर्विध्यं पराकृतम्।

॥ बौद्धाभिमतप्रत्यक्षचातुर्विध्यनिरूपणम् तत्खण्डनं च ॥

**परे** हि वदन्ति तच्चतुर्विधम्—इन्द्रियज्ञानं, स्वविषयान्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं मनोविज्ञानं, सर्वचित्तचैत्तानामात्मसंवेदनम्

---

परे=सौगताः इन्द्रियज्ञानं इन्द्रियग्राह्यबाह्यरूपादिविषयालम्बनज्ञानम्। स्वविषयेत्यादि स्वं=इन्द्रियज्ञानम्, स्वविषयः बाह्यो घटादिः, स्वविषयस्यानन्तरः इन्द्रियविज्ञानविषयादन्यः घटादिर्द्वितीयक्षणः, तेन सहकारिणा मिलित्वा इन्द्रियज्ञानेनोपादानेन समनन्तरप्रत्ययसंज्ञकेन यज्जनितं तत्मानसप्रत्यक्षं-मनोविज्ञानम। समनन्तरप्रत्ययशब्दः स्वसन्तानवर्तिनि उपादाने प्रसिद्धः। सर्वचित्तचैत्तानामिति चित्तं वस्तुमात्रग्राहकं ज्ञानम्। चित्ते भवाः चैत्ताः, वस्तुनो विशेषरूपग्राहकाः सुखदुःखोपेक्षालक्षणाः, तेषां सर्वचित्तचैत्तानां आत्मा संवेद्यते येन स्वरूपेण, तत्स्वरूपमात्मसाक्षात्कारित्वात् स्वसंवेदनं प्रत्यक्षमुच्यते।

**प्रकाशदेशधर्माद्यनुग्रहादिन्द्रियार्थसंबन्धविशेषेण स्थूलार्थग्राहकम् ।**

---

योगिज्ञानं चेति । तत्र क्षणभङ्गनिषेधान्मानसं निषिद्धं भविष्यति । यत्त्वस्मदभिमतं मानसं तदिन्द्रियज्ञान एवान्तभूतं; मनसोऽपीन्द्रियत्वात् स्वसंवेदनतां च संविदां निरसिष्यामः। तथा च परिशेषादेतावदेव युक्तम् योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति ।

॥ अयोगिप्रत्यक्षनिरूपणं तत्प्राथम्ये कारणं च ॥

यद्यपि योगिप्रत्यक्षस्याति(वि)प्रकृष्टत्वादादावुद्देशो विहितः तथाप्यस्मदादावयोगिप्रत्यक्षसिद्धावेव तद्दृष्टान्तावष्टम्भात् तत्सिद्धिरिति प्रथममयोगिप्रत्यक्षं व्याचष्टे—**तत्रायोगिप्रत्यक्षं प्रकाशदेशधर्माद्यनुग्रहादिन्द्रियार्थसम्बन्धविशेषेण स्थूलार्थग्राहकमिति ।** तत्रेति सप्तमी निर्धारणे । तस्मात्प्रत्यक्षसमुदायात् पृथक्कृत्यायोगिप्रत्यक्षं व्याख्यायत इति पूरणीयम् । प्रकाशः प्रदीपादिलक्षणः चेतस्समाधानलक्षणश्च । देशः पुरः प्रभृतिः । धर्म आदिर्यस्येत्यादिग्रहणादधर्मस्यापि अवरोधः । धर्म इष्टोपलब्धौ । अनिष्टोपलब्धावधर्मः । अनुक्तमपि निमित्तमुद्भूतरूपादिकमादिग्रहणेन ग्राह्यम् । प्रकाशादीनां समाहारे द्वन्द्वः । तदेव निमित्तं अनुगृह्यतेऽनेनेत्यनुग्रहः । तस्मात् ल्यब्लोपनिमित्ताऽत्र पञ्चमी द्रष्टव्या । प्रकाशाद्यनुग्रहमासाद्य स्थूलार्थग्राहकमित्यर्थः । न केवलं तदनुग्रहमासाद्य, किंत्विन्द्रियार्थसम्बन्धविशेषेणापि सम्भूयेति ।

॥ इन्द्रियलक्षणं तत्सङ्ख्या च ॥

शरीरसंयोगसापेक्षं साक्षात्कारणमिन्द्रियम् । तच्च रूपाद्युपलम्भकार्यैः; करणभावेनानुमितम् । चक्षुरादिभेदात् बाह्यं पञ्चविधम् । षष्ठमन्तः करणम् । तस्य च युगपज्ज्ञानानुत्पादलिङ्गतामुपपादयिष्यामः । तदेवं षडेवेन्द्रियाणि न त्वेकादश साङ्ख्यवत् । सात्विकाहङ्कारसमुद्भवत्वस्य लक्षणस्यासिद्धेः, महदहङ्कारादिप्रक्रियाया निराकरिष्यमाणत्वात् । बहिरिन्द्रियेषु च भौतिकत्वस्य निरूपयिष्यमाणत्वात् । नचेन्द्र[य]लिङ्गत्वमिन्द्रियत्वम्, बुद्ध्यादिभिरतिव्याप्तेः । स्मरणं तु पाणि-

नीयमिन्द्रियमिन्द्रलिङ्गम् इत्यादि व्युत्पत्तिनिमित्तमात्रपरं न पुनः प्रवृत्तिनिमित्तपरमिति द्रष्टव्यम् ।

॥ इन्द्रियाणामप्राप्यकारितानिराकरणम् प्राप्यकारित्वस्थापनं च ॥

इन्द्रियाणामर्थैः सहसम्बन्धः षोढा वक्ष्यमाणः । कथमेतत्? सञ्चक्षते हि भिक्षवश्च[1]क्षुरादेरप्राप्यकारितां सान्तरग्रहणादिति । तत्तावदसारम् । तथा हि— किमिदं सान्तरग्रहणं, यदि सान्तरस्याप्राप्तस्य ग्रहणं, साध्याविशिष्टो हेतुरप्राप्तेरेव साध्यत्वात् । अथाधिष्ठानासम्बद्धग्रहणं तत्, दीपादिभिरनैकान्तिकम् । न खलु मल्लिकादिभिरसम्बद्धमर्थं प्रकाशयन्तोऽप्यप्राप्यकारिणो दीपादयः प्रभापटलप्रनाड्या तत्प्राप्तेः । काचाभ्रपटलाद्यन्तरितग्रहणं सान्तरग्रहणमिति चेत् ।

स्फटिकाद्यन्तरायः किं चक्षु[रादि]निवारणम्[2] ।
अधिष्ठानार्थयोर्मध्ये व्यवधानमुतेष्यते ॥ १ ॥

असिद्धिः प्रथमे, यस्मात्काचादेः स्वच्छभावतः ।
सच्छिद्रत्वात्पदार्थस्य चक्षुषः प्राप्तिसम्भवः ॥ २ ॥

पाश्चात्यकल्पेऽनैकान्तं प्रदीपप्रभया भवेत् ।
निर्गत्य भासयत्यर्थं सा ह्यभ्रपटलाद्बहिः ॥ ३ ॥

सान्तरमिति ग्रहणं सान्तरमिति चेत् । तदपीन्द्रियापेक्षया चेत् असिद्धम् [3]तस्यातीन्द्रियत्वाभ्युपगमे ततः[4]सान्तरताया अध्यक्षतोऽनध्यवसायात । अनुमानेनत्वर्थसम्बन्धस्यैव [5]भासकत्वेन प्रदीपदृष्टान्तात्प्रसिद्धेः । अधिष्ठानापेक्षया तु सान्तरग्रहणमनैकान्तिकमेव दीपेन ।

---

1. सौगता इत्यर्थ ।
2. चक्षुषामनिवारणम्—मा.
3. तस्य=इन्द्रियस्य
4. ततः=इन्द्रियात्
5. हेतुनेति शेषः

॥ चक्षुः प्रभाया अतीन्द्रियत्वेनानुपलब्धिकथनम् ॥

यत्पुनरिदं वदन्ति, यदि दीपप्रभावदधिष्ठानदेशान्निर्गत्य चाक्षुष्यपि प्रभा परिच्छिन्द्यादर्थं, तद्वदेवोपलभ्येतेति, तदप्यनुद्भूतरूपत्वेनानुपलम्भसम्भवात् समाधेयम् । नचानुद्भूतरूपाणां ऊष्मोपलम्भानुमिततेजसामिव निशीथे न प्रकाशतेति वाच्यम् । प्रदीपादिप्रकाशसहितानां तदुपपत्तेः । यद्वा बाह्यालोकसध्रीचीनेभ्यस्तदवयवेभ्यः उद्भूतरूपा एव नयनदीधितयो जायन्त इति कल्पनीयम् । नचैवमुद्भूतरूपतया साकमुत्पन्नानामपि नयनकिरणानां मणितरण्यादिकरनिकरेभ्यो भेदग्रहणमनेकप्रदीपप्रभाणामिवैकदेशप्रसारिणीनामिति ।

॥ लोचनमरीचीनां चक्षुः उन्मील्य निमीलनानन्तरमपि

अर्थप्रकाशकत्वशङ्का तत्समाधानं च ॥

यदप्याहुः यदि लोचनमरीचयो निर्गत्य गोलकादर्थमवभासयेयुः, तर्ह्युन्मील्य निमीलितनेत्रयुगलोऽपि कलशकुलिशादिपदार्थसार्थमुपलभेत, बहिः प्रसरतामेव तेषां प्रकाशकतोपपत्तेरिति । तदप्यसत् । बहिः प्रसरतामपि तेषां निमीलनसमसमयमेव विनाशसम्भवेन [अ]प्रकाशकतोपपत्तेः वातायनविवरनिर्गतप्रदीपप्रभापटलस्येव तावत्कवाटपुटघटनसमनन्तरम् ।

॥ अभिन्नमूलानामेव चक्षुः किरणानां उपलम्भकत्वमिति केषाञ्चिन्मतम् ॥

केचित्त्वाचक्षते । यथा खलु बहिः निस्सृतापि अभिन्नमूलैव कूश्माण्डलता कार्यभेदजनिका न छिन्नमूला तथा नयनदीधितिरपि । यथा च कूश्माण्डलतासेचनच्छेदनाभ्यां तद्गहस्यानुग्रहोपघातौ तथैव चक्षुरधिष्ठानकृष्णतारानुग्रहोपघाताभ्यां तस्यानुग्रहोपघाताविति तत्रैव चिकित्सादिप्रयोगोऽ[प्यु](नु)पपन्नः ।

॥ शाखाशशधरयोः तुल्यकालोपलम्भनिराकरणम् ॥

कथमेवमपि शाखाशशधरमण्डलयोः एककालोपलम्भसम्भवः । प्रातिपक्षे हि द्रुततरमपि गच्छन्नयनरोचिर्निकटस्थमादौ वेदयेत् । दवीयस्तु चिरतरेणेति । न, असिद्धेः । न वयं शाखाशशधरयोरेककालोपलम्भमभ्युपेमः । किन्तु आशुभावात्तथाभिमानमात्रम् । भवति खल्वतिलाघवेन तेजसो वेगातिशयः, यद्वशादन्तिकादि-

दूरस्थयोः अपर्यायादवभासाभिमानः । कथमपरथा [1]पूर्वाचलशिखरस्थलीमलङ्कुर्वत्येव विवस्वत्यपरवारिधितीरपरिसरेऽप्यालोकमालाभिमानः ।

॥ शाखाचन्द्रमसोः एककालोपलम्भस्यापि समर्थनम् ॥

यद्वा निःसरन्त एवाधिष्ठानात् नयनमरीचयो बहिरालोकैः एकीभूय झटिति तदुभयसंसर्गयोग्यदीर्घभावमिन्द्रियमुत्पादयन्तीति शाखाशशाङ्कयोरवकल्पत एवापर्यायमवभासः । नचैवं सति पाश्चात्यभागपरिव(र्ती)र्तिपदार्थसार्थोपलम्भप्रसक्तिः, कार्यैकगम्यस्य तदारम्भकस्य यथाकार्यमधिष्ठानाभिमुखमेवारम्भकल्पना । इतरथोच्चलितदीपिकाप्रभापटलवदुच्चन्द्रमभिमुखीकृत्य गच्छन्नयनमरीचिमण्डलस्य पुरोभागवत् परभागेऽपि प्रसरसम्भवात्प्रसज्यत्येव परभागवर्तिपदार्थावभासः । तस्मात्कार्यानुसारादार्जवेनैव नयनमरीचयः चलन्तीति कल्पनीयमिति कल्पान्तरेऽपि तत्समानम् ।

तदेवं चक्षुषः प्राप्यभासकत्वे न दूषणम् ।
शब्दसन्तानसंप्राप्यश्रवणा(प्यु)[द्यु]पलभ्यते ॥ १ ॥

॥ शब्दसन्ततिप्रविष्टस्य शब्दस्योपलम्भे दिग्देशावच्छेदोपलम्भनिर्वाहः ॥

शब्दसन्ततिसम्भवं तु तदवसर एव निवेदयिष्यामः । कथमेवं सति दिग्देशभेदावच्छेदोपलम्भसम्भवः सर्वस्यापि ध्वनेः कर्णविवर एवोपलम्भादिति चेत्, तदपीह नानुपपन्नम् । तथा हि—पटहादिताडनसमनन्तरं यादृशदिग्देशावच्छिन्नशब्दो यथोपलब्धः प्रत्यक्षेण तथाविधमेव शब्दभेदमुपलभ्य तादृशमेव दिग्देशाद्यनुमानेनोपलभते इति । कथमपरथा शङ्खपटहाद्यवच्छेदोपलम्भोऽप्युपपद्येत । न खलु शङ्खादयोऽपि श्रवणेनैवानुभूयन्त इति सम्भावनीयम् ।

॥ प्रकारान्तरेण तदुपपादनपरमाचार्यमतम् ॥

**आचार्यः** पुनरन्यथैव दिशावच्छेदोपलम्भव्यपदेशावुपपादयामास । कथं? [2]य[दा]पूर्वदिग्विशिष्टकर्णशष्कुल्यवयवावच्छिन्ने नभोदेशे शब्दमुपलभते त[दा]-

---

1. अपरवारिधिः = पश्चिमसमुद्रः
2. यथा—मा.

पूर्वस्यां दिशि शब्द उत्पन्न इति प्रतिपद्यते। एवं दक्षिणादिदिग्विशेषेष्वपि द्रष्टव्यम्। कर्णशष्कुल्यवच्छिन्नो हि नभोदेशः श्रोत्रम्। ते चावयवाः सर्वदिक्षु विद्यन्त इति युक्ता विशेषावच्छेदेन शब्दोपलब्धिरिति। तस्मात् श्रोत्रस्यापि प्राप्यकारित्वे नानुपपत्तिरिति स्थिते, प्रयुज्यते—

॥ इन्द्रियाणां प्राप्यकारित्वे न्यायप्रयोगः ॥

चक्षुरादि प्राप्त्याऽर्थप्रतिभासकं बहिरिन्द्रियत्वात् त्वगादिवदिति। यस्तु(त्तु) वैयात्यात् त्वगादिदृष्टान्तेऽपि विप्रतिपद्येत तं प्रति सर्वेन्द्रियाणि पक्षीकृत्य प्राप्यकारित्वं करणत्वेन वास्यादिवत् समर्थनीयम्। नच शब्दान्तः करणादेरत्तीताद्यर्थेनानाप्तस्यापि तद्बोधाधायकत्वेन हेतोर्व्यभिचारः। यतः सहकारि प्राप्य करणस्य कार्यकारिता प्राप्यकारित्वमुच्यते। न चातीताद्यर्थस्य तद्बोधोत्पादे शब्दादिसहकारितेति। चक्षुराद्यर्थस्य तत्सहकारित्वं अन्वयव्यतिरेकावसेयम्। नचायस्कान्तादिना व्यभिचारः। तत्राप्ययस्कान्तसंश्लिष्टो विशिष्ट एव पतनपवनशरीरप्राणवत् (तु)तूलसलिलादिकमयः प्राप्यैवाकर्षतीत्युपपत्तेः। स्पर्शानुपलम्भे वा कार्यवशादेव तत्सिद्धिर्नानुपपन्ना।

॥ अत्रैव टीकाकाराणां मतोपपादनम् ॥

केचित्तु[1] अयस्कान्तमणेरपि चक्षुष इव वृत्तिभेदमाचक्षते। मन्त्रैरपि सम्बद्धा एव देवताभेदाः समाराध्यन्ते ते चाभिप्रेतं फलमर्थभेदानवाप्यैव जनयन्तीति व्यभिचाराभावात्। अप्राप्यकारितायां पुनः व्यवहितस्याप्युपलम्भः प्रसज्येत। व्यवधायकत्वं च प्राप्तिनिवारणद्वारेणैवातपाव(ा)रणादेरिति कुड्यादेरपि तथैवाश्रयणीयम्। अन्यथा सत्तयैव कार्यविरोधितायां न क्वचित्कार्यमुपजायेत।

॥ इन्द्रियसम्बन्धं विना योग्यं गृह्यत इति मतं तत्खण्डनं च ॥

**यत्त्विदं** योग्यं योग्येन गृह्यते विनापि सम्बन्धेनेति; **तदसत्**। स्थिरपक्षे स्वरूपयोग्यतायाः व्यवधानविप्रकर्षयोरपि अपरावृत्तेः। अपरं तु सामीप्यभेदमपेक्षमाणं कार्ये प्राप्तिमेव पुरस्करोतीति युक्तं पश्यामः। नचान्तरेणापि प्राप्तिपुरस्कारं सामीप्यमेव तादृक् स्वरूपत उपयोगीति युक्तं, प्राप्त्यर्थमेव प्रदीपादौ तदुपलम्भादि-

1. तात्पर्यटीकाकारमतमाह—केचित्त्विति

हापि दृष्टानुसारिण्या एव कल्पनाया युक्तत्वात्। क्षणभङ्गाभ्युपगमेऽपि नाप्रत्यासन्नाः सहकारिणः संवत्सरसहस्रेणापि शक्नुवन्त्यतिशयमाधातुम्। अन्यथा सलिलावनिबीजादिप्रत्यासत्तिफलकृषीवलव्यापारविलोपापादनचापलापातात्। प्रत्यासत्तिस्तु बौद्धनये निरन्तरोत्पत्तिः अस्माकं तु संयोगादिरित्यवशिष्यते। कृष्णसारस्य तु नार्थेन निरन्तरोत्पादो विद्यत इति तदाश्रयमेव क्रमवन्निरन्तरोत्पादगतिक्रमेण च सञ्जातसंयोगमर्थैरित्येवाश्रयणीयम्। स्थैर्यसिद्धौ तु संयोग एवेति परिशिष्यते। तदप्यागमपरिच्छेदे निवेदयिष्याम इति कृतमतिप्रसङ्गेन। तस्मात् युक्त**मिन्द्रियार्थसम्बन्धविशेषेणे**ति।

॥ स्थूलार्थग्राहकमिति लक्षणस्य अव्याप्तिपरिहारेणोपपत्तिकथनम् ॥

ननु स्थूलार्थग्राहकमित्यलक्षणं यावता बोधसुखादेरस्थूलस्यापि ग्राहकमिष्यत एव प्रत्यक्षमिति। सत्यं, किन्तु योग्यतोपलक्षणार्थं मतान्तरनिषेधार्थं चेति न दोषः। केचिदाचक्षते - नास्ति बोधादर्थान्तरं स्थूलमिति, तन्निरासायेदमुदितम् **स्थूलस्यार्थस्य ग्राहकं** नतु बोधाकारस्यैव स्थौल्यमिति।

॥ परमाणुव्यतिरिक्तावयव्यनङ्गीकर्तृमतेन पूर्वपक्षः ॥

कथं पुनर्बहिरर्थः स्थूलो भवेत्। परमाणूनां परमसूक्ष्मत्वात्। प्रत्येकमरक्ते रक्तत्ववत् समुदितेऽपि प्रत्येकं सूक्ष्मे स्थौल्यानुपपत्तेः समुदायस्य चावास्तवत्वे प्रतीत्याकारानतिरेकात्। वास्तवत्वे चावयविसमानदोषत्वात्, अवयविनश्चावरणानावरणादिलक्षणविरुद्धधर्मसंसर्गादेकत्वानुपपत्तेरिति।

॥ अवयव्यङ्गीकारे विरुद्धधर्मसंसर्गापत्तिनिवारणम् ॥

न। विरुद्धधर्मसंसर्गासिद्धेः। न तावत् आवरणानावरणविरोधः। अवयवावरणेऽप्यनावृतैकरूपत्वात् अवयविनः। तस्य तथाभावे प्रागिव स्थौल्योपलम्भापत्तिरिति[1] चेत् न। तस्य परिमाणावान्तरभेदस्य तदुपलम्भकभूयोवयवेन्द्रियसन्निकर्षादिविरहादनुपलम्भोपपत्तेः। नापि कम्पाकम्पविरोधो भवेत्। अवयवावयविकम्पयोः विभिन्नहेतुकत्वेनावयव्यवयवयोः कम्पाकम्पानियमेऽप्यवयविनः कदाचित्कारणानु-

1. पलम्भहेतुरिति—मा.

रोधेन कम्प एव, कदाचनाकम्प एवेति नियमोपपत्तेः। किमर्धावयवकम्पे सत्यवयवी निष्कम्प एव वा सकम्प एव वा? सन्देह इति वदामः। यथा प्रत्ययोऽस्ति तथापि सम्भवात्, सम्भवति हि सकम्पाश्रयत्वेनोपलम्भादकम्पेऽपि कदाचित्कम्पप्रतिभासो, यथा रूपादौ, यथा वा दर्पणवदनजलसूर्यादौ।

॥ तत्रैव समाधानान्तरम् ॥

यद्वा सकम्पे निष्कम्पावयवसमवायात् अविवेकेनाकम्पप्रतिभासः स्यात्। नचैवं सति सर्वत्र सन्देहप्रसक्तिः, तन्निमित्तानुपलब्धौ निर्णयोपपत्तेः। कथमन्यथा सकम्पनिष्कम्पव्यवहारनियमः स्यादिति।

॥ कम्पस्याव्याप्यवृत्तित्वमङ्गीकृत्य परिहारः ॥

यद्वा कम्पस्याव्याप्यवृत्तित्वं संयोगवदित्याचार्यः। तथा चैकस्यैव सकम्प-निष्कम्पप्रत्ययगोचरत्वेऽपि न कश्चिद्दोषः। निर्भेदेऽप्यव्याप्यवृत्तिवाचोयुक्तेः अर्थं तु संयोगमधिकृत्य निवेदयिष्यामः। पुरुषे धावति कम्पस्य व्याप्यवृत्तितैवोपलब्धेति तद्दृष्टान्तादन्यत्रापि तथाभाव एवेति चेत्। हन्तैवं वासस्सलिलयोरपि संयोगस्य व्याप्यवृत्तित्वान्न क्वाप्यव्याप्यवृत्तितेति प्रसज्येत। तत्रापि सलिलेन सर्वावयवसंयोगैः सह वासस्संयोगस्य दर्शनाद्व्याप्यवृत्त्यभिमानमात्रं चेत्। प्रकृतेऽपि सर्वावयवकम्पैः सहावय[वि](व)कम्पोपलम्भात् व्याप्यवृत्त्यभिमान इति समानम्।

किं च—

कुड्याद्यङ्गुलिसंयोगे तद्योगो देहवर्त्यपि।<br>
पाणिकम्पे न कम्पस्तु देहस्येति कथं भवेत्॥ १॥

नियमः प्रक्रियामात्रात्सर्वसिद्धान्तसम्भवी।<br>
तस्मादव्याप्यवृत्तित्वान्न कम्पाकम्पदूषणम्॥ २॥

॥ कम्पस्याव्याप्यवृत्तित्वे बाधकोद्भावनम् ॥

कम्पमानाकम्पमानयोरवयवावयविनोः युतसिद्धिप्रसङ्ग इति चेन्न। प्रति-बन्धासिद्धेः। वासस्सलिलादौ तत्सिद्धिरिति चेत्। किमत्र व्यभिचारानुपलम्भ-

मात्रेण तत्सिद्धिः, किं वा व्यभिचारे बाधकसम्भवात् ? न प्रथमः, पार्थिवत्वस्य लोहलेख्यत्वेनैव व्यक्त्य(न)न्तरे व्यभिचाराशङ्कायां अव्यभिचारासिद्धेः । तन्तु-वस्त्रादावेव विपर्ययोपलम्भाच्च । मिथ्योपलम्भः स इति चेत् । कथं वाऽऽद्यः[1] सत्यः । अबाधादिति चेत् । समः समाधिः । न द्वितीयः व्यभिचारबो[बा]धकस्यानिरूपणात् । कथमन्यथा सकम्पनिष्कम्पयोः अवयवावयविकल्पनागोचरत्वमपीति तुल्यो दोषः । पाणौ कम्पमानभा(गिन)[गस्य] पूर्वदेशपरित्यागेन परभागावष्टम्भो भागान्तरे तु नैवमित्ययं विरोध इति चेन्न । देशभेदेनैवाविरोधात् । भवतु तर्हि रक्तारक्तविरोधः । मैवम् । रागगुणतदभावयोगविवक्षायां तदसिद्धेः ।

वासः कुसुम्भसम्पर्काद्रक्तं भ्रान्त्यैव भासते ।
भाति कुङ्कुमसंपर्कात् अरुणा तरुणी यथा ॥ १ ॥

कुसुम्भसंयोगासंयोगविरोधस्त्वपरिहार्यः स्यात् । [2]अवयवभेदावच्छेदोपाधिकत्वादविरोध इति चेन्न । अवच्छेदस्यावयविस्वभावत्वे तस्यैकत्वेन विरोधानतिवृत्तेः । अर्थान्तरत्वे (व्य)[प्य]वच्छेदस्यावयविव्यापकतायामवच्छिन्न एव विधिनिषेधाविति स एव दोषः । अव्यापकतायां त्ववच्छेद[तद]भावावयविनि भवत इत्यनर्थान्तरमापन्नमिति ।

॥ संयोगदृष्टान्तेनाव्याप्यवृत्तिपदार्थस्वीकारावश्यकता ॥

न, संयोगादेरेवंस्वभावस्यानुभवसिद्धत्वेनाविरोधात्, यदयमेकत्रैव भवति न भवति चेति । न चैवं सति भावान्तरवैधर्म्येण संयोगादिस्वरूपनिरास एवेति युक्तं ; विशेषाभावे सत्येतद्वैधर्म्येण तेषामेव निरासप्रसङ्गात् । न चैतदप्यस्तीति वाच्यम् । तेषामसत्त्वे तद्वैधर्म्येणैतस्य निरा[सा]नुपपत्तेः । असत्यवैधर्म्ये सत्यताया एवाव्यवस्थाप्रसक्तेः । आन्तरालिकवैजात्येन तु कस्यचिदेव स्वाभावसाहचर्यं[3] नापरस्येति यथानुभवं व्यवस्थोपपत्तिः । न चावयववर्त्येव संयोगोऽस्त्विति साम्प्रतं समाधानं ; तस्यापि

1. आद्यः :—वासस्सलिलादौ पूर्वोक्तोपलम्भः सत्यः न मिथ्योपलम्भ इत्यर्थः
2. अवयवविशेषः ।
3. सादृश्यं—मा

सावयवत्वे तदवयवएवासौ न तद्वर्तीति प्रसङ्गात् । तथा सर्वावयवपरिहारेण परमाणावेव व्यवतिष्ठमानस्तपस्वी संयोग[स्वा] (स्या)त्मानमेव न दर्शयेत् । तस्माद्यद्यत्कारणेन संयुज्यते तत्तत्कार्येणापीति निस्तरङ्गमेवैतत् । तथा चावश्याश्रयणीयमव्याप्यवृत्तित्वम् । अन्यथा कौसुम्भबिन्दुवसनसंयोगस्य सङ्ख्यादिवदखिलावयवावच्छेदेनाप्युपलम्भापत्तेः ।

॥ अत्रैवाचार्यसम्मतिः ॥

एतदेवाभिहित**माचार्येण** "कथमेकस्याव्याप्तिरिति चेत्" इति शङ्किते "ननु संयोगस्यैवायं धर्म" इति प्रतिज्ञावयवेन, यत्र यत्रावयवसम्बद्धोऽवयवी दृश्यते तत्र तत्र रूपादिवत्तदुपलम्भकारणावैगुण्येऽपि संयोगो नोपलभ्यत इति हेतुं ब्रुवाणेन ।

॥ संयोगाव्याप्यवृत्तित्वनिगमनम् ॥

तदेवमेकत्रैव संयोगतदभावावनुभवसिद्धौ अनपाकरणीयौ, तौ तावत्स्वभावभेदात्प्रतिनियतावयवावच्छेदेनैवोपलम्भगोचराविति यथोपलम्भमेव व्यवस्थापनीयौ । न चैवमवच्छेदनीययोरेव ताविति वाच्यं; तदुपर्यपि चावयवीत्येतत्प्रतीतत्वे तत्तदवयवावच्छेदोऽपि तदधीननिरूपणतया नानियमेन निरूप्यते । यथानिरूपणमेव च तत्स्वभावव्यवस्थापीति नात्रापि कश्चिदर्थः । एतेनैकस्मिन्नपि समवाये नानासमवायावच्छेदनियमो व्याख्यातः येनास्यायमस्यायमिति व्यवहारनियमः स्यादिति ।

॥ संयोगस्य नाव्याप्यवृत्तिता उपलम्भानुपलम्भाभ्यामुपपत्तेरिति शङ्का ॥

ये पुनर्विद्यमानस्यैव संयोगस्यैव तन्निरूपकमहारजनादेरुपलम्भानुपलम्भाभ्यामुपलम्भानुपलम्भमात्रं; न तु भावाभावौ । पटनिरूपणे च कदाचन महारजनाद्यनिरूपणं पटस्य प्रचुरप्रदेशव्यापकत्वादनावरणेनेन्द्रियसन्निकर्षेऽपि महारजनादेरावरणेनानिन्द्रियसन्निकर्षात् । आरक्तव्यपदेशस्तु [1]तदवयवव[र्ति]रागद्रव्यसंयोगाभावपरम्परासम्बद्धोपाधिनेति वर्णयन्ति स्म ।

॥ तत्समाधानम् ॥

ते प्रष्टव्याः—कथमेवं सति नभः प्रभञ्जनसम्भेदजन्मा ध्वनिरेक एव नभोमात्रव्यापी सर्वैर्नोपलभ्येत । कथन्तरां चैतत्सन्तानपरिकल्पना । कथन्तमां पादे मे

1. तदवयववर्ती—मा. 2. त्यवदना—मा.

वेदना शिरसि मे सुखमित्या[दिवे]दनाद्युपलम्भव्यवस्थितिः । असमवायिकारणान्तः-करणसंयोगानुरोधेन भवतां तदनियमादेवानियतोत्पादानां अव्यवस्थितोपलम्भप्रसक्तेः ।

यदि च संयोगस्यायं महिमा यदयं व्यापकाव्यापकवर्त्यव्यापकस्य भावमनुरुद्ध्यैव कार्यमारभत इति । किं तर्हि कार्योपयोगरहितया तस्यानियतया स्वरूपसत्तया कल्पितया । अस्य[अ]भावसादेश्यस्य तु शब्दादेरन्ततोऽप्याश्रयणीयत्वात् ।

तस्मादस्माभिरुन्नीता संयोगाव्याप्यवृत्तिता ।
अभ्युपेया यया नैव बहु स्यादसमञ्जसम् ॥ १ ॥

अथैवमपि संयोगस्यैकस्मिन् भावाभावनियमे रक्तारक्तस्वभावमेव वसनमवसीयेत, न जातु रक्तमेवेति मतम् । रक्ताकारावसीयमानसकलावयवा[व]वच्छेदतिरस्कृता(रक्त)रक्ताकारत्वात् ।

॥ एकस्य वस्त्रस्य रक्तारक्तत्वोपपादनम् ॥

कथं पुनरवयवानामपि रक्ताकारावसायगोचरभाव एव ? (ता)[या]वता तेषामेव रक्तारक्तावसायगोचरभावं विवे[चयितुमलम्]तत्रापि कौसुम्भसंयोगस्याव्याप्यवृत्तिताविशेषादिति चेत् ; अनुपलभ्यमानतद्भागविशेषे( ण )संयोगाभावानुपलम्भेन तदुपलम्भाभिव्यङ्ग्यस्य तेषामप्यरक्तत्वस्याप्रतिभासादिति ब्रूमः ।

एवमव्याप्यवृत्तित्वे संयोगस्य व्यवस्थिते ।
रक्तारक्तस्वरूपत्वमे[क]स्यापि न दुष्यति ॥ १ ॥

॥ चित्रपटे नानारूपप्रतीतिविरोधोद्भावनम् ॥

**अथैवमपि** रक्तारक्तावयवनिचयविरचिते चित्रे रक्तारक्तविरोधो दुष्परिहारः । नहि तस्य रक्तमेव वा रूपं चित्रानुभवविरोधात् । नापि अनेकमेव, तस्यैकावयविसमवायविरोधात् । व्यासज्यव्याप्तिविकल्पानुपपत्तेश्च । न तावद्‌द्वयविव्यापकमनेकं रूपं तथाऽनुभवाभावात् । नाप्यव्यापकं, व्याप्यवृत्तिजातीयताविरोधात् । नीलपीतारब्धे च द्वितन्तुके तदवयवरूपस्यैकैकस्यानारम्भकत्वेन रूपारम्भविरोधाच्च । [न च] यथाशुक्ल(भ)मिति शुक्लजातीयं तथा चित्रमिति चित्रजातीयं व्याप्यवृत्त्येव विलक्षणं वसनरूपमिति वाच्यम् । अवयविरूपस्यावयवरूपजात्यनुविधाननियमात् ।

अन्यथा अवयवरूपजातीनामनियामकत्वे नीलेभ्योऽपि धवलोत्पादप्रसक्तेः। अत एव च विशेषजातिशून्यतया विशेषनिर्देशानर्हं रूपमात्रं रूपमात्रजातीयमवयविरूपमित्यप्ययुक्तं; रूपत्वजातेस्तदवान्तरजातिसादेश्याविनाभावाच्च। न च नीलारुणाद्यनेकजाति(त्व)खचितमेकमेव वासोरूपमिति साम्प्रतम्। विरुद्धजातिसमावेशस्यैकत्रानुपपत्तेः। न च नीलपीताद्यनेकावयवसमाहारमात्रं चित्रमवयवी तु नीरूप इति युक्तं; तस्य रूपवैधुर्ये चाक्षुषत्वविरोधात्। नचावयवरूपानुरोधादेव तच्चाक्षुषता। अन्यरूपादन्यद्रव्यस्य चाक्षुषत्वेऽतिप्रसङ्गात्। सर्वस्येत्थमवयविनो नीरूपतापत्तेश्चेति।

एवमेतेषु पक्षेषु क्षिप्तेष्वनुपपत्तिभिः।
रक्तारक्तावभासः स्यात्कथं वाससि लौकिकः॥ १॥

॥ अवयविनि सर्वावयवरूपसजातीयरूपारम्भेण समाधानम्॥

अत्र प्रतिविधीयते।

अवयवाखिलरूपसजातिता
वसनरूपगता न विरोधिनी।
अवयवाश्रयरूपनिरूपिता
निजसजातिज[नेः](नो) नियतिर्यतः॥ १॥

सर्वं खल्ववयवरूपमवयविनि सजातीयरूपारम्भकमित्यवसिता व्याप्तिः। तथा सत्यनेकरूपसमवायस्यावयविनि निरस्तत्वादेकमेवानेकजातिखचितमवयवरूपैरवयविनि रूपमारभ्यत इत्येवाविरोधिनी कल्पना।

॥ तस्य विजातीयत्वनिराकरणम्॥

नचैवं सति सर्वावयवरूपविजातीयमपि तदिति विजातीयानारम्भनियमव्याघात इति वाच्यम्। तन्नियमस्य सहकार्यभावोपाधितयाप्युपपत्तेः। विरुद्धजातिसमावेशः कथमेकत्रेत्येतावत्त्ववशिष्यते। तत्रोदितमुत्तरमाचार्येणैव, यदाह, न, विरोधस्यासिद्धत्वात्।

अन्यत्र सहादर्शनात्तत्सिद्धिरिति चेन्न, नीलत्वोत्पलत्वयोरपि विरोधप्रसङ्गात्। तयोरेकत्र दर्शनात् [न]विरोध इति चेत्समानमेतदिति नीलगुणोत्पलत्वजात्योः

सह दर्शनम् । प्रकृते तु जात्योरेवान्यत्रादृष्टयोः अविरोधः प्रतिपादनीय इति वैधर्म्यमात्रमविरोधि । क्वचित् सहादृष्टयोरप्यपरत्र सह(ा)भावदर्शनेनाविरोधमात्रस्य विवक्षितत्वात् । अथापि जात्योः परापरभावनियमेनैवैकत्र समावेश इति यस्याग्रहः स इत्थमनियमं प्रदर्श्य प्रतिबोधनीयः ।

॥ सङ्करस्य जातिबाधकत्वाभावः ॥

शातकुम्भीयकुम्भेषु कुम्भत्वस्योपलम्भनात् ।
सन्देहत्वापरोक्षत्वजात्योश्चैकत्र दर्शनात् ॥ १ ॥

न खलु शातकुम्भे कुम्भव्यवहारो भवत्यौपचारिकः सर्वथा तदभिमानाभावात् । वैयात्यात्तु तदभिमानस्य भौमेऽपि कुम्भे सुलभत्वात् । तद्वदेवाविशेषाच्छातकुम्भ[कुम्भे]कुम्भप्रतिभासोऽपि न भ्रम इत्यपि न भ्रान्तभाषितम् ; अविशेषे पृथिवीत्वादिना परापरभावानुपपत्तेः । कुम्भत्वसामान्यमेव नास्ति सन्निवेशविशेषनिबन्धनस्तद्व्यवहारानुगम इत्यभ्युपगमे गोत्वादिनिराकरणमप्यनिराकरणीयं स्यात् । तत्सन्निवेशविशेषस्य तत्रापि शक्यनिरूपणत्वात् । तदसाधारणसन्निवेशाप्रतिभासेऽपि गवये गोविभ्रमदर्शनात् अन्यदेवारोपणीयं गोत्वमभ्युपेयमिति चेत्, तर्हि अवयवसन्निवेशानुगमस्यावान्तरजातिव्यवस्थापकत्वात् गोत्वादिवदेव घटत्वसामान्यसिद्धिः । चित्रलिखितेषु तु न तादृशः सन्निवेश एवेति न व्यभिचारः । अन्यथा कथमुपाधितापि न व्यभिचरेदिति समानः प्रसङ्गः । परापरभावाभावमात्रेण तु कुम्भत्वाद्यपाकरणे सन्देहत्वाद्यपाकरणमपि प्रसज्यते सन्देहत्वापरोक्षत्वयोश्च सामान्यरूपता प्रागेव समर्थिता । तयोरप्यपरोक्षसन्देह इत्येकव्यक्तिसमावेशानुभवः कथमपाकरणीयः । गोत्वाश्वत्वयोरपि समावेशः किं न स्यादिति चेत्, तदुभयजातीयव्यक्तिसामग्रीसम्भवे कस्तमपि नाम वारयेत् ।

तस्मादेकत्र जातीनां परापरतया स्थितिः ।
नैकान्तिकी तु रूपेऽपि नानाजातीनि न क्षतिः ॥ १ ॥

॥ अनेकवासनाखचितमेकमेव विज्ञानं चित्रमिति मतनिराकरणम् ॥

एतेनैतदपास्तम् । एकं च चित्रं च तदित्येकचित्रमिति परमतेऽपि अनेकवासनाखचितमेकमेव विज्ञानं चित्रमित्युदाहरणीयम्, अतद्व्यावृत्तिरूपाणां जातीना-

मेव शक्तिवासनादि[प](य)दास्पदत्वात् । तासां तु विधिरूपत्वमाश्रयादर्थान्तरत्वं च विद्यते नो वेति विवादान्तरमेतत् । तदप्यनुमानपरिच्छेदे निर्णेष्यामः ।

॥ रूपत्वव्याप्यनानाजात्यधिकरणमेकं चित्ररूपमिति स्वमतम् ॥

तदेवमनेकजात्यधिकरणमेकं रूपं चित्रं, तत्पुनरनेकजातीयावयवरूपोपलम्भेनैव नानाजात्यधिकरणभावे[1]नाभिव्यज्यत इति नैकरूपावयवोपलम्भसमकालं तथोपलम्भप्रसङ्ग इति सर्वमवदातम् ।

॥ अवयविस्वीकारनिर्बन्धः ॥

ये पुनरवयविनं नानुमन्यन्ते कस्तेषां चित्रावभासविषयो भवेत् ? न तावन्नानारूपाः परमाणव एव ; तेषामिन्द्रियपथविदूरवर्तित्वात् । समासादितदशाविशेषाणामैन्द्रियकत्वमिति चेत्, यद्यमीषां चक्षुरादिभिः सहोत्पादो दशाविशेषः, तर्हि मध्यपरभागा अपि परमाणवो भवेयुः ऐन्द्रियकाः सर्वेषामेव । सामग्रीप्रतिबन्धकविशेषात् यदि केषु चिदेव विशेषसन्तानेषु इन्द्रियदर्शनयोग्यक्षणोत्पाद इत्यभिधीयेत । तदसत् । परमाणूनां इन्द्रियगोचरत्वविरोधस्वभावस्य निरुपाधित्वात् । धूमस्यैव धूमध्वजजन्यत्वे विवक्षितविषयादन्यत्रैव व्याप्तिरित्यभ्युपगमे सर्वानुमाननिषेधापत्तेः ए[कै]कशोऽपि दर्शनप्रसङ्ग[स्त्व](त्वा)निवार्यो विपर्यये ।

॥ केशसमूहवत् परमाणुसमूहप्रत्यक्षतानिराकरणम् ॥

स्यादेतत् । यथा तिमिरोपहतनेत्रैः प्रत्येकमनुपलब्धा अपि केशाः समुदिता उपलभ्यन्ते तथा प्रत्येकमनुपलभ्याः परमाणवोऽपीति । न, केशानां प्रत्येकमसदादीन्द्रियगोचरत्वात् । कदाचन तु चक्षु[रुप](रूप)घातादप्रतिभासेऽपि प्रागवधारितस्वरूपयोग्यतायाः अपरावृत्तिः । परमाणूनां तु प्रत्येकं योग्यताया एवानवधारणात् प्रत्येकं अतीन्द्रियाणां तु भूयसामपि तथाभावात्[2] अदृष्टवत् । अन्यथा तु अत्यन्तविततदेशानामप्यणूनां ऐन्द्रियकत्वप्रसङ्गात् । नैरन्तर्ये सति भूयस्तोपयोगिनी दर्शन

---

1. तादृशाधिकरणत्वेनेत्यर्थः
2. अतीन्द्रियत्वादित्यर्थः

इति चेत् ; प्रस्तुतेऽपि तर्हि परमाणूनां रसादिपरमाण्वन्तरान्तरितत्वादनुपयोगिन्येव भूयस्ता । नचारोपितमेव नैरन्तर्यं उपकारि परस्पराश्रयप्रसक्तेः । समारोपितनैरन्तर्य-सहकारिण्या भूयस्तया परमाणुदर्शनं दृष्टेषु च तेषु नैरन्तर्यारोप इति । नचात्यन्त-मदृष्ट एव कश्चिदारोपो दृष्ट इति ।

केशसमूहपरमाणुसमूहयोः प्रत्ययवैलक्षण्यादपि अतिरिक्तावयविसिद्धिः

किं च केशसमूहोऽयमित्येव तिमिरकलुषितचक्षुषोऽपि वीक्षन्ते, ततस्ते नातीन्द्रियाः । परमाणुसमूहोऽयमिति न कोऽपि प्रत्येति । किं च स्थूलैकाधि-करणश्चित्रप्रतिभासः कथं परमा[णु](त्म)गोचरो भवितुमुत्सहते । न खलु परमाणव एव स्थूलाः भाव(ा)विपर्ययापत्तेः । नच तेषामेव पूर्वापरादिदेशावष्टम्भेन सत्त्वं स्थौल्यम् । एकः स्थूल इति प्रत्ययनियमा[त्] परमाणौ तु प्रत्येकमुक्तरूप-स्यापि स्थौल्यस्यानुपपत्तेः । नचायमेकः स्थूल इति विभ्रमः विरुद्धधर्माध्य(ा)सनस्य बाधकस्य निरस्तत्वात् । वृत्तिविकल्पस्य च निरसिष्यमाणत्वात् ।

॥ साकारसंवेदनवादिनां चित्रप्रतीत्यनुपपत्तिः ॥

साकारसंवेदनवादिनस्तु महा[न]नर्थः चित्रप्रतिभासे । तथा हि—नीलाद्या-काराणां एकस्माद्वेदना[द]नतिरेके परस्परमप्येकतापत्तौ चित्रप्रतिभासविरोधः स्यात् । विभिन्नाकारतादात्म्याद्वा वेदनमपि विभिन्नं प्रसज्येत । ततश्चैकश्चिलावभासानुभवो विरुध्येत । प्रत्येकमेकैकाणुपर्यवसितेषु हि वेदनेषु परस्परवार्तानभिज्ञेषु भिन्नसन्ता-नेष्विव कुतश्चित्रानुभवसम्भवः ।

॥ चित्राध्यवसायः एको विकल्प इति शङ्का तत्खण्डनं च ॥

तैरेकसन्तानोद्भवैरेको विकल्पश्चित्राध्यवसायी समुत्पाद्यत इति चेत् । न । तस्याप्येकाकारत्वे चित्रप्रतिभासविरोधात् । अभिन्नस्य च भिन्नाकारतादात्म्यानु-पपत्तेः । वेदनाद्विभिन्ना एवाकाराः प्रतिभासन्त इत्यभ्युपगमे बाह्यार्थ एव प्रत्यक्षो निराकारमेव वेदनमित्यापातात् ।

अनेकवेदनानां परस्परवेदनीयत्वेन चित्रप्रतिभास इति शङ्काखण्डनम्

एतेनैतदपास्तम् । युगपदुत्पन्नानेकवेदनानां विभिन्नाकाराणां परस्परवेदनीय-त्वेनानेकाकार(क)गोचरश्चित्रप्रतिभास उपपद्यत इति । विभिन्नवेदनाकारपरिग्रहेणै-

कस्य तद्गोचरत्वे नानाकारतादात्म्यस्यैकत्वानुपपत्तेः। निराकारस्यैव तु विभिन्नवेदनाकारावभासित्वे तथैव बाह्यावभासिताया अभावप्रसक्तेः।

एकस्यानेकतादात्म्ये विरोधे च व्यवस्थिते।
चित्राद्येकनिबोधोऽपि संसिद्ध्येदुक्तया दिशा ॥ १ ॥
किं च चित्ताद्वितीयत्वे ब्रह्मा[द्वै]तनिषेधनम्।
न युक्तं न विशेषो हि पक्षयोरनयोर्भवेत् ॥ २ ॥

॥ चित्राकाराङ्गीकरणस्य ब्रह्माद्वैतवादिवेदान्तिमतसाम्यापादनम् ॥

चित्राकारता त्वेकस्य न वास्तवीत्यपि समानम्। न खलु ब्रह्माद्वैतवादिनोऽपि नीलाकारां वित्तिमभ्युपगच्छन्ति वस्तुतः, किन्त्वनाद्यविद्यावशात् आकारप्रपञ्चोऽयमवभासत इति। सर्वधर्मविहीनं प्रतिभासमात्रमप्यद्वैतं न वेदोदितब्रह्माद्वैतमतिशेत इति विफलो वेदप्रामाण्यनिरासप्रयासः विपरीतफलो वा अनेकार्थस्य स्वागमस्याप्ययथार्थतापत्तेः। वस्तुतः पुनरद्वैतमात्रस्याप्ययौक्तिकत्वमतत्परत्वं च वेदवचसामिति वर्णयिष्यते।

॥ सर्वशून्यवादस्य ब्रह्माद्वैतभेदवर्णनम् ॥

यस्तु प्रतिभासमनङ्गीकुर्वाणः सर्वशून्यवादी वैदिकाद्वैतादा[स्मी]यमद्वैतं[1] भिनत्ति स पापादपि [न बिभेति] किमस्मै प्रकटितसाहसाय वचनीयम्। यस्य वचनोच्चारणमपि न सङ्गच्छते। सङ्गच्छत एव सर्वं संवित्त्येति चेन्न। तस्याः सर्वशून्यतानुपपत्तेः। असत्वे तु यथा न वास्तवः प्रपञ्चः तथा न[2] सांवृ[तो]ऽपीति स्यात। सदसत्वयोस्तु समुच्चयवत् उभयविरहोऽप्येतस्य नोपपद्यत इति निवेदनीयम् विपर्ययविचारावसरे। अतो न सती नाप्यसती संवित्तिरित्यनुपपन्नमेव।

॥ प्रपञ्चस्य सत्वेऽपि बाध्यत्वमिति शङ्कानिराकरणम् ॥

न च सत्येव किं तु बाधवतीति विशेष इति वाच्यं, विरोधात्। कथं हि सतो बाध इति। दृश्यते तावत्किमत्र करणीयमिति चेत्; न तर्हि वास्तवी

1. आर्थीयं—मा.
2. सांप्रतोऽपि—मा.

तद्बाधकता सत्त्वविरोधात्। न च बाधकविरोधात् सत्त्वमेव तथा, तदभावे बाधकस्यापि निरालम्बनस्य निर्निमित्तस्य चानुपपत्तेः। तदेवं—

पश्यतो ब्रुवतोऽप्यर्थान् भुञ्जानस्य मुहुर्मुहुः।
वस्तु किं चन नास्तीति वचनं वञ्चनात्मकम्॥ १॥

न सन्नासन्न सदसन्न चाप्युभयशून्यता।
चतुष्कोटिविनिर्मुक्तं तत्त्वमित्यप्यसङ्गतम्॥ २॥

चतुष्कोटिविनिर्मुक्तं तत्त्वं यदि मतं सताम्।
चतुष्कोटिसमाकीर्णं तत्त्वं किमिति नेष्यते॥ ३॥

परस्परविरुद्धानां निषेधेऽपि विधाविव।
समुच्चयविरोधस्य गीर्वाणैरप्यवारणात्॥ ४॥

तदलमेताभिः प्रसक्तानुप्रसक्ताभिरद्वैतकथाभिः। प्रकृतमनुसरामः। स्थितं तावदेतन्न चित्रेऽप्यवयविनि रक्तारक्तविरोध इति।

॥ वृत्त्यनुपपत्तेः अवयव्यनुपपत्तिरिति पक्षः॥

भवतु तर्हि (प्र)वृत्त्यनुपपत्तेरवयव्यभावः। स खलु प्रत्यवयवमेकदेशेन(कार्त्स्न्ये) का[र्त्स्न्ये]न वा वर्तेत, प्रकारान्तराभावात्। न प्रथमः एकदेशान्तराभावात् भा(वो)[वे] वा तत्रापि वृत्त्यर्थमेकदेशान्तरप्राप्तावनवस्थाप्रसक्तेः। द्वितीये त्वेकावयवसंसृष्टरूपे कथमवयवान्तरसंसर्गावकाशः। नचास्यानवरुद्धमस्ति रूपान्तरमिति।

॥ उक्तपक्षखण्डनम्॥

तदप्यवद्यम्। न खल्वेकदेशः कार्त्स्न्यं वा वृत्तिर्वृत्तिहेतुर्वा, येनायमवकाशवाननुयोगः। किं तर्हि, समवायवृत्तिरेकस्यानेक(त्वमा)[त्रा]श्रीयते इति को दोषः?। परमतेऽप्येकस्यानेकसंसर्गश्चित्रप्रतिभासे स्वीकर्तव्य(ा)ः। नीलाकारावच्छिन्नस्यैव पीताद्याकारसंसर्गात्। न(व)च प्रत्याकारं प्रत्ययभेद इत्यादिःप्रपञ्चितः।

॥ निराकारज्ञानमतेऽपि अवयव्यङ्गीकारः आवश्यकः॥

योऽपि निराकारं निर्विषयमेव वेदनमङ्गीकुरुते सोऽपि प्रष्टव्यः। किं यत्प्रतिभासते तन्नास्ति किं वा न प्रतिभाति? प्रथमे सत्स्ववासत्स्वपि कथमे-

कमनेकाकारम् [न] प्रवर्तेत विशेषानुपलम्भात् । द्वितीये तु कथं बाह्येऽपि वृत्तिविकल्पावकाशः कथंचिदप्यवनसिते विकल्पानुपपत्तेरिति । किञ्चैकमेव वेदनमनेकैः कारणैः कथं तदुत्पत्त्या संसृज्यते ? स्वभाव एवास्य तादृश इति चेत् । समं समाधानमवयविन्यपि । तस्यानेकावयवव्यासङ्गिस्वभावस्य प्रत्यक्षसिद्धत्वात् ।

॥ यदनेकवृत्ति तदनेकमिति व्याप्तया अवयव्यसिद्धिरिति पक्षनिराकरणम् ॥

एवं च यदनेकवृत्ति तदनेकं य(द)[था5]नेकभाजनगतं तालफलादि अनेकवृत्तिश्चावयवी । तथा यदेकं तदेकत्रैव वर्तते यथैकं रूपमेकश्चावयवीति प्रसङ्गद्वयमपि पराकृतं मन्तव्यम् । स्वपरपक्षयोः प्रतिबन्धासिद्धेः । स्वमते तावदाश्रयाश्रयिभावलक्षणाया वृत्तेरेव वस्तुनोऽनुपपत्ते । संसर्गमात्राभिप्रायेऽपि प्रागुक्तपरिपाट्या विज्ञानेन व्यभिचारात् । परमतेऽपि वंशसूत्रादेः एकस्यानेकसंयोगवृत्तिस्वीकारात् । यथा चावयवसंयोगिभिरवयविनोऽप्यवश्यमाश्रयणीयः संयोगस्तथोपपादितम् । किं च येनैव प्रमाणेन तालफलानां अनेकेषामनेकवृत्तित्वमेकस्य रूपस्यैकवृत्तित्वं च सिद्धं तेनैवावयविनोऽपि एकस्य तस्यैव तालफलादेः अनेकावयववृत्तिरवभासमाना किं नेष्यते ?

॥ आश्रयासिद्धिप्रसङ्गादपि अवयव्यङ्गीकारावश्यकता ॥

किं चावयव्यभावे सर्वस्यास्य तन्निराकरणहेतोराश्रयासिद्धिः । तत्सिद्धौ वा तत्साधकसापेक्षत्व[ाद]स्य तद्विरोधादप्रामाण्यम् । विकल्पविलसितमवयविनमाश्रित्य चाश्रयासिद्धिनिरासे नभःकमलसौरभसाधनस्यापि साश्रयोपपत्तावाश्रयासिद्धेरेव निरवकाशत्वात् ।

॥ सत्त्वाद्घटादेः निरवयवत्वानुमाननिराकरणम् ॥

एवं चैतदप्यनवकाशम् - यत्सत्तन्निरवयवं यथा विज्ञानं संश्च विवादाध्यासितो घटादिरिति । घटादिपदेनावयविपक्षीकारे तस्य वैकल्पिकत्वप्रामाणिकत्वयोः आश्रयासिद्धिबाधयोरनपाकरणीयत्वात् । परमाणुमात्रपक्षीकारे तु सिद्धसाधनात् । विपर्यये बाधकवैधुर्येण च प्रतिबन्धासिद्धेः । प्रसङ्गाभिप्राये च विपर्ययापर्यवसायित्वात् । नचायं विवादगोचरो निरवयवस्तस्मात् न सन्निति; विपर्ययस्य सावयवत्वा-

नङ्गीकारे प्रवर्तयितुमशक्यत्वात्। तदङ्गीकारे कृतान्तविरोधात्। तस्य चासत्त्वसाधनस्याश्रयासिद्धिविरोधयोरपरिहार्यत्वादसाधारणत्वाच्चेति।

॥ अतिरिक्तावयविनि साधकप्रमाणोपन्यासः ॥

तदेवमवयविनि किञ्चनापि बाधकं न पश्यामः। साधकं तु तस्य प्रत्यक्षम्। भवति हि साक्षात्कारवती मनीषा, स्थूलोऽयमेकः पिठर इति। नचेयमवयवमात्रगोचरा, परमाण्वतिरेकिणामवयवानां अभ्युपगमे तेषामवयवित्वेन सिद्धेः, तत्समानयोगक्षेमतया च पिठरादेरप्यनपाकरणीयत्वात्। तदवयवेषु भूयःस्वणीयस्सु च भासमानेषु च स्थवीयानेकः कुम्भ इत्यपि संवादेनावयविनोऽवभासात्। एकैकावयवव्यतिरेकेण चावयवान्तरविपरिवर्तिनस्तस्योपलम्भादेक एव[1]। सहोपलम्भनियमादभेदोपपादनस्य[2] दूरपरास्तावकाशत्वात्। प्रत्येकं परिहारेऽपि येन केनचित्सहोपलम्भस्य सर्वतो भेद एवोपपत्तेः कुसुमसूत्रवत् सर्वावयवपराकरणे परमाणुमात्रे जगति विभ्रमस्याप्यैन्द्रियकस्यातीन्द्रियाधिष्ठानस्यानुपपत्तेः। प्रत्येकं समुदितानां च परमाणूनामतीन्द्रियत्वस्य प्रागेवोपपादितत्वात्।

॥ परमाणुपुञ्जग्रहणे परोक्तवनादिदृष्टान्तनिराकरणम् ॥

अत एव च वनादिदृष्टान्त[3]स्यानिर्वाहः, तत्र समुदायिनामवयविनां ऐन्द्रियकत्वेन कथं चित्तदधिष्ठानस्याभेदप्रतिभासस्याप्युपपत्तेः तस्याप्यन्यथानुपपत्तेः। प्रकृते त्वतीन्द्रियेषु तदयोगात्। भ्रान्त्युपचारयोश्च प्रधानपूर्वकत्वेन क्वचन तथाभूतस्थलसिद्धेः। समर्थितत्वाच्चान्यथाख्यातेः अत्यन्तासत्ख्यात्यनवकाशात्। बाधानाक्रान्त्या च विश्रान्तिभावव्यवस्थानुपपत्तेः, बाधस्य प्रातिभासिक[4]स्यानुपलम्भात्, यौक्तिकस्य[5] च निरस्तत्वात्। अवयव्यभावे सर्वाग्रहणप्रसङ्गस्य[6] चानुकूलस्य च भावादिति।

---

1. कुम्भ इति शेषः
2. कुम्भादेरवयवाभेदोपपादनस्य
3. परमाणुपुञ्जग्रहणे सेनावनग्रहणादयः पराभिमता दृष्टान्ताः
4. प्रत्यक्षस्य
5. यौगिकस्य—मा.
6. सर्वाग्रहणमवयव्यसिद्धेः इति न्यायसूत्रे प्रतिपादितोऽयं प्रसङ्गः एवं धारणाकर्षणोपपत्तेश्च इति समनन्तरसूत्रोक्तमपि बोध्यम्।

इत्थं..............परिमाणप्रभावितम् ।
द्रव्यत्वे सति कार्यत्वादन्त्यं सावयवं यथा ॥

॥ परमाणोः सावयवत्वप्रतिक्षेपः ॥

यश्चायमाद्यावयव्यारम्भकस्तन्न्यूनपरिमाणः [1] तं परमाणुमाचक्ष्महे । नच वचनीयं अवयवावयविपरम्पराया निरवधित्वेनाप्युपपत्तेः आद्यसावयवासिद्धावाश्रयासिद्धेरहेतुरिति । निरवधित्वे हि तस्यानन्तावयव[त्वेन मेरुसर्षपसाम्यप्रसङ्गः] ।

[तस्माद्युक्तं] स्थवीयांसो बाह्यप्रत्यक्षगोचराः ।
भासन्ते न कदाचित्तु स्थूलता वित्तिवर्तिनी ॥

एवं बाह्यस्थूलरूपसिद्धौ सिद्धः कार्यात् अस्थूलभूतः परमाणुः [2]तत्साङ्गत्वापादनस्य [3]धर्मिमानव्याव्याघाताख्यादेकघातात् । परमार्थं न खलु स्थूलमेव बाह्यम् । अपि तु परमाणुस्वरूपमपि तस्य कार्यानुमेयत्वात् । तथा हि—आद्यसावयवोत्पादितत्वाविशेषेण सुमेरुराजसर्षपयोः परिमाणभेदो न भवेत् । नचोचितम् । कारणभूयस्ताऽविशेषेऽपि तत्परिमाणप्रचयविशेषात् कार्ये परिमाणभेदो भविष्यतीति । सङ्ख्याविशेषाभावे कारणपरिमाणादिभेदस्यानुपपत्तेः । दुरुपपादश्चैवं सति कार्येषु गुरुत्वविशेषस्तदारम्भकगुर्ववयवानां सर्वत्राविशेषात् ।

॥ परमाणोः निरवयवत्वसाधनेन तस्य सावयवत्वापादकानुमानानामाभासत्वसिद्धिः ॥

स चायमाद्यसावयवावयवः [प्र]सिध्यन्निरवयव एव परमाणुः । अपरथा तदधीनजन्मनः सावयवस्याद्यत्वानुपपत्तौ तदवयवत्वेन तद्ग्राहकमेव प्रमाणमनालम्बनं प्रसज्येत । तथा च धर्मिग्राहकप्रमाणविरोधेन समस्तमेतदपास्तम् ।

---

1. तथा—मा.
2. सावयवत्वापादनस्य
3. धर्मिग्राहकमानबाधादित्यर्थः

यदाहु : —

[1]षट्केण युगपद्योगात् परमाणोः षडंशता ।
षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः ।। [इति]

दिक्प्रविभागेन वा दशांशताप्राप्तिः[2] । मूर्तत्वादिना सांशतामात्रं साधनीयम् । तथा चैतद्विरोधाद्धर्मिग्राहिण एवाप्रामाण्यम् । तथा सत्येतेषां आश्रयासिद्धिप्रसङ्गाद-वश्याश्रयणीयत्वात् तत्प्रामाण्यस्य ।

।। परमाणोः षडंशत्वनिराकरणम् ।।

किं चैकत्राप्यव्याप्यवृत्त्यनेकसंयोगोपपत्तेः कुतः षट्केण युगपद्योगेऽपि षडंशत्वम् । नचांशविषय एव संयोगः सांशेऽपि । किं तर्हि स्वरूपविषय इत्युप-पादितं प्रागेव । परमाणोः षडंशतेति च व्याहतं वचो, यथा जनयित्री वन्ध्येति । सांशत्वे हि स्वांशापेक्षया तस्याधिकपरिमाणत्वात् कथं परमाणुतेति । षण्णामेक-कदेशत्वे पिण्डः स्यात् अणुमात्रक इत्यप्ययुक्तम् ! अवयवपरिमाणादधिकतरस्य स्वकारणमहिम्नैवोपपत्तेः । द्व्यणुकादिप्रक्रमपरंपरापरिप्रापितपिण्डस्य स्थवीयस्ताविरो-धात् । दिक्प्रविभागः पुनरस्यायं पूर्वो भागः पश्चिम इत्यादिर्नास्त्येव परमार्थतः परिमाणौ । किं तर्हि द्रव्यान्तराण्यवधीकृत्य पूर्वोऽयमस्मात्पश्चिम इत्यादिप्रविभागः परमाणावेव स्यात् । परमाणुमेवावधीकृत्य द्रव्यान्तरैरेव दिक्प्रविभागः । यथाप्र[या] गमुत्तरेण हिमालयः मलयो दक्षिणेनेति । नचैवमुभयथापि दिक्प्रविभागे परमाणोर्द-शांशतापत्तिः । प्रतियोग्युपाधिभेदेनैकस्मिन्नेव नानावधिमद्व्यपदेशानामवधिव्य-पदेशानां चाविरोधात् । मूर्तत्वादेरपि विपर्यये बाधकाभावात् [3]प्रतिबन्धासिद्धिः । आकाशव्य[क्ति]भेदस्त्वसंभावितः एव, निरंशस्याशक्यसम्भेदत्वात् । नचैवमाकाशा-सर्वगतत्वप्रसङ्गोऽपि । युगपदशेषमूर्तसंयोगस्य तल्लक्षणत्वात् । परमाणुमध्यभागानां नरविषाणवदत्यन्तासत्त्वेन तदयोगेऽप्यविरोधादिति सकलमनाविलम् ।

तदेवमेष बाह्योऽर्थः स्थूलसूक्ष्मविभेदवान् ।
प्राप्तप्रमाणसरणिर्नापाकरणमर्हति ।। १ ।।

---

1. दिक्षट्केण । चतस्रो दिशः ऊर्ध्वं अधश्चेति षट्कत्वम्
2. विदिशां गणनयेत्यर्थः 3. मूर्तत्वे सांशत्वव्याप्तेरसिद्धिरित्यर्थः

॥ सहोपलम्भनियमात् वेद्यवेदनयोरभेद इति मतनिराकरणम् ॥

योऽप्ययं तदपाकरणप्रकारः, सहोपलम्भनियमात्सच्चन्द्रासच्चन्द्रयोरिव वेद्यवेदनयोरभेदः । स्वभावभेदे हि न युक्तस्तन्नियमः, प्रतिबन्धकारणाभावात् । नचेदमभिधातव्यं सहभावस्य भेदाविनाभावात् विपरीतापत्तिरि(य)ति । आभिमानिकभेदाभ्युपगमेनैव चन्द्रमसीव तदुपपादनात् एकोपलम्भविषयत्वं वा हेतुरभिप्रेयत इति । सोऽप्ययुक्तः । संवित्संवेदनीयभेदस्यासत्यस्य तथोपलभ्यमानस्यापि सत्यसंवेदनादभेदानुपपत्तौ तेनैव हेतोः सव्यभिचारित्वात् । भेदस्यापि सत्यताभ्युपगमे तत्प्रतीत्या बाधितविषयत्वात् । माभूत्सत्यभेदस्य सत्यसंवेदनादभेदो भेदनिवृत्तिमात्रं तु साध्यमभिप्रेत्य परिहरिष्यते व्यभिचारः । वेद्यवेदनभेदस्यासांवृतस्याभेदवद्भेदोऽपि नेष्यत इति । मैवम् । भेदनिवृत्तेरेव मानार्हाया अभेदरूपत्वात्तयोरेकत्र विधानवत् प्रतिषेधस्यापि विरुद्धत्वात् । असिद्धिश्च द्वेधापि हेतोः नीलमित्यनुभूयमाने बहिरर्थे तद्गोचरानुभवस्यापि तदानीं नियमेनावभासासिद्धेः । स्वसंवेदनसिद्धौ तत्सिद्धिरिति चेन्न । तत्साधनस्यैवानिरूपणात् । यः प्रकाशः स स्वव्यवहारे सजातीयानपेक्षो यथा प्रदीपः प्रकाशश्चानुभव इत्यनुमानमिति चेन्न ; प्रदीपदृष्टान्तेऽपि अवयवावयविनोः परस्परप्रकाशकतोपपत्तेः, चाक्षुषतेजोपेक्षत्वाच्च तस्य साध्यविकलत्वात् । प्रकाशत्वं च यदि बोध(स्य)[स्व]भा[व]वित्वं तदसाधारणं, भास्वररूपं च [अ]सिद्धम् । [1]शब्दसाम्याद्भेदिनः पुनरनुमितिहेतुत्वं स्वयमेव **सुगतै**र्निराकृतम् ।

॥ ज्ञानस्य स्वगतव्यवहारे परानपेक्षत्वानुमानखण्डनम् ॥

एवं चैतदप्यनवकाशं **यदाह कश्चित्** ज्ञानं स्वगतव्यवहाररूपकार्ये सजातीयपरानपेक्षं तथाभूतपरगतकार्यकारित्वात् । यद्धि तथाभूतं परगतं कार्यं करोति तत्स्वगततथाभूतकार्यजननार्थं सजातीयपरानपेक्षं यथा दीपो दीपान्तरानपेक्ष इति । दीपस्यापि पूर्वोदितदिशा[स]जातीयपरा(न)पेक्षत्वेन दृष्टान्तस्य साध्यविकलत्वात् । भवतु [वा](मही)यथा महत्वं महत्वान्तरानपेक्षं प्रत्यक्षमित्युदाहरणम् । एवमपि लिङ्गतया सजातीयलिङ्गान्तरा(न)पेक्षेणानुमितिलिङ्गेन हेतोरनेकान्तात् । लिङ्गान्तरस्यात्यन्तसाजात्याभावादनेकान्तनिरासे साध्येऽपि तादृक्साजात्यविवक्षायां व्यवसायानुव्यवसाययोः वैजात्ये सति सिद्धसाधनतापत्तेः ।

---

1. एकेन प्रकाशशब्देन बोध्यत्वात्

वेदनानां स्वसंवेदनत्वनिराकरणम्

योऽप्याह—वेदनं स्वसंवेदनं [वे](व)दनत्वात् । यदुक्तसाध्यं न भवति न तदुक्तसाधनं यथा घट इति । तस्यापि परेण परवेदने वेदनीयवेदनान्तरापेक्षत्वेन हेतोर्भागे बाधितविषयत्वम् । ततोऽन्यस्य पक्षीकारे विपक्षगामितया विरुद्धत्वम् ।

न चेदं शक्यं वेदान्तिना शङ्कितुमपि, परसंवेदनपि परोपाधौ स्वप्रकाशमेवेति । स्वप्रकाशत्वे कथंचिदपि दृश्यत्वानुपपत्तेः । उपपत्तौ वा तस्य मिथ्यात्वाविनाभावानुपपत्तेः । स्वप्रकाशस्यैकान्तसत्यताभ्युपगमात् । यदि पुनरद्वितीयामेव संविदमङ्गीकुर्वाणः परसंवेदनमेव नाङ्गीकुरुते, कस्तर्हि साधनोपालम्भयोः वचनावकाशः ? तस्य परसंवेदनपरत्वात् । भवतु परसंवेदनं, तत्त्वसत्यमिति चेत्; किमस्यासत्यत्वं ? किं संविद्रूपमेव तुच्छं, उत तद्रूपानुपमर्देन सत्यत्वमिवासत्यत्वमप्यान्तरालिकवैलक्षण्यं ? पूर्वत्रासत्ख्यातिरनिष्टा प्रसज्येत । परत्र तु विरोधस्तदवस्थः-न, सत्यत्वस्य हेतु[1]विशेषणत्वादिति चेत परसंवेदनस्याप्यविशेषत्वात् । असत्यत्वानुपपत्तौ व्यवच्छेदानुपपत्तेः । कालक्रमेण तु विसंवादाशङ्कायामपि हेतोः विपक्षव्यावृत्तिसन्देहात् । स्वसंवेदनेऽपि च तस्यार्थलभ्यत्वात् ।

॥ चक्रकदोषेण संवेदनानां दृश्यत्वेनासत्यतासाधननिराकरणम् ॥

न च दृश्यत्वादिनैव संवेदनानामसत्यतासिद्धिः, सत्यस्य स्वप्रकाशताऽसिद्धौ ततो व्यावृत्तिसन्देहेनासाधनत्वात् । प्रागुक्तसाधनेनैव स्वप्रकाशतासिद्धौ चक्रकापत्तेः । तथाहि—स्वप्रकाशतासिद्धौ व्यतिरेकसिद्धिः तत्सिद्धौ च दृश्यत्वादिना परसंवेदनानामसत्यतासिद्धिः सिद्धे च तस्मिन् सत्यत्वे सति संवेदनत्वस्य विपक्षव्यावृत्तिनिश्चयेन स्वप्रकाशतासाधनतेति ।

॥ एकैव संवित् उपाधिभेदेन भिद्यत इति वेदान्तिमतनिराकरणम् ॥

यदपि मतमेकैव संविदुपाधिभेदादेव स्वपरादिविभागिनी । तस्याःपरोपाधिसम्बन्ध एव, परवेदनीयस्वरूपं तु स्वसंवेदनमेवेति ।

---

1, सत्वत्वं—मा.

तदप्यसत् । सम्बन्ध्यधीननिरूपणस्य सम्बन्धस्य वेदने सम्बन्धिनोऽप्यवश्य-वेदनीयत्वात् । अन्यथा तत्सम्बन्ध इत्यसिद्धेः तत्सिद्धये चित्तवृत्तिरेवोभयगोचरास्तु, न संविदि संविदन्तरमिति चेत्; संविदोऽन्यस्याश्चित्तवृत्तेः प्रक्रियामात्रसिद्धत्वात् । तस्या अर्थप्रकाशात्मकत्वे संवित्त्वात् । अतद्रूपत्वे तु व्यवहारानङ्गतया तत्कल्पन-वैयर्थ्यात्; नित्यसर्वगते संवेदने विषयाणां क्रमवदवभासनिर्वाहादवैयर्थ्यमिति चेत् तर्हि यया[1] क्रमाक्रमवदवभासनिर्वाहः सैवास्तु विषयसंवित् । नित्यसंवेदनं तु सदपि सांसारिकाणामनुपयोगि । तदुपयोगस्तु परमानन्देन सहविषयविषयिभाव-निष्पत्त्या निःश्रेयस एवेति तदधिकारे निवेदयिष्यते । तस्मात्परसंबन्धा संवित्तिः संविदोऽन्यस्यागोचर इति तदवस्थो हेतोर्बाधो विरोधो वा ।

॥ संवित्स्वप्रकाशतानिराकरणम् ॥

किं च

वेदनान्तरवेद्यत्वे वेदनत्वस्य का क्षतिः ।
विपर्ययविरोधे हि व्यतिरेकः प्रसिद्ध्यति ॥ १ ॥

निरूपयिष्यते खल्वेतदनुमानावसरे विपक्षबाधकेनैव व्यतिरेकनिर्वाह इति । [2]न चात्र विपक्षबाधकमुत्पश्यामः ।

॥ अनुभूतेरनुभाव्यत्वेऽननुभूतित्वप्रसङ्गनिराकरणम् ॥

ननूक्तमेवैतदनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्ग इति । सत्यमुक्त-मयुक्तं तु तदिति युक्तिविदो मेनिरे । अनुभाव्यत्वमात्रेणासाधारणस्वभावानिवृत्तेः । घटादिवत्तन्निवृत्तौ वा विश्वशून्यतापत्तेः । तथापि वेदनान्तरवेद्यत्वे भवेदनवस्थाप्रसङ्गो बाधक इति चेन्न; वेदनानामवश्यवेदनीयत्वानभ्युपगमात् । न चैवमर्थस्यासंविदि-तत्वं प्रसज्येत । न खलु वेदनवेदनमर्थवेदनं, अपि त्वर्थगोचरवृत्तिसत्तैव । यद-व्यक्तप्रकाशं तदव्यक्तं प्रसज्येत यथा कुड्यादिस्थगितं वस्त्विति चेन्न । स्थगिते वस्तुनि वेदनानुपपत्तेः अव्यक्तता; न त्वव्यक्तप्रकाशत्वादित्युपपत्तौ व्यासद्यसिद्धेः ।

1. यया चित्तवृत्त्येत्यर्थः
2. न, चेन्न—मा.

॥ संविदः संविदन्तरकर्मत्वनिरासकानुमानखण्डनम् ॥

एवं च न संवित्संविदन्तरकर्म अतज्जातीयक्रियात्वात् । या यज्जातीयक्रिया नासौ तज्जातीयक्रियाकर्म यथा छिदा । यद्वा वेदनं स्वव्यवहारे सजातीयानपेक्षं (यस्त्वत्वा)[वस्तुत्वा]त्(य)था घट इत्यादि निरवकाशम् । सर्वथा तज्जातीयकर्मत्वे तदनपेक्षत्वे च साधनीये पूर्वोन्नीतनीत्या बाधविपक्षवृत्त्योस्तादवस्थ्यात विपक्षे च बाधकानुपलम्भात् । स्वोपाधावेव तत्साधनस्यापि अत एवानुपपत्तेः ।

॥ वेदनानां परसंवेदनत्वे प्रमाणोपन्यासः ॥

परवेदनत्वे तु वेदनानामिदं प्रमाणं-विवादपदास्पदं परेणैव वेदनीयं व्यवहारपदत्वात्; यदुक्तसाधनं तदुक्तसाध्यं यथा घटस्तथैतत्ततस्तथेति । विपर्यये तु बाधकं स्वयमेव वेदने स्वात्मनि वृत्तिविरोधः, अवेदने व्यवहारानुत्पादप्रसङ्गः । कुम्भादेरप्रकाशस्वभावस्य प्रकाशसापेक्षत्वेऽपि संवेदनस्य प्रकाशात्मकत्वात् स्वसत्तयैव व्यवहारजननमित्यभ्युपगमे परसंवेदनेऽपि तथा प्रसङ्ग इति । स्वसंवेदनस्यैष महिमेत्यभ्युपगमेऽपि स्मर्तव्यःस्वसंवेदने तत्प्रसङ्गः । वर्तमानस्वसंवेदननिष्ठोऽयं महिमेत्यभ्युपगमे, विवादपद एव विपरीतविशेषसम्भावनेन सर्वानुमितिभङ्गप्रसङ्ग इति।

॥ वेदनोत्पादमात्रेण विविदिषानिवृत्तेः वेदनस्य स्वसंवेदनता
इति वेदान्तिशङ्का ॥

नन्वेवं संवेदनमपि चेत् अस्वसंवेदनं कथं किल वेदनोत्पादमात्रादेव तद्विविदिषाव्यावृत्तिः? न खलु इष्यमाणसत्त्वेवेच्छाव्यावर्तिका । किं तर्हि; तद्वेदनम् । नो खलु तनयकामिनस्तदुत्पादमात्रादेव कामनाविनिवृत्तिः विदूरदेशवासिनोऽप्यविदिततनयोत्पादस्य तत्प्रसङ्गात् । वेदनोत्पादमात्रेण (न)तु विविदिषाव्यावृत्तिः स्वसंवेदनसंवेदनसमय एव समञ्जसा । परवेदनीयत्वपक्षे तु वेदनविषयवेदनान्तरस्य झटित्युत्पादानियमात । नियमे तु तत्तद्वेदनवेदन एवोपक्षीणस्य विषयान्तरवेदनसुष्वापयोरत्यन्तानुपपत्तेरिति ।

॥ उक्तमतनिराकरणम् ॥

न, अन्यथोपपत्तेः । न खल्विष्यमाणनिष्पादवेदनादेव इच्छाविनिवृत्तिः । किं तर्हि, तत्फलेच्छोपरमादपि । तदिह वेदनफलव्यवहारसिद्धौ तदिच्छोपरमा

दपि तदुपायवेदनेच्छोपरन्तुमर्हति । प्राप्तपयसस्तदुपायदोहनेच्छावत् । कदाचित्त्वनन्तरोत्पन्नादनुव्यवसायादपीति काममपि दोषकलां न पश्यामः । तदेवं स्वसंवेदनसंवेदनासिद्धेः न तस्य सहोपलम्भनियमो वेदनीयेनेति सिद्धम् ।

॥ सहोपलम्भनियमाभावे विदितमिदमिति वेदनेन सह विषयस्मरणस्य का गतिरिति प्रश्नः तत्समाधानं च ॥

ननु चैवमसति सहोपलम्भनियमे कथं विदितमित्येव वेदनीयं अनुस्मर्येत? न, अर्थमात्रस्मरणस्यापि बहुळमुपलम्भात् । भवति हि कदाचिदिहासीद्देवदत्त इति स्वरूपमात्रानुस्मरणम् । अथात्र तथानुभवोऽप्यत्र स्मर्यते कथमन्यथा पृष्टः प्राह-दृष्टो मया देवदत्त इति । नैतत् । अर्थमात्रानुस्मर[णेन][1]दृष्टत्वमनुमायापि तथा व्यपदेशसंभवात् । अन्यथा चक्षुषैवासौ वीक्षित इति व्यपदेशमात्रेण तस्यापि सहोपलम्भप्रसक्तेः । वस्तुवेदनानन्तरं विदितमिदं नवेति सन्देहाभा(वे)वोऽपि विनैव स(न्दे)होपलम्भनियमं विषयस्मरणलिङ्गादविलम्बितोत्पादवेदनानुमानात् । क्वचिद[न]न्तरोत्पन्नवेदनगोचरमानसावसायानुसारादुपपद्यते । मानसावसेयत्वे तु वेदनानां या काचिदनुपपत्तिः तां तदवसर एव निरसिष्यामः ।

तदेवमसिद्ध एव सहोपलम्भनियमः । सिद्धावपि तस्य सन्दिग्धा विपक्षव्यावृत्तिः, संविदां स्वपरसंवेदनतास्वभावमात्रेणैव स्वसंवेदननये वेदनवेदनीययोः युगपदवभासनियमोपपत्तेः ।

॥ वेद्यवेदनाभेदसाधकानुमानान्तरनिरासः ॥

यदप्येतत्— यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा चेतनस्यात्मा वेद्यन्ते च नीलादय इति । तत्रापि संवेदस्य तद्वेदनीयताऽसिद्धेर्दृष्टान्तस्य साधनवैकल्यं, वेदनान्तरेण व्यभिचारश्च । येन हि वेदनेन वेदनान्तरमतीतं स्वसन्ताने, सन्तानान्तरवर्ति वा वेद्येत ततस्तस्याभेदे, वेदनमद्वितीयमेव । [अ]क्षणिकतापि तस्य सम्प्राप्तेति स्यात् । ततश्च वस्तुतो वेदवा(ना)दोदितमेवाद्वैतं विधान्तरेणापन्नम् । तच्च निरसिष्यते ।

---

1. स्मरणोनु—मा.

॥ चित्रवेदनस्य चित्ताभेदे एकस्यानेकात्मतापत्तिदूषणम् ॥

किञ्च चित्रवेदनेन विचित्रा एवाकारा वेद्यन्त इति वेदनसिद्धम्। नच तेषां तद्भेदः शक्यसाधनः। एकमनेकात्मकमिति व्याघातापत्तेः। तथा च तैरेवाकारैर्व्यभिचारि वेद्यत्वम्। नचैकवेदनतादात्म्यानुरोधादळीक एवायं भेदो भासत इति वाच्यम्। तथापि तेनैव व्यभिचारात्। तस्यापि वेदनात्मतायामलीकतानुपपत्तेः। अन्यथा वेदनस्याप्यलीकतापत्तेः। भवतु तर्हि प्रत्याकारं वेदनभेद इति चेत्; न, प्रत्येकमात्माकारमन्येषु परस्परवार्तानभिज्ञेषु चित्रावभासविरोधस्य विपञ्चितत्वात्। अभिन्नमेव वेदनमनेकनीलादिगोचर इत्यनुभवविरोधाच्च।

॥ उक्ताभेदस्य वैतथ्येऽपि व्यभिचारोद्भावनम् ॥

वितथ एवायमभेदो भासत इति अभ्युपगमेऽपि व्यभिचारतादवस्थ्यात्। तस्यापि वेदनात्मतायां वेदनेऽपि वैतथ्यापरिहारात्। भवतु तर्हि भेदाभेदविधुरा एव, आकारभेदे वेद्यत्वानुपपत्तेः, अभेदे चित्रैकत्वविरोधात। न। मिथो विरुद्धयोर्विधिसमुच्चयवत् निषेधसमुच्चयोऽपि न संभवतीति निवेदितत्वात। अन्यथा विधिसमुच्चयस्य विरोधविधुरतयाऽस्यापादावतारात्[1]।

॥ भेदाभेदयोः विधिरेव न प्रतिषेध इति पक्षनिराकरणम् ॥

एतेन विधिर्न प्रतिषेधो भेदाभेदयोरित्यपास्तम्। उभयनिषेधे वोभया(त्र)ापत्तिर्विधिप्रतिषेधयोरेकनिषेधस्येतरविध्यनतिरेकात्। वस्तुन्येष दोषो नावस्तुन्याकारप्रपञ्च इति चेत्; यद्यमुष्यावस्तुत्वं अस[त्वं वि]वक्षितं न तत्तावदभासेत विपरीतानुभवात्। नापि सत्यबाधकाव[से](स्ये)यं, तदनिरूपणात्। विनिरूप्यत एव वेदनव्यतिरेकेण सतो वेद्यत्वे किंचिदेव कस्यचिद्वेद्यमिति नियामकाभावादतिप्रसङ्गो बाधक इति चेन्न। स्वयमसतोऽपि अवेदनात्मनो वेद्यत्वे किं नातिप्रसङ्गः स्यात्। स्वप्रत्ययासादितनियतगोचरवेदनस्वभावानुसारात् नातिप्रसङ्ग इति चेत्; नन्वेवं यथानुभव[मा]कारसत्तायामप्यस्तु वस्तुपरिहारः।

---

1. आपादनापत्तेः

॥ अवस्तुत्वं विचारासहत्वमिति पक्षनिरासः ॥

एतेन(।)विचारासहत्वमवस्तुत्वमपास्तम् । अनुभवानुसारेण विचारितत्वात् । एवं चैतदप्यनवकाशं-यत्प्रकाश[ते](ति)तद्वेदनं यथोभयसिद्धो वेदनभागः प्रकाशन्ते च नीलादय इति । वेदनव्यतिरेकिणोऽपि प्रकाशने प्रतिनियमाभावप्रसङ्गस्य बाधकस्य प्रागुक्तयुक्तिपरास्तत्वात् । अन्यस्यानुपलम्भात् हेतोः सन्दिग्धविपक्षवृत्तित्वात् । प्रकाशनमेव जडस्य कीदृशमिति चेत् । तत्प्रकाशस्वभावं वेदनमेव । कस्तेनास्य सम्बन्ध इति चेत् ।

॥ वेद्यवेदनयोः सिद्धान्ते सम्बन्धविशेषकथनम् ॥

केचिदाहुः—

न कश्चिदत्रोभयदत्तपादः सम्बन्धः, किं तर्हि, वेदनस्यैव तदीयस्वभावतामात्रम् । सम्बन्धान्तराभ्युपगमे तु तस्य ध्वस्तादावसंभवात् समवायातिवर्तिनश्च षट्पदार्थबहिर्भावप्रसङ्गादिति । वेदनेन सह वेदनीयस्य विषयविषयिभावाभिधानः समस्त्येव संबन्ध इत्याचार्यमतम् । स च षट्पदार्थातिरेकी । सम्भवी चातीतादावपि तद्व्यवहार इत्यादि मोक्षाधिकारे निरूपयिष्यते । किं च साध्यसाधकयोः व्यतिरेकप्रतिपत्तौ अवेदनात्मनोऽपि प्रकाशप्रसक्तेः अनेकान्तः । तदप्रतिपत्तौ च सन्दिग्धव्यतिरेकितया साधनाभासतापत्तिः ।

॥ प्रत्ययानां स्वप्नदृष्टान्तेन बाह्यानालम्बनत्वानुमानखण्डनम् ॥

यदप्युच्यते—यःप्रत्ययः स बाह्यानालम्बनो यथा स्वप्नादिप्रत्ययः प्रत्ययश्च जाग्रतः स्तम्भादिप्रत्यय इति । तत्रापि प्रत्ययत्वबाह्यालम्बनत्वयोः विरोधासिद्धेः हेतोः सन्दिग्धव्यभिचारता । यथा चान्यदन्यस्यालम्बनमित्यभ्युपगमेऽपि प्रतिनियमोपपत्तिस्तथा प्रागेव प्रतिपादितम् । साध्यविकलश्च दृष्टान्तः स्वप्नादिप्रत्ययेऽपि बाह्यार्थस्य प्रदेशादिविपर्यासेनालम्बनत्वात् । अन्यथाख्यातेः समर्थितत्वात् । यथाप्रतिभात(।)-बहिरर्थानालम्बनत्वं तर्हि साध्यमित्यपि नाशङ्कनीयम् । प्रतिबन्धप्रत्ययस्य [1]तथात्वे हेतोस्तदसिद्धिप्रसक्तेः तस्य यथार्थालम्बनत्वे तेनैव व्यभिचारादिति ।

---

1. यथाप्रतिभातबहिरर्थानालम्बनत्वे तदसिद्धिः प्रतिबन्धासिद्धिः

**तद्यथा—चक्षुःस्पर्शनसंयोगात् घटादिद्रव्यज्ञानम् । संयुक्तसमवायात् ताभ्यां घटत्वादिसङ्ख्यापरिमाणादिज्ञानम् ।**

---

इत्थं निरस्ते दुस्तर्कनिकुरुम्बे विरोधिनि ।
यथावभासमेष्टव्यः स्थूलकुम्भादिगोचरः ॥ १ ॥

अत्र मूलग्रन्थसामञ्जस्यम्

तस्मात्साध्वभिहितमेतत्**स्थूलार्थग्राहकमिति** । यदवोचदिन्द्रियार्थसम्बन्धविशेषेणेति, तदुदाहरणार्थः उत्तरसन्दर्भः । **तद्यथा चक्षुः स्पर्शनसंयोगात् घटादिद्रव्यज्ञानमिति** । तद्यथेत्युदाहरणाभिद्योतनार्थम् । चक्षुःस्पर्शनयोर्द्वन्द्वे सति संयोगपदेन षष्ठीसमासः घट आदिर्यस्य तच्च तद्द्रव्यमिति बहुव्रीहिगर्भे कर्मधारये पुनस्तस्य ज्ञानमिति षष्ठीसमासः ।

॥ मूलगतपदानां प्रयोजनम् ॥

यदुक्तमर्थ एव स्थूल इति, तत्रापि न परमाणुसमूहात्मक एवासौ । किन्तु तदुत्पादितोऽवयविविशेष इति प्रतिपादयितुं घटादिग्रहणम् । तत्प्रतिपादनप्रक्रिया तु प्रागेव प्रसङ्गतः प्रदर्शितेति न पुनः प्रदर्श्यते । अत्र चादिग्रहणेनास्मदादीन्द्रियगोचरस्यावयविनः सर्वस्य सङ्ग्रहः । तस्य रूपादिभ्यो भेदप्रतिपादनाय द्रव्यग्रहणम् । न खलु रूपाद्यतिरेकिद्रव्यमन्तरेण यद्दृष्टं मया तदेवैतर्हि स्पृश्यत इति प्रत्यभिज्ञा सम्भविनी । नचेयं भ्रान्तिरेव, प्रतिभासतो बाधवैधुर्यात् क्षणभङ्गिनीतिनिबन्धनस्य बाधस्य निरसिष्यमाणत्वात् । नचैषा रूपस्पर्शयोरेवैकतां गमयतीति हृदयङ्गमम् । न खलु यदेव रूपं दृष्टं तदेतर्हि स्पृश्यत इति कोऽपि प्रत्यभिजानाति । न[च]-रूपस्य द्वीन्द्रियग्राह्यत्वमन्धस्यापि स्पर्शतो नीलादिप्रतिभासप्रसङ्गात् । तस्मादेकैकेन्द्रियगोचरयो रूपस्पर्शयोरुभयकारणप्रतिभासानुसारि प्रत्यभिज्ञायमानमन्यदेव द्रव्यमिति युक्तं पश्यामः । प्रयोगोऽप्यत्र भवति—रूपाद्यतिरेकी घटादिरनेकेन्द्रियसम्बद्धतया प्रत्यभिज्ञायमानत्वादहङ्कारवदिति । किं च जपाकुसुमसन्निधानाभिभूतरूपमपि स्फटिकादिद्रव्यं प्रत्यभिज्ञायते नयनेनैवेति भेदसिद्धिः ।

॥ जातिगुणादिप्रत्यक्षविवरणम् ॥

तदेवं द्रव्यविषयं प्रत्यक्षं व्याख्याय जातिगुणादिविषयं व्याचष्टे—**संयुक्तसमवायात्ताभ्यां घटत्वादिसङ्ख्यापरिमाणादिज्ञानमिति ।** संयुक्ते द्रव्ये घटत्वादिसङ्ख्यादीनां समवायस्तस्मात । ताभ्यां चक्षुस्स्पर्शनाभ्यां घटत्वादिसङ्ख्यादिज्ञानं भवति । घटत्वमादिर्यस्येत्यादिग्रहणेन [1]तत्समवेतसामान्यवर्गसङ्ग्रहः । सङ्ख्या च परिमाणं च ते आदी येषामित्यनेन पृथक्त्वसंयोगविभागपरत्वस्नेहवेगकर्मणामवरोधः । घटत्वादेः सङ्ख्यादीनां च द्वन्द्वे सति ज्ञानपदेन षष्ठीसप्तम्योः विकल्पेन समासो द्रष्टव्यः । येषां चक्षुः संयुक्ते समवेतानां चाक्षुषं ज्ञानं स्पर्शनसंयुक्ते समवेतानां स्पार्शनमित्यर्थः ।

॥ सङ्ख्यादीनां पृथक्गुणत्वाभावः ॥

इह सङ्ख्यापरिमाणपृथक्त्वविभागपरत्वापरत्ववेगानां कणव्रतमते पृथग्गुणता निरूपितापि नाचार्यस्याभिमता कर्मणश्च गुणवर्गान्तर्गतिरभिमता । तदेतत् विपञ्चितं **न्यायभूषणे ।** तदभिप्रायमतिगम्भीरमविद्वांसो ये दूषयाम्बभूवुः तदपाकृतये तदर्थमेव विशदीकुर्मः ।

॥ सङ्ख्याया गुणत्वनिराकरणम् ॥

सङ्ख्यायास्तावन्न गुणत्वं युक्तम् । सा खल्वेकानेकभेदेन समासतो द्वेधा तत्राभेद एवैकत्वं भेद एव चानेकत्वम् । अभेदभेदौ च रूपादिष्वपि भवत इति कथमेतयोर्गुणता । नचैताव(द)भेदभेदौ वस्तुस्वरूपानतिरेकिणावभिमतौ; येन स्वरूपाणामननुगतेः अनुगतैकादिव्यवहाराभावप्रसङ्गः । परस्पराभावस्तु भेदाभिमतः । स च भावादतिरिक्त एवेति वर्णयिष्यते । तत्प्रतिद्वन्द्वी[च](य)ाभेदो नाम धर्मभेदो विवक्षितो यदनुरागादनेकेष्वभिन्न इत्यनुगताकारा प्रख्या ।

॥ भूषणखण्डनपरकिरणावलीमतम् ॥

तथा च स्वरूपपक्षमभिमतमाचार्यस्य मन्वानः स्वयमनुगतरूपं एकत्वादि अनुगतरूपव्यवहारानुसारेणोपपाद्य यदाह **किरणावलीकारः** "एतेन च

---

1. घटसमवेतेत्यर्थः

स्वरूपाभेद एकत्वं, भेदस्तु नानात्वं द्वित्वमिति **भूषणः** प्रत्याख्यातः। स्वरूपाभेदो हि घटस्य घट एवोच्यते। घटादिस्वरूपप्रत्ययस्य च घटाद्येकनिबन्धनत्वात्। एकादिप्रत्ययस्य च घटपटादिसाधारणत्वात्। तथा च तन्निबन्धन एकादिप्रत्ययः तं विहाय पटं नोपसंक्रामेत्। एवं स्वरूपभेद एव यदि द्वित्वं, तदा त्र्यादिष्वपि द्वित्वप्रत्ययः स्यात्। घटादावेव वा स्वरूपभेद इति पटादौ द्वित्वप्रत्ययो न स्यादिति। (किर. पुट. 193)

॥ किरणावल्यभिप्रायनिराकरणम् ॥

तदपाकृतमनङ्गीकृतत्वात् स्वरूपपक्षस्य। तथा च वचनव्यक्तिः**राचार्यस्य** "अभेदभेदौ च स्वात्मपरात्मापेक्षौ च रूपादिष्वपि भवतः। न तयोर्गुणत्वादिकल्पना" इति। स्वरूपपक्षे(ऽपि)[हि] स्वात्मापेक्षाविति च रूपादिष्विति च न स्यात्। न ह्यस्ति सम्भवः स्वरूपमेव रूपादीनां स्वापेक्षं परापेक्षं वा निरूप्यत इति। नापि स्वरूपमेव रूपं रूपादिष्विति। न खल्वत्यन्तं सुशिक्षितोऽपि स्वस्कन्धमधिरोहति। स्वरूपमेवाधिकृत्याधिकरणनिर्देशो भेदसमारोपनिबन्धन इत्यभ्युपगमेऽपि न तयोर्गुणत्वादिकल्पनेति वाक्यशेषो विरुद्ध्येत, रूपादिस्वरूपस्य गुणत्वापरिहारात्।

॥ एकत्वादेः धर्मिस्वरूपत्वपक्षनिरासः ॥

किं च गुणलक्षणं सङ्ख्यादिषु न युक्तं लक्ष्यासिद्धत्वादिति चेदित्याशङ्क्य न यौक्तप्रत्यक्षसिद्धत्वात्। तथाहि-एकादि प्रत्ययाः विशेषणग्रहणापेक्षाः, विशिष्टप्रत्ययत्वाद्दण्डीति प्रत्ययवदिति वस्तुविशेषणैकत्वादिप्रत्यये प्रतिपादिते, तदभ्युपगच्छन्नेवाह- "एवमपि सत्त्वादिवदेकत्वादेः कथं गुणत्वसिद्धिः" इति न सर्वं स्वरूपपक्षे समञ्जसम्। नचानेकत्वं [द्वि]प्रत्ययमात्रनिमित्तमुक्तं; येन त्र्यादिष्वपि प्रत्ययः स्यादित्यतिप्रसङ्गः[1] किन्तु भेदाः अनेके (त्वनेकै)अवान्तरोपाधिभेदात्, क्वचिच्च त्रय इत्यादि प्रत्ययं च नियतमुपजनयन्तीति मतम्।

॥ द्वित्वादिकं उपाधिभिन्नानेकत्वपर्यायः ॥

यत्तु द्वित्वादिरप्यनेकत्वपर्याय इत्युक्तं, तदुपाधिभिन्नानेकत्वपर्याय इति योजनीयम्। अन्यथाऽनन्तरमेवोपधिभेदनिरूपणस्यासङ्गतिप्रसङ्गात्। तथा च कथं

1. मा. प्रसङ्गजो भेदः किन्त्वनेकैव

तर्हि द्वेत्रीणीत्यादिप्रविभाग इत्यादिना पर्यनुयोगपूर्वकं अपेक्षाबुद्धिप्रतिबन्दिमुपादा-योपसंहर[णे उपाधि]भेदादेवोपपादयामास। तस्मादभिन्नं तावदेकमित्युच्यते तद-परेणाभिन्नेन सह द्वे इत्यादि।

तत्रायमर्थसंग्रहः।

सैकमेकं द्वयं सैकं द्वयं त्रयमुदीर्यते।
सैकं पूर्वनिमित्तं स्यात्सर्वत्रोत्तरवेदने ॥ १ ॥

गणितज्ञप्रसिद्ध्यापि निमित्तमनुगम्यताम्।
पञ्चविंशतिभिः षड्भिः यथा सार्धं शतं भवेत् ॥ २ ॥

न गुणेष्वपि गौणी स्यादित्थं सङ्ख्याप्रकल्पने।
द्वित्वाद्युत्पत्तिवादेऽपि नान्यदस्ति नियामकम् ॥ ३ ॥

॥ द्वित्वाद्युत्पादे नियामकाभावकथनम् ॥

नो खलु समवाय्यसमवायिनिमित्तानां अविशेषे द्वित्वत्रित्वा[द्यु]त्पादनियम-सम्भवः। न च वचनीय द्वाभ्यामेकत्वाभ्यां द्वित्वं त्रिभिस्त्रित्वमित्यारभ्यत इत्यादि।

[1]एकत्वाधारद्वित्वानङ्गीकारात्। न च द्वाभ्यां द्वित्वं त्रिभिः त्रित्वमित्याद्यपि युक्तं, द्वित्वोत्पत्तेः पूर्वं तत्र द्व्यादिव्यवस्थाया निर्निबन्धनत्वात्। सङ्ख्यान्तरसद्भावे तु अपूर्वोत्पादवैयर्थ्यं, अनवस्था च। नचापेक्षाबुद्धेरपि स्वरूपगत एव विशेषः। साक्षात्कारा(द)[दे र]तिप्रसङ्गित्वात्। अन्यस्य चानुपलम्भात्। अदृष्टभेदा(नि)[न्नि]यम इत्यभ्युपगमेऽपि सैव सामग्री कदाचित्कस्यचित द्वित्वं कस्यचित् त्रित्वमारभेतेति तावदेष्टव्यम्। कश्चिद्द्वयं प्रतीयात् कश्चित् त्रयम्। नचान्यतरो विभ्रान्त इत्यपि स्यात् पुंसामदृष्टस्याव्यवस्थितत्वात। तद्व्यवस्था तु क्वचिदृष्टोपाधिनैवोपपादनीया, यथोर्ध्वगतावग्नित्वं तिर्यग्गतौ पवनत्वमिति। न च द्वित्वाद्यभिमानभेदो नियामकस्त-भिमानस्यैवापेक्षाबुद्धिमन्तरेणासिद्धेः। तद्बोधाय त्वभिमानान्तरापेक्षायां अनवस्थितेः।

---

1. बहुव्रीहिरयम्

इत्थमेतेषु पक्षेषु निरस्तेषूक्तयुक्तिभिः ।
कर्ता तु किरणावळ्याः स्थिरपक्षमुवाच यम् ॥

॥ किरणावल्युक्तस्थिरतापक्षः ॥

"यथा पाके समवाय्यसमवायिनिमित्तानां साम्येऽपि रूपाद्यभावापेक्षसामग्रीविशेषाद्रूपरसाद्युत्पत्तिनियमः, तथाऽपेक्षाबुद्धेः स्वविषयसमानाश्रयद्वित्वाद्यभावापेक्षया द्वित्वद्युत्पत्तिनियमः । तर्हि नैकपुरुषापेक्षाबुद्धिजनिते द्वित्वे सति पुरुषान्तरापेक्षाबुद्ध्या तथाभूतद्रव्ये द्वित्वमुत्पद्येत । न, संख्याया नियतपुरुषवेद्यतया तन्नियमेनैव स्वभावस्य विवक्षितत्वादिति न दोष" इति, (किर. पु. २०३)

॥ अस्य पक्षस्यास्थिरत्वोपपादनम् ॥

[1]तस्याप्यस्थिरतैव, समवायिन्युत्पादनीयनिखिलरूपाद्यभावसहकारिपाचकसंयोगभेदादपर्यायमशेषरूपाद्युत्पादवदशेषद्वित्वाद्यभावसहकार्यपेक्षाबुद्धिभेदात्तावत्येवाशेषसङ्ख्योत्पादप्रसङ्गात् । स्वविषयाधारमात्राश्रय(।)सङ्ख्याप्रागभावः सहकारी न त्वतिरिक्ताधारोऽप्युत्तरसङ्ख्याप्रागभाव इत्यप्ययुक्तम् । स्वप्रागभावातिरेकिण एव सर्वत्र कारणवैलक्षण्यस्य कार्यप्रतिनियमप्रयोजकत्वात्, पाकजोत्पादेऽपि पूर्वरूपादिध्वंसानां निमित्तान्तराणां च बहुलमुपलम्भात् । न च प्रकृतेऽपि पूर्वद्वित्वध्वंसः सहकारीति वाच्यम् । सम्प्रत्युत्पन्नद्रव्याधिकरणद्वित्वाद्युत्पादे तदसम्भवात् । नचान्वयव्यतिरेकाभ्यामन्यत्र विदितोऽपि कारणनियमः शक्यः परित्यक्तुम् । तथा सत्यसमवायिचेतनपूर्वकत्वादिनियमानामपि भङ्गप्रसङ्गात् ।

शुद्धापेक्षाबुद्ध्या द्वित्वं द्वित्वसहितैकत्वबुद्ध्या त्रित्वमिति पक्षस्यापि निराकरणम्

यः पुनरयं पक्षः, शुद्धयाऽपेक्षाबुद्ध्या द्वित्वं, द्वित्वसहितैकत्वबुद्ध्या त्रित्वमित्यादि । स [2]स्वयमेव निरस्तः । सेनावनादावसङ्गतेः तत्र नियतसङ्ख्यासहितैकत्वनिरूपणाभावात् । अनियतैकालम्बनापेक्षाबुद्धेः अवान्तरविशेषशून्यं बहुत्व-

---

1. यं स्थिरपक्षमुवाच तस्याप्यस्थिरतैवेत्यर्थः
2. उदयनेनेत्यर्थः

मुत्पद्यत इति पक्षेऽपि घटत्वादिविशेषरहितमूर्तिकोपलम्भ इव निर्विशेषबहुत्वोपलम्भेऽपि विशेषसन्देहानुपपत्तेः । अङ्गान्तरोपचयप्रत्ययक्रमेण महती महत्तरा सेना इत्यादिव्यवहारानुपपत्तेश्चेति ।

॥ उपाधिभेद एव सङ्ख्याव्यवहारे हेतुरिति स्वमतोपसंहारः

तस्मादस्माभिरुक्ती[त]मपेक्षाबुद्धिगोचर[म्] ।
उपाधिभेदमुल्लङ्घ्य न सङ्ख्या नियता भवेत् ॥ १ ॥

तदुपाधिविशेषस्य स्वीकारे तन्निबन्धना ।
सङ्ख्याव्यवहृतिः सिध्येद्वृथा सङ्ख्याऽतिरेकिणी ॥ २ ॥

नचैवं सति कार्यकल्प्य एवापेक्षाबुद्धेरान्तरालिकभेदः, स च सत्तयैव द्वित्वाद्यारभते नतु तद्व्यवह[रम्](र)विषयविशेषनिरूपणमन्तरेण व्यवहारानिष्पत्तेरिति शङ्कनीयम् । स्पष्टदृष्टं विषयविशेषमुल्लङ्घ्यापेक्षाबुद्धेरान्तरालिकरूपभेदस्यातीन्द्रियस्याकल्पनीयत्वात् । दृष्टस्य तूपाधेरवश्याभ्युपगमे तत एव सङ्ख्याव्यवहारोपपत्तौ सङ्ख्यावैयर्थ्यादुपाधेश्चोभयाधीननिरूपणत्वादुभयाश्रितद्वित्वावभासोऽप्युपपन्न इति न किंचिदवद्यम् ।

तस्मादनेकताभेदेऽप्यान्तरालिकभेदतः ।
द्वित्वत्रित्वचतुष्ट्वादिव्यवहारव्यवस्थितिः ॥ १ ॥

तथाचाभेद एकत्वमनेकत्वं च भिन्नता ।
तयोश्च गुणवृत्तित्वान्न गुणत्वमिति स्थितम् ॥ २ ॥

॥ सङ्ख्यायाः परिमाणासमवायिकारणत्वस्यापि त्यागः ॥

कथं पुनरगुणत्वे परिमाणासमवायिकारणत्वं सङ्ख्याया इति चेन्न; कथञ्चित्कारणपरिमाणस्यैव कार्यपरिमाणं प्रति सर्वत्रासमवायिकारणत्वोपपत्तेः ॥

॥ परिमाणस्य सजातीयोत्कृष्टपरिमाणारम्भकत्वनियमात् परमाणुद्व्यणुकपरिमाणयोः तदनारम्भकत्वपक्षः ॥

स्यान्मतं—द्व्यणुकपरिमाणस्याणुत्वेन त्र्यणुकमहत्त्वारम्भे सामर्थ्यासम्भवः । समानजातीयस्यैव परिमाणस्य परिमाणतः तारतम्येनोत्पत्त्यवगमात् । तथा च कारण-

बहुत्वमेव तत्रासमवायिकारणं तदुत्कर्षानुसारिणः कार्यपरिमाणोत्कर्षस्यान्यत्रापि दर्शनेन कारणत्वावधारणात्, प्रत्यासत्तेश्च । तथा द्व्यणुकपरिमाणस्यापि परमाणुद्वित्वमेवासमवायि, परमाणुपरिमाणारभ्यत्वे ततोऽप्यणुतरत्वप्रसक्तेः सजातीय एव तरतमभावभाविपरिमाणस्य कारणतावधारणात् । नित्यपरिमाणस्य चानारम्भकत्वात् अम्बरपरिमाणवत् । परमाणुपरिमाणत्वेन च तदनारम्भकत्वात् (पुनः)मनःपरिमाणवदिति ।

॥ परिमाणस्य कार्यवर्तिस्वतोऽधिकपरिमाणारम्भकत्वनियमेन उक्तनियमाप्रामाण्यम् ॥

तदसत् । यथा खलु समानजातीय एव तरतमभावभाजि सामर्थ्यनियमः परिमाणस्य तथा कारणपरिमाणं कार्यवर्तिस्वतोऽधिकपरिमाणमारभत इत्यपि नियम एव । तथाप्येकत्र विरुद्धस्वभावासम्भवादन्यतरस्य नियमाभासत्वे कस्मात्कार्यवर्त्यधिकपरिमाणारम्भनियम एव नाभासीभवेदिति चेन्न । तथा सति कारणपरिमाणं कार्यपरिमाणमारभत एवेति कार्यपरिमाणं च कारणपरिमाणारभ्यमित्यपि नियमयोर्भङ्गप्रसङ्गात् ।

॥ सजातीयारम्भकत्वनियमभङ्गस्वीकारः ॥

यत्रापि हि सङ्ख्याप्रचयप्रकर्षानुविधायिप्रकर्षतया कार्यपरिमाणस्य तदधीनताव्यवस्थितिः, तत्रापि कारणपरिमाणं न तदारम्भ उदास्ते । विदितसामर्थ्यस्यापि सामग्रीमध्यमध्यासीनस्योदासीनत्वे सर्वकारकाणां तथाभावप्रसक्तौ न कदाचित् किञ्चन जायत इति प्रसक्तेः । तन्न्यूनपरिमाणसमानसङ्ख्यकारणारब्धात्प्रकृतकार्यपरिमाणप्रकर्षानुपपत्तेश्च । तथा चोक्तनियमद्वयसिद्धौ [1]तद्भङ्गोऽपि यद्भङ्गतो भवेन्नासौ भञ्जनीयः । यदि खलु सजातीयनियममवधूय कार्यवर्त्यधिकपरिमाणमात्रारम्भकत्वं कारणपरिमाणस्य न स्यात् तदा सजातीयस्य कार्यवर्ति(नो)नः सम्भवासम्भवतश्चाधिकस्य अनारम्भात् कार्यपरिमाणस्य कारणपरिमाणारभ्यत्वनियमः कारणपरिमाणस्य च तदारम्भकत्वनियमः प्रमाणपरिकल्पितो विहीयेत । तस्मात्त्यजेदेकं कुलस्यार्थे इति न्यायेन सजातीयनियम एव बाध्यः । सहचारदर्शनव्यभिचारादर्शनजन्मा नियमभ्रमोऽयमिति व्यवस्थाप्यते ।

---

1. उक्तनियमभङ्गः यद्भङ्गतः परिमाणस्य कार्यवर्त्यधिकपरिमाणारम्भकत्वनियमभङ्गतः असौ अधिकपरिमाणारम्भकत्वनियमः इत्यर्थः

॥ अणुपरिमाणस्य विजातीयमहत्वारम्भकत्वाङ्गीकारः ॥

न च विजातीयारम्भे परिमाणस्य विरोधं पश्यामः । अणुत्वमहत्वयोः विरोधितयैकजातीयकार्यानारम्भकत्वं इत्यपि न वाच्यम् । कार्यपरिमाणान्न्यून[परिमा]-(कार)णत्वेन तदारम्भप्रयोजकरूपेण[ा] विरोधात् । आन्तरालिकभेदनिबन्धनस्तु विरोधः सङ्ख्यापक्षेऽपि समानः । त्रित्वबहुत्वाद्यवान्तरभेदस्य कार्यतारतम्योपयोगात् [आन्तरालिक]भेदेन विरोधश्चेत्समः समाधिः । यथा हि पार्थिवरूपमाद्यं [1]पाकात् उत्तरन्तु रूपादेरिति व्यवस्थितिः तथा आद्यमहत्वमणुत्वादेवोत्तरं पुनरान्त्यावयविनो महत्वादेवेति विषयभेदेनाविरोधात् ।

॥ सर्वत्र परिमाणमेव परिमाणारम्भकमित्यत्र अनुकूलतर्कप्रतिपादनम् ॥

नन्वेवं सति सङ्ख्यैवासमवायिनी क्वचित् क्वचित्तु कारणपरिमाणमित्यप्यविरोधादनुकूलतर्कशून्यः कारणपरिमाणारम्भ्यत्वादिनियमोऽपीति चेत् । नैवम् । अवधृतशक्तिप्रत्यासत्तिभ्यामेकस्यैवानुगतस्यासमवायितोपपत्तौ अनेकासमवायिकल्पनानुपपत्तेः । नचैतादृशि विषये प्रत्यासत्तिमात्रं प्रयोजकं, सत्यप्यात्मान्तःकरणसंयोगे विदितसामर्थ्ये प्रत्यासत्तिमात्रेण सुखादौ धर्मादेरसमवायितापत्तेरनिष्टेश्च । तत्र यथा धर्माद्युत्कर्षादुत्कृष्यमाणेऽपि सुखादौ निमित्तमेव धर्मादि, तथा सङ्ख्याप्रचयप्र[कर्षा](चक्षुषया]धीनप्रकर्षेऽपि परिमाणे निमितमेव सङ्ख्यादि । स्वन्यूनकारणपरिमाणमेत्र त्वनुवर्तमानमवसितसामर्थ्यं असमवायीति युक्तम् । न च महत्वोपाधिकसामर्थ्यावसायदीर्घत्वाव्याप्तेरति व्याप्तिः अन्त्यावयविमहत्वादौ तथा दीर्घत्वस्याप्यनुपाधिता योजनीया । तस्मात्कारणवर्तिन्यूनपरिमाणमित्येव कार्यपरिमाणासमवायित्वे प्रयोजकम् । तदवान्तरभेदात् परमाणुत्वादणुत्वं द्व्यणुके । तत एवाद्यमहत्वं, ततो महत्तरत्वमित्यादिकमूह्यम् । तथा परमह्रस्वत्वात् ह्रस्वत्वं द्व्यणुके, ततो दीर्घत्वं, ततो, दीर्घतरत्वमित्यादि द्रष्टव्यम् ।

---

1. वैशेषिकनये परमाणौ पाकाद्रूपं तद्रूपेण द्व्यणुकादिरूपमित्यङ्गीकारात् । अद्यमहत्वं त्र्यणुकमहत्वम् ।

॥ उदयनोक्तदूषणानामनवकाशत्वोपपादनम् ॥

एवं चाणुजातीयादपि महत्वोत्पादे द्व्यणुकेऽपि महत्वमेव भवेत्। तथाऽणुतरत्वस्य न्यूनस्य स्वतोऽधिकद्व्यणुकाणुत्वारम्भकत्वे ततोऽन्यस्यापि ततोऽधिकमणुजातीयमेवारभ्यं प्रसज्येत, न त्वधिकमपि महत्वमित्यपि पर्यनुयोगद्वयं परास्तावकाशम् ।

॥ मतान्तरेऽप्येवमापत्तिः ॥

तत्त[त्परि]माणपरिकलितकार्यपरिमाणस्य स्वन्यूनकारणपरिमाणारभ्यत्वनियमे दृष्टानुसारतः सिद्धे तदनुपमर्दार्थिमुन्नीतनीत्यापि व्यवस्थोपपत्तौ गोमयपायसीयन्यायानवकाशात् । अन्यथा तु अमहतो द्व्यणुकस्य महत्समवायित्वे परमाणोरपि तथाभावप्रसङ्गः; परमाण्वारब्धस्य चामहत्वे [1]तदारब्धमप्यमहदेव स्यादमहत्समवायित्वाविशेषादित्यपि दुष्परिहरौ पर्यनुयोगौ ।

॥ अण्वारब्धत्वेन द्व्यणुकपरिमाणस्य महत्वप्रसञ्जने बहुपरमाणुभिः महदारम्भप्रसङ्गः ॥

अपि चाणुत्वजातीयारभ्यत्वाविशेषेण ये द्व्यणुकपरिमाणस्य महत्वं प्रसञ्जयन्ति तेषां बहुत्वाधीनेऽपि महत्वे परमाणुभिरपि बहुभिर्महदारम्भप्रसङ्गः केन वारणीयः । कार्यद्रव्येणैव महतः कार्यद्रव्यस्यारम्भनियमेनेति चेत्; हन्तैवं कार्यद्रव्यकार्यता कार्यद्रव्यमहत्वे प्रयोजिकेति प्रतिपादितं स्यात् । तथा च तद्वैकल्यादेव परमाणुपरिमाणमपि [न] द्व्यणुके महत्वमारभते; किं तर्हि ? [2]केवलस्याणुत्व एव सामर्थ्यमित्यस्तु ।

॥ बहुपरमाणुभिः द्वाभ्यां द्व्यणुकाभ्यां च कार्यारम्भस्वीकारः ॥

तथापि एतस्मिन् मते बहुभिरपि परमाणुभिः अण्वारम्भो द्वाभ्यामपि द्व्यणुकाभ्यां महदारम्भोऽपि भवेदिति चेत् । सत्यं, नास्त्येव विरोधः किं तु मिथ्याभिनिवेश एवायं **कणव्रत**मतानुवर्तिनाम्, यत् बहुभिः परमाणुभिः द्वाभ्यां च द्व्यणुकाभ्यां नारम्भ इति । न च बहुपरमाण्वारब्धे महत्वप्रसङ्गः कारणबहुत्व-

---

1. द्व्यणुकारब्धम्
2. केवलस्य कार्यद्रव्यमहत्वप्रयोजकरहितस्य परमाणुपरिमाणस्य

मात्रेण; तस्य स्वसमवायिद्रव्यकार्यतामनपेक्ष्य तदप्रयोजकत्वव्यवस्थितेः । सङ्ख्यातारतम्यं तथापि परमाणुषु क्वोपयुज्यत इति चेत् । तदारब्धद्रव्याणुत्वाधिक्यतारतम्ये निमित्तभावेनेत्यस्तु । तथाऽऽधिक्यतारतम्यमपि तदारभ्यमहत्वतारतम्य एवोपयोगि भविष्यति, कारणपरिमाणप्रकर्षानुविधायिनः कार्यपरिमाणप्रकर्षस्य दृष्टानुसारित्वात् ।

॥ परमाणुपरिमाणस्य नित्यपरिमाणत्वादनारम्भकत्वमिति पक्षनिरासः ॥

यत्पुनः परमाणुपरिमाणस्यानारम्भकत्वे साधनं नित्यपरिमाणत्वादम्बरपरिमाणवदिति । तदसत् । अम्बरपरिमाणस्यानारम्भकत्वे चरमावयविपरिमाणवदप्यनारम्भकाधारपरिमाणत्वेन सहकारिविकलत्वस्योपाधित्वात् । कारणद्रव्यपरिमाणं हि तत्कार्यद्रव्यसमवायिकारणसापेक्षं [1]तत्र परिमाणमारभत इति स्थितिः। ततोऽपेक्षणीयवैधुर्यादेवानारम्भोपपत्तिरन्त्यावयविपरिमाणवदम्बरपरिमाणस्यापीति साम्प्रतम् ।

तथा च परमाणुपरिमाणत्वान्मनः परिमाणवदिति परास्तम् । तत्राप्युन्नीतोपाधिसम्भवात् ।

॥ द्व्यणुके महत्परिमाणारम्भः स्यादिति शङ्का ॥

नन्वेवमपि परमाणुपरिमाणेन द्व्यणुके महत्वारम्भाभ्युपगमेऽपि को दोषः ? कारणबहुत्वादे[रे]व महत्वारम्भकत्वनियमखण्डनात् परमाणुपरिमाणात् द्व्यणुकपरिमाणाधिक्यस्य अवश्याभ्युपेयत्वात् । अन्यथा कारणादधिकपरिमाणं कार्यद्रव्यमिति स्थिते[ः वि]प्लवप्रसक्तेः । अणुप्रतियोगिकस्य चाधिक्यस्य महत्वाव्यभिचारात् । न च द्व्यणुकस्य महत्वविशेषवतश्चाक्षुषत्वप्रसङ्ग इत्यपि वाच्यम्; सावयवद्रव्यसमवायविरहादपि तद्विरहोपपत्तेरिति ।

॥ पूर्वपक्षमभ्युपगम्य सिद्धान्तकथनम् ॥

सत्यम् । एवमप्यविरोध एव । तथापि कारण[समा]हारनिरूपितमणुपरिमाणमभ्युपगम्यापि द्व्यणुके तस्य महत्वासमवायिकारणभावोपादनेन सङ्ख्यायास्तावत् असमवायिकारणत्वं शक्यनिराकरणमित्येतावतैवाभिप्रायेण प्राचीनपक्षोपन्यास इति

1. कार्यद्रव्यरूपं यत्समवायिकारणं तत्सापेक्षमित्यर्थः

सन्तोष्टव्यम् । तदेवं सङ्ख्यायाः परिमाणकारणत्वासम्भवात् तन्निमित्त[त्व]स्य च गुणत्वव्यभिचारात् न सङ्ख्या गुण इति व्यवस्थितम् ।

॥ अनेकसङ्ख्याया भेदरूपत्वशङ्का तामभ्युपेत्य एकसङ्ख्यायाः सामान्यरूपतासिद्धान्तः ॥

अथ माभूद्गुणः सङ्ख्या, भवतु च परस्पराभावपर्यायो भेद एवानेकसङ्ख्या । तदवान्तरोपाधिभेदव्यवस्थापिताश्च सन्तु द्व्यादिव्यवहाराः । तथापि एकसङ्ख्या क्वान्तर्भवेत् ? सत्त्व प्रति(बा)[बो]धमुपादाय समर्थ्यतां सामान्यरूपता । तथा हि सत्याचार्यवचनमिदमाञ्जसं स्यात् "नहि सदादिप्रत्ययवदेकादिप्रत्ययः क्वचिन्न सम्भवती"त्यादि । आदिग्रहणं पुनरनेकसङ्ख्याया अप्यन्योन्याभावातिरेकाभ्युपगमेऽपि सामान्यरूपतासिद्धेर्न गुणत्वमित्यभिप्रायेणेति मन्तव्यम् । नचान्यूनानतिरिक्त(ां)सामान्यानां अभेदप्रसङ्गः, विरुद्धधर्माध्यासाभावात् इति वाच्यं; व्यञ्जकवैचित्र्यादेकनिश्चयेऽप्यन्यानिश्चयेन भेदप्रसिद्धेः । प्रतिनियतनिमित्तव्यञ्जनीया हि द्वित्वादय इति । तत एव सत्वैकत्वयोरभेदः प्रत्युक्तः अन्यथा 'सन्तमानय' 'सन्तमभिधास्ये' इत्यादावेकमनेकं वेति सन्देहो न स्यात । विशिष्टबुद्धिव्यङ्ग्यता तु द्वित्वादेर्न विरोधिनी । योनिसम्ब[न्ध](द्ध)बुद्धिबोधनीयब्राह्मण्यवत् । एकैकश[ब्दो]परक्तव्यवहाराजनकत्वं तद्द्वित्वादेः सामान्यरूपत्वेऽप्यान्तरालिकस्वभावभेदादविरोधि । तथा च सामान्यरूपत्वेऽपि द्विसङ्ख्याया न दोषः ।

॥ यद्वा सामान्यप्रतिरूपको धर्मः सङ्ख्येति पक्षः ॥

यद्वा सामन्यप्रतिरूपक एवासौ धर्मः समर्थ्यताम् । तथा सति सामान्यादावपि मुख्यस्तद्व्यवहारो लभ्येत । सन्ति च तादृशा धर्मा इति सामान्यप्रस्तावे वक्ष्यते । षट्पदार्थव्यवस्थाभ्युपगमेऽपि न सङ्ख्याया गुणत्वसिद्धिरित्येतावताऽभिप्रायेण सामान्यं [1]सङ्ख्येत्युपपादितमाचार्येणेति मन्तव्यम् ।

"तदेवं न गुणः सङ्ख्या गुणे भावेन सत्त्ववत् ।
उपचारसमासोऽपि व्युदासाद्बाधहानितः ॥"

---

1. मा. सङ्ख्येत्यापादितम्

॥ परिमाणस्य गुणत्वाभाववादिमतनिरूपणम् ॥

' अन्ये तु परिमाणस्यापि गुणत्वं नेच्छन्ति । महदादिव्यवहारस्यापेक्षानिबन्धनत्वात । नच गुणेष्वेवं व्यवहारः । नहि रूपादिषु शुक्लादिव्यवहारः कृष्णाद्यपेक्षः'' इति **न्यायभूषणम्** । तत्रान्यग्रहणमनभिमतिमात्मनः[1] प्रतिपादयितु**माचार्यस्य,** किंवा मतान्तरसंवादेन स्वमतमेव द्रढयितुमिति । द्वितीय एव पक्षः, परमतमप्रतिषिद्धमनुमतं भवतीति न्यायात् ।

॥ भूषणकृतामभिप्रायप्रदर्शनम् ॥

अयं पुनरत्र तात्पर्यार्थः तिर्यग्देशव्याप्त्याधिक्योपाधिः महच्छब्दः तादृग्देशव्यापित्वन्यूनतोपाधिरणुशब्दः, न्यूनाधिकसङ्ख्याविषयत्वमेव च व्याप्तेर्न्यूनाधिकभावः, न्यूनाधिकसङ्ख्यानिबन्धना चापेक्षा[ बुद्धिः । ] सत्यपि चोत्तर(ा)सङ्ख्यायाः स्वरूपतोऽ[ पि ]पूर्वसङ्ख्याधीननिरूपणत्वे न पूर्वासामुत्तराधीननिरूपणत्वं रूपतः । न्यूनपदप्रवृत्तिः पुनरुत्तरसङ्ख्याप्रतीतिं रूपतोऽपेक्षत इति नान्योन्यसंश्रयापत्तिः । दीर्घह्रस्वशब्दावप्युपर्यधोभावावच्छिन्नप्रदेशव्याप्त्याधिक्यन्यूनतानिमित्तावेव । तथा च समिदिक्षुवंशादिषु भाक्तो ह्रस्वव्यवहारः कुवलादावणुव्यवहारश्चेति परास्तम्, उपचाराभिमानाभावात् । सङ्ग्रहस्तु—

देशसंयोगभूयस्त्वतदल्पत्वानुरोधिनः ।
महदण्वादयश्शब्दा न गुणान्तरगोचराः ॥ १ ॥

॥ पृथक्त्वस्य गुणत्वनिराकरणम् ॥

पृथक्त्वमपि न गुणस्तद्व्यवहारस्य परस्पराभावपर्यायभेदनिबन्धनत्वात् । पृथगिति विधिप्रवणप्रत्यय इति चेत् ; न खलु नञुल्लेखाभावादेव विधित्वं अ[बाध्ये] सत्यपदवदतदात्मनि पृथक्छब्दादेव नञुल्लेखाभावः इत्युपपत्तेः । इदमस्मात्पृथगित्यवधिनिरूप्यत्वेन [2]न भेद इति चेन्मैवम् । आनुशासनिकपञ्चम्यन्तपदाभिधेयत्वादन्यस्यावधित्वस्यानिरूपणात् पुष्पेभ्यः स्पृहयतीतिवत् । कथमन्यथापि कदाचिन्न

---

1. मतमात्मनः—मा.
2. पृथक्त्वमित्यादिः

प्रतीतिरिति चेन्न; भवति हि कदाचिदनेन शून्यमिदमनेन पृथगित्यस्यामानुशासनिकतृतीयोल्लेखोऽपि । नचानधीतशब्दविद्यानामपि तत्प्रतीतिविरोधः । तथाभूतवृद्धप्रयोगपरम्पराप्रापितत्वेनाविरोधात् । अन्यारादितरर्ते इत्यत्रान्यशब्दस्यार्थपरत्वात् न[ञो](रे)ऽपि प्रयोगे पञ्चमीप्रसङ्ग इति चेत् मैवम् । अनुशासनाविशेषेऽपि दारपदादेकवचनादिवत् नञः प्रयोगे पञ्चम्या अभिधाननिवृत्तत्वात् परस्पराभावावच्छेदनिबन्धन एव पृथग्व्यवहारः । तथा च न गुणादाव[प्ययं]गौ(णो)[णः] । गौणवादिनस्तु मुख्याभिधानविरोधः । द्वयोः त्रयाणां चेतरस्माद्भेदप्रत्यायकैकधर्मयोगात् पृथक्त्वादिव्यवहारोऽपि निर्बाधः इति ।

भेदो भेदकधर्मो वा पृथक्त्वं नान्यदिष्य[ते](वा) ।
मुख्याभिधानाद्गौणत्वं न गुणेष्विति सङ्ग्रहः ॥ १ ॥

॥ विभागस्य गुणत्वनिराकरणम् ॥

विभागोऽपि संयोगयोग्ययोः संयोगाभाव एवेति न गुणः । चिरविनष्टे[ऽज]-(न)संयोगे[च]काप्यनुपपन्नेऽपि विभक्तप्रत्यये, विभक्तप्रत्ययोपलम्भात् । नच वैशेषिका अपि तत्र तत्प्रत्ययमपाकर्तुमीशते । भाक्तं पुनराहुः । तथा चाभिहितं **व्यो म शि वैः** "संयोगाभावे च भाक्तो विभक्तप्रत्यय" इति । नचान्यस्मिन् मुख्ये विभागे प्रमाणमस्ति[येना](नच)त्र भाक्तः प्रत्ययः स्यात् ।

॥ संयोगाभावेन विभक्त इति विधिमुखप्रत्ययोपपत्तिः ॥

कथं पुनः संयोगाभावमात्राद्विभक्ताविति वि(द्वि)धिमुखः प्रत्ययः स्यादिति चेन्न; अबाध्ये सत्य(त्व)पदव(प)दसंयुक्ते विभक्तपदप्रवृत्तौ नञुल्लेखाभावमात्रेण विध्यभिमानात् । तथापि संयोगाभावनिबन्धने विभक्तप्रत्यये भवेदसावन्यतराश्रयविनाशेऽपीति चेत्; भवत्येवेदममुष्माद्विभक्तमिति तिष्ठति नष्टप्रतियोगिकस्तत्प्रत्ययः । द्वाविमौ विभक्ताविति तु न प्रतीतिरुभयोरुपलम्भाभावात् द्वाविमावसंयुक्ताविति प्रत्ययवद्दिति न किञ्चिद्वद्धम् । संयोगभङ्ग एव कुतो विभागमन्तरेणेति चेत्; न, कर्मणैव तदुपपत्तेः । तस्य गुणविनाशे सामर्थ्यं न दृष्टमिति चेत् न, अन्वयव्यतिरेकाभ्यामाश्रयविनाशवदन्यत्रादृष्टस्यापि दर्शनोपपत्तेः ।

॥ कर्मणः न संयोगनाशकत्वं अन्वयादेः विभागजनकत्वेनान्यथासिद्धत्वात् ॥

अथ संयोगभञ्जकविभागकारणभूते कर्मण्यन्यथासिद्धावन्वयव्यतिरेकावित्याश्रयणीयम् । अन्यथाऽङ्गुल्यामुत्पन्नेन कर्मणाऽङ्गुलीतरुसंयोगभङ्गसम्भवेऽपि हस्ततरुशरीरतरुसंयोगभङ्गो न भवेत् । हस्तादीनामक्रियत्वात् । अङ्गुलीकर्मणश्च व्यधिकरणत्वात् । न चाङ्गुलीतरुसंयोगनाशात् पाण्यादितरुसंयोगनाशो भविष्यतीति वाच्यम् । कर्मजं तं संयोगं प्रत्यङ्गुलिसंयोगस्याकारणत्वात् अकारणविनाशस्य चाविनाशकत्वात् । तस्मात्कर्मजन्यविभागपरम्परया निष्क्रियसंयोगपरम्परा विनाश्यत इत्यनिच्छन्नपि गले [पादुक] (वादित) याऽङ्गीकारयितव्य इति ।

॥ उक्तान्यथासिद्धिखण्डनम् ॥

तदप्यसत् । अङ्गुलीतरुसंयोगातिरेकिणो हस्तादितरुसंयोगस्याप्रतिभासनात् । तथापि कारणसंयोगिना कार्यं संयुज्यत इति नियमादयं कल्प्यत इति चेत्तर्हि कारणे कर्मवति कार्यं कर्मवदिति धावद्देहादेर्नियमावधारणादङ्गुल्यादिवत् हस्तादावपि कर्म कल्प्यताम् । ततस्तदेव च संयोगसमानाधिकरणसंयोगमपाकरिष्यति । कर्मणश्चाव्याप्यवृत्तिता संयोगवदुपपादिता । तेनावयवान्तरावच्छेदेनावयविनि त[दनु](दु)पलम्भोऽपि उपपन्नः । यत्पुनरवयवसंयोगविनाशादेवावयविसंयोगविनाशो भविष्यतीत्युपापीपददाचार्यः, तत् संयोगजसंयोगाभ्युपगमे कारणविनाशात् कार्यविनाशोपपत्तिरिति निरवद्यम् । तदेवं संयोगाभावातिरेकिणो विभागस्यासम्भवात् तस्य विभागान्तरासमवायितोपवर्णनमपि वन्ध्यासुततनयप्रसववर्णनान्नातिशेते ।

॥ विभागजविभागावश्यकत्वपूर्वपक्षः ॥

कथं पुनर्विभागजविभागगुणमन्तरेण वेणुविदलनादौ नभसि ना(दो)दः, नह्यसमवायिकारणमन्तरेण वस्तूत्पत्तिरिति चेन्न ; विदळवेण्वादिदळसंपर्कसहकारपवनगगनसंयोगभेदादेवैकस्मिन् विदळे चरणावष्टब्धे विदळान्तरे चरणान्तरेण बलवता] (वमामव)नुद्यमानेऽपि नादोत्पादाविरोधात । न चाभिघातसम्भव एव नादोत्पादनं नियच्छामो, येन दवदहनदह्यमानस्फुटवेणुविदळटात्कारादीनां पवनाभिघाताधीने-[नत्वे]ऽपि ज[नेः](नैः) प्रस्तुतोदाहरणे तदसम्भवो दोषमावहेत् । न चाङ्गुलीयुक्ततन्त्रीवदित्यभिघातविवक्षयोदाहृतमाचार्येण ; किं तर्हि संयोगविशेषमात्रविवक्षयैवेति मन्तव्यम् ।

॥ अभिघातस्यैव ध्वनिजनकत्वमिति नियमनिराकरणम् ॥

न च भेरीदण्डाद्यभिघातजातध्वानदृष्टान्तादन्योऽपि संयोगजश्चेदभिघातादेव भवेत् ध्वनिरिति नियन्तु[मुचितम्]। तदभावे गुणान्तरस्वरूप(के)कारणभावपरिकल्पनागौरवपरिहारेण धर्मिकल्पनातो वरं धर्मपरिकल्पनेति न्यायमनुसृत्यासत्यभिघाते पवनादिसंयोगस्वभावसहकारिभेदादेव नादभेदोत्पत्तावप्यविरोधात् । अभिघातजन्यताया अनुकूलप्रतिकूलतर्कासम्भवसम्भवाभ्यां संयोगजध्वानसहचा[1]रमात्रव्यवस्थापनात् इत्यशेषमनाविलम् ।

सङ्ग्रहस्तु—

संयोगयोग्यसंयोगव्यवच्छेदाद्विभागधीः[1] ।
तद्भावभावनियमात् कर्म संयोगघातकम् ॥ १ ॥

॥ परत्वापरत्वयोः अतिरिक्तगुणत्वनिराकरणम् ॥

परत्वापरत्वे अपि समानदिक्संयोगभूयस्त्वाल्पीयस्त्वाभ्यां पूर्वोत्तरजन्मभ्यां च नातिरिच्येते । **कश्चिदाह**[3]—न संयुक्तसंयोगबहुत्वाल्पत्वनिबन्धनौ परापरव्यवहारौ; तदपेक्षया प्रमातर्यपि तत्प्रसङ्गात् संमोगबह्वल्पभावस्याविशेषात् । भवति हि यावत्यस्ति मत्तो वाराणसी तावति वाराणस्या अहमपीति । नतु सकिञ्चिदपेक्ष्य मत्तः परा अपरा वेतिवदहमपि तस्याः परो अपरो वेति । तदविशेषात् परत्वापरत्वोत्पत्तिनियमेऽपि कारणं वाच्यमिति चेन्न । कारणशक्तिनियमादेव तन्नियमोपपत्तेः । भेर्याकाशसंयोगस्योभयाश्रयत्वाविशेषेऽपि नभस्येव शब्दो न भेर्यामितिवत् संयुक्तसंयोगाल्पत्वबहुत्वाविशेषेऽपि प्रमेय एव परत्वापरत्वे न प्रमातरीति सर्वमुपपन्नम् । न तु व्यवहारनिमित्ताविशेषे व्यवहारविशेष उपपद्यते, अतिप्रसङ्गादिति ।

॥ उक्तसिद्धान्तस्य केषाञ्चिन्मतेन दूषणम् ॥

[4]केचिदिदं दूषयांबभूवुः । यद्धि(द्वा)संयुक्तसंयोगबहुत्वाधिकरणत्वेन प्रतिसन्धीयते तत्र परव्यवहारो नतु प्रमातरि तस्यावधित्वेन प्रतीतेः । यदा तु प्रमातैव

1. मात्रपदेन व्याप्तिव्यवच्छेदः
2. संयोगयोग्ययोः संयोगाभावविषयिणी विभागधीरित्यर्थः ॥
3. किरणावल्यामुदयनः । 4. वल्लभाचार्याः ।

तदधिकरणत्वेनानुसन्धीयते तदा भवत्येव प्रमातरि परव्यवहारो "वाराणसीतः परोऽहं" इति ।

॥ तन्मतमभ्युपगम्यापि परत्वादिनिराकरणम् ॥

वयं पुनरभ्युपगम्यापि ब्रूमहे । माभूत् कथञ्चिदपि प्रमातरि तद्व्यवहारस्तथापि प्रमात्रवधिक संयुक्तसंयोगबहुत्वाल्पत्वयोः निमित्तभावनियमे व्यवहारनियम उपपद्यमानो न तदतिरेकिपरत्वादिकल्पनायालम् । प्रमातुस्तु न स्वावधिकसंयुक्तसंयोगबहुत्वाबहुत्वे स्वस्मिन्नेव सम्भवत इति न तत्र परादिव्यवहारप्रसङ्ग इति ।

॥ परत्वादेः संयोगरूपत्वेऽपि सावधिकत्वोपपत्तिः ॥

नन्वेवमपि संयोगस्वभावत्वे परत्वापरत्वयोः संयोगिनिरूप्यत्वं स्यान्नत्ववधिनिरूप्यत्वम् । मैवम् । संयोगबहुत्वाल्पत्वयोः परापरव्यवहारहेतुत्वात् । तयोश्च सावधिकत्वात् । संयोगानां च बहुत्वाल्पत्वे परापरसङ्ख्यावच्छेदादेव । यथा च गुणादावपि सङ्ख्यासंभवस्तथोपपादितमधस्तात् । सङ्ख्ययोश्च परापरभावः सङ्ख्योत्पादवादे चरमाचरमकालभावो[1] भविष्यति । मतान्तरे तु चरमाचरमजन्मप्रतिभासगोचरभावो भविष्यति ।

॥ संयुक्तसंयोगादेः अगणनेऽपि परत्वादिबुद्ध्युपपत्तिः ॥

यद्यपि च संयुक्तसंयोगस्वरूपं प्रत्येकं न कश्चिद्गणयति तथापि नियतपूर्वसङ्ख्याबुद्धेः व्यञ्जिकाया अभावे सेनावनादाविव नियतशतादिसङ्ख्याप्रतीतिर्माभूत् भूप्रदेशतत्संयोगेषु । किन्तु पुरो विष्फारिताक्षस्य केषुचित्प्रदेशतत्संयोगेषु सेनाङ्गेष्विव झटिति बुहुत्वप्रतिभासः । तदङ्गान्तरावच्छेदेन बहुतरादिप्रतिभासश्च । परापेक्षया पूर्वत्राल्पप्रतिभासोऽपि नानुपपन्नः ।

॥ कालिकपरत्वापरत्वबुद्ध्योः विषयप्रदर्शनम् ॥

तथा स्थविरयूनोरपि पूर्वापरकालजननमात्रनिबन्धनः परापरव्यवहारः । न च तन्मात्रपरोऽपि परत्वादिकमङ्गीकर्तुमीष्टे तस्य गुणादावप्यगौणप्रतिभासगोचरत्वेन गुणत्वानुपपत्तेः । प्रक्रियामात्रेण तु तत्र गौणत्वारोपयोः अन्यतराभ्युपगमे परिवर्तप्रसक्तेः । परत्वापरत्वयोश्च वस्त्वन्तरजननापेक्षया परजननसम्भवेन परत्वाद्यन्तरा-

पत्तावनवस्थापत्तिश्च तन्मात्रपरत्ववादिन इति । कालयोः पौर्वापर्यं पदार्थावच्छिन्न-कालापेक्षया तदुत्पाद(दनुवाद)विनाशावच्छेदाभ्यां व्यवस्थितमिति अशेषमति-मङ्गळम् ।

॥ सामान्येषु परापरव्यवहारवत् मूर्तेष्वपि तदुपपत्तिः ॥

तस्माद्यथा सामान्येषु बह्वल्पाधारतोपाधिकौ परापरव्यवहारौ नातिरिक्त-परत्वादिनिबन्धनौ, तथा मूर्तेष्वपि प्रागुक्तोपाधिनिबन्धनौ । अन्यथा परत्वापरत्व-वन्मध्यत्वमपि गुणान्तरं प्रसज्येत । यदि मतं उभयापेक्षमपरत्वमेव मध्यमपदप्रवृत्ति-निमित्तमिति न गुणान्तरेण प्रयोजनमिति ; हन्तैवमन्यथासिद्धिबलादालोचयसि प्रागुक्तोपाधिनैव परादिव्यवहारसिद्धेर्न व्यपदेशमात्रभेदेन प्रमेयभेदमुपकल्पयेत्यलम-लीकनिर्बन्धनेन ।

अत्र सङ्ग्रहः—

समानदिक्संयुक्तसंयोगबहुताल्पते ।
परतापरते तद्वत्प्राक्पराक्कालजन्मनी ॥ १ ॥

॥ वेगस्य गुणान्तरत्वखण्डनम् ॥

वेगोऽपि न गुणान्तरं वेगशब्दस्य शिष्टैराशुपर्यायत्वेन स्वीकारात् वेगेन शास्त्रं जानातीत्यादौ । वेगेन बाणो गच्छतीत्येवमादावपि क्रियाणामाशूत्पादन-निमित्तेऽपि वेगव्यवहारे विरोधाभावात् । न च वेगेनालातचक्रं भ्रमतीत्यत्र क्रिया-भेदाग्रहादाशूत्पादानाकलनादतिरिक्तवेगसिद्धिरिति वाच्यम् । तत्रापि संयोगविभाग-प्र(ति)बन्धोत्पादाशुत्वानुरोधेन वेगपदप्रवृत्तेरविरोधात् ।

॥ वेगेन धावति इति प्रतीतेरतिरिक्तवेगसाधननिरासः ॥

ननु वेगेन धावतीत्यादौ सन्तानाशूत्पादस्यानाकलनेऽपि अन्तरा सम्भविनां वेगबुद्धिविषयत्वात् सन्तानिनां क्रियासंयोगलक्षणानां आशुभावस्य कालकलात्मनोऽध्यक्षा-विषयत्वादतिरिक्तवेगसिद्धिः । कथं तर्ह्यन्तरा संभविष्यत्याशूत्पादव्यवहारोऽपि । तदपलापे वेगव्यवहारमपि अपलपतो न मुखं वक्रीभवति । तत्राप्यन्तरासम्भविकति-पयक्रियादिसन्तानापेक्षो भवत्याशुव्यवहारो नैकक्रियाद्यक्रियामात्रापेक्ष इति चेत्, तर्हि तादृक्सन्तानापेक्ष एव वेगव्यवहारोऽपि किमलीकनिर्बन्धेन ।

॥ वेगप्रत्ययात् गुणान्तराभ्युपगमे सन्तानाद्यभ्युपगमप्रसङ्गः ॥

यस्तु वेगेन गच्छतीति प्रतीतेः अर्थान्तरं वेगगुणमङ्गीकुरुते तेन सन्तानेनागतः शब्दः इत्यवभासानुरोधेन सन्तानो नाम गुणः किं नाभ्युपेयेत। यदि शब्दधर्मः कारणशब्दो वा सन्तान इति ब्रूयात् तर्हि कर्मधर्मः कारणकर्म वा वेग इत्यपि किं नाङ्गीकुर्यात्। नच कर्म कर्मसाध्यं न विद्यत इति वचनविरोधादनङ्गीकारः। न शब्दः शब्दजन्य इत्यपि वचसः सुकरत्वात्। अप्रमाणकवचनानुरोधे चार्थव्यवस्थानुपपत्तेः प्रामाणिकानाम्। नच कर्मारभ्यत्वेऽप्यनुपरमप्रसक्तिः शब्दवत्तदुपपत्तेरिति।

आशूत्पादः क्रियादेर्यः स वेग इति सम्मतः।
अलातचक्रे संयोगविभागापेक्ष एव सः॥ इति

सङ्ग्रहश्लोकः।

इत्थं सिद्धान्तवैषम्यं सङ्ख्यादावुपपादितम्।
तद्वैषम्यं गुरुत्वादावपि किञ्चन विद्यते॥ १॥

तन्न प्रपञ्च्यतेऽस्माभिः स्फुटत्वान्न्यायभूषणे।
अप्रपञ्चाधिकारे च प्रपञ्चस्य विरोधतः॥ २॥

कर्मणश्च गुणत्वं यदाचार्येण निरूपितम्।
अभिसन्धिरयं तत्र समुन्नीतः प्रकाश्यते॥ ३॥

॥ वैशेषिकेण गुणत्वसामान्यानङ्गीकारः तत्खण्डनं च ॥

वैशेषिकस्तावत् रूपादय एव गुणा नोत्क्षेपणादय इति ब्रुवाणो न तेषु[1] गुणत्वसामान्यव्यवस्थापकं प्रमाणमनुसरति; प्रत्यक्षेण तस्याप्रतीतेः। प्रतीतौ वा रूपादावेकत्र गुणत्वमुपादाय पदसङ्केते सर्वत्र तथा व्यवहारोपपत्तेः गवादिवत्प्रत्याधारं सङ्केतवैयर्थ्यात्। रूपादयो रूपत्वाद्यतिरिक्तजातिमन्तः सामान्यवत्त्वात् कर्मवदित्यादेरपि प्रत्यक्षापहृतविषयत्वात्। प्रतीयत एव प्रत्यक्षेण गुणत्वं किं तूपदेशसापेक्षेणेत्यपि[न, अ] प्रमाणानतिरेकात्। अन्यथा रसकर्मादौ रसत्वोपपत्तेः।

---

1. रूपादिषु

॥ वैशेषिकं निन्दित्वा कर्मणः गुणेऽन्तर्भावकथनम् ॥

नापि लोके व्यवहारसरणिमनुसरति[1] तस्य गुणशब्दस्याप्राधान्यनिमित्तत्वेनान्यत्रापि प्रवृत्तेः "वयमिह गुणभूता" इति। तथा सति स्वोत्प्रेक्षितनिमित्तानुसारेण च पदसङ्केतमात्रं परिशिष्यते। तथा सत्युत्क्षेपणादावप्यनुगतंलक्षणमुत्प्रेक्ष्य तत्रापि गुणसाङ्केतिकता न दोषः। को वा गुणो रूपादावेव तदाग्रहे। तस्मादनुपयोगिनीभिः व्यवस्थाभिरलीकनिर्बन्धनं कुर्वतः **कणव्रतस्य** मते नातीवादरः कर्तव्य इत्यभिसन्धिमानाह—"कर्मवर्गोऽपि पञ्चविंशतितमो गुणभेद एवास्तु न कश्चिदत्र विशेषं पश्याम" इति। वदति स्म चोभयानुगामिगुणलक्षणम् अस्पर्शत्वे सामान्यवत्वे च सति द्रव्याश्रितत्वम्। तस्मादविशेषापादनेन परेषामप्रामाणिक्यो व्यवस्थाः अनुपयोगिन्यश्चेत्येतावदभिहितम्। न त्वत्रैवाभिनिवेष्टव्यमिति। यस्मादवोचत्—अस्माकं पुनरयमभिप्रायः—प्रधाने वस्तुनि यत्नः करणीयः। प्रधानं च वस्तु निःश्रेयसाङ्ग"मिति। तस्मात्सर्वं निर्मलम्।

॥ कर्मणः अप्रत्यक्षत्ववादिमतनिराकरणम् ॥

ये त्वाहुः—कर्मणः प्रत्यक्षेषूपसङ्ख्यानमयुक्तम्। तस्य विभागसंयोगरूपकार्यलिङ्गानुमेयत्वेनैवोपपत्तेरिति; तेषां मते रथतदारूढकर्मणोः कथं(म)प्रतिपत्तिभेदः सम्भवी। तथा **वल्लभायां शालिकानाथ** रचितान्येव वचनानि "कर्मणस्त्ववश्यमेव प्रत्यक्षत्वमाश्रयणीयम्, अन्यथा रथतदारूढयोः अनुमेयकर्मपक्षे प्रतिपत्तिभेदासम्भवात् उभयत्र संयोगविभागानुमितस्याप्रत्यक्षत्वात।" ननु प्रत्यक्षकर्मवादिनोऽपि तुल्यमेतत्। उच्यते। यत्रोद्भूतं कर्म तत्र प्रत्यक्षावगतिः, यथा रथे। यत्र त्वनुद्भूतं तत्रानुमेयं, [2]कारणभेदेनोद्भूतानुद्भूतकर्मजन्मेति न तुल्यो दोष इति। किञ्च च(फ)लतीति वर्तमानप्रतीतिः कार्यानुमेये कर्मण्यनुपपन्ना; पूर्वक्षणभाविन एव कारणस्य कार्योपयोगितया तेनानुमानात् कार्यसमकालं तत्सत्तानुपयोगात। कार्यस्य तदा सिद्धत्वात्। तदाहुर्**मण्डनमिश्राः**—

हेतुसत्ता च कार्येण ततः प्रागनुमीयते।
वर्तमानावभासस्य न क्रियाधिगमस्ततः॥ इति।

---

1. वैशेषिकः
2. मा, कारणभूतेन

॥ कर्मणोऽनुमेयत्वे स्थाणावपि श्येनकर्मानुमानापत्तिः । चलतीति वर्तमानताप्रतीत्यनुपपत्तिश्च ॥

किञ्च स्थाणुविभागापक्रमे श्येनस्योत्तरसंयोगेन विभागमात्रात् श्येने कर्मानुमि(ति)तेः स्थाणुसाधारण्यात्, तस्य श्येनश्चलतीति नियताधिकरणकर्मप्रत्ययानुपपत्तेः। यदि मतमुत्तरसयोगलिङ्गानुमेयं श्येनकर्म तावतैव स्थाणुविभागस्याप्युपपत्तेः न तत्रापि कर्म कल्प्यमिति श्येनश्चलतीति नियतप्रत्ययोत्पत्तिरिति।

हन्तैवमुत्तरसंयोगसन्दर्शनोत्तरकालमियं नीतिः स्यात। नचायमनुत्पन्नः शक्यदर्शन इति तदुत्पत्तिदर्शनव्याप्त्यनुस्मरणादिबहुतरकालकलाकलापविडम्बने न श्येनाधिकरणप्रतिनियतकर्मानुमितिर्जायेत। कर्म तूत्तरसंयोगान्त(र)मभ्युपेतमिति कथं तदवलम्बिन्या अनुमितेः वर्तमानाकारमालम्बनमित्यनुपपन्नैव चलतीति वर्तमानप्रतीतिः। तदाहुः—

संयोगान्तं वर्त(तं)मानं तत उन्नीयते कथम्।
विभागतो मीयमानं स्थाणावप्येतदापतेत्॥ इति।

॥ कर्मसन्तानापरिसमाप्तेः वर्तमानताप्रतीतिः इति शङ्कानिराकरणम् ॥

न चाविच्छिन्नोत्पन्नसंयोगविभागसन्तानानुमितकर्मसन्तानापरिसमाप्तेरयं वर्तमानावभास इति साम्प्रतम्। अनागतसंयोगादेः अप्रत्यक्षत्वात् सर्वत्रानुमातुमशक्यत्वात् तत्कारणकर्मसन्तानापरिसमाप्तेः। कथंचितन्निश्चयानुमेयक्रियासन्तानभागिनि भगवति मयूखमालिनि चलति [इति] प्रतिभासानुपपत्तेः। अनुमेयपक्षे सर्वत्र तथा प्रसङ्गात्। संयोगपरम्पराप्याकाश(ा)देशवर्ती स्यादित्यस्यानध्यक्ष इति न तत्र तथा प्रतिभासत इति चेत, तर्हि महान्धकारे खद्योतश्चलतीत्यपि नावभासः स्यात्। तस्य तु संयोगविभागा भासन्त इत्यभ्युपगमेऽपि मरीचिमालिन्यप्येवमस्तु। मैवम्, अतिदूरत्वादिना तस्यानुक्षणमालोकमण्डलेन संयोगविभागयोरलक्ष्यत्वादिति चेन्न। तर्हि ज्योतिरिङ्गणस्यापि ज्योतिर्मण्डलेनान्तिकेऽपि ते न लक्ष्येते। नुद्यनोदनकवत्सहचारोपलम्भात्।

॥ चलनप्रतीतेः प्रत्यक्षत्वव्यवस्थापनम् ॥

अथ द्रव्यत्वे सत्य(पि) [वि]नष्टत्वे च व्यवधानाद्यनुपपत्तौ चाचलच्चक्षुषोपलभ्यमानानुपलभ्यमानत्वेन देशान्तरप्राप्तिमनुमाय तया गतिरनुमीयत इति अभिप्रेतं,

तत्तुल्यमितरत्रापि । कथमेकत्र चलमिति नान्यत्रेति । न च चलित्वा स्थितेऽपि चलतीति प्रयोगवद्व्यपदेशमात्रमुपचारान्नतु प्रतीतिरिति वाच्यम् । चलतीत्य-परोक्षाकारसंवेदनस्य स्पन्दनवत् खद्योतादौ सार(थ)[थि]सविलाद्यसम्भविनः सर्वानु-भवसिद्धत्वात् ।

नच सत्यामपि लौङ्गिकानुपपत्तौ लिङ्गसम्भवमात्रेण संविदो लैङ्गिकत्वम् इन्द्रियान्वयव्यतिरेकयोर्वा लिङ्गज्ञानोपायगोचर (येप्य)भावेनान्यथासिद्ध[त्वम्]। कथम-परथा प्राभाकरा अपि प्रभञ्जनप्रत्यक्षं प्राहुः स्पर्शानुमेयत्वेनाप्युपपत्तेः । अथ पुन-रैन्द्रियकत्वेऽप्यविरोधादैन्द्रियक एव वायुः, तुल्यं प्रकृतेऽपि ।

तस्मादिन्द्रियजन्यैव स्पन्दनश्चलतीति धीः ।
तद्भावभावनियमात् समीरणगतिर्यथा ॥ १ ॥

लौङ्गिकत्वं तु संवित्तेः कथं कर्मण्यतीन्द्रिये ।
[1]कर्मकारणतत्कार्यसंयोगाद्युपपत्तितः ॥ २ ॥

॥ प्रयत्नवदात्मसंयोगस्यैवोत्तरसंयोगहेतुत्वात् कर्मणोऽनावश्यकत्वापादनम् ॥

न खलु प्रयत्नवदात्मशरीरसंयोगादेव दृष्टादुत्तरसंयोगाद्युपपत्तावदृष्टकल्पना युक्तिमती । नच वचनीयमसमवायिकारणसंयोगः स्वश्रये स्वाश्रयसमवेते वा कार्या-रम्भक इति निरूपितम् । नियतस्वभावेनातद्विधेऽपि भूभागे [न] देहसंयोगमारब्धुमल-मित्यान्तरालिकमतीन्द्रियमनुमीयत इति । तथा सति संयोगस्याश्रये कार्यजनकत्व-निय(तः)[मः] सुखाद्यारम्भेषूपलब्ध इति स्वाश्रयसमवेते [न] तमप्यारभेत । मैवम् । अन्वयव्यतिरेकयोरविशेषादिति चेत् ; प्रस्तुतेऽपि समं समाधानम् । अतीन्द्रिया-भ्युपगमेन तु तयोरन्यथासिद्धिरपरत्रापि सम्भविनी । तत्र लाघवात् दृष्टस्यैव सामर्थ्यमात्रमपूर्वमनुज्ञायते नाधिकमित्यपि समानम् ।

॥ देशशरीरसंयोगे आत्मशरीरसंयोगातिरिक्तस्य कारणत्वशङ्का ॥

सत्यं, स्यादेवमपि हि यद्यन्वयव्यतिरेकसाम्यं न त्वेतदस्ति । प्रयत्नः (न) खलु निमित्तकारणमात्मशरीरसंयोग एव त्वसमवायिकारणम् ; तत्र चान्वयेऽपि न व्यतिरेकः

---

1. कर्मकारणेन कर्मजन्योत्तरसंयोगोपपत्तेरित्यर्थः

सर्वदा तत्सत्त्वेन तस्मिन्नसति कार्याभावाभावात्। तथा सत्य[1][न्वय]प्रमाणकमेवात्र कारणत्वं वाय्वनुमान इव। (बाधा)[घटा]द्युत्पादेषु मूलप्रमाणतामात्रं खल्वन्वयव्यतिरेकयोः कारणत्वे न तु ताभ्यामेव तत्सिद्धिः नित्यविभुनोऽ(?) कारणत्वात्। तथा च देशशरीरसंयोगरूपकार्यस्यासमवायिकारणमन्तरेणासम्भवात् कल्पनीये तस्मिन् अन्यतः क्लृप्तस्यात्मशरीरसंयोगस्य कारणता कल्प्या। सा च प्रतिपन्नसंयोगविरोधात् न शक्यते कल्पयितुमिति।

॥ करतलगतकमलनालादेरुत्तरसंयोगे आत्मशरीरसंयोगादेरेवासमवायिकारणता न तु कर्मणः तत्कल्पनम् ॥

हन्तैवमपि करकलितकमलनालादेरुत्तरसंयोगोत्पत्तौ करसंयोगस्यान्वयव्यतिरेकसम्भवात् तत्साधनत्वे स्थिते खण्डिते च नियमे मानान्तरानुसारादप्यनुसरणीयमसमवायिकारणत्वमात्मशरीरसंयोगस्याविरुद्धमेव। अन्वयव्यतिरेकाभ्यां करतलनालसंयोगस्योत्तरसंयोगकारणत्वेऽपि निमित्तत्वमात्रं, न तु असमवायित्व[म्] नियमभङ्गेन [2]विनाप्युपपत्तेरिति चेन्न; स्वाश्रयसमवेतकार्यजननेऽपि तथात्वापत्तावतीन्द्रियासमवायिकल्पनाऽप्रसक्तेः। अभ्युपेत्य चेदमुदितम्। वस्तुतः पुनरसमवायिकारणसंयोगस्य न स्वाश्रयादावारम्भकत्वनियमः तन्तुसंयोगादतद्वि(वे)[धेपि तृतीयतन्तौ] त्रितन्तुकोत्पादात्। द्व्यणुकसंयोगाच्चातद्विधेऽपि द्व्यणुकान्तरे त्र्यणुकोत्पादात्।

॥ तन्तुसंयोगः स्वाश्रयमात्रे पटहेतुः एकदेशद्वारा, इति मतं, तन्निराकृतिश्च ॥

यदुवाच **कश्चित्**। तन्तुसंयोगोऽपि स्वश्रयमात्रे पटैकदेशद्वारा पटहेतुः एवं (त्र्य)[द्व्य]णुकसंयोगे त्र्यणुकहेतौ योज्यमिति। तदप्यसत्। तृतीयादितन्तोः खलु खण्डपटेन सह महापटारम्भे तथा भवेत्। न त्वेतदुचितं कारणजातीयेन सह कार्यानारम्भक[त्व]मवयविनः त(न्तु)[न्तो]रिवांशुना सह वसनस्येति व्याप्तिविरोधात्। नच त्र्यणुकोत्पत्तावुक्तन्यायावतरः, तत्रापि द्व्यणुकद्वयार(म्य)[भ्य]स्याणोर्द्व्यणुकान्तरेण सहारम्भकत्वे तदारभ्यस्य त्र्यणुकत्वहानेः, द्वाभ्यामेवारम्भात्। कारणबहुत्वाद्यभावेन च महत्त्वाद्यनुत्पत्तौ [अ]प्रत्यक्षतापत्तेः। किं चास्मिन्मते न क्वापि कारणबहुत्वेन महत्त्वमुत्पद्यते। सर्वावयविनोऽप्यवयवद्वयारभ्यत्वात्। अन्यथा

---

1. सत्यन्य—मा.  2. भङ्गो विना—मा.

य एव बहुभिरारभ्यते तत्रैव नियमातिक्रमः । संयोगस्यासमवायिनोऽप्याश्रयत्वात्, अवयविनश्चाशेषावयवाश्रयत्वात् ।

॥ उक्तनियमे स्वाश्रयसजातीयसंयोगाश्रये इति परिष्कृत्य व्यभिचारं परिहर्तुः मतं तन्निरासश्च ॥

**यः** पुनरुक्तनियमसिद्धये स्वाश्रय इति स्वसजातीयसंयोगाश्रयमभिप्रैति स वक्तव्यः । प्रकृतेऽपि तर्ह्यात्मशरीरसंयोगवदात्मोत्तरदेशसंयोगसम्भवात् स्वाश्रय एव शरीरोत्तरदेशसंयोगस्य असमवायिकारणमात्मसंयोग इति । प्रयत्नस्य तु बहिरभावो न दोषाय; तस्य निमित्तभूतस्याऽऽन्तरस्यैव तिर्यक्पवनादावदृष्टस्येव दूरेऽप्यारम्भकत्वाविरोधात् ।

एतेनैतदपि पराकृतम् । एक एवासमवायिकारणसंयोगः स्वाश्रये स्वाश्रयसमवेते वा कार्यारम्भकः । प्रकृते च प्रयत्नवच्चेतनसंयोगः कारणमेक एवेति । प्रकृतेऽप्युन्नीतन्यायेन संयोगद्वयस्य कारणत्वा[त्] ।

॥ संयोगस्य स्वाश्रये तत्समवेते च संयोगजनकत्वशङ्का तत्परिहारश्च ॥

यदपि मतं संयोगः संयोगं जनयन् युगपदेव स्वाश्रय[तत्]समवेते योजयेद्यथा तन्तुतुरीसंयोगः पटतुरीसंयोगम् । न चात्मशरीरादिसयोगस्तथेति । तदप्यसारम् । एकासमवायिकारणस्य स्वाश्रये तत्समवेते वा कार्यजनकत्वनियमात् कर्मकल्पनेऽपि नियमभङ्गप्रसङ्गः । दृष्टमेव संयोगसमवायिनमुपादाय नियमभङ्गस्यापाकरणीयत्वात् अदृष्टकल्पनानुपपत्तेः । नैकसमवायित्वप्रयुक्तो नियमः खदळविभागकारणेन वेणुदळविभागेन व्यभिचारादिति चेन्न । संयोगाभावातिरेकिणो विभागस्यैव निरस्तत्वात् ।

॥ विभागसाधकानुमानप्रयोगः तत्खण्डनं च ॥

अथाप्यभिदधीथाः कारणविनाशाभावे विनश्यत्संयोगो गुणविनाश्यः कारणविनाशमन्तरेण विनश्यद्गुणत्वात् पार्थिवपरमाणुरूपादि( विदितं ) [ वदिति ] । न, कर्मणोऽपि गुणत्वस्यापादितत्वात् तद्विनाश्यत्वेन च सिद्धसाधनात । तदतिरेकिगुणविनाश्यत्वसाधनेऽन्वयव्यतिरेकविरोधेन कालातीतत्वात् । गुणान्तरकल्पनेन तु तयोरन्यथासिध्यभ्युपगमे प्राचीनातिप्रसङ्गावतारात् । किं च करतलकरवालसंयोगस्यान्वयव्यतिरेकाभ्यामुत्तरसंयोगहेतुभावस्थितावेतस्यापि नियमस्य प्रागेव खण्डनोपपत्तिः ।

॥ प्रयत्नवदात्मसंयोगस्य देह एव कार्यजनकत्वशङ्का तत्समाधानं च ॥

योऽप्ययं नियमः आन्तरधर्मवद्देहदेहिसंयोगस्तयोः एकतरस्मिन् कार्यजनकतया नियतः यथेच्छावदात्मसंयोगादात्मनि प्रयत्नः प्रीतिमदात्मसंयोगाद्देहे नयनविकासादिरिति ।

सोऽप्ययुक्त एव । देहिदेहयोरेकतरस्मिन् जनननियममभ्युपगम्यान्यतरस्मिंस्तद्भङ्गप्रसक्तेः । मैवम् , पूर्वभावनियमस्योभयत्राविशेषादिति चेत् । समः समाधिः । तदेवं क्रियाहेत्वभिमतादा(वा)त्मसंयोगादुत्तरसंयोगाभ्युपपत्तौ न कर्मकल्पनावकाश इति स्थितम् ।

॥ वेगस्य क्रियाजनकत्ववादिमतं वेगनिराकरणेन तत्खण्डनं च ॥

**यदप्याहुः** कारणसमानफलः संस्कारः कारणसजातीयमेव जनयित्वा कार्यं जनयतीति पूर्वमपि तदतिरिक्तजन्य एवासौ पश्चादपि तदेव जनयित्वा संयोगं जनयतीति कल्प्यत इति तदतिरिक्तक्रियासिद्धिरिति ।

तदप्यसत् । आशूत्पादादतिरेकिणो वेगस्य व्युदस्तत्वात् । अप्रत्यक्षकर्मपक्षेऽप्याशुभाविसंयोगादिप्रबन्धगोचरभावेन वेगप्रत्ययसम्भवात् । उत्तरस्य तु नोदनादेः पूर्वसंयोगादिः हेतुरस्तु । कर्मणोऽप्यभावे संयोगनाशोऽपि उत्तरसंयोगादेव भविष्यति । तद्वध्यत्वादेव च नोत्तरा[न् ]पूर्वसंयोगः प्रतिबध्नाति विभागोत्पादमिवेति कल्पनायां न कोऽपि दोषः । तस्मात्कर्महेत्वभिमतादेव संयोगाद्युपपत्तेः साध्वभिहितं **तत्र भवद्भिः** ।

नित्यत्वे सर्वदा जन्म स्यात्संयोगविभागयोः ।
अनित्यत्वेऽस्य यो हेतुः तयोरेवास्तु तेन किम् ॥ इति ।

॥ प्रकारान्तरेण कर्मस्वीकारावश्यकत्वशङ्का तत्परिहारश्च ॥

ननु प्रत्यक्षकर्मपक्षे कर्मसामग्रीत एव[एवावश्यं][1] कर्मसंयोगौ जायेते इति वदति कस्मिंश्चित्कथं कर्मजनकसामग्र्याः संयोगादिसाधनत्वं निवारणीयम् । सत्यामपि

---

1. एवोर्य—मा.

कर्मसामग्र्यां संयोगादेरुत्पादविलम्बादनन्तरपूर्वभाविनः कर्मणस्तत्कारणतेति चेत् । हन्तैवमप्रत्यक्षत्वेऽपि कर्मणः कार्यविलम्बानुसारेणान्तराले [किञ्चित्] कल्पनीयमिति सिद्ध्येत् न [1]कर्म, तत्सामग्र्या अतीन्द्रियत्वात् तत्प्रतियोगिनः कार्यविलम्बनस्यासिद्धावन्तराले कर्मकल्पनानवकाशात् । अस्मन्मते त्वैन्द्रियकस्य कर्मणः पूर्वभावनियमः सर्वानुभवसिद्ध इति भेदः । तदनुभवेपि तु विप्रतिपन्नः कथं कार्यविलम्बमभ्युपग[च्छे]दिति न तस्योक्तः प्रतीकारः । ....किन्त्वनुभव एवानुभवि(तं)[तृ]परसंवादादिभिरापादयितव्यः ।

[[2]तदेवमिन्द्रियान्वयव्यतिरेकयोः लिङ्गमात्रगोचरभावेनान्यथासिद्ध्यनुपपत्तौ सत्यां प्रयुज्यते-विवादपदं क्रियावेदनं इन्द्रियजन्यं तदन्वयव्यतिरेकानुविधायित्वात् उभयाभिमतैन्द्रियकवेदनवदिति ।

**नचानन्यथासिद्धपदेनात्र** हेतुर्विशेषणीयः । ['तनूनपात् उष्ण'] (तत्र नवादुष्णमि)इत्यादि च विस्फारितचक्षुषो वेदनेन व्यभिचारं व्यवच्छेत्तुमिति वाच्यम् । तत्र कारणकारणविषययोरन्वयव्यतिरेकयोः परमकार्यापेक्षया व्यवधानेन भाक्तत्वात्कारणकारणवदिति] शेषमवदातम् ।

॥ चलनप्रतीतेः संयोगविभागालम्बनत्ववादिमतं तन्निरासश्च ॥

कश्चित्तु चलतीत्यवभासमैन्द्रियकमभ्युपगच्छन्नव्यवच्छिन्नोत्पाददेशविभागसंयोगप्रचयमात्रालम्बनमभ्युपगच्छति, तस्यापि प्रागुन्नीतनीत्या संयोगादिसन्तानाविच्छेदो दुर्निरूपः । तदविशेषितदेशसंयोगविभागमात्रालम्बनत्वे तु स्थिते(ति)[पि] चलतीति प्रतिभासप्रसङ्गः । किञ्च बलवद्विधारकप्रयत्नविधृतदेहेषु महाग्रहादिषु सलिलदेशेषु तत्संयोगविभागसन्ततौ सत्यामपि चलतिप्रतीत्यनुत्पादात् अतिरिक्तालम्बनत्वसिद्धिरिति ।

॥ चलतीति प्रत्ययस्य क्षणगोचरत्वमतं तत्परिहारश्च ॥

योऽप्युत्तरोत्तरदेशभागिनीं पूर्वविनाशोपगृहीतां क्षणपरम्परामेव गोचरयते चलतिविकल्प इत्याह; तस्यापि मनोरथः क्षणभङ्गसिद्धौ सिद्ध्येत् । स च निरसिष्यत इत्यलमतिप्रसङ्गेन ।

---

1. स कर्म—मा.
2. इदं क्रियायाः प्रत्यक्षत्वव्यवस्थापनपरं वचनजातं ग्रन्थकर्तुः अनभिमतमिव भाति

## चक्षुषैव रूपज्ञानं, स्पर्शनेनैव स्पर्शज्ञानं, घ्राणेनैव गन्धज्ञानं, रसनेनैव रसज्ञानं, मनसैव सुखादिज्ञानमिति

**चक्षुषैव रूपज्ञानमिति** संयुक्तसमवायादित्यधिक्रियते । सुखादिपर्यन्तं स्पर्शनादिबहिरिन्द्रियवृत्तिनिषेधार्थमवधारणम् । तथोत्तरत्रापि **स्पर्शनेनैव स्पर्शज्ञानं घ्राणेनैव गन्धज्ञानं रसज्ञानं रसनेनैव मनसैव सुखादिज्ञानम् ।** सुखमादिः येषामित्यादिग्रहणेन दुःखेच्छाद्वेषप्रयत्नबोधानामवरोधः ।

॥ सुखादेः संविदात्मकत्वात् स्वसंवेद्यत्वमिति मतम् ॥

केचित्सुखादेः स्वसंवेदनता संविदात्मकत्वात्, तदात्मकत्वं च तदभिन्न-हेतुजत्वादित्याहुः ।

॥ भेदप्रत्यक्षेण सुखादेः संवेदनानात्मकत्वोपपादनम् ॥

तदसत् । संवि(द)[दित]स्य संवेदनत्वस्य निरस्तत्वा(द)त् । अर्थप्रवणस्व-भावाच्च संवेदनादतद्रूपस्य सुखादेरध्यक्षेण भेदग्राहिणा बाधितविषयत्वात् अभेद-साधनस्य । सुखादौ ज्ञानप्रतिभासानुवृत्त्यभावेन च तद्विशेषानुपपत्तेः सर्वथा तद-भिन्नहेतुजत्वस्यासिद्धेः । सुखादेरभिलाषादिनियतनिमित्तत्वात् । कथञ्चिदभिन्नहेतुज-त्वस्य स्वपरपक्षयोः व्यभिचारात् । स्वपक्षे तावत् घटादिभङ्गजध्वानकपालखण्डयोः अभिन्नहेतुजत्वेऽपि भेदात् । अस्मन्मतेऽपि पाकजानां परस्परं [अ]तद्रूपत्वादिति ।

॥ सुखादेः अनुमेयत्वशङ्का तद्वारणं च ॥

भवतु नाम सुखादेर्मानसवेदनीयत्वं, संवेदनस्य संविदन्तरवेदनीयत्वस्थिता-वप्यनुमेयतैव किं न स्यात् । लिङ्गानिरूपणात् । प्राकट्यस्य परास्तत्वात् । तद-भ्युपगमेऽपि वेदनकारणेनैव च तदुपपत्तेः । [1]व्यवहारस्य चासार्वत्रिकत्वात् । इच्छा-दिनैव चोपपत्तेः[2] । स एव कथं नियतगोचर इति चेत् । संवेदनेऽपि तुल्यत्वात् ।

---

1. व्यवहारेण वेदनानुमानमाङ्क्येदम् ।
2. व्यवहारोपपत्तेः ।

कुतोऽपि हेतोर्नियतविषयवेदनमित्यभ्युपगमे भवत्विच्छादिरेव तथेति वृथा वेदन-कल्पना । अनुमानसंवेदनीयत्वेऽप्यनुपपत्तिरेव; क्षणिकं हि वेदनमन्यथा विषयविक-ल्पानुपपत्तेः । तथा हि—यत्क्षणकलितमर्थं[1] प्रथमक्षणे वेदनं विषयीकुरुते तत्क्षण-सहचरमेव द्वितीयेऽपि किं वा क्षणान्तरपरिकरम्? न प्रथमस्तत्क्षणस्यातीतत्वात् । प्रत्यक्षस्य च वर्तमान[विषयत्व]नियमात् । अतीतमेव तु वर्तमानत्वेनोल्लिख्यत इति कल्पनायां विभ्रमत्वप्रसक्तेः । नापि चरमो विरम्यव्यापारप्रसङ्गात् । प्रागपि परा-चीनक्षणगोचरत्वे प्रत्यक्षमात्रनियतवर्तमानविषयत्वव्याकोप इति क्षणिकत्वमेवास्तु । तथापि मानसप्रत्ययक्षत्वे को दोष इति चेत् पूर्वापरसमसमयसंवेदनीयतानुपपत्तिरेव । नहि तत्पूर्वसंवेदनवेदनीयम् अपरोक्षवेदनस्य वर्तमानविषयत्वनियमात् । तत एव(ा) [ना]परसमयसंवेदनसंवेद्यम् । समसमयं तु संवेदनं (तत्सन्निकर्षे) न स्यात् । नच वेदनानां युगपदुत्पत्तिरुपपत्तिमतीति ।

॥ ज्ञानस्य क्षणावच्छिन्नविषयत्वासिद्धया उक्तपूर्वपक्षासिद्धिः ॥

तदेतदसारम् । क्षणावच्छिन्नपदार्थविषयत्वनियमे हि सिद्धे संवेदनस्य संभ-वेदयं मनोरथः नतु तदानुभाविकम् । न खलु नीलधवळादिपदार्थवेदने परमसूक्ष्मा अपि [क्षणाः] प्रतिभासन्त एवेति कस्याप्यनुभवमार्गागतम् । भवतु वा कदाचन क्षणावच्छिन्नपदार्थावभासः, तथापि प्रथमक्षणावच्छिन्नस्यैव पश्चादप्यालोचने को दोषः । वर्तमानविषयत्वव्याघात इति चेन्न । तस्योत्पत्तिसमयापेक्षयैव तन्नियमेऽप्य-विरोधात् । अन्यथानवगाहनाच्च न भ्रान्तत्वम् । न खलु प्राचीनमेव क्षणं पराचीन-त्वेन वेदनं वेदयते; येन भ्रान्तं भवेत्, यदि पुनरतिक्रान्तमर्थमतिक्रान्तपरिहारेण गोचरयद्वेदनं विभ्रान्तं, तर्हि तरुणारुणतरलसहकारप्रवालरमणीया मधुमासलक्ष्मीः इति वर्षासु संवेदनं विभ्रमः स्यात् ।

॥ ज्ञानविषयज्ञानधाराशङ्का वस्त्वन्तरादेः स्वसन्निधिमहिम्नैव
तादृशधाराप्रतिबन्धकत्वात् इति तस्याः समाधानम् ॥

अथैवमपि मानसप्रत्यक्षत्वे सुखादिवदजिज्ञासितवेदनप्रसक्तौ तत्तद्वेदन वेदनमपि तथैव वेदनीयमिति तादृग्वेदनधारायामेवायुषः पर्यवसानंप्रसज्येत ।

---

3. कल्पितमर्थं—मा.

मैवम् । संविदन्तरं तत्साधनभेदो वा वस्त्वन्तरमेव वा स्वसन्निधिमहिम्नैवापतत् (अताद)अजिज्ञासितधरणिधरधाराधरादिबोधनधारामपाकरोतीत्यनुभवसिद्धत्वात् प्रकृतेऽपि तथाभावविरोधाभावात् । तदाहुः—

केचित्स्वसन्निधिवशेन विपक्षभावं
विज्ञप्तिवेदनविधावुपयान्ति भावाः ।
येषां विपर्ययवशेन पुनः स्फुरन्ति
प्रत्यक्षबोधपदवीषु निरन्तराणि ॥ इति ।

॥ ज्ञानस्य परवेद्यत्वम् ॥

केषांचिदेव वेदनानां प्रयत्नवदेष महिमा यदुदितमात्राणामध्यक्षार्हत्वं यथा घटमहं जानामीति नानवस्था । तथापि कथं मानसप्रत्यक्षवेदनीयं वेदनं, नो खलु [1]निर्विकल्पकैकवेदनीयं तत् , विकल्पैककल्पनीयस्य निर्विकल्पकस्य तदभावे निष्प्रमाणकत्वात् । न च सविकल्पकस्यापि गोचरः, निर्विकल्पकविषयीकृतस्य तावदननुवृत्तेः तेनैव विपत्तेः । सविकल्पकैकवेदनीयत्वमपि न युक्तं विज्ञानत्वादिविशेषणालोचनं विना विशिष्टविकल्पानुपपत्तेरिति चेन्मैवम् । उदितमात्रस्यैव कस्यचित्कुम्भादिगोचरवेदनस्यालोचने द्वितीयवेदनस्य प्राचीनविशेषणवेदनसहचरचेतसा प्रथमत एव विकल्पनीयत्वोपपत्तेः । व्यक्त्यन्तरेऽपि विदितस्य सामान्यस्यानुमानवद्व्यक्त्यन्तरेऽपि विकल्पोपयोगित्वात् । अन्यथा वह्निमान् पर्वत इत्यपि वित्तेरनुपपत्तेः, तद्वर्तिनो विशेषणस्य अनवसायात् । भवन्तु वा निर्विकल्पैकवेदनीयानि कानिचित् वेदनानि न सविकल्पकैकोन्नेयमविकल्पकमित्यपि नियतिः । अभावसादृश्यादावन्यथापि तदुन्नीतैरागमप्रस्तावे निरूपयिष्यमाणत्वात् प्रत्यक्षविकल्पोऽपि पूर्वव्यवसायोपनीतपरोक्षपरमाण्वाद्यवच्छेदेन वेदनेषु न विरुद्ध्यते घटादाविव ध्यानवितानावच्छेदेनेति सर्वमुपपन्नम् ।

कर्मपर्यन्ते समवेतानां चक्षुषा स्पर्शनेनैन वा ग्रहणं; रूपाश्रितानां चक्षुषा, स्पर्शाश्रितानां स्पर्शनेनैव, गन्धाश्रितानां घ्राणेनैव, रसाश्रितानां रसनेनैव, सत्तायास्तु सर्वगुणाश्रयत्वात् सर्वेन्द्रियैर्ग्रहणमिति ।

---

1. सवि—मा.

॥ सत्ताजात्यङ्गीकारे प्रमाणोपन्यासः ॥

सत्तासामान्यं तु सर्वत्र सत्सदिति प्रत्ययसिद्धम् । न च वचनीयं प्रमाणसंबन्धरूपोपाधिना स(दपि)[दिति] परस्परपरावृत्तवस्तुरूपेष्वयमुत्पद्यत इति । वक्ष्यमाणन्यायेन भाववर्गातिरिक्ताभावसिद्धौ प्रमाणसम्बन्धस्योभयसाधारणत्वात् । भावेष्वेव प्रतिनियतनिमित्तमन्तरेण तद्व्यवहारानुपपत्त्या तत्सिद्धेः । प्रयोगोऽप्यत्र भवति—अनित्यद्रव्यगुणकर्माणि, एकसामान्यवन्ति जनिविनाशवत्त्वात् गोवदिति । यदेव तेष्वेकं सामान्यं सैव सत्ता । तथा च नित्यद्रव्यगुणौ सत्तासामान्यसम्बन्धिनौ द्रव्यादित्वात् घटादिवदित्यनुमातव्यम् । सामान्यादौ तु सत्तासमारोपनिबन्धनस्तद्व्यवहारः; सामान्ये सामान्यान्तरस्य बाधकोपपत्तेरनुमानप्रस्तावे वक्ष्यमाणत्वात् । द्रव्यादौ तु (समारोप)स्थलान्तरे मुख्यासिद्धौ तदसिद्धेः,[1] अबाधाच्च । यः पुनरर्थक्रियाकारित्वं सत्त्वमाचष्टे तस्य तत्परामर्शमन्तरेणापि धवलनीलादौ अस्ति इति प्रतिभासो न भवेदित्येषा दिक् ।

॥ रूपत्वादिजातिसिद्धौ प्रमाणम् ॥

रूपत्वादयोऽपि रूपादिप्रत्ययानुवृत्तिसिद्धाः । न च नयनाद्येकैकेन्द्रियग्राह्यतानिबन्धनोऽसौ, अतीन्द्रियस्य तदयोगात, योग्यतायास्त्वनुगताया रूपत्वाद्यनतिरेकात् ।

किं च नयनादय एव परस्परपरावृत्तरूपत्वाद्यसिद्धौ न सिद्ध्यन्ति । तथा हि—रूपग्रहणासाधारण[कारण]मिन्द्रियं नयनं, रसग्रहणासाधारणं[कारणं] रसनमित्यादिर्वा तद्व्यवस्था, यद्वा तैजसमिन्द्रियं नयनं, आप्यं रसनमित्यादिः । प्रथमे परस्पराश्रयप्रसक्तिः नयनग्राह्यताव्यतिरेकिणो रूपत्वादेरसिद्धेः । द्वितीये तु तैजसत्वादिकमेव कुतः सिद्ध्येत् ? यदि मतं विवादपदं तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात् प्रदीपवत् । विप्रतिपन्नमाप्यं तेषु रसस्यैव व्यञ्जकत्वात्, दन्तोदकवत् । विवादापन्नं पार्थिवं तेषु गन्धस्यैव व्यञ्जकत्वात्, उभयाभिमतपार्थिवद्रव्यवत । न च ग्रीष्मवर्षोदकेन व्यभिचारः, तस्य रसस्यापि व्यञ्जकत्वात् । विवादापन्नं वायवीयं तेषु स्पर्शस्यैव व्यञ्जकत्वात् व्यजनपवनवदिति तैजसत्वादि-

1. सत्तासमारोपासिद्धेः

**एतेषु संख्यादिष्वाश्रितानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद्ग्रहणम् ।**

---

सिद्धिरिति । हन्त ! एवं रूपत्वादिसामान्यावच्छिन्नतत्तद्गुणग्रहणनियमेन तैजसत्वाद्यु-न्नेयम् । अन्यथा, रूपादिमध्ये रूपस्यैव व्यञ्जकत्वादित्यस्य नयनादिग्राह्यमध्ये(न) नयनग्राह्यस्यैव व्यञ्जकत्वादित्यर्थ(स्य)[: तत्र] तैजसेन्द्रियत्वमेव च नयनत्वम् । तथा च नयनसिद्धौ तद्ग्राह्यत्वसिद्धिः । तत्सिद्धौ च नयनसिद्धिरित्यन्योन्याश्रयता । तस्मान्नयनादिव्यवस्था रूपादिसामान्याधीनेति तत्सिद्धिः । एवं धवलत्वादिकमनु-सन्धेयम् ।

॥ जगतीतलवृत्तिधवलादिरूपमेकमेवेति मीमांसकमतम् ॥

यदि मतं एकैकमेव धवलकपिलादिरूपमाश्रयभेदात् भिन्नमिव भासते । तरतम-भावप्रतिभासः पुनरस्याश्रये विपरीत[ रूप ]स्य मिश्रणेन । यथा यथा खलु धवले कपिलनीलादिसंसर्गः तथा तथा तरतमभावप्रतिभास इति ।

॥ तत्खण्डनम् ॥

तन्न । स्थिरेऽप्याश्रये पावकसंयोगात् पूर्वपरावृत्तेरुत्तरोत्पादस्य च पिठरपाके परमाणुपाके च प्रामाणिकत्वात् । न च समवाय एव नश्यति उत्पद्यते चेति युक्तम्; स्थिराश्रये नित्यस्य समवायविनाशादेरप्यदर्शनात् । अन्यथा सामान्यादेरपि[1] तत्प्रसङ्गात् । घटादेरप्यनयैव नीत्या नित्यत्वप्रसङ्गाच्च । नित्यस्य चैकस्यानन्त-व्यक्तिसमवेतस्य सामान्यरूपतैव स्यादिति ।

**एतेषु सङ्ख्यादिष्वाश्रितानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद्ग्रहणमिति** संयुक्तसमवेते सङ्ख्यादौ सामान्यादेर्यः सम-वायस्तस्मादित्यर्थः । सङ्ख्यादिग्रहणं च घटत्वादिव्यवच्छेदार्थम् । सामान्येषु सामा-न्यानङ्गीकारात् । आदिग्रहणं तु सुखादिपर्यन्तावरोधार्थम् ।

---

1. सामान्याभावादेः—मा.

श्रोत्रसमवायाच्छब्दग्रहणम् ।

---

ननु कथमेतत्; सङ्ख्याद्यपि सामान्यादिकमिति समर्थितत्वात् । न । विचारणार्थमन्यमतेनास्योपक्षेपादित्याचार्येणैव परिहृतमेतत् । विचारणीयं चात्र विचारितमेवास्माभिः प्रसङ्गात्प्रागेव । परमार्थस्तु संयोगकर्मरूपादौ सुखादिपर्यन्ते समवेतानां संयोगत्वादीनां सुखत्वाद्यन्तानां इति पठनीयम् । स्वाश्रयग्राहकैरित्यनुसंहितोपाधिरौपाधिको व्यवहारः । नचाव्यवस्थितमिन्द्रियमात्रमुपाधिः । रूपादिव्यवहारे रसादावपि रूपादिव्यवहारप्रसङ्गात् । **श्रोत्रसमवायात् शब्दग्रहणमिति ।** श्रोत्रे समवायात् शब्दस्य ग्रहणमिति विग्रहः । श्रोत्रं नाम कर्णशष्कुल्यवच्छिन्नं नभः ।

॥ आकाशसाधकानुमानोपन्यासः ॥

स्यान्मतं—नभ एवासिद्धं कथं तस्य श्रोत्रभाव इति । शब्दलिङ्गत्वात् । तथा हि–शब्दः क्वचित्समवेतो गुणत्वात् रूपवत् । यत्र समवेतस्तदेवाकाशमभिधीयते । न च गुणत्वादित्यसिद्धम् । गुणः शब्दः सामान्यवत्त्वे सति सामान्यवदनाधारत्वात् रूपवदिति तत्सिद्धेः । संयोगाद्याधारत्वमपि शब्दस्यानन्तरमेव द्रव्यत्वनिराकरणेन निरस्तं भविष्यति । कर्मणोऽपि गुणता समर्थितेति न व्यभिचारः ।

॥ शब्दस्य द्रव्यत्वानुमानं तन्निरासश्च ॥

स्यान्मतिः । द्रव्यं शब्दः साक्षात्सम्बन्धेन गृह्यमाणत्वाद्धटवदिति । न । द्रव्यत्वश्रोत्रगुणत्वयोरन्यतरासिद्धौ हेत्वसिद्धेः । अथ परिशेषात्तत्सिद्धिः । सामान्यवत्त्वेन सामान्यादित्रयव्यावृत्तेः, मूर्तावर्तित्वेनाकर्म(क)त्वात्, द्रव्यगुणपरिशेषे संयोगः समवायो वा साक्षादेवेति । न । द्रव्यत्वेऽपि बाधकात्परिशेषतो गुणत्वासिद्धौ लिङ्गग्राहकप्रमाणेन बाधापत्तेः । तथा शब्दो न द्रव्यं अमूर्तत्वे सति बहिरिन्द्रियग्राह्यत्वात् रूपवदिति द्रव्यत्वबाधकमिति सिद्धं गुणत्वम् । द्रव्यत्वे च विशेषगुणावच्छेदेनैव ग्रहणप्रसङ्गो घटवदिति बाधकमुन्नेयम् ।

॥ शब्दस्य पृथिव्याद्याश्रितत्वपूर्वपक्षः तत्खण्डनं च ॥

नच पृथिव्याद्याश्रयः शब्दः श्रोत्रैकप्रत्यक्षत्वात् शब्दत्ववत् । यदि पृथिव्याद्याश्रयत्वे भेर्याद्याश्रयः तर्हि तस्य विप्रकर्षे व्यवधाने वा न शब्दः श्रूयेत सन्निकर्षा-

सम्भवात्। नच चम्पककर्पूरादेः भागागमनेन गन्धग्रहणवदुपपत्तिः। भेर्यादिनादे तादृङ्नादासम्भवात्। अन्यथा शतशः शकलीकृतभेरीभागताडनेऽपि तादृङ्नादप्रसङ्गात्। भेर्याद्यतिरिक्तव्यक्त्याधारो भवतीति चेन्न। तस्य भेर्यादिदेशस्थत्वे प्राच्यदोषात्। कर्णगतत्वे भेर्यादेरसम्बन्धे शब्दजनकत्वासंभवात् अन्यथाऽतिप्रसङ्गात्। अत एवान्तःकरणगुणत्वमप्यनुपपन्नं, परमाणुगुणत्वेनातीन्द्रियत्वप्रसङ्गात्। पवनगुणत्वे तु स्पर्शनान्यप्रत्यक्षता न भवेत्। व्यापकं तु व्यक्त्यन्तरं नभसो नावशिष्यते। नचात्मगुणः तद्गुणत्वे बहिरिन्द्रियग्राह्यत्वानुपपत्तेः। दिक्कालयोस्तु द्रव्यत्वमेव निषेत्स्यामः।

॥ परिशेषानुमानम् ॥

तत्सिद्धमेतत् शब्दः पृथिव्याद्यतिरिक्तगुणः पृथिव्याद्यवृत्तित्वे सति गुणत्वात्। यदुक्तसाध्यं न भवति न तदुक्तसाधनं यथा रूपमिति। विशेषगुण(:)प्रसिद्ध्यादिदूषणं तु व्यतिरेकिप्रस्तावे पराकरिष्यते इति।

आकाशस्य श्रोत्रत्वसाधनम्

तदेवं नभसि सिद्धे तदेव श्रोत्रमित्यपि सिद्ध्यति बहिरिन्द्रियत्वेन नयनवत् भौतिकत्वसिद्धेः। इतरपरिशेषाच्च—नहि तावत्पार्थिवं तत् इन्द्रियत्वे सति गन्धाग्राहकत्वात् रसनवत्। तथा रसरूपस्पर्शाग्रहकत्वात् आप्यतैजसवायवीयानि घ्राणवदपाकरणीयानीति। परिशेषतो नभ एव श्रोत्रम्। किं च ग्राह्यसजातीयगुणाधिकरणत्वे श्रोत्रस्य बहिरिन्द्रियत्वाद्रसनवत् सिद्धे, सिद्धमेव ध्वानाधारत्वेन नभस्त्वम्। ताभ्यामेव हेतुदृष्टान्ताभ्यां स्वगुणाग्राहकत्वप्रसङ्ग इति चेन्न; विशेषविरोधस्यादोषत्वात्। [1]स्वतन्त्रसाधने तु श्रवसः साक्षात्क्रियमाणशब्दगुणत्वमभ्युपगम्य तदग्राहकत्वसाधने, धर्मिग्राहकप्रमाणबाधः। तदुपलम्भेनैव तद्व्यवस्थानात्। अतद्गुणत्वे सन्निकर्षाभावात् अग्रहणप्रसङ्गः प्रतिकूलतर्कोऽपीति सन्दिग्धानैकान्तिकत्वं हेतोः।

नचैवं "दिशः श्रोत्रं" इत्यागमविरोधः; "मनश्चन्द्रमा" इतिवदधिष्ठातृदेवताभिप्रायत्वादिति।

---

1. श्रोत्रं न स्वगुणग्राहकम् बहिरिन्द्रियत्वात् रसनवदिति साधने इत्यर्थः

**तदाश्रितसामान्यज्ञानं समवेतसमवायात् एतत्पञ्चविध-सम्बन्धसम्बद्ध विशेषणविशेष्यभावात् समवायाभावयोर्ग्रहणम् यथा—घटशून्यं भूतलम् भूतले घटो नास्तीति ।**

---

तदेवं नभसि श्रोत्रे नास्ति किञ्चन दूषणम् ।
अतिप्रसङ्गदोषस्तु कर्णावच्छेदवारितः ॥ १ ॥

निरूपितं प्रसङ्गेन बहिरिन्द्रियपञ्चकम् ।
मनस्तु मेयप्रस्तावे विस्तरेण वदिष्यते ॥ २ ॥

कृतमतिविस्तरेण ।

**तदाश्रितसामान्यज्ञानं समवेतसमवायादिति ।** तस्मिन् शब्दे आश्रितस्य शब्दत्वादिसामान्यस्य ज्ञानं श्रोत्रसमवेते शब्दे समवायादित्यर्थः ।

॥ शब्दत्वजात्यङ्गीकारे प्रमाणम् ॥

शब्दत्वं तु विप्रतिपन्नं प्रत्यनुमानेन समर्थनीयम् । तथा हि—शब्दाः असाधारणैकसामान्यवन्तः बाह्यैकेन्द्रियग्राह्यगुणत्वात् रूपवदिति । रूपत्वं तु समर्थितमिति न प्रसर्तव्यम् । विपर्यये त्वेकः शब्दशब्दो [ऽनुपपन्न इति][1] बाधकः । न चात्र श्रोत्रग्राह्यत्वमुपाधिः, आद्यादिशब्दाव्याप्तेः । समर्थयिष्यते च शब्दानित्यत्वं, तेनैकत्वादिसामान्यमपि तत्प्रत्ययानुवृत्त्या सेत्स्यतीति ।

**एतत्पञ्चविधसम्बन्धसंबद्धविशेषणविशेष्यभावाद्दृश्याभावसमवाययोः ग्रहणमिति ।** एते संयोगादय एव पञ्चसम्बन्धास्तैः सम्बद्धा येऽर्थाः तैस्सह विशेषणविशेष्यभावः षष्ठः सम्बन्धः, तस्माद्दृश्यस्य प्रत्यक्षयोग्यस्याभावो दृश्याभावः, स च समवायश्चेति द्वन्द्वः तयोर्ग्रहणमिति विग्रहः तत्र संयुक्तविशेषणभावादभावस्य ग्रहणमुदाहरति—**यथा घटशून्यं भूतलमिति ।** घटाद्यभावो ह्यत्र नयनसंयुक्तस्य भूतलस्य विशेषणं भासत इति । **भूतले घटो नास्तीति** संयुक्तविशेष्यभावेन ग्रहणोदाहरणम् । इह हीन्द्रियसंयुक्तं भूतलमेव विशेषणत्वेन भासत इति ।

---

1. बहुषुशब्देषु एकः शब्द इति प्रत्ययोऽनुपपन्नः, शब्दशब्दो न स्यात् इत्यर्थः ।

**एवं सर्वत्रोदाहरणीयम् । समवायस्य तु क्वचिदेव ग्रहणम् ।**

---

॥ विशेषणताविशेष्यतयोः बाहुल्योपपादनम् ॥

**एवं सर्वत्रोदाहरणीयमित्यस्यार्थः** । अनुष्णः सलिलस्पर्श इति सम्युक्तसमवेतविशेषणभावादौष्ण्याभावो गृह्यत इति । सलिलस्पर्शे नास्त्यौष्ण्यमिति सम्युक्तसमवेतविशेष्यभावात् औष्ण्याभावो गृह्यत इति । "नीलत्वसामान्यमशुक्लं" "नीलत्वे शौक्ल्यं नास्ति" इति च सम्युक्तसमवेत[समवेत]विशेषणविशेष्यभावाभ्यां शौक्ल्याभावग्रहणम् । एवं 'अतीव्रो ध्वनिः' ध्वनौ तीव्रत्वं नास्ति' इति समवेतविशेषणविशेष्यभावाभ्यां तीव्रत्वाभावग्रहणम् । 'निर्भेदं शब्दत्वं' 'शब्दत्वे भेदो नास्ति' इति समवेतसमवेतविशेषणविशेष्यभावाभ्यां भेदाभावः प्रतिभाति । भेदस्तु भेदकधर्मोऽत्र विवक्षितः न त्वितरेतराभावः; इतरथा त्वभावस्याभावो भाव एवेति प्रकृतासङ्गतमुदाहरणं प्रसज्येतेति ।

॥ विशेषणविशेष्यभावस्य मूलसम्बन्धानपेक्षत्वोपपादनम् ॥

ननु च विशेषणविशेष्यभावः सति सम्बन्धान्तरे यथा दण्डीति । न च सम्योगादिः प्रकृते सम्भवतीति । सत्यम् । तथापि इन्द्रियसम्बद्धभूभागादिभिरभावस्य भवत्येव सन्निधिभावः विशेषणविशेष्यभावेनैव[च] व्यवस्थाप्यः । स चोपचाराद्विशेषणविशेष्यभाव इत्युच्यते तद्धेतुत्वादित्याचार्यो मन्यते ।

॥ अदृष्टं विशिष्टप्रत्ययहेतुः इति मतोपपादनं तत्खण्डनं च ॥

ये त्वाहुः अदृष्टमेव विशिष्टप्रत्ययहेतुः तथाऽभिधीयते नातिरिक्तः सम्बन्ध इति । तेषामसति सम्बन्धानुभवे कथमैन्द्यको विशिष्टप्रत्ययः? सम्बन्धानुभवस्यापि तदुत्पत्तावन्वयव्यतिरेकाभ्यां कारणभावावधारणात् । भवति वै दण्डसंयोगप्रतीतौ प्रतीतिर्दण्डीति । न च भवति तदप्रती(ता)तौ सेति ।

॥ समवायस्य परमतरीत्या प्रत्यक्षत्वं स्वमते तु यौक्तिकप्रत्यक्षत्वमेव ॥

[नन्व]भावस्येव समवायस्यापि सम्भवति सर्वत्रोदाहरणं, किं वा नेत्यत आह—**समवायस्य तु क्वचिदेवेति** । द्रव्यादित्रय एव समवायग्रहणं न तु

सामान्यादावित्यर्थः । अत्रोदाहरणं—यथा घटे रूपसमवाय इति । परमतेन त्वेतदुदाहरणं वेदनीयम् । स्वमते समवायस्य स्वरूपत एव यौक्तिकप्रत्यक्षविषयत्वेन व्यवस्थापनात् । अन्यथा हि समवायोऽपि यदि विशेषणविशेष्यभावेनाभाववदनुभूयते, तत्रापि सम्बन्धान्तरमनुभूयेत । तथा चानवस्था प्रसज्येत । न चानवस्थितसम्बन्धोऽनुभूयते । न च कश्चिदप्ययमनयोः समवाय इति इदमत्र समवेतमिति वा, समवायवानयमिति वा, विशेषणविशेष्यभावेनाभाववत् समवायमध्यक्षेणानुभवति ।

॥ समवायस्य स्वरूपतः प्रत्यक्षत्वे युक्तिप्रदर्शनम् ॥

का तर्हि युक्तिः समवायस्य स्वरूपतोऽपि प्रत्यक्षत्वे? शुक्लः पट इति विशिष्टप्रत्ययान्यथानुपपत्तिरेव । न खल्वसति मूलसम्बन्धावभासे तत्सम्भव इत्युदितमिति । नन्वस्ति तावत् अनयोः समवाय इति विशिष्टज्ञानं यौक्तिकं, तद्द्वारिकापि अनवस्था किं न भवेत्? मैवम् । अध्यक्षविशिष्टानुभवस्यैव सम्बन्धानुभवव्याप्यत्वात् । परोक्षप्रतिभासस्य तु समवायस्वरूप एव भेदकल्पनयाप्युपपत्तेः । एकस्यामिव सत्तायां भेदकल्पनया द्रव्यादौ सत्ता सतीति । तस्मात्परमतेनैवोदाहरणम् । आचार्यः पुनरत्रैव स्खलितं वास्त्विदं ममेत्यवोचत् । नहि स्वोक्तेऽप्यसावभिनिवेशवान् ।

[1] किञ्च इदमत्र शङ्क्यते यथा कुम्भाद्यभावो भूभागादिविशेषणविशेष्यभावेन प्रत्यक्षीक्रियते तथा समवायोऽपि घटादिविशेषणविशेष्यभावेनेति वर्णयन्त्येके । तत्कथं? सम्बन्धपरम्पराप्रसङ्गादित्यत आह—**समवायस्येत्यादि** । क्वचिदेवेति, कुतार्किकोपदेशविपर्यासितबुद्धावेव तथा समवायो भाति न पुनरभाववत्सर्वव्यवहर्तुबुद्धावित्यर्थः ।

॥ अदृष्टादिसहकृतादिन्द्रियात् समवायग्रहणम् ॥

अथ यौक्तप्रत्यक्षपक्षेऽप्य[यं]सम्बन्धः कथमनुभूयते? न । दृश्यसम्बन्धिभ्यां सम्बद्धादिन्द्रियादेवादृष्टादिसहितात्समवायग्रहणसम्भवात् । स एव तु समवायः सम्बन्धिनोर्विशिष्टप्रत्ययनिमित्तत्वात् संयुक्तविशेषणभावादिव्यपदेशवानिति । तादात्म्यमेव गुणगुण्यादेः न समवाय इति उत्तरत्र पराकरिष्यते ।

---

1. पूर्वोक्तानुशयेन प्रकान्तरेणावतारयति—किञ्चेति ।

**योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकम् ।**

---

॥ युतसिद्धयोः संयोग इति तल्लक्षणम् । विभुद्वयसंयोगस्य नित्यस्याङ्गीकारश्च ॥

कः पुनः संयोगसमवाययोः लक्षणभेदः? उच्यते । युतसिद्धयोः संश्लेषः संयोगः । युतसिद्धिरपि द्रव्ययोः पारम्पर्येणाप्यवयवावयविभावविरहः । तथा च युतसिद्धिर्व्यावर्तमाना स्वव्याप्यसंयोगमुपादाय विभुभ्यां व्यावर्तेत इत्यनुपपन्नम् । विभुनोस्तु संयोगसद्भावे प्रमाणम्—आकाशसंयुक्त आत्मा तदतिरिक्तत्वे सति संयोगित्वात् द्रव्यत्वाद्याश्रयघटवत् । स च कर्मादिकारणानिरूपणात् सदकारणवत्त्वेन नित्य इति । न चोक्तहेतोरेव विभागोऽपि नित्यः प्रसज्येत विभुनोरिति वाच्यम् । विभुनोर्भवतोर्विभागित्वानुपपत्तेः ।

॥ नित्यविभागानङ्गीकारः ॥

स हि संयोगघातको गुणः, संयोगयोग्ययोः संयोगाभावो वा, संयोगध्वंसमात्रं वा । सर्वथा संयोगायोग्ययोर्न स्यात् । तद्योग्यतायां त्ववश्याभ्युपगन्तव्यायां सम्भावनासहायादुक्तसाधनादेव शाश्वतिकः संयोगः स्यादिति कुतो विभागावकाशः । तदेवं (प्रत्यक्षसिद्धौ) प्रतिकूलतर्कपराहत्या व्याप्त्यसिद्धेरसत्प्रतिपक्षादुक्तसाधनादेवाभिमतसिद्धिः । संयोगाभावे तु विभुनोः समवायस्याप्यभावात् सान्तरद्रव्यत्वप्रसक्तौ घटादिवदविभुत्वापत्तिः । निरन्तरत्वे तु नैरन्तर्यमेव परस्परव्याप्यभागभागिनोः द्रव्ययोः संयोगः स्यादित्यनुकूलतर्कः । एतेन मूर्तत्वमत्रोपाधिरिति निरस्तम् । तस्य साध्यव्यापकतायामेतस्यैव तस्य प्रतिकूलत्वात् । समवायलक्षणं तु अयुतसिद्धयोर्वस्तुनोरेव संश्लेष इति । भूभागाभावसम्बन्धः समवायो माभूदिति वस्तुनोरित्युदितमिति ।

॥ योगिप्रत्यक्षनिरूपणम् ॥

सम्प्रति योगिप्रत्यक्षं व्याचष्टे—**योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकमिति ।** तुशब्दः प्रत्यक्षान्तराद्विशेषं द्योतयति । तमेवाह—**देशेत्यादिना ।** देशादीनां द्वन्द्वे तैर्विप्रकृष्टास्त एवार्थास्तेषां ग्राहकमिति विग्रहः ।

**तत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव, धर्मादिसहितादशेषार्थग्रहणम् । वियुक्तावस्थायां तु चतुस्त्रयद्वयसन्निकर्षाद्यथासम्भवेन योजनीयम् ।**

---

देशविप्रकृष्टाः सत्यलोकादयः, सव्यवधाना रसातलादयश्च । कालविप्रकृष्टा नष्टा अनागताश्च । स्वभावविप्रकृष्टाः परमाण्वादयः । त्रेधा विप्रकृष्टानां सर्वेषां केषांचिदेव वा ग्राहकं योगिप्रत्यक्षमभिधीयते तद्विपरीतमयोगिप्रत्यक्षमिति सिद्धं लक्षणम् ।

॥ योगिनां युक्तावस्थायां प्रत्यक्षनिरूपणम् ॥

योगिनश्च युक्तावस्थायां वियुक्तावस्थायां च भवति प्रत्यक्षम् । तत्र युक्तावस्थायां कथमित्याह—**तत्र युक्तावस्थायामात्मान्तः करणसंयोगादेव धर्मादिसहितादशेषार्थग्रहणमिति ।** योगः समाधिः तद्विशिष्टा युक्ता । सैवावस्था, तस्यां आत्माऽन्तःकरणं चेति द्वन्द्वः । तयोः संयोगादेव नतु विषयसन्निकृष्टात्, तस्यातीतादावसंभवात् इत्येवकारार्थः । कथंभूतात्संयोगात्? धर्मः (न)आदिर्यस्य सहकारिनिकरस्य तेन सहितात् । न विद्यते शेषोऽस्येत्यशेषः स एवार्थः तस्य ग्रहणं गृह्यतेऽनेनेति व्युत्पत्त्येति योजनीयम् । परिपक्वसमाधेरिदं प्रत्यक्षं, इतरस्याशेषार्थग्रहणानुपपत्तेः इत्यवगन्तव्यम् ।

॥ वियुक्तयोगिनां प्रत्यक्षप्रकारः ॥

वियुक्तावस्थायां कथमित्याह—**वियुक्तावस्थायां तु चतुस्त्रयद्वयसन्निकर्षाद्यथासम्भवेन योजनीयमिति ।** योगस्य विपर्ययो वियोगः, तद्विशिष्टा वियुक्ता, सैवावस्था तस्याम् । तुशब्देनावस्थान्तराद्विशिनष्टि । अर्थसन्निकर्षापेक्षत्वेन चत्वारस्त्रयं द्वयं चेतीतरेतरयोगस्तेषां सन्निकर्षात्संयोगात् ग्रहणं यथासम्भवेन सम्भवमनतिक्रम्य योजनीयम् । घ्राणरसनचक्षुस्त्वचामन्यतमेनार्थग्रहणे चतुर्णां संयोगः; आत्मा मनसा मन इन्द्रियेणेन्द्रियमर्थेन संयुज्यत इति । श्रोत्रेणार्थग्रहणे त्रयाणामात्ममनः श्रोत्राणाम् । मनसा ग्रहणे तु द्वयोरात्ममनसोः संयोग इति वेदितव्यम् । बहिरिन्द्रियेणापि सूक्ष्मादि सुग्रहणमेवेत्यस्यामवस्थायामस्मदादिभ्यो विशेषः ॥

**अत्रैवार्षमन्तर्भूतं प्रकृष्टधर्मजत्वाविशेषात् ।**

॥ ऋषीणां धर्मभेदात् विप्रकृष्टानां अपरोक्षानुभवः ॥

ऋषीणामपि विप्रकृष्टविषयं वेदनं योगिप्रत्यक्षान्न भिद्यत इत्याह—**अत्रैवार्षमन्तर्भूतम्** । कुतः ? **प्रकृष्टधर्मजत्वाविशेषादिति** । प्रकृष्ट उत्कृष्टः स एव धर्मः तस्माज्जायत इति तज्जः तस्य भावस्तत्त्वं तदेव न विशिष्यत इत्यविशेषः । तस्य वा न विशेषः साधारण्यात्, तस्मात् । इदमुक्तं भवति । विप्रकृष्टेऽपि विषये धर्मभेदादपरोक्षानुभवो योगिप्रत्यक्षलक्षणम् । व्यासादीनां तादृगेवानुभवः । साधनं तु धर्मः समाधिसाध्यो वा, तपःप्रभृतिसाधनीयो वाऽस्तु । नैतावता प्रमाणभेदः । कारणानामन्तर्गणि[क] (त)भेदेन प्रमाणानन्त्यप्रसक्तेः । योगिपदं तु उपलक्षणमयोगिकानामपि त्रिकालदर्शिनामित्यवधेयम् ।

(न)योगिप्रत्यक्षसद्भावे पुरुषादेः प्रमाणता ।
अन्यथा तु समाश्वासः स्वर्गादावपि को भवेत् ॥

॥ योगिप्रत्यक्षे अनुमानप्रयोगः ॥

अनुमानमपि—धर्मादि केषांचित्प्रत्यक्षं प्रमेयत्वात् करतलवदिति । विपर्यये तु तादर्थ्येन योगविधीनां वैयर्थ्यप्रसङ्गो बाधकः । तथापि अस्मदादीन्द्रियग्रहणार्हताप्रयुक्तं प्रत्यक्षत्वं तन्निवृत्तौ निवर्तेत[1] इति चेन्न । अस्मदादिपर्युदसनीयस्य प्रामाणिकत्वाप्रामाणिकत्वयोरव्यवच्छेद्यत्वेन व्यर्थविशेषणत्वात् । स्वेन्द्रियग्रहणार्हत्व( स्यै )स्येव स्वप्रत्यक्षतायामस्मदादिप्रत्यक्षत्व एव तस्य प्रयोजकत्वात् । परेन्द्रियग्रहणार्हत्वेन परप्रयत्नेन तत्प्रत्यक्षत्ववत् योगीन्द्रियग्रहणार्हतयैव तत्प्रत्यक्षतोपपत्तेः । यत् यदिन्द्रियग्रहणार्हं तत् तस्य प्रत्यक्षमित्येव नियमात् । इन्द्रियग्रहणार्हतामात्रं तु नोपाधिः । साधनव्यापकत्वात् । एतेन प्रत्यक्षसामग्री प्रत्यक्षोपाधिरित्यपि निरस्तम् । तथापि कथमतीन्द्रिये योगिनोऽपीन्द्रियं प्रवर्तेत इति चेन्न । अस्मदाद्यपेक्षयैवातीन्द्रियत्वोपपत्तेः, स्वप्रयत्नस्येव परापेक्षया ।

---

1. तथा च पूर्वोक्तानुमाने अस्मादादीन्द्रियग्रहणार्हत्वमुपाधिरित्यर्थः

**तच्च द्विविधं, सविकल्पकं निर्विकल्पकं चेति,
तत्र संज्ञादिसम्बन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकं
यथा देवदत्तोऽयं दण्डीत्यादि ।**

---

॥ योगिप्रत्यक्षस्य अस्मदादिप्रत्यक्षवैलक्षण्यम् ॥

कस्तर्हि विशेषः योगीन्द्रियस्यास्मदादीन्द्रियादिति चेत् योगजधर्मानुग्रह एव । तत एव[1]भावनापरिपाकजत्वेऽपि जातु योगिनां [ अ ]वितथः साक्षात्कारः । कामातुरकामिनीसाक्षात्कारस्तु तादृग्धर्मानुग्रहरहितभावनापरिपाकप्रसूतो वितथ इति व्यवस्था । किं च स्वप्नेऽपि कश्चन विप्रकृष्टविषयः संवादिसाक्षात्कारः स तु काकताळीयोऽपि नाकस्मिकः, सर्वस्वप्नसंवेदनानां तथात्वापत्तेः । कारणं पुनरत्राहष्टमेव, दृष्टस्य नियामकस्यानुपलम्भात । तथाऽदृष्टवशादेव विप्रकृष्टविषयमपि [2]स्वयमेव साक्षात्कुर्वन्ति समाधिभृत इति किं नानुज्ञायते । किञ्च कर्मजमेवादृष्टं क्वापि समाधिप्रभावप्रभवमित्येव विशे(ष)षोऽस्तु ।

॥ योगिधर्मसाक्षात्कारे प्रत्यनुमानं तन्निरासश्च ॥

तथापि विवादाध्यासिता योगिनो न धर्मादिसाक्षात्कर्तारः प्राणित्वात् प्रथग्जनवदित्यादेः को दोष इति चेत । धर्मिग्राहकप्रमाणविरोध इत्यवधेहि । कथमन्यथा मीमांसागुरवो न मीमांसाभिज्ञाः प्राणित्वान्मद्वदित्यादेः अपाकरणमित्यलमलीकप्रलापैः ।

॥ योगिप्रत्यक्षद्वैविध्यसमर्थनम् ॥

**तच्च द्विविधमिति ।**

**तद्यो**गिप्रत्यक्षम् । चशब्दादयोगिप्रत्यक्षमपि । **द्विविधं** द्विप्रकारमित्यर्थः । प्रकारमेवाह-**सविकल्पकं निर्विकल्पकं चेति ।** विकल्पकं व्यवच्छेदकं नामादि, तेन सहितं सविकल्पकम् । निर्गतं विकल्पकमस्मादिति निर्विकल्पकमनवच्छेदकमित्यर्थः । **तत्र संज्ञादिसंबन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पक-**

---

1. भावानां—मा. 2. कथमेवं

**मिति । तत्र** तयोः सविकल्पकनिर्विकल्पकयोः मध्ये सविकल्पकं नाम संज्ञा आदिः यस्य विशेषणग्रामस्य तेन सह यः सम्बन्धस्तस्योल्लेखेनावग्रहेण सह ज्ञानस्य विशेष्य-विषयस्योत्पत्तेर्निमित्तमिति । तत्पुनरतीन्द्रियत्वात् न साक्षात् शक्यमुदाहर्तुमिति तत्फलमुदाहरति—**यथा देवदत्तोऽयं दण्डीत्यादीति ।** देवदत्त इति ज्ञानं केवलं संज्ञासंबन्धोल्लेखेनोत्पद्यते । नचेह नामधेयात्मा प्रतिभात्यर्थः । येनातदात्मन-स्तथावभासो विभ्रमः स्यात् । न खलु देवदत्तशब्दं पुरोवर्तिनि कोऽपि प्रत्येति । किन्तु देवदत्तपदवाच्योऽयमिति । नचेदमन्यथेति न विभ्रमः ।

॥ शब्दस्य चाक्षुषप्रत्यक्षे भानोपपत्तिः ॥

कथं तथापि श्रावणस्य चिरविनष्टस्यापि ध्वनेश्चाक्षुषे विकल्पे प्रतिभानं ? कथंचित् तटस्थ एवायं वाचकभावेन स्मर्यमाणो वाच्यमुपलक्षयति । नचावच्छेदक-मवच्छेदनीयेनैकवेदनविषयमिति वक्ष्यते । नच वाच्यवाचकभावावच्छिन्ननामधेय-स्मरणव्यवधानादकारणमिन्द्रियमापद्यते ; सहकारिणो व्यवधायकत्वाभावात् । अपरथाऽतिप्रसङ्गात् । सहकारिक्रमानुरोधेन च कार्यक्रमः क्षणभङ्गभङ्गे स्थास्यति । नचैवं सत्यापरोक्ष्यमविकल्पोपाधिकं, विकल्पेषु कल्पनीयम् ; नैसर्गिकत्वेऽप्यविरोधात् । अतीतानुभवभेदाग्रहात् आपरोक्ष्ये च विकल्पानामनागतविकल्पभेदाग्रहात अनु-भवेषु वैपरीत्यापत्तेः ।

कदाचिच्चानुभव(।)[ भेदाग्रहात् ]स्मृतेरपि साक्षात्कारितापत्तेः । नच वचनीयं विकल्पाःसङ्केतकालदृष्टरूपाभिन्नाः सन्निहितरूपं गृह्णन्तः शब्दसंसर्गयोग्यप्रतिभासात् सङ्केतकालदृष्टत्वं च सम्प्रत्यनिवृत्तं वस्तुनो गृह्णन्तः कथमपरोक्षा भवेयुरिति । विशेष्यस्या-भेदिनः सन्निधानात् । विशेषण[त्व]स्य च पूर्वदृष्टत्वस्य स्मरणमात्रारोहित्वात् । विशिष्टज्ञानस्य च विशेषणमनालम्बनमिति निरूपयिष्यमाणत्वात् । संवादित्वमप्यमीषां स्वारसिकमेव ।

यदि तु आलोचनोपाधिः स्यात्, गवयालोचनसमन्तरभाविन्यपि गोकल्पना संवदेत् । न च अविकल्पकगृहीतगोचरतया विकल्पवेदनमप्रमाणं, क्षणापेक्षया [प्रमाण] भावात् । सन्तानस्य चालीकस्याभ्रान्तविशेषणेन निर्विकल्पकेनानुभूत-त्वात । स्थिरपक्षे तु गृहीतग्राहित्वेऽप्यन्यथैव विकल्पे वस्तुप्रतिभासनात, संप्लवस्य च समर्थितत्वात् धारावहनवेदनवदेव प्रामाण्योपपत्तिरिति ।

**दण्डीति** द्रव्यावच्छेदेनोदाहरणम् । आदिग्रहणे 'गौः' 'गौरः' 'गच्छति' इति विकल्पनात् ।

॥ सविकल्पकोदाहरणम् ॥

गुणजातिक्रियायोगसमुल्लेखेन सूचित(।)ः ।
विशेषणावबोधोऽपि सर्वत्रात्र न भिद्यते ॥ १ ॥

केवलार्थविकल्पस्तु बालस्य स्तनगोचरः ।
स हि जात्याद्यवच्छिन्नं न ज्ञातुं क्षमते स्तनम् ॥ २ ॥

समयग्रहणाभावात्संज्ञोल्लेखो न सम्भवी ।
तावतैवाविकल्पत्वप्रसिद्धिस्तत्र वेदने ॥ ३ ॥

नचाभिन्नस्य जात्यादेः भिन्नत्वेन विकल्पनात् ।
अलीकगोचरत्वेन विभ्रमाः सविकल्पकाः ॥ ४ ॥

वस्तुभूतस्य जात्यादेर्व्यक्त्याद्यत्यन्तभेदिनः ।
समर्थयिष्यमाणत्वात्कस्य चित्प्राक् समर्थनात् ॥ ५ ॥

एवं च शब्दसंसर्गयोग्याभासित्वमात्रतः ।
नाप्रत्यक्षत्वसंसिद्धिः वैपरीत्यस्य चागमात् ॥ ६ ॥

सामान्यादिषु सत्येषु शब्दसंसर्गभागिषु ।
प्रत्यक्षत्वाभिलप्यार्थग्रहयोरविरोधतः ॥ ७ ॥

सामग्रीविरहोपाधेः स्पृष्टदृष्टे मनोरथे ।
संवादिसाक्षात्कारित्वात् प्रत्यक्षं च विकल्पवत् ॥ ८ ॥

संप्रधार्यमि[मौ]त्वस्य विशिष्टमितिगोचरौ ।
विशेषणविशेष्यार्थौ विशेष(या चा)[ष्यं वाऽ]विशेषणम् ॥ ९ ॥

सर्वत्र दण्डपुरुषाविति बुद्धिः प्रसज्यते ।
नामोल्लेखविकल्पे च चक्षुर्गोचरता ध्वनेः ॥ १० ॥

तस्माद्दण्डीति संवित्तिः न दण्डविषयोचिता ।
पुरुषप्रतिभासेन सामानाधिकरण्यतः ॥ ११ ॥

**वस्तुस्वरूपमात्रावभासकं निर्विकल्पकं यथा प्रथमाक्षिसन्निपातजं ज्ञानम् ।**

---

.... .... .... .... .... .... .... ।
विशेषणागोचरत्वं वचनीयं गुरुर्जगौ ॥

अदण्डपुरुषज्ञानाद्विशेषो हेतुभेदकः ।
अतद्व्यावृत्तिसाहाय्याद्विषयो व्यतिरिच्यते ॥

तदेव च विशिष्टत्वमिति तस्याभिधीयते ।
प्रत्याय्यान्यव्यवच्छित्तेराधारत्वं विशेष्यता ॥

विशेषणं तु ज्ञा [तस्य] प्रत्यायकमिष्यते ।
तुल्याधिकरणं त्वेके तदेवाहुर्विशेषणम् ॥

उपलक्षणमाहुश्च भिन्नाधिकरणं बुधाः ।
आन्तरालिकभेदोऽयमाचार्येणाऽविवक्षितः ॥

उपलक्षणपर्यायं यद्विशेषणमाह सः ।
भूतले च घटो नेति सप्तम्याह विशेषणम् ॥

॥ निर्विकल्पकलक्षणम् ॥

संप्रति निर्विकल्पकं लक्षयति-**वस्तुस्वरूपमात्रावभासकं निर्विकल्पकमिति ।** वस्तुनः स्वरूपमात्रस्य संज्ञाद्यनवच्छिन्नस्यावभासकं निर्विकल्पकमभिधीयते । स्वरूपमस्यातीन्द्रियमिति फलमेवोदाहरति—**यथा प्रथमाक्षिसन्निपातजं ज्ञानमिति ।** नहीदं संज्ञाद्यवच्छिन्नं वस्त्ववभासयितुं क्षमते; संज्ञास्मरणस्य सामान्यादिविशेषणग्रहणस्य च प्रागप्रवृत्तेः । विशिष्टवेदनस्य च विशेषणावभासपूर्वकत्वनियमात् । सुरभिमधुरादिद्रव्यवेदनवत्; भवतु तत्र यथा यत्रेन्द्रियान्तरपरिच्छेद्यं विशेषणं, विशेष्यं इन्द्रियग्रहणार्हं, तत्र विशेषणविशिष्टप्रतीतावापात एवात्मानमर्पयतु को विरोध इत्यपि न वाच्यम् । विशिष्टावभासमात्रस्य विशेषणगोचरतायाः प्राक्पराकृतत्वात् । तद्गोचरभावाभिमानस्य च विशिष्टवेदने निरन्तरपूर्वभाविविशेषणावभासोपाधिकत्वेनैवोपपत्तेः ।

॥ निर्विकल्पकज्ञानसद्भावे प्रमाणम् ॥

प्रमाणं तु निर्विकल्पकसिद्धौ सविकल्पकमेव कार्यम् । नहि तत्सामान्यादि-विशेषणविशेष्यतत्सम्बन्धस्वरूपावभासं विना निदानं विशिष्टविषयमुत्पत्तुमर्हति । नचाभिधेयस्वरूपप्रतिपत्तिमन्तरेण नियताभिधानानुस्मरणे कारणमस्ति । नचादृष्टमेव ; दृष्टस्यैवाभिधेयरूपसम्बन्धिवेदनस्य चक्षुरादिसन्निकर्षादावापाततः सम्भवे सत्य-दृष्टकारणकल्पनानुपपत्तेः । बालादेरिव संज्ञोल्लेखविरहिणो वेदनस्याभ्युपगन्तु-मुचितत्वात् । नच वाग्रूपमेव वस्तु बालादिवेदनस्यापि विषय इति वाच्यम् । तद्रूप[त्वे](तोऽ)प्रमाणाभावात् । अयं देवदत्त इत्याद्यनुभवस्य चान्यथैव समर्थि-तत्वादिति । तस्मात्सविकल्पकस्य प्रत्यक्षस्य प्रसिद्ध्यर्थमविकल्पकवित्तेरप्याश्रयणं सप्रमाणं स्यात् ।

॥ निर्विकल्पकस्वरूपविचारः ॥

एवं च सति सामान्यं केवलं व्यक्तिमेव वा ।
विषयीकुरुते वित्तिरविकल्पेति नेष्यते ॥ १ ॥

सम्बन्धग्रह[णे](णं)नर्ते विशेषणविशेष्ययोः ।
विशिष्टवेदनं न स्यादिति हि प्राक्समर्थितम् ॥ २ ॥

सम्बन्धिद्वयबुद्धिं च विना सम्बन्धवेदनम् ।
न जातु दृष्टमित्येतत् सर्वमालोच्य रूपतः ॥ ३ ॥

अनन्तरमवच्छिन्नं वस्तु सर्वेण वेद्यते ।
किं च सामान्यमात्रस्य भानं व्यक्तिं विना कथम् ॥ ४ ॥

तद्योग्यतान्तर्भूता हि सामान्यग्रहयोग्यता ।
स्वरूपयोग्यमित्येव सामान्यं भासते यदि ॥ ५ ॥

परमाणुषु सत्तादिभासनं केन वार्यते ।
रूपतश्चेदयोग्यं तत्कुम्भेऽप्यस्य कथं ग्रहः ॥ ६ ॥

व्यक्तिस्तु यदि सामान्यविधुरैवावभासते ।
वाचकस्मरणं न स्यात्तन्मात्रे समयाग्रहात् ॥ ७ ॥

**युक्तावस्थायां योगिज्ञानं च**

**॥ इति भासर्वज्ञप्रणीते न्यायसारे प्रथमः परिच्छेदः ॥**

---

न वै व्यक्तिषु सङ्केतः शब्दानां शक्यवेदनः ।
अनादृत्यैव सामान्यमानन्त्यव्यभिचारतः ॥ ८ ॥

तत्सामान्यं विशेषं च भासयत्यविकल्पिका ।
अतोऽखण्डावभासित्वं भवेदस्याः पराकृतम् ॥ ९ ॥

॥ उदाहरणान्तरकथनम् ॥

अत्रैवोदाहरणान्तरमाह—**युक्तावस्थायां योगिज्ञानं चेति** ।

योगः समाधिरैकाग्र्यं चेतसोऽर्थेषु गीयते ।
नच तस्यामवस्थायां विकल्पस्यास्ति सम्भवः ॥ १ ॥

वाचकस्मरणादौ हि चित्तव्यासङ्गसम्भवात् ।
विकल्पनायामैकाग्र्यक्षतिरेव भवेदिति ॥ २ ॥

प्रमाणसाधारणलक्षणोक्तेः
अनन्तरं तस्य भिदां निरूप्य ।
प्रत्यक्षमालक्ष्य विशेषचिन्तां
चकार तस्याप्यविकल्पकान्ताम् ॥ ३ ॥

**इति महाराजाधिराजश्रीमदपरादित्यदेवविरचितायां न्यायमुक्तावल्यां न्यायसारवृत्तौ प्रथमः परिच्छेदः ॥**

# ॥ अथ अनुमानपरिच्छेदः ॥

—:०:—

## सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानम्

---

### ॥ अनुमानपरिच्छेदः ॥

एवं प्रमाणप्रवरे प्रत्यक्षे परिलक्षिते ।
वदत्यवसरप्राप्तमनुमानस्य लक्षणम् ॥ १ ॥

॥ अनुमानलक्षणकथनम् ॥

**सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानमिति** । अविनाभावपदेन तदनुस्मरणं लक्ष्यते । तृतीया साधकतमार्था । यद्यप्यनुमितावन्तः करणाद्यपि साधनं तथाप्यसाधारणनिर्देशो यवाङ्कुरादिवदिति द्रष्टव्यम् । तत एवाविनाभावस्मरणमात्रं अनुमानमिति नोच्यते । किं तु असाधारणकारणेन तेन यः परोक्षानुभवो जन्यते तस्य साधनं करणं सर्वमेव चानुमानमित्यर्थः । कस्यचित्त्वविनाभावमनुस्मरतोऽपि लोकायतिकादेः कुतोऽपि निमित्तात् विपर्ययः सन्देहो वा सञ्जायते । यथा खल्वविनाभावमेव अधिकृत्य नायं सत्य इति विपर्ययः, सन्देहो वा सम्भवति सत्यः स्यादयमसत्यो वेति । तत्साधनमनुमानं माप्रापदिति सम्यक्पदम् । तद्धि साधनपदेन सम्बध्यमानमसम्यग्ज्ञानसाधनं व्यवच्छिनत्ति । सम्यक्फलसाधनत्वस्यैव साधने सम्यगर्थत्वात् ।

॥ सम्यक्पदस्य प्रयोजनान्तरकथनम् ॥

अथ वा भ्रान्तमेवानुमेयसंवेदनं स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवर्तमानत्वात् । भ्रान्तस्यापि अध्यवसितार्थाव्यभिचारादविसंवादः । ततश्च प्रामाण्यं, विभ्रमत्वाविशेषेऽपि च पारम्पर्येण वस्तुप्रतिबन्धात् । इदमेव यथार्थं अध्यवसितार्थाऽभिव्यञ्जकं न तु लिङ्गाभासजनितापि भ्रान्तिरिति **शाक्याः** । तदपाकृतये **सम्यगित्युक्तम्** ।

## स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभावः

॥ शाक्यं निराकृत्य अनुमितेः प्रमात्वसमर्थनम् ॥

नो खल्वनुमितिर्भ्रान्तिः, सर्वथाप्यर्थान्यथाभावानुपलब्धेः। यत्स्वप्रतिभास इत्यादि, न तत्सारम्। असिद्धेः। वह्निरेव हि दाहादिसमर्थस्तथाऽनुमानेन निश्चीयते। नतु स्वप्रतिभासेऽऽनर्थेऽर्थाध्यवसायात्। नचालीकः सामान्याकार एवानुमानगोचरः इति वाच्यम्। अयमेवार्थक्रियासमर्थो वह्निरनुमितो मयेत्युत्तरत्राव्यभिचारिप्रतीतेः। नचालीकः सामान्याकारोऽपीति समर्थयिष्यते। तेन न तदंशेऽपि विभ्रमत्वम्।

एवं भ्रमत्वाभावे च भ्रान्तेरप्यर्थयोगतः।
पारम्पर्येण संवाद इति कार्या न कल्पना ॥ १ ॥

तदेवं सार्थकं सम्यग्ग्रहणम्। अविनाभावपदेनैवागमप्रत्यक्षमपि परास्यते। परोक्षग्रहणं पुनः अर्थाश्रितं परोक्षत्वं गोत्वादिवदिति भ्रान्तिनिरा(सोऽर्थः)सार्थम्। यदि त्वर्थाश्रितं स्यात्तत्सदा सर्वस्यापि प्रमातुःपरोक्षप्रतिपत्तिरेकत्रैव स्याद्गवादिप्रतिपत्तिवत्। नतु स एव कस्य चित्परोक्षः कस्यचिदपरोक्षश्च स्यात्। तस्मादपरोक्षत्वसमानन्यायतया परोक्षत्वसामान्यमपि संवेदनेष्वेव समर्थयितव्यमिति सूचयितुमनुभवविशेषणभावेन परोक्षग्रहणमकरोदाचार्य इत्यनवद्यम्।

॥ व्याप्तिलक्षणं तद्घटकदलानां प्रयोजनं च ॥

ननु अविनाभावेनेत्यभिहितं; कोऽसावित्यत आह—**स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभाव इति**। ननु व्याप्तिरविनाभाव इत्येवास्तु। व्याप्तिपदस्याविनाभावपर्यायत्वात् पर्यायमात्रस्य च बुद्ध्या विलक्षणत्वसम्भवात् किं **स्वभावत** इत्यादिना। सत्यं, तथापि तादात्म्यतदुत्पादाभ्यामविनाभावनियमं [1]पराभिमतमवधीर्य निरुपाधित्वापरपर्यायेण स्वाभाविकरूपेणैवाविनाभावं नियन्तुं स्वभावत इत्युदितम्। न खलु स्वाभाविकमेव तदवसानमिति साम्प्रतम्। सवितुरुदयेन अहेतोरतदात्मनश्च भविष्यतोऽस्तमयस्यानुमानात्।

1. परो बौद्धः

॥ भेदे सति व्याप्यव्यापकभाव एव कार्यकारणभाव इति मतं तन्निरासश्च ॥

यः पुनरेवंजातीयकेऽपि विषये यथोक्तनियमसिद्धये भेदे सति व्याप्यव्यापकभाव एव कार्यकारणभाव इत्यभिप्रैति, स तु सर्वलोकाप्रसिद्धमपि स्वयमेव लक्षणं विधाय व्यवहरन्, भेदे सतीत्यपि कस्मादाह। तदात्मनोऽपि अन्यथाकार्यता स्यादिति चेत्। भावतु नाम शिंशुपापि तरुकार्या। का हानिः? असिद्धं सिद्धेन साधनीयम्, न त्वेकमेव सिद्धमसिद्धं च सम्भवतीति चेत्। नन्वेवमनागतमपि व्यापकमित्येव कथं कारणं, असिद्धत्वात्। कथं वा वर्तमानमपि व्याप्यमित्येव कार्यं सिद्धत्वात्। तस्मात् पूर्वापरभावनियमः कार्यकारणभाव इति लोकमार्गमतिक्रामन्नाहोपुरुषिकया नामधेयं विदधत न काञ्चन वैदग्धीमवलम्बते।

किञ्च नियामकविरहे भिन्नयोरविनाभावः शङ्काकलङ्कितत्वात् अशक्यावधारण इति शङ्कानिराकरणाय हि कार्यकारणभावेनेति नियामकः स्वीक्रियते। स चैतद्रूप एव लक्षितः; कथं तन्निश्चयेनैव तन्निश्चय इत्यलमसद्ग्रहेण। तदेतदिह प्रसङ्गान्तरव्यासक्तचेतसा प्राप्तावसरमपि प्रमेयं न व्युत्पादितं; व्युत्पादितं तु हेतुप्रस्तावे प्रसङ्गाद्भूषणे पदातिरेकप्रयोजनप्रतिपादनाय। प्राप्तावसरमेवास्माभिः व्युत्पादितमिति न विरोधः।

व्याप्यव्यापकाधीननिरूपणापि व्याप्तिर्व्याप्ये गमकतां व्यापके च गम्यतां व्यवस्थापयतीति सूचयितुं **साध्येन साधनस्ये**त्युक्तम्। साध्यं तु गम्यं साधनं तु गमकमिति।

॥ व्याप्तिज्ञानोपायविचारः ॥

किं पुनर्व्याप्तिसाधनं? न तावद्बहिरिन्द्रियं, तस्य देशकालान्तरसम्बन्धिसकलधूमध्वजभेदागोचरत्वेन तदव्यभिचारगोचरभावासम्भवात्। न च भूयोदर्शनसंस्कारसहायस्येन्द्रियस्यायं महिमा यदसन्निहितगोचरत्वमपि। तथा सति धूमदहनयोरव्यभिचारवद्व्यभिचारस्यापि पार्थिवत्वलोहच्छेद्यत्वयोरसन्निहितेऽपि वज्रे परिच्छेदप्रसङ्गात्। तत्राव्यभिचार एवासन्नप्यापाततः परिच्छिद्यते। तदिह धूमादावप्यसन्नेव बहुशः सहचारदर्शनव्यभिचारादर्शन[भ्यां]भ्रमेण गोचरीक्रियते?

किं वा भवन्नेवाव्यभिचारः प्रत्यक्षीक्रियत इति को नियन्ता ? निखिलोपाधिविरहनिश्चयो नियच्छत्यव्यभिचारम् ; पार्थिवत्वस्य तु लोहच्छेद्यतासहचारस्य काठिन्यतारतम्योपाधित्वेन निरतिशयकठिनभावे भवति दम्भोलौ व्यभिचार इति चेत् ।

॥ द्विविधोपाधिविरहनिश्चयोपपादनम् ॥

कथं पुनर्द्विविधोपाधिविरहविनिश्चयः सम्भवी ? यदि मतं दृश्या दृश्यानुपलम्भनिरसनीयाः । अत्यन्तादृष्टास्त्वदृष्टत्वादेव स्मृतिपथमतिपतन्तो न सन्देहगोचरभावमेवाचरन्ति । प्रमाणान्तरपरिदृष्टानामप्यतीन्द्रियाणां व्यापकानामुपाधित्वे वह्नेः सार्वत्रिकत्वप्रसङ्गः । अव्यापकानामपि नित्यानामुपाधित्वे वह्नेः सर्वदाऽनुवृत्तिप्रसङ्गः । अनित्यास्तु त्रिविधाः उभयव्यभिचारिण उभयाव्यभिचारिण अन्यतरव्यभिचारिणश्चेति । तत्र प्रथमद्वितीया उपाधिलक्षणाभावादेव नोपाधयः । उपाधिलक्षणं हि साधनाव्यापकत्वे सति साध्यसमव्यापकत्वम् । अन्यतराव्यभिचारिणस्तु द्विविधाः धूममात्राव्यभिचारिणो वह्निमात्राव्यभिचारिणश्चेति । पूर्वे लक्षणाभावादेव नोपाधयः । वह्निमात्राव्यभिचारिणोऽपि द्विविधाः व्याप्यमात्ररूपा उभयमात्ररूपाश्चेति । पूर्वे पूर्ववत् । उभयरूपास्तु सामग्रीतो नापरे विद्यन्ते । स च न क्वचिदुपाधिः धूमस्य वह्निनेव तयापि स्वभावसम्बन्धात् वह्निजननसामग्र्यां वह्नेरप्यन्तर्भावाच्चेति ।

॥ कृतकत्वस्यानुष्णत्वव्याप्यत्वापादनं तन्निरासश्च ॥

हन्तानयैव नीत्या कृतकताप्यनुष्णभावाव्यभिचारिणी किं न भवेत् ? तत्रातेजस्त्वमस्त्युपाधिरिति चेत् तर्हि साध्येतरत्वोपाधेः सर्वत्राशक्यनिरासत्वात् कथमभितेऽप्यव्यभिचारनिश्चयः ? तस्याबाधको¹न्नेयत्वात् असति बाधे निरुपाधित्वानुरोधी नियमनिश्चय इति चेत् । मैवम् । आपातादनुदितेऽपि बाधे देशकालनरान्तरावच्छेदेन तज्जातीयविशेषान्तरावच्छेदेन च, बाधानुदयस्याशक्यनिश्चयत्वात् ।

---

1. साध्यप्रयोजकत्वादुपाधेरिति भावः

॥ मानसप्रत्यक्षस्यादृष्टसहायेन व्याप्तिग्राहकत्वमतनिरासः ॥

एतेन मानसमेव प्रत्यक्षं असन्निहिताशेषविशेषविषय(।)मपि सम्भाव्यमानं समाधिभृतामिव धर्मभेदप्रभवं व्याप्तिं विधत्त इत्यपि निरस्तम् । पार्थिवत्वादिस्थल-साधारण्यसम्भवसन्देहस्य सर्वथाप्यशक्यनिषेधत्वात् ।

॥ व्याप्तेः प्रत्यक्षेण ग्रहणं क्वचित्तु मन्दानां भूयोदर्शनाभ्यनुज्ञानमिति मतम् ॥

यदपि मतं — यत्र धूमस्तत्र वह्निः तदभावे च न भवेदेव धूम इत्ययं धूमदहनयोर्व्याप्यव्यापकभावरूपोऽविनाभावसम्बन्धः सकलधूमाग्निव्यक्तिवर्ती एक एव । स च साग्नयनग्निदेशसम्बन्धेन चक्षुषा सकृदप्यवधीयते । मन्दमेधसां तु संस्कारपाटवाय भूयोदर्शनमनुज्ञायते प्रपा[ठकाभ्या](कोटया)सवत् । संभवति हि समस्तव्यक्तिवर्तिनोऽपि संम्बन्धस्य समवायवत्कतिपयसम्बन्धिदर्शनेऽपि दर्शनम् । विशेषस्त्वियानेव व्याप्यव्यापकभावो भवत्यनुमानाङ्गं न समवायः, सम्बन्धत्वाभेदेऽपि स्वभाववैचित्र्यादिति । भवतु वा व्यापकत्वव्याप्यत्वे च वह्निधूम [योः] प्रतिनियतेन धर्मेण; तथापि वह्नित्वधूमत्ववदेव कतिपयव्यक्तिग्रहणे तद्ग्रहणं नानुपपन्नम् । इयांस्तु भेदो वह्नित्वधूमत्वयोः अन्योन्याधारग्रहणनिरपेक्षं ग्रहणं न तथा व्यापकत्वव्याप्यत्वयोरिति ।

॥ उक्तमतखण्डनम् ॥

तदप्यसत् । व्यभिचारशङ्कायास्तदवस्थत्वात् । सर्वव्याप्यव्यापक[।]ग्रहणे सर्वोपसंहारेण व्याप्तिग्रहणानुपपत्तेश्च ।

॥ अनुमानेन सर्वोपसंहारेण व्याप्तिग्रहणमिति मतम् ॥

यत्पुनरत्रोक्तम् ये धूमविशेषा अदृष्टाः । अथ च देशान्तरस्थत्वेन भूतत्वेनानागतत्वेन च सम्भाव्यन्ते, ते सर्वे वह्निव्याप्ता धूम(वै)त्वादुपलब्धधूमवत् । धूमवन्तः प्रदेशा वा वह्निमन्तः साध्य(ते)न्ते धूमवत्त्वात्, तथोपलब्धप्रदेशवदित्येवमनुमानपूर्विका सर्वोपसंहारेण स्मृतिरपि भवतीति ।

॥ अत्र सम्भावनायाः सन्देहरूपत्वात् न व्याप्तिनिश्चयसम्भवः ॥

तदपि मन्दम् । तथा हि—सम्भावना नाम सन्देह एव । तथा च यावतोक्तं देशान्तरस्थत्वादिरूपेण सम्भाव्यन्त इति तावतोदितं भवेत् तदाकारेण सन्दिह्यन्ते

इति। नच सन्दिग्धाश्रय एव धूमत्वादिहेतुः साधनाङ्गं; तथा सति सन्दिग्धासिद्ध-भेदत्वात्। तस्मादनुमानतोऽपि सर्वोपसंहारिणी प्रतीतिरनुपपन्ना।

॥ सामान्ययोः व्याप्तिग्रहणपक्षदूषणम् ॥

योऽपि सामान्ययोरेव व्याप्तिमिच्छति, सोऽप्ययं सर्वोपसंहारिणीं बुद्धिं नोपपादयितुं क्षमः, यो यो धूमवान् स सोऽग्निमानिति सर्वविशेषोपसंहारिणीं व्याप्तिम्। अतः कथं सामान्यमात्रव्याप्तिप(क्षे)[क्षः]सामञ्जस्यं लभेतेति।

॥ व्याप्तेः मानसप्रत्यक्षगम्यत्वसिद्धान्तः ॥

अत्रोच्यते। व्याप्तिर्मानसग[म्यै]व सर्वत्र धूमाग्निवर्तिनी। शङ्का तु व्यभि-चारस्य बाधकेन निवर्त्यते। व्याजहार खल्वाचार्योऽपि प्रत्यक्षानुमानसाधनतया सर्वोपसंहारिणीं व्याप्तिप्रतीतिमभिधायानन्तरमेव "यदि पुनः पूर्वोक्तनीत्याऽविना-भावग्रहणं समर्थयितुं न शक्यते, तदा विशिष्टप्रतीत्यन्यथानुपपत्त्या मानसमेव प्रत्यक्षं समर्थनीयं" इति। तेन जानी[मो] मानसप्रत्यक्षपक्षमेव स्थितमभिप्रेत्या-चार्योऽपीति।

तत्र व्यभिचारशङ्कानिराकरणप्रकारः ॥

नन्वेवमपि पार्थिवत्वादिस्थलसाधारण्यसम्भवाद्व्यभिचारशङ्का केन विशेषेण निराकरणीया? प्रतिपक्षबाधकेनेति ब्रूमः। सम्मतं चैतदाचार्यस्य कथम-सावन्यथा "[1]न पृथिव्याद्याश्रयः श्रोत्रग्राह्यत्वात् शब्दत्ववदित्यभिधाय, पृथिव्यादि-गुणत्वश्रोत्रग्राह्यत्वयोः को विरोध" इति चेदित्याशङ्क्य अनन्तरमाह स्मैवं "यदि भेर्यादिशब्दो भेर्याश्रयस्तदा भेर्यादौ विप्रकृष्टे व्यवहिते वा तच्छब्दग्रहणं न स्यात्" इत्यादि। आगमनिरूपणप्रस्तावे च 'प्रतिपक्षबाधकविधुरा हेतवः सन्दिग्धानैकान्ताः सन्दिग्धकालातीता वे'ति। अमुमर्थमञ्जसा वदन्तो बहुलमुपलभ्यन्ते **भूषणग्रन्थाः**। तस्मात्प्रतिपक्षबाधकोपकृतेन मनसैव विगलितनिखिलव्यभिचाराशङ्क(ा)व्याप्तिवेदनमु-त्पाद्यमिति रमणीयम्।

---

1. शब्दइत्यादिः

॥ बाधकतर्कस्यापि व्याप्तिमूलत्वेनानवस्थाशङ्का तन्निरासश्च ॥

[1]नच बाधकस्याप्यविनाभावमूलतया बाधकान्तरापेक्षायामनवस्थेति वाच्यम्। प्रमितव्याघातप्रसङ्गपर्यन्ततया शङ्कायास्ततः परं बाधकस्यानपेक्षणात्। तदेवाभिप्रेत्याभि[हि]मतमन्यैरपि "[2]व्याघातावधि(का)राशङ्का" इति। न खलु हेतुफलभावो भविष्यति वा नवा, सर्वं वा मिथ्या भविष्यति नोवेत्यादिशङ्कावकाशः। तथा च [3]धर्मनिश्चये कोटिद्वयप्रमित्यभावे शङ्कैव न भवेदिति। बाधकं च किंचिदुपाधिकोटावनिष्टं प्रसञ्जयति किंचिच्च व्यभिचारकोटावाहत्येति यथासंभवं उन्नेयम्। प्रसङ्गविज्ञानं पुनराचार्यमते कान्तर्भवेदिति तद्विचारयिष्यते व्यतिरेकिप्रस्तावे।

॥ धूमानुमाने सिद्धान्ती प्रतिपक्षबाधकमाह ॥

किं तर्हि प्रतिपक्षबाधकं धूमानुमाने ? उच्यते। प्राक्प्रतिपादितनीत्या साध्येतरत्वातिरेकिणामुपाधीनां अपाकरणे, साध्येतरस्य च केवलस्योपाधित्वे तदितरसकलप्रदेशेषु दहनापत्तेः, धूमावच्छिन्नस्य तु वह्न्यव्याप्तित्वे[4]नानुपाधित्वात्, उपाध्यभावनिश्चये, स्वाभाविकवह्निसंबन्धशालिनो धूमस्य वह्निव्यभिचारश्चेत् स्यात्तेन स्वाभाविकसंबन्ध एव न भवेदिति बाधकम्। एवमनुमानान्तरेष्वपि यथायोगमुपाधिविधूननेन प्रतिपक्षबाधकमुन्नेयम्। तदेवं मानसमेव प्रत्यक्षं विपक्षबाधकोपकृतं व्याप्तिबोधकम्। तच्च बहिरिन्द्रियजनितकतिपय[धूमा](म)ग्न्यादिग्रहणसहकारिसापेक्षमेव व्याप्तिं विधत्त इति नातिप्रसङ्गः।

॥ मनसः सापेक्षत्वेऽपि व्याप्तिनिश्चये प्रमाणत्वाव्याघातः ॥

नचैवमसाधारणकारणान्तरमपेक्षत इत्येव न मनसः प्रमाणन्तरत्वापत्तिः। घटमहं पश्यामीति प्रत्यये चाक्षुषसाक्षात्कारसापेक्षस्य विषयांशेन समाधिप्रसूतादृष्टरूपासाधारणकारणापेक्षतया परमाण्वादिसाक्षात्कारसाधनस्यापि योगिवत्तस्यप्रमाणान्तरत्वात्। सामान्याकारेण च यो यो धूमवान् स सोऽग्निमान् यस्त्वनग्निर्नासौ

---

1. यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति तर्कस्यापि वह्न्यभावधूमाभावयोरविनाभावमूलत्वादित्यर्थः

2. न्या—कु. 3

3. साधारणधर्मनिश्चये

4. वह्न्यव्यापकत्वेन.

**स द्विविधः, अन्वयव्यतिरेकभेदात्, साध्यसामान्येन साधनसामान्यस्य**

---

धूमवानिति व्याप्त्यध्यवसाये विशेषाः परिस्फुरन्ति, नतु महानसपर्वताद्याकारेणेति, करतलामलकवदशेषविशेषसाक्षात्कारिणो योगिप्रत्यक्षादविशेषप्रसङ्गो नाशङ्कनीयः। नाप्यतीन्द्रियव्यवहारविप्रतिपत्त्या विलोपप्रसक्तिः, नाप्यनुमानवैयर्थ्यं तस्य विशेषे सार्थकत्वात्।

॥ अनुमानात् साध्यविशेषनिश्चयप्रकारः ॥

कथं तर्हि विशेषाकारस्यानुमाना[त् सिद्धिः]पर्वतोऽग्निमान् अनित्यो ध्वनिरिति। तेनाकारेणाविनाभावग्रहणाभावादिति। पक्षधर्मता ब[लाद्वा](द्धा)विशेषसिद्धेरदोषः। तार्णश्चित्रभानुरित्यादिविशेषस्तु न सिध्यति, साधन(ा)सामर्थ्यस्य नियतगोचरत्वाच्चक्षुरादिवत्। सामर्थ्यं पुनरिदमेव साधनस्य य[द्व्या](च)प्तिग्रहणोपकृतं पक्षधर्मत्ववेदनम्। यदि खल्वग्निमान् पर्वतो धूमवत्त्वेऽपि न भवेत्तर्हि यः कश्चिद्धूमवान् स सर्वोऽप्यग्निमानिति वितथमेव व्याप्तिवेदनं प्रसज्येत। धूमवत्त्वं वा पर्वते मिथ्या भवेत्। तार्णादिविशेषासम्भवे तु नायं दोषः स्यात्। ततो न तत्सिद्धिरिति सर्वं निर्मलम्।

**स द्विविध इति**। सः अविनाभावो द्विप्रकार इत्यर्थः। कथं? **अन्वयव्यतिरेकभेदात्** अन्वयो विधिः व्यतिरेकः प्रतिषेधः तयोर्भेदादित्यर्थः। तत्रान्वयं विवृणोति—**साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वय इति**।

॥ सामान्यरूपेणैव साध्यसाधनयोः व्याप्तिग्रह इति सूचनाय सामान्यपदम् ॥

धर्मविशिष्टो धर्मी साध्यं, साध्यस्य सामान्यमग्निमत्त्वादिलक्षणम्। यद्वा धर्मिस्थो धर्मः साध्यः स एवाविवक्षितविशेषतया साध्यदृष्टान्तयोः साधारणत्वात् सामान्यशब्देनोच्यते। साधनमेव सामान्यं धूमवत्त्वादिलक्षणं, तस्य तेन साध्यसामान्येन व्याप्तिर्व्याप्तताऽन्वय इति। विशेषाकारस्यानुभवाभावात् सामान्येनाकारेणैव व्याप्तिरभ्युपगन्तव्या विशेषाणामपि इति सूचयितुं सामान्यग्रहणम्। निरूपितं खल्वेतत् यो यो धूमवान् स सोऽग्निमानिति साधारणरूपेण व्याप्तिग्रहणम्।

**व्याप्तिरन्वयः साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः । साधनं लिङ्गं, तद्द्विविधं दृष्टं सामान्यतो दृष्टं च ।**

---

न पुनर्मगधपर्वतादिविशेषरूपेणापि तथापि साधनविशेषात्साध्यविशेषसिद्धिः पक्षधर्मताबलादिति । ततश्चैतदपास्तम् यदाहुः—

"विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता" इति ।

व्यतिरेकं व्याचष्टे—**साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः** साधनमेवाविवक्षितविशेषं सामान्यमुच्यते । तस्याभावो धूमवत्त्वमात्राभाव इत्यर्थः । साध्यस्तु यदा धर्मविशिष्टो धर्मी तदा साध्यसामान्यमग्निमत्त्वं यदा तु धर्मिविशिष्टो धर्मः साध्यस्तदा साध्यमेवाविवक्षितविशेषं सामान्यम् । तदभावस्य व्याप्तिर्यत्राग्न्यभावादग्निमत्त्वानुपलम्भः तत्र धूमाभावात् धूमवत्त्वानुपलम्भ इति व्यतिरेकः । कृतकत्वादेस्तु सामान्याभावात् पूर्व[वोक्त]व्याख्यानम् ।

॥ सामान्यपदस्य प्रकारान्तरेण व्याख्यानम् ॥

अथ वा साधनस्य सामान्यमस्तित्वमात्रम् । तच्च कृतकत्वादेरप्यस्ति । तेन कृतकत्वाद्यस्तित्वाभावेनानित्यत्वाद्यस्तित्वाभावस्य व्याप्तिर्व्यतिरेक इत्युक्तं भवतीति । तत्र साधनसामान्यं व्याप्यं साध्यसामान्यं व्यापकमित्ययं व्याप्यव्यापकभावोऽन्वयः साध्यसामान्याभावो व्याप्यः साधनसामान्याभावो व्यापक इत्ययं व्याप्यव्यापकभावो व्यतिरेक इति ।

॥ साधनभेदः ॥

किं पुनः साधनं तदाह—**साधनं लिङ्गमिति** साध्यतेऽनेनेति साधनं लिङ्ग्यतेऽनेनेति च लिङ्गम् । तत्कतिविधमित्याह—**द्विविधं** द्विप्रकारम् । के(ते)नाकारेण ? **दृष्टं सामान्यतो दृष्टं चेति** । चशब्दः स्वार्थपरार्थभेदेनापि द्वैविध्यं सूचयितुम् । प्रकारद्वयकथनादेव सिद्धेऽप्यर्थे द्विविधग्रहणं अनेनैव प्रकारेण द्विविधमिति नियमार्थम् । ततश्च कार्यस्वभावभेदेन द्वैविध्यमनुपलब्धेरत्रान्तर्भाव इति पराकृतम् । तादात्म्यतदुत्पत्तिभ्यामेवाविनाभावनियम इति हि निराकृतं पूर्वमेव । तस्मादस्मदुक्तप्रकारेणैव द्वैविध्यमिति सिद्धम् ।

**तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् । यथा धूमोऽग्नेरिति । स्वभावविप्रकृष्टार्थानुमापकं सामान्यतो दृष्टम् । यथा रूपादिज्ञानं चक्षुरादेरिति**

---

॥ दृष्टस्य लक्षणम् ॥

तत्र दृष्टं लक्षयति—**प्रत्यक्षयोग्यार्थानुमापकं दृष्टमिति** । तत्र तयोर्मध्ये, यतः प्रत्यक्षयोग्यस्यार्थस्यानुमापकं दृष्टमित्यर्थः । तस्योदाहरणं—**यथा धूमोऽग्नेरिति** । सामान्यतोदृष्टस्य च लक्षणमाह—**स्वभावविप्रकृष्टार्थानुमापकं सामान्यतो दृष्टमिति** । स्वभावतो विप्रकृष्टोऽतीन्द्रियो योऽर्थस्तस्यानुमापकं सामान्यतो दृष्टमभिधीयते । तस्योदाहरणं—**यथा रूपादिज्ञानं चक्षुरादेरिति** । इदं च सामान्यमात्रेणान्वयदर्शनात् प्रवृत्तमिति सामान्यतोदृष्टमुच्यते । यद्यपि सर्वमनुमानं सामान्यान्वयमात्रेण प्रवर्तते । तथापि वह्न्याद्यनुमेयं येनासाधारणसामान्येन व्यवह्रियते, तस्य प्रत्यक्षदृष्टत्वात् तद्विषयं साधनं दृष्टमुच्यते । सामान्यतो दृष्टे तु नेयं गतिरिति भेदः ।

॥ वह्नित्वादिसामान्यस्यावश्यमभ्युपगन्तव्यत्वोपपादनम् ॥

यदि मतं वह्नित्वादिसामान्यमनुपलब्धिपरास्तं, प्रतिभासमानेष्वपि भेदेषु मणिगणे गुणवदनुगताकारस्याप्रतिभासनादिति । तदसत् ।

पश्यन् पावकभेदान् वै पाथो(यार्थो)वर्गान् विलक्षणान् ।
परस्परसरूपांश्च प्रत्येति सकलो जनः ॥ १ ॥

यदि खलु पाथोव्यक्तिभ्यो व्यावर्तमानः पावकव्यक्तिष्वनुवर्तमान आकारो न भवेत् तथा सति पयःपावकव्यक्त्य इव पावकव्यक्तयोऽपि परस्परविलक्षणा एव संवेद्येरन् । सलक्षणास्तु सम्वेद्यन्ते । तदमूषु पावकव्यक्तिषु समानमस्ति रूपमिति जानीमः । तदभावेऽपि सलक्षणप्रत्ययाभ्युपगमे पयःपावकयोरपि तत्प्रसक्तेः । नचायं कार्यसालक्षण्यं कारणसालक्षण्यं वोपादाय विलक्षणप्रत्यय इति साम्प्रतम् । सर्वथा सामान्याभावे कार्यकारणव्यक्तीनामपि सालक्षण्यासिद्धेः ।

॥ सामान्यं किं समानासु उतासमानासु समवैति इति विकल्प्य सामान्यदूषणम् ॥

स्यादेतत्। सामान्यमपि किं समानासु व्यक्तिषु समवेयादुतासमानासु? समानासु चेत्तत्राप्यपरापरसामान्यप्रसक्तेरनवस्थितिरशक्यपरिहारा। असमानासु चेदतिप्रसक्तिः। तथापि नियतास्वेव समवैति। न सर्वास्वित्येवंस्वभावं सामान्यमिति चेत्। नन्वेवं समानप्रत्यय एव नियतासु भविष्यति किमन्तर्गण्डूयमानेन सामान्येनेति।

॥ समानप्रत्ययस्य सामान्याभावे वक्तुमशक्यत्वादेव तत्स्वीकारः ॥

तदिदमसमञ्जसम्। सर्वथा सामान्याभावे समानप्रत्यय इत्येव निर्वक्तुमशक्यत्वात्। यदि हि प्रत्येतव्यगतं प्रत्ययगतं वा सामान्यं न भवेत् किमिदं प्रत्ययसमानत्वं नाम? संविदारूढः समानाकारः स्वीक्रियत इति चेत्। स किं तात्त्विकः समारोपितो वा? प्रथमे सामान्यसिद्धिः तस्य चार्थधर्मत्वमेव बहुमुखप्रतिभासानुसारात् सेत्स्यति। कथमन्यथा मलयाचलमेखलास्थलीषु चन्दनचम्पकपुन्नागनागकेसरादितरुभेदाननुभूय सुरतरङ्गिणीतीररुहः पुनरपि तरूननुभवतस्त एवामी तरव इति हि प्रत्यभिज्ञानमञ्जसाऽवकल्पेत।

॥ प्रत्ययाकार एवार्थेष्वारोपितः सामान्यमिति शङ्का तत्परिहारश्च ॥

प्रत्ययाकार एवार्थेष्वारोपितः प्रत्यभिज्ञायत इति चेत्। स यदि प्रत्ययस्यात्मैव कथं साधारणः? प्रत्येकं प्रत्ययानां असाधारणत्वात्। अनात्मभूतस्तु यः प्रत्ययवर्ती यदि तात्त्विकः सामान्याकारोऽभ्युपगम्यते, किं तथार्थेष्वेव नाभ्युपगम्येत। प्रतिभासानुसारात्। अथारोपित एवायं शब्दसंसर्गयोग्यः साधारणोऽभ्युपगम्यते, तथाप्यर्थनिष्ठात्मतयैव तत्प्रतिपत्तेः तत्रैव समारोपचिन्ता युक्तिमती। न पुनः प्रत्ययेषु कदाचिदपि, तस्यान्तर्मुखत्वाप्रतिपत्तेः सर्वसंविदां च निराकारतायाः समर्थितत्वात्।

॥ ज्ञानानां अलीकाकारः सामान्यमिति बौद्धपक्षः तन्निरासश्च ॥

एतेनैतदपास्तम्। यदाहुः पारम्पर्येण तदुत्पत्तिप्रतिबन्धात् विकल्पाः परव्यावृत्तिरूपाद्भावाभावसाधारणादलीकादेवाकारात् बहिराकारेण वासनासामर्थ्यादध्यवस्यन्तो बहिरर्थे प्रवर्तन्ते। न चामी परस्परमारोपितबहिराकाराणाममीषां भेदमध्य-

वसातुमीशते । भेदानध्यवसायाच्च तेषामेकत्वमारोप्य विकल्पानामेको गोचर इत्यभिधीयते । तदेव सामान्यं तन्निबन्धनः शब्दसङ्केतस्तदनुसारिणी च सर्वोपसंहारिणी व्याप्तिप्रतीतिः तन्निबन्धना च व्यक्तिभेदेऽपि प्रत्यभिज्ञेति ।

यदि खल्ववश्यमारोपित एव सामान्याकारः किमनया परम्परया यथाप्रतिभासमर्थ एव तदभ्युपगमेऽपि विरोधाभावात् । समर्थिताश्च तथाभूताः स्थवीयांसो भावाः प्रत्यक्षपथवर्तिनो येषु सामान्यप्रतीतिः सम्भविनी ।

॥ विकल्पाकाराणामेकत्वानुपपत्तिः ॥

कथं च विकल्पाकाराणामेकत्वमारोप्यते ? न खल्वेकनिमित्तमन्तरेण भिन्नेषु एकत्वारोपः सम्भवी । सम्भवन् वा पयः पावकाद्याकारेष्वपि सम्भवेदविशेषात् । पावकाकारेष्वतद्व्यावृत्तिरूपमेकनिमित्तमिति चेत् । किं पुनस्तदर्थः । एकं स्वलक्षणमेकजातीयं वा । आद्ये त्वतद्व्यावृत्तेः असाधारण्यादनिमित्तत्वम् । द्वितीये सामान्यस्वीकारः ।

॥ भेदाग्रहस्य अभेदव्यवहारहेतुत्वनिरासः ॥

स्यान्मतम् । भेदाग्रहणमेव वैकल्पिकालीकाकाराणामभेदव्यवहारं वर्तयति न पुनरपरस्तत्रैकतारोप इति ।

तदसत् । तथासत्यभेदाग्रहणात् भेदव्यवहारप्रवृत्तेरपि प्रसक्तेरविशेषादिति ।

तस्मादलीकाकाराणामभेदारोपणेन वा ।
भेदाग्रहाद्वा(द्या) संवित्तेः समानत्वं न सिद्ध्यति ॥ १ ॥

यथावभासं त्वर्थेषु सामान्ये स्वीकृते सति ।
पावकः पावक इति प्रतीतेः स्यात्समानता ॥ २ ॥

संप्रधार्यमियत्त्वत्र तत्समारोपितं भवेत् ।
अर्थेषु तथ्यं, तत्रापि व्यावृत्तिर्विधिरेव वा ॥ ३ ॥

इत्यारोपितपक्षस्तु प्राचीनन्यायवारितः ।
भिन्नेष्वभिन्नस्यारोपो यदि भिन्ननिमित्तकः ॥ ४ ॥

॥ सामान्ये एकत्वबाधकव्याप्तिप्रदर्शनम् ॥

स्यान्मतिः। असति बाधके प्रतिभाससिद्धं(द्धिं) रूपं सत्यमभ्युपेयं, समारोपितं पुनरन्यथा। भवति चेह बाधकं यदनेकवृत्ति तदनेकं यथा बदराणि। अनेकवृत्ति च सामान्यमित्ययं प्रसङ्गहेतुः सामान्ये नानात्वं प्रसञ्जयतीति। प्रसङ्गविपर्ययः पुनरनेकत्वाभावात् अनेकवृत्तित्वाभावः व्यापकानुपलब्धेरिति।

॥ उक्तपक्षदूषणम् ॥

मैवम्; असति सामान्ये हेतोराश्रयासिद्धिप्रसङ्गात्। तदभ्युपगमे तु तद्ग्राहकप्रमाणादेव तस्यैकस्यानेकवृत्तितया सिद्धेः कालात्ययापदिष्टत्वात्। किञ्चानेकवृत्तित्वस्यानेकत्वेन व्याप्त्यसिद्धिरवयवप्रस्तावेऽपि(वञ्चि)[भञ्जि]तैव। कृत्स्नैकदेशाभ्यां वृत्तिविकल्पोऽप्यवयविसमानन्यायतयैव निरवकाशः।

॥ सामान्यस्य धर्मिभेदाभेदाभ्यामनिरूप्यत्वात् अभाव इति मतम् ॥

यदप्याहुः यद्वस्तुनो भेदाभेदाभ्यामवाच्यं तत्सर्वं वस्तु न भवति यथा व्योमकमलम्। नच वस्तुनो भेदाभेदाभ्यां अभिधेयं सामान्यमिति व्यापकानुपलब्धिरिति।

॥ भेदेन निर्वचनसम्भवादसिद्धिः ॥

तत्रापि हेतोरसिद्धिर्व्यक्तिभ्यो भेदेनैव सामान्यस्य श(क्ति)[क्य]निर्वचनत्वात्। तद्धि व्यावर्तमानप्रतिभासाभ्यो भिन्नमेवानुवृत्तप्रतिभासमवसीयते मणिकुसुमादिभ्यः सूत्रवत्। सूत्रस्य तु मण्यादौ संयोगरूपा वृत्तिः सामान्यस्य तु समवायरूपा व्यक्तिषु। एतावतैवान्तरालिकं प्रतिभासवैषम्यम्। नच तथा प्रतिभाससिद्धा भावाः पदार्थान्तरप्रतिभासात्किंचिदेव वैषम्यमुपादाय शक्यापलापाः, सर्वदाऽपलापप्रसङ्गात्। भवति च परस्परपरिहारेणोपलम्भः सामान्यविशेषयोः; दूरे जातिभेदानुपलम्भेऽपि पिण्डप्रतीतेः। पिण्डप्रतिभासमन्तरेणापि पिण्डान्तरे जातिप्रतीतेः। सूत्रं तु मणिमात्रमन्तरेणापि प्रतीयते। सामान्यं पुनरविशेषं न जात्ववभासत इत्येतदपि वस्तुस्वभाववैचित्र्यादुपपन्नम्। भेदः पुनरुपलम्भा[नुपलम्भा]भ्यां व्यावृत्त्यनुवृत्तिभ्यां च विरोधाद्व्यक्तिसामान्ययोरवश्याश्रयणीय इति। भेदाविशेषेऽपि च किंचिदेव कासांचिद्व्यक्तीनां समानप्रत्ययहेतुभावात् सामान्यं न सर्वासामित्यपि कार्यकारण-

स्वभावनियमवन्नियमो नानुपपन्नः । प्रमाणानुसारिणो वस्तुस्वभावस्यावश्याश्रयणीयत्वात् ।

॥ यत् यस्मादर्थान्तरं न तत् तस्य सामान्यं इति व्याप्तेरपि न सामान्यापलापः ॥

ततश्चैतदपास्तम् यद्यस्मादर्थान्तरं न तत्तस्य सामान्यं यथा गोरश्वः । अर्थान्तरं च गोर्गोत्वमिति । किंचित्साधर्म्यात् प्रत्ययपथवर्तिनोऽपि स्वभावभेदस्यापलापाय प्रत्यवस्थाने कार्यकारणनियमस्यापि अर्थान्तरसाम्यमुपादाय करभरासभादिवदपलापप्रसङ्गात् ।

एवं व्यक्तिविभेदेन शक्यनिर्वचनं यतः ।
सामान्यं तदसिद्धत्वं इति हेतोर्व्यवस्थितम् ॥ १ ॥

(क)[त]स्माद्बाधकवैधुर्यात्सामान्ये सत्यता स्थिता ।
व्यावृत्तिरूपताप्यस्य नान्योन्याश्रयदोषतः ॥ २ ॥

नो खल्वपावकरूपपरावृत्तिरेव पावकत्वमिति युक्तं, पावकवर्गनिरूपणमन्तरेण तद्व्यावृत्तस्यापावकवर्गस्य निरूपणानुपपत्तेः । पावकाः पुनरपावकवर्गरूप[व्यावृत्त्यव[1]] यद्येकवर्गीकरणीयाः प्राप्तः परस्पराश्रयदोषः पावकानामनुगतैकपावकत्वनिरूपणाधीनं तदितरेषां अपावकत्वनिरूपणम्, अपावकत्वनिरूपणाधीनं च पावकत्वनिरूपणमिति ।

॥ प्रतीतावन्योन्याश्रयस्य दूषणम् ॥

यस्तु प्रतीतौ तावदिदमन्योन्याश्रयदूषणं समादधौ, समारोप्यसङ्केतस्थलगोचरं

तस्या(पीति) [ऽवि]नीतपुरुषत्रासनं केवलं वचः ।
प्रस्तुतानुपयोगित्वात्कस्य श्रद्धापदं भवेत ॥ १ ॥

एवं चापोहविषया विकल्पा इति बोधयन् ।
साधनग्राम आभा(म्भ)सो विधिबोधेन बाधनात् ॥ २ ॥

---

1. स्वुत्यैव—पा.

॥ सामान्यं सर्वसर्वगतं वा स्वाश्रयसर्वगतं वेति विचारः ॥

तस्माद्विधिरूपमेव सामान्यमभ्युपगन्तव्यम् । (य)[त]त्पुनः स्वाश्रयमात्रगतं यद्वा सर्वगतमिति सम्प्रधार्यम् ।

॥ स्वाश्रयसर्वगतत्वपक्षः ॥

केचिदाहुः स्वाश्रयसर्वगतमेव सामान्यं तत्रैवानुभवात् सर्ववस्तुसमवाये तु सर्वं सर्वजातीयमिति सङ्करापत्तेः । नचोचितं स्वाश्रयमात्रगतत्वेऽपि तस्मादचलदेव प्रदेशान्तरभाविनि पिण्डे कथं समवेयादिति ; तद्रूपप्रत्यभिज्ञानानुसाराद्भेदसिद्धौ प्रमाणानुसारिणो भावस्वभावस्यापर्यनुयोज्यत्वात् ।

॥ गोत्वादेः स्वभावादेव गवादिव्यक्तिसम्बन्धः इति स्वमतम् ॥

किञ्च व्यक्त्युत्पादकारणसामर्थ्यादेव सामान्यं व्यक्त्यन्तरादचलदपि तया व्यक्त्या सम्बध्यत इत्यस्तु का नामानुपपत्तिः ? स्वभावभेदादेव च गोत्वादि गवादि-पिण्डेनैव सम्बध्यते नतु तन्निरन्तरैरपि तदवयवैः । यथा खल्वोषधिमन्त्रसंस्कृतं सूत्रं नाग्निर्दहति तदुपरि भाजनस्थं तण्डुलं पचतीति ।

॥ महाप्रलये जातेः निराधारमवस्थितिः ब्रह्माण्डान्तरवर्तिव्यक्तिषु वा ॥

ननु च महाप्रळयसमये सर्वघटादिविनाशे घटत्वादिकं क्वावतिष्ठेत ? न क्वापि । किं तद्विनष्टं ? न, नित्यत्वात् । कैषा वाचोयुक्तिः । नित्यत्वाद्विद्यते चेत्क्वचिदस्तीत्येषैव वाचोयुक्तिः निराधारमेवास्तीति । यद्वा प्रलयसमयेऽपि ब्रह्मा-ण्डान्तरपरिवर्तिघटादिसमवेतं घटत्वादिसामान्यं भविष्यति । न खलु सकलब्रह्माण्ड-प्रळयो युगपदिति प्रमाणमस्ति । तदभ्युपगमे तु निखिलक्रियोपरमात् "रात्री च तावती चैव" इति विरुध्यते । न खलु क्रियाकलापपरिहारेण कालः परिमातुं शक्येतेति ।

॥ सामान्यस्य सर्वसर्वगतत्वपक्षस्याप्यङ्गीकारः ॥

यद्वा सर्वगतमेव सामान्यं, सर्वत्रोपजायमानेन पिण्डेन सम्बन्धात् । न च सर्वगतत्वमाकाशादिवत् सर्वसंयोगित्वं सामान्यस्य अद्रव्यत्वात् । नापि सत्त्वादिवद्घटा-देरपि सर्वसमवायित्वम् । किं तर्हि ? सन्निधिविशेष एव सर्ववस्तुषु । यथा भूभा-गादिष्वभावस्य । समर्थितश्च तादृशसन्निधिः प्रत्यक्षपरिच्छेदे । तादृशेन तु सन्निधिना

सर्वत्र विद्यमानमपि सामान्यं यत्रैव समवेतं तत्रानुभवनीयम् । सैव च तस्य व्यक्तिस्त-ज्जातीयेति गीयत इति न सर्वं सर्वजातीयमिति सङ्करप्रसङ्गोऽपीति सर्वमवदातम् ।

तस्मात्सारूप्यबोधेन सामान्यं भिन्नवस्तुषु ।
एष्टव्यं व्याप्तिसङ्केतप्रतीत्योरुपपादकम् ॥ १ ॥

॥ सामान्यरहिते सामान्यादौ सामान्यपदप्रवृत्तिः कथमिति शङ्का ॥

कथं पुनर्निस्सामान्ये सामान्यादावनन्तेऽपि तद्वाचकसङ्केतः सम्भवी? नो खलु तावत्सामान्येषु सामान्यत्वं नाम सामान्यं समस्ति। तथा सति तत्रापि सामान्यप्रसक्तावनवस्थानात् । अन्त्यविशेषेष्वपि सामान्यसम्भवे तत एव सङ्केतप्रसङ्गे निर्णयार्थं विशेषान्तरस्वीकरणे सत्यनवस्थापत्तिरेव । तत एव हि सामान्यादौ सत्तापि नाभ्युपेया । तस्या अपरसामान्यव्याप्तायास्तत्तन्निवृत्तौ निवृत्तेः । संव्यवहारानु-वृत्तिरपि हि सामान्यादौ सत्ताध्यारोपनिबन्धनैव निर्णीयते ।

तस्मादसति सामान्ये सामान्यादिपदं कथम् ।
सङ्केतभागि तत्रेति सम्प्रधार्यं भवेदिदम् ॥

॥ उक्तशङ्कासमाधानम् ॥

तत्रोच्यते—

सङ्केतो लक्षणोपाधिः सामान्यादौ भविष्यति ।
सामान्यलक्ष्मानन्तेषु समवायोऽविनाशिनः ॥

॥ सामान्यस्य नित्यत्वसमर्थनम् ॥

कुतः पुनरविनाशि सामान्यमित्यधिगन्तव्यम्? **केचिदाहुः**—(वृति) [व्यक्ति] विनाशेऽवस्थितिग्राहिणा भूयो भूयः प्रवृत्तेन निरुपाधिप्रत्यक्षेण व्याप्तिवन्नि-श्चीयत इति। भवतु वा वस्तुत्वे सत्यकार्यत्वादविनाशित्वं आकाशवत् । न खलु सामान्यं कार्यमिति साम्प्रतम् । स्वरूपव्याघातापत्तेः । तस्य हि कार्यत्वे व्यक्तिरेव समवायिकारणं स्यात् । तथा सति व्यक्त्युत्पादविनाशयोः सामान्यस्याप्युत्पादविनाश-प्रसङ्गे प्रतिव्यक्तिसामान्यरूपतां जह्यात । अभेदे पुनः, व्यक्तेः पूर्वमपि सत्त्वादत-त्कारणतापत्तिः। तथा पूर्वपूर्वतरपूर्वतमादिव्यक्तिभ्योऽपि प्राक्त्वादकार्यमेव सामान्य-मभ्युपेयम् ।

तस्मात् विपर्यय[बा](सा)धकप्रसङ्गसहकारिणा सामान्यस्य रूपग्राहकेण प्रत्यक्षेणा[का]र्यत्वसिद्धिरिति युक्तं पश्यामः। तत्सिद्धमकार्यत्वादविनाशि सामान्यम्। अविनाशिनश्चानेकसमवायात्तल्लक्षणात्तत्र सङ्केतोपपत्तिरिति।

॥ विशेषेषु सङ्केतग्रहणे सामान्योक्तन्यायातिदेशः ॥

एवमन्त्यविशेषेऽपि लक्षणादेव तत्पदम्।[1]
अनन्तेऽपि न सङ्केतग्रहवैधुर्यमेष्यति ॥ १ ॥

॥ विशेषलक्षणं तत्प्रमाणं च ॥

किं पुनरन्त्यविशेषलक्षणं? स्वरूपसत एतदप्यसमवायः[2] इति वदामः। प्रमाणं तु तत्सद्भावे-तुल्यधर्माणः परमाणवो मुक्तात्मानो मनांसि च व्यावर्तकसमवायी(यि)नि सामान्यवत्त्वात् स्थाण्वादिवदिति। न च तत्रावयवादिविशेषोऽस्ति निरवयवत्वात्, तुल्यधर्मत्वाच्च। तुल्यधर्माणामन्त्यविशेषवत्त्वे सिद्धे तद्दृष्टान्तावष्टम्भाद्-तुल्यधर्मा[णाम]पि नित्यद्रव्यत्वादेव तत्सिद्धिरिति। तस्मादन्त्यविशेषलक्षणस्य न लक्ष्यासिद्धिदोष इति स्थितम्।

॥ विशेषेषु सामान्यलक्षणानुवृत्तौ तेषां सामान्यत्त्वापत्तिः इति शङ्कानिरासः ॥

ननु च सामान्यलक्षणं चेदनुवर्तेत, सामान्यमेव स्यात् व्यावृत्तौ तु कथं भिन्नेष्वभिन्नपदं सङ्केतयेदिति। न दूषणमेतत्। असामान्यरूपत्वेऽपि सामान्यप्रतिरूपकधर्मत्वोपपत्तेः निष्क्रियत्वादिवत्। कथं तर्हि सामान्यप्रतिरूपकविवेकाध्यवसायः? प्रत्ययानुगतिवैलक्षण्यात्। यत्र ह्यव्युत्पन्नस्यापि प्रत्ययानुगतिः तत्र सामान्यसिद्धिर्यथा गवादौ। सामान्यप्रतिरूपकस्तु धर्मः, अन्यत्र सङ्केतग्रहान्यथानुपपत्त्यादिभिर्युक्तिभेदैरवसीयत इति न दोषः। सामान्यप्रतिरूपकश्च यः कश्चन धर्मः तस्याभाववदेव स्वधर्मिणि सन्निधिरिष्यते, नतु समवायस्तेन[न] सामान्यलक्षणस्याप्यतिव्याप्तिः।

॥ सामान्यस्य व्यक्तिषु समवायभिन्नसंबन्धनिरासः ॥

सामान्याभिमतस्यापि तादृगेव सन्निधिरस्तु न समवाय इति चेन्न, सर्वगतत्वपक्षे व्यक्त्यन्तरालेऽपि तादृक्सन्निधेरविशेषादुपलम्भापत्तेः ; व्यक्तावप्यनुपलम्भापत्तेश्च,

1. अन्तेषु भवाः अन्त्याः नित्यद्रव्यवृत्तयो विशेषाः तत्पदं अन्त्यपदम्
2. समवायभिन्नत्वे सति सत्ताराहित्ये सति असामान्यं

व्यक्तौ विशेषसम्बन्धस्यावश्याश्रयणीयत्वात् । तमेव च सन्निधिमात्रासम्भविनं सामान्यादिषु साक्षात्कारादिकार्योपयोगिनं विशेषमभिप्रेत्य वस्तुनोरेव संश्लेषः समवाय इति समवायलक्षणे समुपसर्गो योजनीयः । सम्यग्भूतः श्लेषः संश्लेषः साक्षात्कारादिकार्योपयोगी नतु व्यक्त्यन्तरालप्रदेशसामान्ययोः सन्निधि(रेवानु)[रिवाकार्य]कारीत्यर्थः । तथापि स्वाश्रयमात्रगतत्वपक्षे भवत्वभाववदेव स्वाश्रयसन्निधि[र]तिप्रसङ्गाभावादिति चेन्न ।

॥ सामान्यस्य स्वाश्रयसर्वगतत्वपक्षः परमतत्वेनैव न स्वमतत्वेन ॥

तस्य परमतत्त्वेनैवोपन्यासात् । अन्यथा व्यक्त्यन्तराले सकलसम्बन्धविरहिणः सामान्यस्य तुच्छतापत्तौ पुनस्तत्र व्यक्त्युत्पादेऽप्यनुपलम्भप्रसङ्गात् । उपलम्भे वा प्रागसतस्तत्रोत्पत्तेः अवश्याश्रयणीयत्वेन(प्रतीतिशक्तिः) न सामान्यरूपता व्याघातात् । [न] तत्रासीन्न चान्यत आयातं, न चोत्पद्यते तत्र, तथापि व्यक्त्युत्पादादूर्ध्वं स्वभावभेदादेव व्यक्त्युत्पादकशक्तिवैचित्र्यादेव तावत्सम्बन्धः अनुभूयत इत्यपि वचसः सति गत्यन्तरे प्रमाणविरहितायाः प्रलापमात्रत्वात् ।

तस्मात्सर्वगतमेव सामान्यमिति सिद्धान्तः । तथा च सति समवायः स्वव्यक्तिषु, सन्निधिमात्रं तु तदन्तरालेष्विति प्रागुक्तनीत्यनुसारात् अवश्याश्रयणीयम् । सामान्यप्रतिरूपकस्य तु धर्मस्य स्वधर्मिणि सन्निधिमात्रं नतु समवाय इति विवेकसिद्धिः ।

तस्मात्सर्वत्र दुःस्थाने सामान्यप्रतिरूपकाः ।
धर्मभेदा उपेतव्याः सङ्केताभ्युपपादकाः ॥ १ ॥

तस्मात्—

सामान्यमात्रमाश्रित्य सामान्यप्रतिरूपकम् ।
धर्मं वा व्यक्त्यनन्तत्वे सङ्केतस्यास्ति सम्भवः ॥ २ ॥

॥ सामान्यविशिष्टवह्न्याद्यनुमापकं दृष्टमित्युपसंहारः ॥

तदेवं स्थितं तावद्व्यक्तिभेदेऽपि प्रत्यक्षीकृतसामान्यविशिष्टवह्न्याद्यनुमापकं दृष्टं, इतरत्सामान्यतो दृष्टं साधनमिति ।

**तत्पुनर्द्विविधं, स्वार्थं परार्थं चेति। तत्र परोपदेशानपेक्षं स्वार्थं, परोपदेशापेक्षं परार्थं, परोपदेशस्तु पञ्चावयवं वाक्यम्, प्रतिज्ञा-हेतूदाहरणोपनयनिगमनान्यवयवाः । तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा।**

---

॥ अनुमानस्य स्वार्थपरार्थभेदेन द्वैविध्यम् ॥

तत्प्रतीतस्यैव द्वैविध्यान्तरमाह–**तत्पुनर्द्विविधम्। स्वार्थं परार्थं चेति।** स्वस्मा इदं स्वार्थम्। परस्मा इदं परार्थम्। तयोरेव लक्षणभेदमाह—**परोप-देशानपेक्षं स्वार्थं; परोपदेशा(र्थं)पेक्षं परार्थमिति।** स्वयमेव व्याप्तिस्मरणादि-योगिनः पुंसः परस्योपदेशमनपेक्षमाणं अनुमितिं साधयत्साधनं स्वार्थमुच्यते। यत्तु व्याप्तिस्मरणादौ मूढस्य तत्प्रत्यायके परोपदेशे सहायापेक्षया वर्तमानमनुमेयं साधयति तत्परार्थमुच्यते। प्रतिपादकेन परस्मै साधनत्वेन प्रतिपाद्यत इति तत्प्रति-पादकत्वात् परोपदेशमपि परार्थानुमानमुपचरन्ति।

॥ परार्थानुमाननिरूपणम् ॥

परोपदेशः पुनः कीदृश इत्यत आह—**परोपदेशस्तु पञ्चावयवं वाक्य-मिति।** पञ्चावयवा वक्ष्यमाणलक्षणा यस्य सन्ति तद्वाक्यम्। अभिमतार्थ-प्रतिपादकः पदसमूहः परोपदेशोऽत्र विवक्षित इत्यर्थः। अवयवास्तु तदेकदेशाः किं पदान्येव ? नेत्याह—**प्रतिज्ञाहेतूदाहरणोपनयननिगमनान्यवयवा इति।** प्रतिज्ञादीनामितरेतरयोगे द्वन्द्वः। साधनाङ्गाभिधायकान्यवान्तरवाक्यानि महा-वाक्यमपेक्ष्यावयवा इत्यभिधीयन्त इति भावः।

॥ प्रतिज्ञालक्षणम् ॥

प्रथमाभिहितां प्रतिज्ञां तावत् लक्षयति–**तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञेति।** तेष्ववयवेषु मध्ये प्रतिपादयितुमिच्छया(ता)पक्षस्य वचनं प्रतिज्ञेत्यर्थः। साधनजिज्ञासया तु यदा कश्चित् पक्षवचनमुच्चारयन् पृच्छति–किमत्र साधनमिति। तदा, तत् पक्षवचनं प्रतिज्ञा माभूदिति प्रतिपिपादयिषयेत्युक्तम्। इह सामर्थ्यात्प्रति-ज्ञाभासा निरस्ता भवन्ति। तेषु यथोक्तलक्षणानुपपत्तेः। तांस्तूपरिष्टात् प्रसङ्गत

**यथा अनित्यश्शब्द इति, साधनत्वख्यापकं लिङ्गवचनं हेतुः। यथा तीव्रादिधर्मोपेतत्वादिति। स त्रिविधिः—अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी, चेति।**

---

उदाहरिष्यामः। नचासावसाधनाङ्गं प्रतिज्ञेति वचनीयम्। तस्या हेतुविषयोपदर्शकत्वेन साधनाङ्गत्वात्। न खलु अविदिते विषये हेतुराकाङ्क्ष्यते। नचानाकाङ्क्षितमर्थमभिदधानः पुरुषोऽप्यवधेयवचनतामवलम्बते। तथा च हेतुदृष्टान्ताद्युपन्यासबलात्प्रतिज्ञार्थसिद्धिरित्यपास्तम्। प्रथमतो विषयापरिज्ञाने सत्यनपेक्षितार्थतया हेत्वादिवचस एवानवधेयत्वात्।

॥ प्रतिज्ञोपन्यासवैयर्थ्यशङ्का तत्समाधानं च ॥

प्रस्ताववेद्यत्वादफलः पक्षोपदेश इति चेत्। ननु न वयमपि प्रस्तावलभ्ये प्रतिज्ञार्थे पुनर्व्यसनितया तदभिधानमपेक्षामहे। यत्र तु तदभावस्तत्रावश्यकर्तव्यः प्रतिज्ञोपन्यास इति नियम्यते। प्रस्तावलभ्ये तु तदर्थे प्रतिज्ञामनभिदधानोऽपि न न्यूनेन निगृह्यते यस्मादिदमाचार्य एवावोचत्—न्यूनस्तु निग्रहस्थानं तदा यदि जिज्ञासितमपि साधनाङ्गं प्रतिपादयितुं न शक्नोति यथा किमत्र साध्यमित्येवं पृष्टोऽपि बौद्धः [1]स्वसमयविरोधभयात्साध्यं निर्देष्टुमशक्तः "सामर्थ्याज्जानीष्व न चेत् सामर्थ्यात् ज्ञातुं शक्नोषि ततोऽद्याप्यव्युत्पन्नस्त्वं सिद्धमात्रशालां प्रविश। कस्ते वादेऽधिकारः" इत्येवमाद्यसदुत्तरं वक्तीति। तस्मात्साधनाङ्गमेव प्रतिज्ञेति संक्षेपः।

॥ प्रतिज्ञोदाहरणं हेत्वादिलक्षणं च ॥

तस्या इदमुदाहरणं-यथा अनित्यः शब्द इति। हेतुलक्षणमाह—**साधनत्वख्यापकं लिङ्गवचनं हेतुरिति।** साधनत्वस्य हेतुत्वस्य ख्यापकम् प्रकाशकं पञ्चम्यन्तं तृतीयान्तं वा यद्वचनं तत् हेतुरित्युपचर्यते। तद्विषयत्वात्। मुख्यस्तु हेतुर्लिङ्गमेव। तस्य पक्षधर्मत्वादिसद्भावेन साध्यप्रतिपादकत्वात्। स पुनः कतिविध इत्याह—**स त्रिविधोऽन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति।** अन्वयव्यति-

---

1. उदाहरणोपनयरूपावयवद्वयवादी बौद्धः तस्येत्थं वचनं स्वसमयविरुद्धमिति भावः

**तत्र पञ्चरूपोऽन्वयव्यतिरेकी, रूपाणि तु पक्षधर्मत्वं सपक्षसत्त्वं विपक्षात् व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । तत्र साध्यधर्मविशिष्टो धर्मी पक्षः, तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम्, साध्यसमानधर्मा धर्मी सपक्षः । तत्र सर्वस्मिन्नेकदेशे वा हेतोर्वृत्तिः सपक्षे सत्त्वम्,**

---

रेकौ द्वावपि यस्य स्तः सोऽन्वयव्यतिरेकी । केवलान्वयी केवलोऽन्वयो यस्य न तु व्यतिरेकः स केवलान्वयी, केवलव्यतिरेकी केवलो व्यतिरेको यस्य न त्वन्वयः स केवलव्यतिरेकीति । एषामेव यथाक्रमं लक्षणोदाहरणाभ्यां स्वरूपप्रकटनार्थं उत्तरः सन्दर्भः । **तत्र पञ्चरूपोऽन्वयव्यतिरेकीति** अन्वयव्यतिरेकिणो लक्षणम् । तेषु हेतुषु मध्ये यस्य पञ्च रूपाणि सन्ति सोऽन्वयव्यतिरेकीत्युच्यत इत्यर्थः । कानि तर्हि रूपाणि? तान्याह— **रूपाणि तु पक्षधर्मत्वं सपक्षसत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति ।** तुशब्दो वाक्यालङ्कारार्थः । चशब्दो रूपाणि समुच्चिनोति ।

॥ पक्षलक्षणम् ॥

अथ पक्षधर्मत्वं व्याख्यातुं इतरेभ्यो व्यावर्तयति—**तत्रेति ।** तेषु पक्षधर्मत्वमिति व्यवहितेन सम्बन्धः । पक्षपरिज्ञानाधीनं च पक्षधर्मत्वपरिज्ञानमिति पक्षं प्रथमतो लक्षयति—**साध्यधर्मविशिष्टो धर्मी पक्ष इति ।** साधनीयेन धर्मेण विशिष्टः विशिष्टतया प्रतिपादनार्हः पक्ष इति योजनीयम् । अन्यथा वास्तवस्य साध्यसिद्धेः प्रागसिद्धेः तद्द्वारकपक्षधर्मत्वस्यापि अनिर्णये साध्यस्यैवासिद्धिप्रसङ्गात् । धर्मिग्रहणम् वैकल्पिकस्य व्योमारविन्दादेः व्युदासार्थम् । एवमुत्तरत्रापि । भवत्वेवं पक्षधर्मत्वं तु किं तद्वृत्तिमात्रेण? नेत्याह–**तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वमिति ।** तत्र तस्मिन् पक्षे व्याप्य वृत्तिर्यस्य न पुनरव्याप्य पक्षैकदेशे स व्याप्यवृत्तिस्तस्य भावस्तत्त्वं तदिह पक्षधर्मत्वं विवक्षितं न तु तद्वृत्तिमात्रमित्यर्थः । एवं च व्याप्यग्रहणं भागासिद्धव्युदासार्थम् ।

॥ सपक्षलक्षणम् ॥

संप्रति सपक्षलक्षणपूर्वकं सपक्षे सत्त्वमुपपादयति—**साध्यसमानधर्मा धर्मी सपक्षः । तस्मिन्** सपक्षे **सर्वस्मिन्नेकदेशे वा हेतोर्वृत्तिः सपक्षे**

**साध्यव्यावृत्तधर्मा धर्मी विपक्षः । तत्र सर्वस्मिन् विपक्षे हेतोरवृत्तिर्विपक्षाद्व्यावृत्तिः प्रमाणाविरोधिनि प्रतिज्ञार्थे हेतोर्वृत्तिरबाधितविषयत्वम् । साध्यतद्विपरीतयोः साधनस्यानिरूपत्वमसत्प्रतिपक्षत्वम् । स द्विविधः—सपक्षवृत्तिभेदात् । सपक्षव्यापकः । सपक्षैकदेशवृत्तिश्चेति । तद्यथा—अनित्यश्शब्दः कार्यत्वादिति सपक्षव्यापकः । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः**

---

**सत्त्वमिति ।** साध्येन समानो धर्मोऽस्येति साध्यसमानधर्मा समानः पक्षः सपक्षः । शेषं विशदम् ।

॥ विपक्षलक्षणम् ॥

विपक्षलक्षणपूर्वकं विपक्षाद्व्यावृत्तिमाह—**साध्यव्यावृत्तधर्मा धर्मी विपक्षः । सर्वस्मिन् विपक्षे हेतोरवृत्तिः विपक्षाद्व्यावृत्तिरिति ।** साध्यस्य व्यावृत्तो व्यवच्छेदः नपुंसके भावे क्तः । स धर्मो यस्य सः साध्यव्यावृत्तधर्मा । सर्वस्मिन्निति विपक्षैकदेशवृत्तेरप्यहेतुत्वं सूचितम् । सुगममन्यत् ।

॥ अबाधितविषयत्वविवरणम् ॥

अबाधितविषयत्वमाह—**प्रमाणाविरोधिनि प्रतिज्ञार्थे हेतोर्वृत्तिरबाधितविषयत्वमिति ।** न विरोध अविरोधः । प्रमाणेनाविरोधो यस्य, तस्मिन् प्रतिज्ञाया अर्थे पक्षे हेतोर्या वृत्तिस्तत् अबाधितविषयत्वम् । अबाधितो विषयो यस्य तस्य भाव इति व्युत्पत्त्या । असत्प्रतिपक्षत्वमाह—**साध्यतद्विपरीतयोः साधनस्यानिरूपत्वमसत्प्रतिपक्षत्वमिति** साध्यस्य तद्विरुद्धस्य च साधने यदत्रिरूपत्वं पक्षधर्मत्वादिरूपत्रयाभावः तत् असत्प्रतिपक्षत्वमित्यर्थः ।

॥ अन्वयव्यतिरेकिभेदः ॥

तदेवमन्वयव्यतिरेकिणं सोपस्कारमभिधाय तस्यावान्तरभेदमाह—**स द्विविधः सपक्षवृत्तिभेदादिति ।** सोऽन्वयव्यतिरेकी द्विप्रकारः सपक्षे सर्वस्मिन्नेकदेशे च वृत्तिभेदादित्यर्थः । भेदमेव क्रमेणोदाहरति—**यथाऽनित्यः शब्दः कार्यत्वादिति सपक्षव्यापकः ।** सपक्षस्य व्यापक इति कर्मषष्ठीसमासः । **सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः** सामान्यवत्त्वे सतीति

**पक्षव्यापकस्सपक्षवृत्तिरविद्यमानविपक्षः, केवलान्वयी । स पूर्ववद् द्विविधः । तद्यथा—विवादास्पदीभूतान्यदृष्टादीनि कस्यचित्प्रत्यक्षाणि, प्रमेयत्वात्, करतलामलकवदिति सपक्षव्यापकः । सैव प्रतिज्ञा मीमांसकानामप्रत्यक्षत्वात्, असत्सुखादिवदिति सपक्षैकदेशवृत्तिः ।**

---

सामान्यव्यवच्छेदार्थम् । योगिबहिरिन्द्रियग्राह्यपरमाणुव्यवच्छेदार्थमस्मदादीनामेव यद्बाह्यमिन्द्रियं(तद्ग्राह्यं)तद्ग्राह्यत्वादित्युदितम् । बाह्यग्रहणं तु मानसवेदनीयस्यात्मनो व्युदासार्थम् ।

॥ केवलान्वयिलक्षणम् ॥

केवलान्वयिनं लक्षयति—**पक्षव्यापकः सपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयीति** । यःपक्षं व्याप्नोति यस्य च सपक्षे वृत्तिः, यस्याविद्यमानः स्वरूपत एवासन् विपक्षः स केवलान्वयी । **स पूर्ववद्द्विविध इति** । अन्वयव्यतिरेकिवत सपक्षवृत्तिभेदात द्विविध इत्यर्थः । तत्रोदाहरणं—**तद्यथा-विवादास्पदीभूतान्यदृष्टादीनि कस्यचित्प्रत्यक्षाणि प्रमेयत्वात्करतलामलकवदिति** । अदृष्टमादिर्येषामिति सर्वातीन्द्रियावरोधः । तस्मिन्नेव प्रतिज्ञार्थे **मीमांसकानामप्रत्यक्षत्वात् असत्सुखादिवदित्ययं हेतुः सपक्षैकदेशवृत्तिरिति** ।

॥ केवलान्वयी नास्तीति शङ्का तत्परिहारश्च ॥

कथं पुनर्व्यतिरेकाभावे स्यादविनाभावः तेन विना न भवतीत्येवमात्मनोऽविनाभावस्य व्यतिरेकादव्यतिरेकात[1] । नैतत्सारम् । साध्येन(न)साधनस्य व्याप्तिरविनाभाव इति लक्षणव्यवस्थापनात । न च सत्यपि लक्षणे शब्दव्युत्पत्त्यसंभवमात्रादर्थप्रतिषेधो युक्तः । तथा सत्यगच्छन् गौर्न भवेत् । अपि च श्वमण्डममण्डं स्यात् । तस्मात् लक्षणानुसारादेव तत्त्वव्यवस्था । तदिह यद्यपि तेन विना न भवतीति व्यतिरेकानुपपत्तिः तथापि साध्येन साधनस्य कृत्स्नसहचाररूपव्याप्तिरखण्डितेति स एवाविनाभावः । सन्दिग्धव्यतिरेकत्वं तु नैतादृशि शङ्कितुमपि शक्यं विपक्षासम्भवे

---

1. अभेदात्

**पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद्व्यावृत्तः केवलव्यतिरेकी । यथा सर्वं कार्यं सर्ववित्कर्तृपूर्वकं; कादाचित्कत्वात्, यत् सर्ववित्कर्तृपूर्वकं न भवति तत् कादाचित्कमपि न भवति यथा आकाशादि । प्रसङ्गद्वारेण वा, यथा नेदं निरात्मकं जीवच्छरीरं, अप्राणादिमत्त्वप्रसङ्गात् लोष्टवदिति ।**

---

तदनुपपत्तेः । काल्पनिको नरविषाणादिरेव विपक्ष इति चेन्न । तत्र यथोक्तविपक्षलक्षणवैकल्यात् । तदपाकरणार्थं हि विपक्षलक्षणे धर्मिग्रहणमित्यवोचाम ।

॥ उक्तकेवलान्वयिनोऽपि अन्वयव्यतिरेकित्वोपपादनम् ॥

यद्वा विकल्पितस्यापि विपक्षत्वे तद्व्यावृत्तिमभिप्रेत्य भवत्वयमन्वयव्यतिरेक्येव यथोक्तलक्षणविपक्षाद्व्यावृत्तेरभावात् केवलान्वयीति कथ्यते । न च वस्तुतः काल्पनिकाद्विपक्षात् व्यावृत्तिरुपयोगिनी । तस्याः प्रमाणपथानधिरोहात् । काल्पनिक्येव सोपयुज्यत इति चेत्, नन्वेवमन्वयोऽपि काल्पनिकः सम्भवतीति कथमनर्थ एव न भवेत् । काल्पनिकस्य च हेतुरूपचिन्तायां न हेतुहेत्वाभासव्यवस्थोपपत्तिः । तस्मात् अस्ति केवलान्वय्यपि हेतुरिति स्थितम् ।

॥ केवलव्यतिरेकिणो लक्षणम् ॥

अथ केवलव्यतिरेकिणो लक्षणं वक्ति—**पक्षव्यापकोऽविद्यमानसपक्षो विपक्षात् व्यावृत्तः केवलव्यतिरेकी ।** यः पक्षस्य व्यापको न त्वेकदेशवृत्तिः यस्य चाविद्यमानः स्वरूपतोऽप्यसन् सपक्षो विपक्षाच्च सर्वस्मात् व्यावृत्तो यः स केवलव्यतिरेकीत्यर्थः । अस्योदाहरणं—**यथा सर्ववित्कर्तृपूर्वकं सर्वं कार्यं कादाचित्कत्वात् । यत्सर्ववित्कर्तृपूर्वकं न भवति तन्न कादाचित्कं यथाऽकाशादीति ।** प्रकारभेदेनाप्यस्य प्रयोगमाह—**प्रसङ्गद्वारेण वा यथा नेदं निरात्मकं जीवच्छरीरं अप्राणादिमत्त्वप्रसङ्गात् लोष्टवदिति ।**

॥ जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्येव हेतुः ॥

इह च प्रसङ्गं द्वारीकृत्य प्रसङ्गविपर्ययरूपं प्राणादिमत्त्वमेव हेतुरभिप्रेयते । न सार्थकं द्वारग्रहणम् । तथा हि—यदीदं निरात्मकं जीवच्छरीरं भवेत् तर्हि

अप्राणादिमत्त्वं प्रसज्येत । दृश्यते च प्राणादिमत्त्वम् । तन्न निरात्मकं जीवच्छरीरं किं तु सात्मकमेवेति प्रसङ्गवाक्यार्थो विपर्ययपर्यवसाय्यवसीयते । तस्मत् सर्वःप्रसङ्गः प्रसङ्गविपर्ययपर्यवसायितयैव प्रमितावुपयुज्यते । प्रयोगस्तु प्रसङ्गविपर्ययस्य जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यत्सात्मकं न भवति तन्न प्राणादिमत् यथा लोष्टादि । नचेदं न प्राणादिमत् तस्मात्सात्मकमिति ।

॥ प्रसङ्गविज्ञानस्य अयथार्थत्वात् न प्रमितावन्तर्भाव इति शङ्का ॥

भवत्वेवं प्रसङ्गविज्ञानं तु स्वरूपतः कान्तर्भवेत् ? न प्रमितावयथार्थत्वात् आरोपितहेतुसमुत्थत्वाच्च । यदीदं स्यात्तर्हीदमपि स्यादिति [1]यद्यलङ्कृतोऽर्थः सत्य एवेति चेत् ।

॥ प्रसङ्गस्य तर्कवत् सम्भावनारूपस्य सन्देहेऽन्तर्भावः ॥

मैवम् । अनियतकोट्युपनिपाते नियतकोटिपरिग्रहो यद्यर्थः । तावता च कथं सत्यत्वम् । आपादकस्वरूपवदापादनीयरूपप्राणादिविरहस्यापि प्रमाणबाधितत्वात् । भवतु तर्हि विपर्यय एव मिथ्यैककोटिकत्वादित्येके । तदसम्बद्धम् । अनवधारणरूपत्वात् । नो खल्वयमवधारयत्यर्थमप्राणादिमदेवेदमिति । किं तर्हि ? अप्राणादिमत्त्वं प्रसज्यते निरात्मकं चेदिदमित्येवंरूप एवानुभवोऽनुभूयते । तस्मादनवधारणात्मकत्वात् एकतरपक्षसम्भावनावत् प्रतिपक्षप्रतिक्षेपी प्रसङ्गोऽपि सन्देहभेद एव तर्कसंज्ञया चाभिधीयते । नच नानाकोट्युल्लेखः सन्देहलक्षणम् । अपि तु अनवधारणज्ञानत्वमेवेति समर्थितं प्रत्यक्षपरिच्छेदे ।

॥ विपरीतप्रमाणोपदर्शनं प्रसङ्ग इति मतं तन्निरासश्च ॥

यस्तु मन्यते प्रसङ्गो नाम विरोधोद्भावनं; तच्च कस्यचिद्बलीयसो विपरीतप्रमाणस्योपदर्शनम् । कस्तत्र विपरीतात्प्रमाणात्तदुपदर्शकाच्च वचनादन्यस्तर्क इति । स एवं प्रष्टव्यः-तदेवं विपरीतप्रमाणमुपदर्शयद्वचनं यद्येवमभ्युपगच्छसीदं प्रसज्येतेति प्रतीतिमन्तरा कृत्वा विपरीतप्रमाणे पर्यवस्यतीति, किं वा साक्षादेव तदुपदर्शयेदिति । प्रथमे तदेवान्तरालिकं विज्ञानं प्रसङ्गरूपस्तर्कः । चरमे प्रतीतिविरोधः, प्रसङ्गात्मनः

---

1. यदिशब्दार्थविशेषितः इत्यर्थः

प्रत्ययस्यापि यथोक्तस्यान्तराले प्राणभृन्मात्रसिद्धत्वात् । अयं च व्यापकाभावमुपादाय व्याप्यासत्तां प्रसञ्जयन् प्रसङ्गो व्यतिरेकप्रधान इति व्यतिरेकप्रस्तावे प्रसङ्गद्वारकः प्रयोगो निरूपितो न पुनरन्यत्र, असम्भवात् । भवति खलु अदहनश्चेद्धूमोऽप्ययं धरणीधरः स्यादिति अन्वयव्यतिरेकिण्यपि प्रसङ्ग इति ।

॥ यदि धूमवान्न भवेत् तर्हि वह्निमान्न भवेदिति प्रसङ्गोऽपि व्यतिरेकिप्रधानः ॥

योऽपि हि यद्ययं धूमवान् भवेद्दहनवानपि भवेदिति प्रसङ्गः सोऽपि अदहनत्वादधूप एवायमिति प्रसङ्गगोचरविपर्ययमुद्देश्यमर्थमपेक्ष्य व्यतिरेकमुख एवेति व्यतिरेकिप्राधान्यं न व्यभिचरति ।

॥ केवलव्यतिरेकी नास्तीति शङ्का ॥

स्यादेतत् । सर्वमिदमस्थाने भ्रान्तं व्यतिरेकिप्रामाण्यस्यैवानिरूपणात् । तथाहि—यादृग्विशेषणविशेष्यतया व्यतिरेकिणा धर्मी साधयितुमभिप्रेतः तादृशमन्यत्र प्रतीतमप्रतीतं वा ? प्रथमे, यत्र प्रतीतं तत्र हेतुः प्रवर्तते चेदन्वयव्यतिरेक्येव । ततो निवर्तते चेत्, असाधारण एव, नित्यत्वसाधने गन्धवत्त्ववत । चरमे त्वप्रसिद्धविशेषणः पक्ष इति दूषणमशक्यनिवारणम् । नचेदमभिधानीयमत्यन्ताप्रसिद्धमेव साध्यसंसर्गमप्रसिद्धमेव साध्यविशेषणमपि सामर्थ्यवैचित्र्येणैव साधयिष्यति व्यतिरेकीति । नरविषाणादिविशिष्टत्वेनापि साधनापत्तेः । तथा साधने दृश्यानुपलम्भ इति चेत् । नामादिवदतीन्द्रियस्यैव विषाणादेरभ्युपगमेऽविरोधात ।

॥ साध्यासिद्धौ व्यतिरेकस्यैव दुर्निरूपत्वापादनम् ॥

किं च साध्यविशेषणासिद्धौ[1] तदभावे हेतोर[न]न्वयरूपो व्यतिरेक एव दुर्निरूपः । कथं खलु सर्ववित्कर्तुरात्मनश्चाप्रतीतावम्बरे कुम्भे वा सर्ववित्कर्तृविरहो नैरात्म्यं वा शक्यं प्रतिपत्तुम् । नहि तत्र प्रत्यक्षं प्रवर्तते तयोस्तदगोचरत्वात् । नाप्यनुमानं, क्वापि विशेषणाप्रसिद्धौ अन्वयिनो लिङ्गस्यासम्भवात् । केवलव्यतिरेकिणस्तु सर्ववित्कर्तृकत्व(म)सात्मकत्वप्रमितिं विना प्रवृत्त्यनुपपत्तेः । तत्प्रतीतिपूर्विकायां तु प्रवृत्तौ परस्पराश्रयप्रसङ्गो दुर्निवारः । किञ्चैकपदार्थासाधारणधर्मेण[ा]-

1. अनुमितौ विधेयं साध्यं विशेषणम्

प्रसिद्धपदार्थानुमाने कुम्भादावप्यसाधारणकुम्भत्वाद्युपलम्भेन स्वमनीषिकोत्प्रेक्षित(।) विविधधर्मावच्छिन्नकलशानुमानसम्भवादनिवार्य एवातिप्रसङ्गः ।

॥ सम्भावनाप्रसिद्धत्वात् साध्यस्य नाप्रसिद्धविशेषणत्वदोष इति परिहारः ॥

अत्रोच्यते । यदेवानिश्चितस्वभावमपि सम्भावनाविषयीकृतं विशेषणं तदेव धर्मिविशेषे साधनमर्हति न सर्वं सर्वत्र । सम्भावना तु सति संशये वादिविप्रतिपत्ति-निबन्धने प्रतिपक्षबाधकाधीना न सर्वत्र सम्भविनी । नैवं सति अप्रसिद्धविशेषण-दोषः सम्भावनाप्रसिद्धत्वात् साध्यसंसर्गवदेव । नापि नरविषाणादिसिद्धिप्रसङ्गः, तस्य प्रतिपक्षबाधकवैधुर्येण तन्निबन्धनसम्भावनाया अप्यनास्पदत्वात् । सम्भावना-स्पदस्यैव च प्रतिबन्धबोधगोचरव्यतिरेकनिरूपकत्वम् । व्यतिरेकसिद्धिरप्याकाश-घटादौ सर्ववित्कर्तृपूर्वकत्वसात्मकत्वयोः प्रतिवादिनाप्यनङ्गीकारात् । असम्भावित-त्वाच्च । नहि स्वत एव सर्वविदमात्मानं वाऽपाकुर्वन् प्रतिवाद्यप्यम्बरे कुम्भे वा सर्व-वित्कर्तृपूर्वकत्वं प्राणाद्युत्पादनसमर्थं वाऽत्मसम्बन्धमङ्गीकर्तुमीष्टे । नच संप्रतिपन्नो-ऽप्यर्थः प्रमाणेन साधनीयः । संप्रतिपत्त्यर्थत्वात् प्रतिवादिनं प्रति प्रमाणोपन्यासस्य । संप्रतिपत्तिमात्रेण दृष्टान्तो भवति । यदवोचत् "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धि-साम्यं स दृष्टान्त" [इति] । नापि प्राणनाद्युपयोग्यात्मसम्बन्धवान् घट इति । [1]पूर्व-कोटिविधुरस्याम्बरस्य कर्तृमात्रपूर्वकत्वस्याप्यसम्भवात् तद्विशेषस्य सर्ववित्कर्तृपूर्वकत्वस्य सुदूरनिरसनीयत्वात् । घटादिषु च प्राणनादिसमर्थात्मसंबन्धसंभवेन तत्र प्राणनाद्यु-त्पादो जायत इति असम्भावनीयम् । एवमन्योऽपि प्रतिपक्षबाधकोपकृतव्यतिरेकी समर्थयितव्यो न विपक्षादर्शनमात्रेणेति कुतोऽतिप्रसङ्गः ।

॥ प्रकृतानुमाने विपक्षबाधकोपन्यासः ॥

किं पुनः प्रकृते प्रतिपक्षबाधकम् । तदभिधीयते । न तावत्सर्ववित्क(र्तृ) [त्र]भावे कार्यत्वमेव संभवेत् । न खल्वचेतनं चेतनानधिष्ठितं प्रवर्तते, चेतना-चेतन(फल)[सह] भावस्य कुविन्दवेमादावन्वयव्यतिरेकनिरूपितत्वात् । न च [2][अस-र्वज्ञः जीवादिर]धिष्ठातुमीष्टे । तदिह यत्रापि कुम्भकारादिरधिष्ठा[ता तत्रापि चेतना]-

1. प्रागभावः उत्पादकसामग्री वा पूर्वकोटिः/
2. सर्वज्ञहित वादी—मा.

नधिष्ठितस्य दार्वादेरप्रवृत्तेः कुम्भादिनिर्माणे न च तदन्तरेणैव कार्योत्पत्तिरुपपत्तिमती। न खलु कतिपयकारकप्रवृत्तावपि । कार्योत्पत्तिसामग्र्यधीनत्वात्तस्य । तस्मात्कुम्भादावप्यचेतनत्वेन सर्वविन्निर्माता स्वीकरणीयः तदुत्पत्तिरन्यथा न भवेदिति। तथा कुम्भे जीवच्छरीरे चात्माभिधानपदार्थाभावोऽ[वि]शिष्टः ।

॥ जीवच्छरीरे प्राणादिसंभवः असंभवश्च घटादौ इत्यत्र कारणप्रदर्शनम् ॥

कथमेकत्र प्राणाद्यसम्भवः तत्सम्बन्धश्चान्यत्रेति व्यवस्था । स्वभावत एवेति चेन्न। नित्यं सत्त्वमसत्त्वं वेत्यादिदोषानुषङ्गात । बुद्धिसदसद्भावाभ्यां इति चेत् । मैवम् । प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकारबुद्धिसुखदुःखादीनां प्राणादिपदेनाभिधानात् ।

॥ घटादौ आत्मसद्भावेऽपि न प्राणादि शरीरादावेव च प्राणादीति व्यवस्थाकारणोपपादनम् ॥

कथं पुनरात्मसद्भावेऽपि संभवति व्यवस्था, विभोः सर्वत्र सद्भावेन कुम्भादावपि प्राणनादिप्रसक्तेः । नैतत्, आत्माधिष्ठितत्वविशेषस्य सात्मकपदेन विवक्षितत्वात् । तस्य च प्राणनाद्यन्यथानुपपत्त्यैव सिद्धिः न तु सर्वत्रेति कथमव्यवस्था? तदधिष्ठितत्वविशेषोऽपि कथं व्यवतिष्ठतामिति चेत् । अदृष्टविशेषात् । तद्विशेषोऽपि प्राचीनभवभाविप्राणादिविशेषाधीनः । सोऽपि तत्पूर्वभवभाविधर्मादिविशेषादित्यनादिरयं कार्यकारणभाव इत्यदोषः ।

॥ उक्तव्यवस्थायाः अवश्याश्रयणीयत्वोपपादनम् ॥

अवश्याश्रयणीयं चैतत् । कथमपरथा भेदमन्तरेण कश्चित निरुद्धप्राणादिरेवोद्भवति । कश्चित्तु दिनत्रितयेन दिनत्रितयेनार्धमाससंवत्सरादिविकल्पेन वा प्राणादिनिरोधवान् भविष्यतीति व्यवस्थोपपद्यते। नो खलु पित्रादिकारणेष्वपि तदुपयोगी विशेषः कश्चिदनुभूयते ।

विज्ञान(मि)[मे]व प्राचीनादृष्टभेदनियतं क्वचिदुपजायते। कियन्तं च (न) कालमवतिष्ठते । तदनुविधानेन च प्राणादेरुत्पत्तिरवस्थानं चेति भवतु, किमात्मपरिकल्पनयेति चेत् । तदसत् ॥ तद्विज्ञानस्यापि परलोकित्वं पूर्वानुभूतानुसन्धानं

च न सम्भवत्याशुविनाशित्वादिति वक्ष्यमाणत्वात् । यस्माद्यः परलोकी यस्य च पूर्वानुभूतानुसन्धानसम्भवः स एवात्मा, तदधिष्ठिते देहे प्राणादयो भवन्तीत्यभ्युपेयम् । नान्यथा तदुपपत्तिरिति सिद्धं प्रतिपक्षबाधकम् । नरविषाणादेस्तु न प्राणाद्युत्पादे (तु) प्रतिपक्षबाधकम् । नापि सामर्थ्यसम्भावना । तत्सम्भावनायां वा स एवात्मा भविष्यति नास्ति परं विप्रतिपत्तिः ।

॥ आत्मसाधने घटादिदृष्टान्तेन अन्वय्यनुमानसम्भव इति शङ्का तन्निरासश्च ॥

यदि मतमिच्छादिकार्येण तत्समवायिहेतुरनुमीयतां ; कलशादिकार्येषु च समवायिहेतुत्वदर्शनादन्वयोऽपि सम्भवतीति किं केवलव्यतिरेकिचक्रेणेति ।

नैतत् । अष्टद्रव्यातिरिक्तनित्यत्वादिधर्मकस्येच्छादिसमवायिनः साधनीयत्वात्तादृशः काप्यन्वयाप्रसिद्धौ व्यतिरेकिण एव तत्साधकत्वात् ।

॥ सामान्यसिद्धौ अधिकरणसिद्धान्तन्यायेनात्मसिद्धिशङ्का तन्निरासश्च ॥

स्यान्मतं सामान्यसिद्धावधिकरणसिद्धान्तनीत्या[1] नित्यत्वादिविशेषसिद्धिरिति । न । तस्या देशादिसम्बन्धविषयविशेषमात्रविषयत्वात् । नित्यत्वादिविशेषाद्युत्प्रेक्षिते विषये, यत्र क्वचन हेतुसामर्थ्यासम्भवात् ; अन्यथातिऽप्रसङ्गात् ।

॥ परिशेषानुमानेन तत्सिद्धिशङ्का परिशेषानुमानं च ॥

सिद्धे सामान्ये परिशेषादभिमतविशेषसिद्धिर्भविष्यतीति चेत् । कः पुनः परिशेषो नाम ? प्रसक्तप्रतिषेधे सत्यन्यत्राप्रसङ्गात् शिष्यमाणे संप्रत्यय इति चेत् । कुतः पुनः शिष्यमाणसम्प्रत्ययः ? प्रसक्तप्रतिषेधहेतवो हि प्रतिषेधसिद्धावेव चरितार्थाः । तदुपकृतो मूलहेतुरेव साध्यविशेषं साधयतीति चेत् ।

संपन्नस्तर्हि स एव केवलव्यतिरेकी । तस्य तथाविधेनान्वयानुपपत्तेः । तस्य हि तादृशा साध्येन व्याप्तिमेव प्रतिपक्षप्रतिषेधहेतवः समर्थयिष्यन्ति । तथा हि-समवायिहेतुत्वे साधकेन कार्यत्वेनेच्छादेर्निर्हेतुकत्वं प्रतिषिद्धम् । अन्यकृताव-

---

1. यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः

**एतेन हेत्वाभासानामहेतुत्वमुक्तं भवति। हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासाः। तेचानेकप्रकाराः। असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः।**

---

दृष्ट(स्य) संस्कारौ नान्यस्य फलत इत्यनेन देहाद्यव्यतिरिक्तहेतुकत्वं प्रतिषिद्धम्। पूर्वाभ्यस्तस्मृतिबलादित्यादिना कृतकहेतुकत्वं प्रतिषिद्धमित्येवं प्रतिपक्षबाधकहेतुभ्यः प्राणादेः साध्यविशेषेण व्याप्तिः **काकतीरादर्शनन्यायेन** पक्ष एव सिद्धयति। स एवान्वय इति चेत्। भवतु नामैवं, तथाप्य[न्य]त्र पक्षादन्वयोऽस्य नास्तीति व्यतिरेकित्वमुक्तमिति सर्वं सुस्थम्।

॥ हेत्वाभासानामहेतुत्वोपपादनम् ॥

**एतेन हेत्वाभासनामहेतुत्वमुक्तं भवतीति।** एतेन च पक्षधर्मत्वादिलक्षणकथनेन, तल्लक्षणविरहिणां हेत्वाभासानामहेतुत्वमुक्तं भवतीत्यर्थः। सुखावबोधार्थं हेत्वाभासानामेव सामान्यविशेषाभ्यां लक्षणमुदाहरणानि चाभिधातुमुत्तरः सन्दर्भः।

॥ हेत्वाभासलक्षणं तद्विभागश्च ॥

तत्र सामान्यलक्षणमाह-**हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासा इति।** हेतूनामपि परस्परभिन्नानां साधकस्वरूपसाधारण्यादन्यो(न्या)न्यं हेतुवदवभासाद्धेत्वाभासभावो माभूदिति **हेतुलक्षणरहिता** इत्युदितम्। तथापि छलजात्यादीनां हेत्वाभासता भवेदिति तद्व्यवच्छेदाय हेतुवदवभासमाना इत्युक्तम्। हेतुरूपाणां खल्व(त्र)न्यतमरूपानुवृत्त्या प्रयोज्यसादृश्येन प्रतिज्ञानन्तरं प्रयोगसादृश्यादहेतूनामपि हेतुवदवभासमानता सम्भविनी। छलादीनां तु दूषणाभा(वा)[सा]दीनां कथमपि न साधनस्वरूपानुवृत्तिवशेन तद्वदवभास इति।

तेषां स्वरूपसङ्ख्याविप्रतिपत्तिनिरासायाह-**असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमा इति।** असिद्धादीनां इतरेतरयोगद्वन्द्वः। एवंरूपा एव हेत्वाभासा न न्यूना नाभ्यधिकाः। एतेष्वेव देशकालविषयादिभेदादनन्तानामपि हेत्वाभासविशेषाणामन्तर्भावादित्यर्थः।

**तत्रानिश्चितपक्षवृत्तिरसिद्धः । पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः । पक्षत्रयवृत्तिरनैकान्तिकः, साध्यासाधकः पक्ष एव वर्तमानोऽनध्यवसितः । प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः । स्वपक्षपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः ।**

---

॥ असिद्ध्यादिलक्षणानि ॥

अथोद्देशक्रमानुरोधेनासिद्धादीन् लक्षयति-**तत्रानिश्चितपक्षवृत्तिरसिद्धः ।** तत्र हेत्वाभासेषु अनिश्चिता न ज्ञाता, सन्दिग्धा, नास्तीति निश्चिता वा पक्षे वृत्तिर्यस्य स तथोक्तः । **पक्षविपक्षयोरेव वर्तमानो विरुद्धः । पक्ष[ादि]त्रयवृत्तिरनैकान्तिकः । साध्यासाधकः पक्ष एव वर्तवानोऽनध्यवसितः ।** केवलव्यतिरेकिव्युदासार्थं साध्यस्यासाधक इत्युदितम् ।

॥ अनध्यवसितस्यानैकान्तिकेऽन्तर्भावावादिमतं तन्निरासश्च ॥

केचिदाहुः । अयमनैकान्तिक एवान्तर्भवति । तथा(पि)[हि] सूत्रं 'अनेकान्तः सव्यभिचार' इति । यथा च हेतोरुभयत्र वृत्तिः व्यभिचारः त(तो)था उभयतो व्यावृत्तिरपि व्यभिचारः तस्य नियमातिक्रममात्ररूपत्वात् । यथा च नैकस्मिन्नन्ते वृत्तिस्तथा नैकसाद्व्यावृत्तिरस्येति साधारणवदसाधारणोऽप्यनैकान्तिक इति । कथं तर्हि असद्विपक्षोऽनुपसंहार्यनैकान्तिकः यथा सर्वं कार्यं नित्यं जन्मवत्त्वात्, सर्वमनित्यं प्रमेयत्वादिति । नचानयोरन्यत्रान्तर्भावः सम्भवी । तल्लक्षणाविषयत्वात् । तस्मादनैकान्तिकादन्य एवानध्यवसितः स्वीकर्तव्यः । सूत्रं तु सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा इति न पञ्चत्वावधारणार्थं किं तु निदर्शनार्थम् ।

॥ कालात्ययापदिष्टप्रकरणसमयोर्लक्षणकथनम् ॥

**प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः ।** [1]निर्दिष्टपक्षोपन्यासानन्तरं हेतूपन्यासकालः ; तदत्ययेनापदिष्टः कालात्ययापदिष्टः । **स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः** प्रकरणयोः पक्षप्रतिपक्षयोः सिद्धौ समस्त्रिरूपत्वेनेति । त्रीणि रूपाणि, पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरिति ।

---

1. सन्दिग्धेत्यर्थः

**यद्यपि चैषां सूक्ष्मो भेदोऽनन्तत्वान्न शक्यते वक्तुम्। तथापि स्थूलां दृष्टिमाश्रित्य कियन्तो भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते। तत्रासिद्ध-भेदास्तावत्, स्वरूपासिद्धो यथा—अनित्यश्शब्दः चाक्षुषत्वात्। व्यधिकरणासिद्धो यथा—अनित्यः शब्दः पटस्य कृतकत्वात्। विशेष्यासिद्धो यथा—अनित्यःशब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्। विशेषणासिद्धो यथा—अनित्यश्शब्दः चाक्षुषत्वे सति सामान्यवत्त्वात्।** a b

---

॥ हेत्वाभासावान्तरभेदप्रपञ्चनम् ॥

अथैषां सहोदाहरणेनावान्तरभेदस्य प्रपञ्चः। कथं पुनर्देशकालपुरुषभेदेना-(न्तभेदेना)नन्तः सूक्ष्मेक्षिकया स्वरूपभेदेनापि अनन्तो हेत्वाभासभेदः शक्यप्रति-पादन इत्याशङ्कामपाकुर्वन्नाह-**यद्यपि चैषां सूक्ष्मो भेदोऽनन्तत्वान्न शक्यते वक्तुं तथापि स्थूलां दृष्टिमाश्रित्य कियन्तो भेदाः प्रदर्श्यन्ते।** व्युत्पत्त्यर्थ-मिति वाक्यशेषः।

॥ असिद्धभेदकथनम् ॥

**असिद्धभेदास्तावत्। स्वरूपासिद्धो यथा अनित्यः शब्दः चाक्षुषत्वात् इति।** स्वरूपेणासिद्धः स्वरूपं वाऽसिद्धमस्येति तथोक्तः। ननु चाक्षुषत्वं रूपादावस्ति तेनास्य व्यधिकरणासिद्धत्वं युक्तम्। न। रूपाद्यधिकरणत्वेनाप्रतिपादित-त्वात्। धर्मिणि चापदिष्टं चाक्षुषत्वं न स्वरूपतोऽस्तीति।

॥ व्यधिकरणासिद्धकथनम् ॥

**व्यधिकरणासिद्धो यथा—अनित्यः शब्दः पटस्य कृतकत्वात्।** विभिन्नमधिकरणं यस्यासौ व्यधिकरणः व्यधिकरणश्चासावसिद्धश्चेति तथोच्यते। ननु शब्देऽपि कृतकत्वमस्ति। सत्यम्। नतु तथा प्रतिपादितम्। नचान्यत्र प्रति-पादितमन्यत्र सिद्धं भवति। अन्यतरस्य वा व्यधिकरणासिद्धम्।

✓ **विशेष्यासिद्धो यथा—अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्।** विशेष्यमसिद्धमस्येति तथोक्तः। **विशेषणासिद्धो यथा—अनित्यः शब्दश्चाक्षुषत्वे सति सामान्यवत्त्वात्,** पूर्ववद्विग्रहः। **भागासिद्धो यथा—**

**भागासिद्धो यथा—अनित्यः शब्दः, प्रयत्नानन्तरीयकत्वात् । आश्रयासिद्धो यथा—नित्याः प्रधानपुरुषेश्वराः अकृतकत्वात् । व्यर्थविशेष्यासिद्धो यथा—अनित्यश्शब्दः कृतकत्वे सति सामान्यवत्त्वात् । व्यर्थ विशेषणासिद्धो यथा—अनित्यश्शब्दः सामान्यवत्त्वे सति कृतकत्वात् ।**

---

**अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्,** पक्षस्यायं भागेनासिद्ध इति भागासिद्धिरुच्यते । ननु च वाय्वादिशब्दानामपीश्वरपूर्वकत्वात् कथं भागासिद्धत्वमिति । नैतत् । अस्या(दस्त्व)सदादिप्रयत्नापेक्षत्वात् । अनभ्युपगतेश्वरं प्रति वा भागासिद्धत्वमिति ।

॥ आश्रयासिद्धभेदाः ॥

**आश्रयासिद्धो यथा । अस्ति प्रधानं विश्वपरिणामित्वात्** आश्रयोऽसिद्धोऽस्येति स तथोक्तः। **आश्रयैकदेशासिद्धो यथा—(अ)नित्याः प्रधानपुरुषेश्वराः अकृतकत्वात्** । अत्राश्रयस्य प्रधानपुरुषेश्वरसमुदायस्यैकदेशः प्रधानमसिद्धमिति तथोच्यते । एतच्च साङ्ख्येन न्यायवादिनः प्रयोगे द्रष्टव्यम् । प्रधानस्य न्यायवाद्यसिद्धत्वात् । **व्यर्थविशेष्यासिद्धो यथा—अनित्यः शब्दः कृतकत्वे सति सामान्यवत्त्वात् ।** व्यर्थं विशेष्यं सामान्यवत्त्वमस्येति व्यर्थविशेष्यः स चासावसिद्धश्चेति तथोक्तः । **व्यर्थविशेषणासिद्धो यथा—अनित्यः शब्दः** सामान्यवत्त्वे सति कृतकत्वात । व्याख्यानं पूर्ववत् ।

॥ व्यर्थविशेष्यासिद्धविशेषणासिद्धयोः असिद्धलक्षणोपपादनम् ॥

ननु चासिद्धलक्षणाभावान्नेमावसिद्धौ । सत्यम् । किं त्वेकदेशीयाभिप्रायेणोदाहरणम् । ते हि मेनिरे व्याप्तस्य पक्षधर्मतया प्रतीतिः सिद्धिः । तद्वैपरीत्यमसिद्धिः । विशिष्ट तु व्याप्त न भवति व्याप्तिग्राहकप्रमाणस्याकाङ्क्षितविशेषणान्तर्भावेनैव स्वविषयवेदकत्वात् । तदेव च विशेषणमाकाङ्क्षितं यदनन्तर्भाव्य व्यभिचारः परिस्फुरति । अवर्जनीयदृष्टविशेषणान्तर्भावे तु न धूमात् दहनानुमानं स्यात । स्याच्च सत्त्वद्रव्यत्वादिविशेषणवत एवेति । गुरुमते तु वैयर्थ्यमेवात्र दूषणम् । अत्रासिद्धत्वं तु नास्ति निश्चितपक्ष(त्व)वृत्तित्वात् । यस्य तु शब्दे कृतकत्वमसिद्धं

सन्दिग्धासिद्धो यथा—धूमबाष्पादिविवेकानिश्चये, कश्चिदाह—अग्निमानयं-प्रदेशः धूमवत्त्वात् । सन्दिग्धविशेष्यासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात् । सन्दिग्धविशेषणासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः सर्वदा तत्वज्ञानरहितत्वे सति पुरुषत्वात् । त एतेऽसिद्धभेदाः यदोभयवाद्यसिद्धत्वेन विवक्षिताः तदोभय-वाद्यसिद्धा भवन्ति । यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षिताः तदाऽन्यतर-वाद्यसिद्धा भवन्ति ।

---

तं प्रत्यसिद्धत्वमप्युच्यते [1]परमाण्वादौ पक्षीकृते व्यर्थविशेष्यासिद्धो व्यर्थविशेषणा-सिद्धश्च द्रष्टव्य इति ।

॥ सन्दिग्धासिद्धस्वरूपम् ॥

सन्दिग्धासिद्धो यथा—धूमबाष्पादिविवेकानिश्चये कश्चिदाह—'अग्नि-मानयं प्रदेशो धूमवत्त्वात्' । सन्दिग्धविशेष्यासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात् । सन्दिग्धं विशेष्यमद्याप्यनुत्पन्नतत्वज्ञानत्वमस्येति सन्दिग्धविशेष्यः । स चासौ असिद्धश्चेति विग्रहः । तत्त्वज्ञानोत्पत्तेः पूर्वं रागादिमत्त्वाभ्युपगमेन सिद्धसाधनत्वं माभूदिति प्रतिज्ञायामद्यापीति पदम् । तथा पुरुषत्वादित्युक्ते योगिभिर्व्यभिचारो मा भूदित्यनु-त्पन्नतत्त्वज्ञानत्वादित्युक्तम् । योगाभ्यासात्प्रागनुत्पन्नतत्त्वज्ञानत्वं योगिनामप्य-स्तीत्यद्यापीत्युक्तम् । यदा त्वद्याप्यनुत्पन्नतत्त्वज्ञानत्वादित्येतावदेव भवेत् तदा पाषाणादौ व्यभिचारो भवेदिति पुरुषत्वे सतीत्युक्तम् । सन्दिग्धविशेषणासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुष-त्वात् । सन्दिग्धमत्र विशेषणमित्येतावानेव विशेषः । शेषं पूर्ववत् । एषामेव पुरुषभेदनिबन्धनं कञ्चन विशेषमाह—त एते असिद्धभेदा यदोभयवाद्यसिद्ध-त्वेन विवक्षितास्तदोभयासिद्धा भवन्ति । यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षितास्तदाऽन्यतरासिद्धा भवन्ति ।

---

1. यदा पर—मा.

**विरुद्धभेदास्तु—सति सपक्षे चत्वारो विरुद्धभेदाः । पक्षविपक्षव्यापको यथा—नित्यश्शब्दः कार्यत्वात् । विपक्षैकदेशवृत्तिः**

---

॥ अन्यतरासिद्धत्वं हेत्वाभास एव न संभवतीत्याक्षेपः ॥

कथं पुनरन्यतरासिद्धत्वं सम्भवति? प्रामाणिकत्वे द्वयोरपि सिद्धेरप्रामाणिकत्वे द्वयोरप्यसिद्धेः । प्रमाणेन परं प्रति यावन्न साध्यते तावत्तं प्रत्यसिद्ध इति चेत्तर्हि हेत्वाभासस्य निग्रहस्थानत्वात । यदैवान्यतरासिद्धो हेत्वाभासस्तदैव तदभिधानान्निगृहीतः स्यात् । न च हेतुसमर्थनं पश्चाद्युक्तम्, निग्रहान्तत्वात्तत्वादेरिति ।

॥ तस्य समाधानम् ॥

अत्रोच्यते । यदा वादी सम्यक् हेतुत्वं प्रतिपद्यमानोऽपि तत्समर्थनन्यायविस्मरणादिनिमित्तेन प्रतिवादिनं प्राश्निकान् वा प्रति चोदयितुं न शक्नोति । असिद्धतामपि नानुमन्यते तदाऽन्यतरासिद्धत्वेनैव निगृह्यते । स्वयमनभ्युपगतश्च परप्रसिद्ध इत्येतावतैवोपन्यस्तो हेतुरन्यतरासिद्धो निग्रहस्थानम् । उक्तं हि—

यो हि तावत्परासिद्धः स्वयं सिद्धोऽभिधीयते ।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया ॥ १ ॥ इति ।

॥ विरुद्धभेदानामुदाहरणम् ॥

**विरुद्धभेदास्तु** कथ्यन्त इति शेषः । **सति सपक्षे चत्वारो विरुद्धाः । पक्षविपक्षव्यापको यथा—नित्यः शब्दः कार्यत्वात् ।** कारणसमवायः कार्यत्वम् । उभयान्तो[प]लक्षिता सत्ता नित्यत्वमित्येके । तदभिप्रायेण [1]प्रागभावस्यापि नित्यत्वाद्युक्तमुदाहरणम् । [2]अन्यथा न विपक्षव्यापि कार्यत्वम् । यदा त्वादिमत्त्वमेव कार्यत्वं, तदा प्रध्वंसस्य नित्यत्वेऽपि कार्यत्वमस्तीति अनैकान्तिकं स्यान्न विरुद्धमिति ।

---

1. प्रागभावस्य पूर्वान्ताभावेन उभयान्तोपलक्षितसत्वरूपस्यानित्यत्वस्याभावेन नित्यत्वाद्विपक्षत्वं नास्तीति तत्र कारणसमवायरूपकार्यत्वस्यासत्त्वेऽपि विरुद्धत्वमुपपद्यत इति भावः ।
2. ध्वंसाप्रतियोगित्वस्य नित्यत्वरूपत्वे प्रागभावस्यापि विपक्षत्वात् तदवृत्तिनिरुक्तकार्यत्वस्य न विपक्षव्यापित्वमित्यर्थः ।

पक्षव्यापको यथा—नित्यश्शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् । पक्षविपक्षैकदेशवृत्तिर्यथा—नित्यश्शब्दः प्रयत्नानन्तरीयकत्वात् । पक्षैकदेशवृत्तिर्यथा—नित्यश्शब्दः प्रयत्नानन्तरीयकत्वात् । पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—नित्या पृथिवी कृतकत्वात् ।

असति सपक्षे चत्वारो विरुद्धभेदाः पक्षविपक्षव्यापको यथा—आकाशविशेषगुणश्शब्दः प्रमेयत्वात् । पक्षविपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणश्शब्दः प्रयत्नानन्तरीयकत्वात् । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणश्शब्दः बाह्येन्द्रियग्राह्यत्वात् । विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणश्शब्दः अपदात्मकत्वात् ।

ननु (एते) चत्वार एव विरुद्धभेदाः, नान्ये तेषामसिद्धलक्षणो-

---

विपक्षैकदेशवृत्तिः पक्षव्यापको यथा—नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् । अर्हत्यर्थे कृत्याभिधानात् ग्रहणयोग्यतामात्रं ग्राह्यत्वमुक्तम् तेनास्यापि पक्षव्यापकत्वम् । निर्विशेषणस्य प्रयोगे प्रागुक्तनीत्या सव्यभिचारत्वमेव स्यात् नतु विरुद्धत्वमिति विशिष्टोदाहरणम् । पक्षविपक्षैकदेशवृत्तिर्यथा-नित्यः शब्दः प्रयत्नानन्तरीयकत्वात् । पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—नित्या पृथिवी कृतकत्वात् ।

॥ असति सपक्षे विरुद्धभेदाः ॥

असति सपक्षे चत्वारो विरुद्धाः । पक्षविपक्षव्यापको यथा-आकाशविशेषगुणः शब्दः प्रमेयत्वात् । पक्षविपक्षैकदेशवृत्तिः यथा-आकाशविशेषगुणः शब्दःप्रयत्नानन्तरीयकत्वात् । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणः शब्दो बाह्येन्द्रियग्राह्यत्वात् । विपक्षव्यापकः (स)पक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणः शब्दः अपदात्मकत्वात् ।

॥ पक्षैकदेशवृत्तीनां असिद्धलक्षणोपेतत्वात् न विरुद्धत्वमिति शङ्का तत्परिहारश्च ॥

अत्र परः पृच्छति-नतु चत्वार एव विरुद्धभेदाः ये पक्षव्यापकाः ते, नान्ये ये पक्षैकदेशवृत्तय इत्यर्थः । तत्र हेतुमाह-तेषामसिद्धलक्षणोपपन्नत्वात् ।

पपन्नत्वात्, नैष दोषः । उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात् । तुलायां प्रमाणप्रमेयव्यवहारवत् ।

अनैकान्तिकभेदास्तु—पक्षत्रयव्यापको यथा—अनित्यश्शब्दः प्रमेयत्वात् । पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा—नित्यश्शब्दः प्रत्यक्षत्वात् । पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—गौरयंविषाणित्वात् । पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा—नायं गौःविषाणित्वात् । पक्षत्रयैकदेशवृत्तिर्यथा—नित्या पृथिवी प्रत्यक्षत्वात् । पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—द्रव्याणि दिक्कालमनांसि अमूर्तत्वात् । पक्षविपक्षैकदेवृशत्तिः सपक्षव्यापको यथा—न द्रव्याणि दिक्कालमनांसि अमूर्तत्वात् । सपक्षविपक्ष-

---

भागासिद्धलक्षणोपेतत्वादित्यर्थः । परिहरति-**नैष दोषः उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात् । तुलायां प्रमाणप्रमेव्यवहारवदिति** । यथा तुला द्रव्यसुवर्णादीनामियत्तापरिच्छेदसाधनत्वात्प्रमाणम् । तुलान्तरपरिच्छेदनीयत्वेन प्रत्यक्षतो वा स्वरूपतः प्रमीयत इति प्रमेयं भवति, तथा पक्षैकदेशवृत्तयोऽप्यसिद्धलक्षणयोगाद्विरुद्धानैकान्तिकान(व्यवस्थि)[ध्यवसि]तभेदा अपीति ।

॥ अनैकान्तिकभेदोदाहरणानि ॥

**अनैकान्तिकभेदास्तु** प्रतिपाद्यन्त इति शेषः । **पक्षत्रयव्यापको यथा—अनित्यः शब्दः प्रमेयत्वात्** । **पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा नित्यः शब्दः प्रत्यक्षत्वात्** । अस्मदादीन्द्रियग्रहणयोग्यतामात्रं प्रत्यक्षत्वमत्राभिप्रेतम् । ततो ना(न्य)स्य पक्षैकदेशवृत्तित्वप्रसङ्गः । नापि योग्यापेक्षया पक्षत्रयव्यापकत्वप्रसङ्ग इति । **पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा गौरयं विषाणित्वात् । पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा—नायं गौः विषाणित्वात् । पक्षत्रयैकदेशवृत्तिर्यथा—नित्या पृथिवी प्रत्यक्षत्वात्** । अयोग्यविषयत्वमेवात्राप्रत्यक्षत्वं द्रष्टव्यम् । **पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—द्रव्याणि दिक्कालमनांस्यमूर्तत्वात्** ।

**पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा न द्रव्याणि दिक्कालमनांसि अमूर्तत्वात् । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा न द्रव्या-**

व्यापकः पक्षैकदेशवृत्तिर्यथा—न द्रव्याण्याकाशकालदिगात्ममनांसि, क्षणिकविशेषगुणरहितत्वात् ।

अनध्यवसितभेदास्तु, अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा—सर्वमनित्यं सत्वात् । अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वमनित्यं कार्यत्वात् । विद्यमानसपक्षविपक्षः पक्षव्यापको यथा—अनित्यश्शब्दः आकाशविशेषगुणत्वात् । विद्यमानसपक्ष विपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वं द्रव्यमनित्यं, क्रियावत्वात् । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा—सर्वं कार्यंनित्यं उत्पत्तिधर्मकत्वात् । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वं कार्यं नित्यं सावयवत्वात् ।

---

ण्याकाशकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वात् ।

॥ अनध्यवसितभेदोदाहरणम् ॥

**अनध्यसितभेदास्तु** उदाह्रियन्त इति शेषः । **अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा—सर्वमनित्यं सत्वात् । अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्वमनित्यं कार्यत्वात् । विद्यमानसपक्षविपक्षः पक्षव्यापको यथा—अनित्यः शब्द आकाशविशेषगुणत्वात् । विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिः यथा—सर्वं द्रव्यमनित्यं क्रियावत्त्वात् । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा सर्वं कार्यं नित्यमुत्पत्तिधर्मकत्वात् । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वं कार्यं नित्यं सावयवत्वादिति ।**

॥ अविद्यमानसपक्षस्य विद्यमानविपक्षस्यानध्यवसितेऽन्तर्भावशङ्का तत्परिहारश्च ॥

नन्वविद्यमानसपक्षो विद्यमानविपक्षः पक्षव्यापकः पक्षैकदेशवृत्तिश्चानध्यसितभेदेन कस्मान्नोदाहृते । नचात्र प्रथमः केवलव्यतिरेकीति शङ्कनीयत् । प्रधानान्वितानि सर्वकार्याण्युत्पत्तिमत्त्वादित्यादेरपि [एवं सति](सत्य)व्यतिरेकित्वप्रसङ्गादिति ।

**कालात्ययापदिष्टभेदस्तु, प्रत्यक्षविरुद्धो यथा—अनुष्णोऽयमग्निः कृतकत्वात्[1] अनुमानविरुद्धो यथा—अनित्याः परमाणवः मूर्तत्वात् ।**

---

नैतत्सारम् । कालात्ययापदिष्टत्वेन गतत्वात् । पक्षैकदेशवृत्तेश्च भागासि(द्धेश्च) [द्धावे]वान्तर्भावात् तथाप्यनध्यवसितलक्षणोपपत्तेरत्राप्युदाहरणं[2] विरुद्धेष्वसिद्धोदाहरणवत् । सत्यं । तथापि कृत्स्नोदाहरणप्रतिज्ञाभावाददोषः । प्रतिपक्षबाधकविधुराः पुनरन्ये विपक्षव्यापका अनुपलब्धपक्षविपक्षाश्चानध्यवसितभेदा एव मन्तव्याः । प्रतिपादितं ह्येतत् प्रतिपक्षबाधकोपपन्न एव सम्यग्व्यतिरेकी नापरः साध्यसाधक इति ।

॥ कालात्ययापदिष्टोदाहरणम् ॥

**कालात्ययापदिष्टभेदस्तु** प्रदर्श्यत इति वाक्यशेषः । **प्रत्यक्षविरुद्धः** प्रत्यक्षबाधितविषयो **यथा अनुष्णोऽग्निः कृतकत्वात् । अनुमानविरुद्धो यथा परमाणूनां [अ]नित्यत्वं मूर्तत्वात् ।**

॥ अनुमानविरुद्धस्य अलक्ष्यत्वशङ्का तत्परिहारश्च ॥

अन्ये तु अनुमानविरुद्धमनुमानं नानुमन्यन्ते । तुल्याधिकन्यूनबलत्वे बाध्यत्वानुपपत्तेः । तुल्यबलत्वे किं कस्य बाधकं बाध्यं वा । अधिकबलमपि बाधकमेव स्यात् । न बाध्यम् । न्यूनबलं तु न्यूनरूपत्वादेव दुष्टम् । किं तस्य बाधकेनेति । प्रत्यक्षविरोध्यपि तर्हि न प्राप्नोति यस्मादनुमानलक्षणोपपन्नमशक्यबाधनं ; तद्विकलं तु तत एव दुष्टं ; अनर्थिका प्रत्यक्षबाधा । यदि मतं त्रिरूपस्य प्रत्यक्षबाध्यत्वादेवानुमानलक्षणविकलत्वं ; हन्त तर्हि त्रिरूपस्य मूर्तत्वादेरनुमानबाधितत्वेनैव न्यूनत्वम् । कथं तर्हि बाध्यबाधकभावः उभयोरपि अनुमानत्वाविशेषादिति? न । विचारे सत्येकस्य बलवत्त्वाद्दुर्बलस्य तेन बाधोपपत्तेः । बलाबलचिन्तयैव हि प्रत्यक्षस्यापि बाधकत्वम् ।

---

1. मथनजन्यत्वात् वह्निवत्
2. युक्तमिति शेषः

तथा हि—उष्णोऽग्निरिति प्रत्यक्षमनन्यथासिद्ध्या विषयबलप्रवृत्तं बलवत्त्वात् अनुमानस्य व्याप्तिभ्रममूलतयाप्युत्पन्नस्य बाधकम् । न पुनरुष्णं सलिलमित्यादिप्रत्यक्षं विपरीतानुमानबाधसमर्थं अन्यथासिद्धत्वेन दुर्बलत्वात् (:स्यात्) अनुमानस्य चानन्यथासिद्धव्याप्तिज्ञानमूलतया बलवत्त्वात् । तथैवानुमानमपि प्रबलतया निरूप्यमाणमबलस्य बाधकमिति युक्तम् । प्रकृते तु परमाणुस्वरूपसाधकं प्रबलं धर्मिग्राहकत्वात् । तदप्रमाणतायामनित्यत्वानुमानस्याप्याश्रयासिद्धत्वप्रसक्तेः । तस्मात्सापेक्षानपेक्षयोर्निरपेक्षं बलवदिति न्यायेन धर्मिग्राहकस्य बलवत्त्वादितरबाधकत्वम् ।

॥ परमाणुस्वरूपग्राहकानुमानस्य तदनित्यताग्राहकानुमानेन न बाधः प्रबलत्वादिति कथनम् ॥

ननु न बलवदित्येव दुर्बलं बाधते । किं तर्हि? विरोधे । परमाणुग्राहकस्य तु कथं तदनित्यत्वग्राहकेण विरोधः । उच्यते । वक्ष्यमाणन्यायेन क्षणभङ्गप्रधानवादपराकरणे सत्यल्पपरिमाणमेव द्रव्यस्योपादानकारणं परमाणोस्त्वनित्यत्वे ततो न्यूनपरिमाणमुपादानमाश्रयणीयमिति परमाणुत्वमेव हीयेत ।

यस्मादल्पतरं नास्ति परमाणुः स उच्यते ।
अनित्यत्वे ततोऽल्पं स्यादिति का परमाणुता ॥ १ ॥

तदेवं विरोधे सति परमाणुस्वरूपानुमानं प्रबलत्वात्तदनित्यताप्रसाधनाय प्रवृत्तमनुमानान्तरमवबाधत इति स्थितम् । परमाणुग्राहकं पुनरनुमानं प्रतिपादितमवयविप्रस्तावे ।

॥ परमाणुग्राहकानुमानान्तरम् ॥

यद्वा—अणुपरिमाणतरतमभावः क्वचिद्विश्रान्तः परिमाणतरतमभावत्वात् महत्तरतमभाववदिति । निरवधिकत्वे तु अवयवपरम्पराप्रसङ्गात् त्रुटिपर्वतादेरनन्तकारणजन्यत्वाविशेषात् गुरुपरिमाणाभ्यां विशेषो न भवेदिति विपक्षे बाधकम् । एतच्चोपपादितं पूर्वमेव ।

आगमविरुद्धो यथा—ब्राह्मणेन पेयं सुरादि द्रवद्रव्यत्वात् क्षीरवत् । प्रत्यक्षैकदेशविरुद्धो यथा—सर्वतेजोऽनुष्णं रूपित्वात् । अनुमानैकदेशविरुद्धो यथा—[1]नित्याश्रयद्रवत्वरूपरसगन्धस्पर्शाः नित्याः । अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्ववत् । आगमैकदेशविरुद्धो यथा—सर्वेषां देवर्षीणां शरीराणि पार्थिवानि शरीरत्त्वात् अस्मदादिशरीरवत् ।

---

॥ आगमविरुद्धस्योदाहरणम् ॥

**आगमविरुद्धो यथा-ब्राह्मणेन पेयं सुरादि द्रवद्रव्यत्वात् क्षीरवदिति ।** नात्र पानमात्रं साध्यं; किं तर्हि ? तद(य)पापनिमित्तत्वम् । तच्चागमैकसमधिगम्यं, नानुमानविषयः । नहि क्षीरपानस्यापि पापनिमित्तत्वं धर्महेतुत्वं वाऽस्मदादिभिः प्रमाणान्तरेणाधिगन्तुं शक्यते । तस्मादविषये प्रवृत्तमनुमानमागमेन बाध्यते । न त्वरूपकात्मानुमानं आदित्यवर्णाङ्गुष्ठमात्रपुरुषप्रतिपादकेन आगमेन बाध्यते । तदनुमानं स्वविषये प्रवृत्तम् । आगमस्त्वन्यार्थ इति ।

॥ प्रत्यक्षैकदेशविरुद्धोदाहरणम् ॥

**प्रत्यक्षैकदेशविरुद्धो यथा-सर्वं तेजोऽनुष्णं रूपित्वात् । अनुमानैकदेशविरुद्धो यथा—नित्याश्रयद्रवत्वरूपरसगन्धस्पर्शा नित्या अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्वादिवत् ।** संयोगविभागयोः समानजात्यारम्भकत्वं परमाणुवृत्तित्वं चास्ति । तद्व्यवच्छेदार्थम**प्रदेशवृत्ति**ग्रहणम् । अनेकत्वसङ्ख्या परिमाणारम्भिकेष्टा । तद्व्यवच्छेदार्थं **समानजात्यारम्भकत्व**ग्रहणम् । तन्तुरूपादिव्यवच्छेदार्थं परमाणुवृत्तित्वग्रहणम् । तत्रानुमानेन नैमित्तिकद्रवत्वपाकजरूपादीनामेव नित्यत्वं विरुध्यते । नतु सांसिद्धिकद्रवत्वानादिपरमाणुरूपादीनामिति ।

॥ आगमैकदेशविरुद्धोदाहरणम् ॥

**आगमैकदेशविरुद्धो यथा सर्वेषां देवर्षीणां शरीराणि पार्थिवानि शरीरत्वादस्मच्छरीरवत् ।** वरुणादित्यवाय्वादीनामाप्यतैजसवायवीयश्रवणात् ।

**प्रकरणसमस्योदाहरणं यथा—अनित्यश्शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवत्। एकत्र तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्येके यथा—नित्यमाकाशममूर्तद्रव्यत्वात् आत्मवदिति। अनित्यमाकाशं अस्मदादिबाह्येन्द्रियग्राह्यगुणाधारत्वात् घटादिवदिति।**

---

तत्प्रामाण्यानभ्युपगमे च धर्मिसिद्धिरपि न स्यादिति। एते च प्रत्यक्षविरोधादयः प्रतिज्ञादोषा अपि पुरुषविवक्षानुसारेणोद्भावनीया भवन्ति। स्ववचनविरोधादयस्तु प्रतिज्ञादोषाः प्रत्यक्षादिविरोधेष्वेवान्तर्भवन्ति। प्रमाणत्रयनियमस्येष्टत्वात्। अप्रमाणविरोधस्य चादूषणत्वात्। तत्र न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधः। साङ्ख्यस्य असत्कार्यमिति स्वशास्त्रविरोधः। अचन्द्रः शशीति प्रसिद्धिविरोधः। हेतुरकिंचित्कर इति प्रतिज्ञापदयोः व्याघातः। त इमे विरोधा आगमविरोधेऽनुमानविरोधे वा यथासम्भवमन्तर्भूता द्रष्टव्या इति।

॥ प्रकरणसमोदाहरणम् ॥

**प्रकरणसमस्योदाहरणम्।** उच्यत इति शेषः। **यथाऽनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति।** नित्यत्वेऽपि साध्ये सम्भवत्ययमेव हेतुः त्रिरूप इत्यस्य प्रकरणसमत्वमुपपन्नम्। उदाहरणं त्वेकमेवोक्तं भेदाभावात्।

॥ प्रकरणसमे मतान्तरोपन्यासः ॥

मतान्तरमाह—**एकत्र तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्येके इति।** एकस्मिन् धर्मिणि तुल्यलक्षणयोः परस्परापेक्षमेव अनिरूपितवैकल्ययोः विरुद्धयोर्हेत्वोः सन्निपातः विरुद्धाव्यभिचारीत्युच्यते। विरुद्धं न व्यभिचरतीत्यर्थः। अत्रोदाहरणमाह—**यथा नित्यमाकाशममूर्तद्रव्यत्वादात्मवत् अनित्यमाकाशमस्मदादिबाह्येन्द्रियग्राह्यगुणाधारत्वाद्घटादिवदिति।**

॥ विरुद्धाव्यभिचारिणः अहेत्वाभासत्वमित्येकदेशिमतम् ॥

केचिदाहुः—समस्तव्यस्तप्रयोगासम्भवान्न हेत्वाभासः पृथगस्ति। समस्तस्यान्यत्वासम्भवादसाधारणत्वम्। व्यस्तप्रयोगं यद्येकः कुर्यात्, तदोन्मत्तः स्यात्। द्वौ चेत्कुर्वाते युगपत्ततोऽर्थप्रतिपत्तिर्न स्यात्। न ह्यन्योन्यं कलकलश्रुतावर्थप्रतिपत्तिः

**स खलु पुरुषविशेषमपेक्षमाणो हेत्वाभासो भवति । अन्यतरासिद्धवदिति ।**

---

सम्भवतीति । यदि क्रमेण द्वौ प्रयुञ्जाते प्रयोगद्वयम् । ततः प्रथमस्य दुष्टत्वे कथमव्यभिचारित्वम् ? अदुष्टत्वे तत्साधितेऽर्थे तद्विरुद्धहेतोरुत्थानमेव न भवेत् प्रत्यक्षबाधित इव । तस्माद्विरुद्धाव्यभिचारी नाम नास्त्येव हेत्वाभास इति ।

॥ उक्तमतापाकरणं स्वसिद्धान्तोपन्यासश्च ॥

तदेतदेकदेशिमतमर्थादपाकुर्वन्नेव परसिद्धान्तमाह-**स खलु पुरुषविशेषमपेक्षमाणो हेत्वाभासो भवत्यन्यतरासिद्धवदिति ।** यत्पुनरुक्तं प्रथमस्य दुष्टत्वमदुष्टत्वं वेति । तदसत् । अविशेषप्रदर्शनमात्रप्रयोजनतया प्रतिवादिनः प्रयोगान्तरोपपत्तेः । यथा हि विशेषानिश्चये विप्रतिपत्तेः सन्देहस्तथा विरुद्धाव्यभिचारिणोऽपि । प्रतिहेतुं प्रयुञ्जानस्य च सन्देहापादनमात्रमेव फलम् । तावता प्रथमस्य साध्यानिश्चायकत्वात् । प्रतिपत्त्रभिप्रायेण च हेत्वोरविशेषो न वस्तुतः । तल्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भाव इति न्यायानुगृहीतेनैव धर्मिग्राहिणैव शब्दलिङ्गकानुमानेनैकमाकाशमिति समर्थ्यमानेन साधनेन सामर्थ्यादप्यनित्यत्वबाधः । एकमेवाकाशमित्यस्यैवार्थस्य नित्यत्वमन्तरेणासम्भवात् । अन्यथा तदुत्पादविनाशाभ्यां पूर्वोत्तरकालभाविनां शब्दानामाश्रयान्तरसमवायादाकाशनानात्वप्रसक्तेः । तदिह नित्यत्वानुमानमेव प्रबलम् । वादी तु यदा विपक्षबाधनद्वारेण स्वहेतोः साध्याविनाभावित्वसमर्थनं, इतरहेतोश्च कालात्ययापदिष्टतोद्भावनं कर्तुं न पारयते, तदा विरुद्धाव्यभिचारी हेत्वाभासो भवति ।

॥ विरुद्धाव्यभिचारिणः अधिकहेत्वाभासत्वशङ्का तत्समाधानं च ॥

कथं पुनरसिद्धविरुद्धेत्यादिवाक्येन षडेव हेत्वाभासा निर्दिष्टाः विरुद्धाव्यभिचारिणोऽप्यधिकस्य सम्भवात् । उच्यते । विरुद्धाव्यभिचारिणोऽपि हेत्वाभासत्वं बाधितविषयत्वादिशङ्कयैव । अन्यथा तु अशेषदोषवैधुर्येण द्वयोरपि साध्याव्यभिचारप्रस[ङ्गे](क्ते)न वस्तुनो द्वैरूप्यापत्तेः । तस्मादवश्यमन्यतरस्यासिद्धत्वाद्यन्यतमदोषेण भवितव्यमिति स्थितौ, स दोषः प्रतिहेतोः स्वहेतोर्वेति सन्दिहानो वादी साध्यमपि

सन्दिग्धे । तदिह प्रतिहेतोः प्रयोगादन्यतरत्वान्यतमदोषसन्देहः, सन्दिह्यमानादेव तु दोषात्साध्यसन्देह इति सर्वत्रासिद्धत्वादिरेव दोषः सन्देहनिश्चयाभ्यां साध्यनिश्चयं विरुणद्धि । तेन षडेव हेत्वाभासा निर्दिष्टा इति युक्तं पश्यामः ।

॥ अप्रयोजकसिद्धसाधनयोराधिक्यशङ्का ॥

स्यादेतत् । तथाप्यप्रयोजकसिद्धसाधनयोरतिरेकात्कथं षडेव हेत्वाभासा इति नियमः सम्भवति ।

॥ एकीयमतेन तत्समाधानम् ॥

यत्तु कैश्चिदसिद्ध एवानयोः अन्तर्भावमभिप्रेत्य वर्णितं-व्याप्तस्य हि पक्षधर्मतया प्रतीतिः सिद्धिः, तदभावो ह्यसिद्धिः । इयं च व्याप्तिपक्षधर्मतास्वरूपाणां अन्यतमाप्रतीत्या भवन्ती यथासङ्ख्यमन्यथासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिरिति चाख्यायते । मध्यमाप्याश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या चेति द्वयी । तत्र चरमा सिद्धसाधनमिति व्यपदिश्यते । व्याप्तिस्थितौ पक्षत्वरूपस्याहत्य विघटनात् । न त्वेवं बाधे, प्रथमतो व्याप्तेरेव विघटनादिति विशेष इति ।

॥ उक्तमतनिराकरणं न्यायभूषणमताविष्कारश्च ॥

तदपि न **न्यायभूषण**मतानुसारतः शक्यमुपसंहर्तुम् । न खलु व्याप्तस्य(।)पक्षधर्मत्वाप्रतीतिरसिद्धिरिति व्याख्यातमाचार्येण, येन व्याप्त्यसिद्धयाप्यसिद्धहेत्वाभासत्वम् । अनिश्चितपक्षवृत्तिरसिद्ध इत्येव स्वीकारात् । गुरुणा **देवेन**[1] च "साक्षादेव न चान्यथासिद्धो नामासिद्धलक्षणेन सङ्गृहीतोऽस्ति" इत्युदितत्वात् ।

सिद्धसाधनस्य त्वसिद्धाभ्युपगमे नियतकथायामेवाधिकं निग्रहस्थानमित्यभ्युपगमोऽपि विरुद्ध्येत । प्रथमहेतुनिर्णीते प्रवर्तमानस्य सर्वस्यापि सिद्धसाधनत्वेनासिद्धत्वाद्धेत्वाभासस्य चानियत(म)कथायामपि निग्रहहेतुत्वात् । तस्मान्न षडेव हेत्वाभासा इति नियमः सङ्गच्छेतेति ।

---

1. प्रशस्तदेवेन

॥ अप्रयोजकस्य हेत्वाभासान्तरत्वनिरासपूर्वकं सन्दिग्धानैकान्तिके सन्दिग्धबाधे वा अन्तर्भावः ॥

तदिदमसमञ्जसम् । तथा हि-ये तावदप्रयोजकं हेत्वाभासमाचक्षते यदि मतं [सन्दिग्धव्यभिचारि]तां पुरस्कृत्य [1]तामाचक्षीरन्, न तर्हि सन्दिग्धानैकान्तिकात् भिद्येत ॥

तथा च पक्षधर्मत्वसन्देहे सन्दिग्धासिद्धः । तथा व्यभिचारसन्देहे सन्दिग्धानैकान्तिको नामानैकान्तिकभेद एव भविष्यतीति कथमाधिक्यं ? यद्यपि च [तत्र] व्यभिचारः शङ्क्य इति शङ्कयापि व्याप्तिसिद्धिरुपजीवनीया तथापि न व्याप्तिसिद्धिं पुरस्कृत्यासिद्धत्वमुच्यते । तथा सति अनिश्चितपक्षवृत्तिरसिद्ध इति लक्षणं नानुसृतं स्यादिति । यदि तु पक्ष एव कालादिभेदेन सम्भवद्बाधकत्वादप्रजोजकः साध्यं न साधयेत्तथापि सन्दिग्धकालातीत एव । तथा च (प)स श्यामः तत्पुत्रत्वात्परिदृश्यमानतत्पुत्रवदित्याद्यप्रयोजकोदाहरणमनुभाष्य विपक्षबाधकवैधुर्यात् सन्दिग्धानैकान्तिकत्वं सन्दिग्धकालातीतत्वं च निरूपितमाचार्येण **न्यायभूषणे** ।

॥ सन्दिग्धानैकान्तिकादेरकथने हेतुः सिद्धसाधनस्य हेत्वाभासत्वराहित्यं च ॥

यत्पुनरनैकान्तिककालातीतोदाहरणप्रस्तावे सन्देहद्वारेणानुदाहरणं तत् कृत्स्नोदाहरण[ा]प्रतिज्ञानादिति मन्तव्यम् । सिद्धसाधनस्य तु प्रयोगे पुरुष एव खलीक्रियते किं वा साधनस्यापि वास्तवमाभासत्वं ? पूर्वत्र सम्प्रतिपत्तिः । निर्णीते साधनोपन्यासवैयर्थ्यात् । परस्मिन् सिद्धमपि साधयतः साधनस्य कथं[न]प्रामाण्यं ? न खलु अपूर्वार्थपरिच्छेदस्तल्लक्षणं धारावहनवेदनसाधनस्याप्रमाणतापत्तेः, सम्प्लवस्य च समर्थितत्वात् ।

॥ उक्तार्थनिगमनम् ॥

तस्मादर्थदोषाः षडेवेति नियमाभिप्रायः । पुरुषस्खलितानि पुनरसङ्ख्यातानि को नाम गणयेत् । पुरुषोऽपि यदि सिद्धमप्यर्थं हेत्वन्तरेण सम्पादयितुमनाः प्रयुञ्जीत तदा न तस्यापि कश्चन दोष इति । अधिकं निग्रहस्थाननिरूपणावसरे निरूपयिष्यते । तस्मात्सर्वमवदातम् ।

---

1. अप्रयोजकतां

**सम्यग्दृष्टान्ताभिधानमुदाहरणम् तद्द्विविधम्—साधर्म्यवैधर्म्य-भेदात् । अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं यथा—अनित्यश्शब्दः तीव्रादिधर्मोपेतत्वात् । यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टं यथा–सुखादीति । व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम्, यथा यदनित्यं न भवति तत्तीव्रादिधर्मोपेतमपि न भवति यथाऽऽकाशमिति । उदाहरणलक्षणरहिताः उदाहरणवदवभासमाना उदाहरणाभासाः । ते चानेकप्रकाराः—तथा चानित्यं मनः मूर्तत्वादित्येतस्मिन्प्रयोगे सर्व उदाहरणा-**

---

॥ उदाहरणलक्षणं तद्भेदश्च ॥

सम्प्रत्युदाहरणलक्षणमाह–**सम्यग्दृष्टान्ताभिधानमुदाहरणमिति** । दृष्टान्ताभिधानमुदाहरणमित्युक्तेऽप्युदाहरणाभासाः प्रत्युक्ता भवन्ति ; तेषामदृष्टान्ताभिधानत्वात्, तथापि सम्यक्ग्रहणं वचनदोषस्यापि व्युदासार्थम् । एतदुक्तं भवति । दृष्टान्तस्य बहिर्व्याप्तिस्थानस्य यदभिधानं वचनं सम्यङ्निर्दोषं तदुदाहरणमिति । **तद्द्विविधम् । साधर्म्योदाहरणं वैधर्म्योदाहरणं च । अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं; यथा अनित्यः शब्दः तीव्रादिधर्मोपेतत्वात् यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टं यथा सुखादि । व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम्; यथा यदनित्यं न भवति तत्तीव्रादिधर्मोपेतमपि न भवति यथाऽऽकाशमिति** । सुगमं व्याख्यानम् । अथोदाहरणाभासानां लक्षणोदाहरणाभ्यां प्रपञ्चार्थ उपन्यासः । **उदाहरणवदवभासमाना उदाहरणाभासा** इति लक्षणम् । [1]तल्लक्षणरहितत्वं विशेषणं हेत्वाभासवदत्रापि द्रष्टव्यम् । परस्परभिन्नानामप्युदाहरणानामन्योन्यवदवभासादतिव्याप्तिव्यवच्छेदार्थमिति ।

॥ अष्टावर्थदोषाः चत्वारो वचनदोषा इति द्वादश उदाहरणाभासाः ॥

**तेच** उदाहरणाभासाः—**अनेकप्रकारा इति** साध्यविकलः साधनविकल इत्यादयोऽष्टावर्थदोषाः । चत्वारो वचनदोषाः । त एते द्वादशभेदाः बहुभिराचार्यै-

---

1. उदाहरणलक्षणेत्यर्थः

**भासाः उच्यन्ते यन्मूर्तं तदनित्यं दृष्टं, यथा परमाणुरिति साध्यविकलः। यथा कर्मेति साधनविकलः यथाऽऽकाशमित्युभयविकलः यथा—नरविषाणमित्याश्रयहीनः घटवदित्यव्याप्त्यभिधानम्, यदनित्यं तन्मूर्तं दृष्टमिति विपरीतव्याप्त्यभिधानम्। एतौ शब्ददोषौ।**

---

रभ्युपगता आदावुदाह्रियन्त इति। तथा च **अनित्यं मनो मूर्तत्वादित्येतस्मिन् प्रयोगे सर्वे उदाहरणाभासा उच्यन्ते** ग्रन्थगौरवपरिहारार्थमित्यर्थः। **यन्मूर्तं तदनित्यं दृष्टं यथा परमाणुरिति साध्यविकलः।** अनित्यत्वसाध्येन विकलः परमाणुरिति। **यथा कर्मेति साधनविकलः** मूर्तत्वं साधनं तेन विकलोऽयं दृष्टान्तः। **यथा आकाशमित्युभयविकलः।** उभयेनानित्यत्वेन मूर्तत्वेन च विकलः। **यथा खरविषाणमित्याश्रयहीनः** आश्रयो हीनो यस्याविद्यमानः। यद्वाऽऽश्रयेण हीनो रहित इति तथोक्तम्। नो खल्वसति धर्मिणि साध्यसाधनधर्मयोर्व्याप्यव्यापकभावः प्रतीयेत। तस्याप्रतीतौ वचनमात्रेण प्रतीतौ वा विफलो दृष्टान्तः। **घटवदित्यव्याप्त्यभिधानम्।** शब्ददूषणं केचिदिच्छन्तीति। यद्यदिति वीप्सायां, यदित्थं तत्सर्वमित्येवं वा व्याप्तिः प्रत्याय्यते नान्यथेति।

॥ उक्तशब्ददूषणानङ्गीकर्तृमतम् ॥

अन्ये त्विदं दूषणं नानुमन्यन्ते सर्वशास्त्रेष्वेवं प्रयोगदर्शनात्। न च प्रतिवादिवचः स्वातन्त्र्येण प्रमाणं, किं तर्हि? प्रमाणान्तरानुगृहीतम्। ततश्च यदि प्रत्यक्षादिसिद्धास्ति व्याप्तिः तदा अनित्यः शब्दः कार्यत्वात् घटवदित्येवमपि प्रतीयते। अथ न प्रत्यक्षादिसिद्धा, तदा वीप्सासर्वग्रहणाभ्यामपि न प्रतीयते। सिद्धानुवादार्थं हि दृष्टान्तवचः न त्वसिद्धविधायकमिति।

**यदनित्यं तन्मूर्तं दृष्टमिति विपरीतव्याप्त्यभिधानमिति।** साधनानुवादेन हि साध्यं विधातव्यम्, येन साधनस्य साध्यसिद्धौ सामर्थ्यं प्रतिपादितं स्यात्। अन्यथास्यासाधनाङ्गवचनं स्यात्। नहि यो यः कश्चिदग्निमान् स स धूमवानित्येवं शब्दादग्निना व्याप्तो धूमः प्रतीयत इति। **एतौ शब्ददोषौ** अव्याप्त्यभिधानविपरीतव्याप्त्यभिधानाख्यौ। पूर्वे चत्वारोऽर्थदोषा इत्येते षट्साधर्म्योदाहरणाभासा इति।

**यदनित्यं न भवति तन्मूर्तमपि न भवति यथा परमाणुरिति साधनाव्यावृत्तः । यथा कर्मेति साध्याव्यावृत्तः । यथा घट इति उभयाव्यावृत्तः । यथा खपुष्पमित्याश्रयहीनः । यथाऽऽकाशमित्यव्याप्त्यभिधानम्, यन्मूर्तं न भवति तदनित्यमपि न भवति यथाकाशमिति विपरीतव्याप्त्यभिधानम् । एतौ वचनदोषौ । अत्राद्याः षट् साधर्म्योदाहरणाभासाः । इतरे षट् वैधर्म्योदाहरणाभासाः ।**

---

॥ वैधर्म्योदाहरणाभासानामुदाहरणानि ॥

अथ वैधर्म्योदाहरणाभासा उच्यन्ते अनित्यं मनो मूर्तत्वादित्येतस्मिन्नेव प्रयोगे । **यत्तु नित्यं** [अनित्यं न भवति] **तन्मूर्तमपि न भवति यथा परमाणुरिति** दृष्टान्तः **साधनाव्यावृत्तः ।** [1]उदाहरणाभासापेक्षया वा साध्यविकलादीनामपि पुंलिङ्गता द्रष्टव्या । साधनं मूर्तत्वं तदव्यावृत्तं यस्मात् परमाणोः स तथोक्तः । **यथा कर्मेति साध्याव्यावृत्तः** साध्यमनित्यत्वं तत्कर्मणो न व्यावृत्तम् । **यथा घट इत्युभयाव्यावृत्तः** साध्यं साधनं चोभयं न व्यावृत्तं यस्मात्स तथोक्तः । **यथा खपुष्पमित्याश्रयहीनः ।** कैश्चिद्वैधर्म्यदृष्टान्ते धर्म्यभावो दोषत्वेन नाभ्युपगम्यते । तन्निषेधार्थमिहाप्याश्रयहीन उक्तः । केवलान्वयिप्रस्तावेऽप्युक्तं 'वैकल्पिको न विपक्ष' इति । **आकाशवदित्यव्याप्त्य**भिधानं मूर्तत्वमनित्यत्वं चाकाशाद्व्यावृत्तम् । नचानेन शब्देन तथाऽभिहितमिति शब्ददोषोऽयम् । तुल्यार्थे हि वतिः श्रूयते ; कथं ततो व्यावृत्तप्रतीतिः । न च वीप्सां सर्वशब्दञ्चान्तरेण सर्वस्मात् विपक्षाद्व्यावृत्तिः साध्यसाधनयोः प्रतीयत इत्यतोऽव्याप्त्यभिधानम् । **यदमूर्तं[यन्मूर्तं न भवति] तदनित्यं न भवति यथाऽऽकाशमिति विपरीतव्याप्त्यभिधानम्** साध्यव्यावृत्त्यनुवादेन हि साधनं व्यावृत्तं विधातव्यम् । येन साध्यस्य साधनव्यापकत्वं साधनाभावस्य साध्याभावव्यापकत्वं प्रतीयेत । साधनव्यावृत्त्यनुवादेन तु साध्यं व्यावृत्तं यदुच्येत तदिदं विपरीतव्याप्त्यभिधानं न साधनाङ्गम् । न हि भवति यत्र नास्ति धूमस्तत्र सर्वत्राग्निःनास्तीति । तस्मादत्रापि द्वौ शब्ददोषौ चत्वारोऽर्थदोषाः साधनाव्यावृत्तादयः इति वैधर्म्योदाहरणाभासा अपि षट् ।

---

1. पूर्वं साधनाव्यावृत्त इति पुंलिङ्गपदघटनाय दृष्टान्तः इति पदमध्याहृतम् । इदानीं विनैवाध्याहारं तदुपपत्तिमाह—उदाहरणाभासेति ।

अन्येतु सन्देहद्वारेणापरानष्टावुदाहरणाभासान् वर्णयन्ति । सन्दिग्ध-साध्यो यथा—महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वात्, विवक्षितराज-पुरुषवत् । सन्दिग्धसाधनो यथा—नायं सर्वज्ञः, रागादिमत्त्वात् रथ्या-पुरुषवत् । सन्दिग्धोभयो यथा—गमिष्यत्ययं स्वर्गं विवक्षितः पुरुषः समुपार्जितशुक्लधर्मत्वात् देवदत्तवत् । सन्दिग्धाश्रयो यथा—नायं सर्वज्ञः, बहुवक्तृत्वात् भविष्यद्देवदत्तपुत्रवत् । सन्दिग्धसाध्याव्यावृत्तो यथा—यो महाराज्यं न करिष्यति स सोमवंशोद्भूतोऽपि न भवति, यथाऽन्यो-राजपुरुषः । सन्दिग्धसाधनाव्यावृत्तो यथा—यस्तु सर्वज्ञः स रागादि-रहितः यथा समस्तशास्त्राभिज्ञः । सन्दिग्धोभयाव्यावृत्तो यथा—यः स्वर्गं न गमिष्यति, स समुपार्जितशुक्लधर्मोऽपि न भवति, यथा दुस्थः पुरुषः । सन्दिग्धाश्रयो यथा—यः सर्वज्ञः स बहुवक्तापि न भवति, यथा भविष्य-देवदत्तपुत्र इति ।

---

॥ सन्देहद्वारेण अपरोदाहरणाभासाष्टकवर्णनपरं मतान्तरम् ॥

अन्ये तु सन्देहद्वारेणापरानष्टावुदाहरणाभासान् वर्णयन्ति । सन्दिग्धसाध्यो यथा—महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वाद्विवक्षित-राजपुरुषवत् । सन्दिग्धसाधनो यथा – नायं सर्वज्ञो रागादिमत्त्वाद्रथ्या-पुरुषवत् । सन्दिग्धोभयो यथा—गमिष्यति स्वर्गं विवक्षितः पुरुषः समु-पार्जितशुक्लधर्मत्वाद्देवदत्तवत् । सन्दिग्धाश्रयो यथा—नायं सर्वज्ञो बहु-वक्तृत्वात्[1] भविष्यद्देवदत्तपुत्रवत् । सन्दिग्धसाध्याव्यावृत्तो यथा—यो महाराज्यं न करिष्यति स सोमवंशोद्भूतोऽपि न भवति यथाऽन्यो राज-पुरुषः । सन्दिग्धसाधनाव्यावृत्तो यथा—यस्तु सर्वज्ञः स रागादिरहितो यथा समस्तशास्त्राभिज्ञः । सन्दिग्धोभयाव्यावृत्तो यथा यः स्वर्गं न गमिष्यति स समुपार्जितशुक्लधर्मोऽपि न भवति यथा दुस्थः पुरुषः । सन्दिग्धाश्रयो यथा यः सर्वज्ञः स बहुवक्तापि न भवति यथा भविष्यद्देव-दत्तपुत्र इति ।

---

1. वृत्रत्वात्—मा,

**दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनमुपनयः । स च द्विविधः तथा च तीव्रादि धर्मोपेतश्शब्द इति साधर्म्योपनयः । न च तथा तीव्रादिधर्मोपेतश्शब्दो न भवतीति वैधर्म्योपनयः ।**

---

॥ उपनयलक्षणम् ॥

साम्प्रतमुपनयलक्षणमाह-**दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनमुपनय इति ।** व्याप्तिख्यापकं वचनमित्युक्ते बहिर्व्याप्तिख्यापकमप्युपनयो माभूदिति पक्ष इत्युक्तम् । दृष्टान्तोपमानमन्तरेण हेतोः पक्षसम्बन्धमात्राभिधानमुपनयाभास इति सूचयितुं **दृष्टान्तोपमानेने**त्युदितम् । **दृष्टान्तोपमानेन** दृष्टान्तसाधर्म्येण सहेत्यर्थः । एतच्चोपलक्षणम् । वैधर्म्यदृष्टान्तापेक्षया तद्वैधर्म्येणेत्यपि द्रष्टव्यम् । हेतोरविनाभावप्रसिद्धिमन्तरेणापि सम्भाव्यते वचनम् । ईदृगिति दृष्टान्ते **प्रसिद्धाविनाभावस्ये**त्युक्तम् । तेनाविनाभावप्रसिद्धये दृष्टान्तमपेक्षमाणस्तदनन्तरमेवोपनयः प्रयोगमर्हतीति सूचितम् । समव्याप्तिकस्थले साध्यस्यापि साधनेनाविनाभावः प्रसिद्ध एवेति तद्व्यवच्छेदाय **साधनस्ये**त्युदितम् ।

॥ उपनयभेदः तदुदाहरणं च ॥

**स च द्विविधः ।** साधर्म्योपनयः वैधर्म्योपनयश्चेति । तदुदाहरणं क्रमेणाह—**तथा च तीव्रादिधर्मोपेतः शब्द इति साधर्म्योपनयः । न च तथा तीव्रादिधर्मोपेतः शब्दो न भवति इति वैधर्म्योपनय इति ।**

॥ उपनयप्रयोगस्य प्रयोजनानि ॥

नचोपनयानर्थक्यं, हेतोरबाधितविषयख्यापनार्थत्वात् । तथा हि-यथा कृतको घटादिरनित्यो दृष्टः प्रत्यक्षादिना न बाध्यते तथा च कृतकः शब्दः; स चानित्यः प्रतीयमानः प्रत्यक्षादिना न बाध्यत इत्यर्थः । "नच तथा शब्दोऽकृतकः" इत्यस्याप्ययमर्थः । यथाऽऽकाशादिर्नित्यमकृतकं च न तथा शब्दः । यतोऽकृतकस्तावन्न सम्भवति कृतकत्वोपलम्भात् । नापि कृतकोऽपि सन्नित्यत्वविशिष्टः प्रमाणेनोपलभ्यते । तस्मादनित्यत्वाविनाभाव्येव कृतकत्वमिति । यद्यपि न तथेति

साधारणावेव शब्दौ । तथापि अनुमानोपयोगिरूपाणामभिधानप्रक्रमात् पक्षधर्मत्व—सपक्षसत्वविपक्षव्यावृत्तीनां हेतूदाहरणवचनाभ्यामेव सिद्धेरसत्प्रतिपक्षत्वस्य च वक्ष्यमाणनीत्या निगमनविषयत्वात् परिशेषादबाधितरूपविषयत्वमेव तथेति दृष्टान्तसाधर्म्येण, न तथेति च वैधर्म्येण प्रका[श्य]त इति निश्चीयते ।

॥ स्वप्रत्ययानुसारेण व्याप्तिपक्षधर्मताप्रतिपत्त्यर्थः उपनयः
इति मतम् । तन्निरासश्च ॥

ये तु मन्यन्ते व्युत्पन्नाव्युत्पन्नतया परेषां अनियतप्रतिपत्तिसाधनत्वात् स्वप्रतिपत्त्यनुसारेण परे बोधयितव्याः । व्याप्तिस्मरणानन्तरोत्पन्नलिङ्गपरामर्शपूर्वकश्च स्वयनुमेयार्थप्रत्यय इति तथैव परे बोध्यन्ते । तथा च परामर्शज्ञानहेतोरुपनयस्य सिद्धमर्थवत्त्वमिति । तेषां मते व्याप्तिस्मरणानन्तरोत्पन्नलिङ्गपरामर्शपूर्वकः स्वयमर्थप्रत्यय इत्येतदेव कुतः ? विनश्यदवस्थलिङ्गदर्शनसहायात् व्याप्तिस्मरणादेवानुमितेरुत्पत्त्युपपत्तेः ।

॥ लिङ्गदर्शनस्य संस्कारेण विनाश्यत्वपक्षदूषणम् ॥

यदप्युच्यते व्याप्तिस्मरणसमये विनश्यदवस्थमपि न लिङ्गदर्शनमस्ति, व्याप्तिसंस्कारोद्बोधसमयजन्मना स्वजनितसंस्कारेणास्य व्याप्तिस्मरणसमये विनाशादिति । तदप्यसम्बद्धम् । सहकारिलाभादन्यस्य संस्कारोद्बोधस्याप्रमाणकत्वात् ।

॥ तृतीयलिङ्गपरामर्शावश्यकत्वपूर्वपक्षः तन्निरासश्च ॥

स्यादेतत् । विनश्यदवस्थलिङ्गदर्शनस्य व्याप्तिस्मरणेन सह यौगपद्येऽपि तयोः परस्परवार्तानभिज्ञतया मिथो घटनायोगात् उभाभ्यामुत्पन्नं तृतीयं परामर्शज्ञानमेषितव्यमिति ।

नैतदपि सारम् । तथा हि—केयं घटना नाम ? ननु व्याप्तिविशिष्टलिङ्गावभास एव, यथा विवृतं निबन्धृभिः "घटना योगो विशिष्टप्रत्यययोग इत्यर्थः" [इति] न तर्हि तेन प्रयोजनं पश्यामः । प्रत्येकं स्वविषयमात्रपर्यवसायिनोरेव विनश्यदविनश्यतोर्लिङ्गवेदनव्याप्तिस्मरणयोरनुमितिजनने विरोधानुपलम्भात् ।

॥ लिङ्गपरामर्शाङ्गीकर्तृमतान्तरम् ॥

यदत्रापरैरभिहितं, लिङ्गदर्शनं हि वस्तुगत्या लिङ्गविषयमित्येतावतैव व्याप्तिस्मृतेः सहकारि, लिङ्गस्वरूपोल्लेखितया वा ? नाद्यः, दूराद्धूमविषयवस्तुत्वज्ञानस्यापि

प्रकारान्तरायातव्याप्तिस्मृतिं प्रति सहकारित्वप्रसङ्गात् । द्वितीयस्तु द्वितीयलिङ्गदर्शने नात्येवेति लिङ्गत्वोल्लेखितृतीयलिङ्गदर्शनं व्याप्तिस्मृतिसमुत्पत्तिसमनन्तरभावि(नी) स्वीकरणीयमिति।

॥ उक्तमतनिराकरणम् ॥

तदपि न हृदयङ्गमम् । तथा हि—परामर्शापरपर्यायस्य तृतीयलिङ्गदर्शनस्य व्याप्तिपक्षधर्मतावच्छिन्नलिङ्गगोचरस्य यादृशाभ्यां लिङ्गदर्शनव्याप्तिस्मरणाभ्यां उत्पाद-स्तादृशाभ्यामेवानुमितिर्भविष्यतीति नापरस्य परामर्शस्य प्रयोजनं पश्यामः । तदुत्पादे-प्यन्यथा पर्यनुयोगप्रसक्तेः । लिङ्गपरामर्शोऽपि हि वस्तुगत्या लिङ्गविषयेण लिङ्ग-संवेदनेन व्याप्तिस्मरणेन च जन्यते । यद्वा लिङ्गत्वोल्लेखिद्वितीयलिङ्गदर्शनसहायेन व्याप्तिस्मरणेन? इति । न प्रथमः, दूराद्धूमत्वाप्रतिभासेऽपि लिङ्गपरामर्शप्रसवप्रसङ्गात् । नापि द्वितीयः । द्वितीयलिङ्गदर्शनस्य लिङ्गतोल्लेखित्वानभ्युपगमात् । अभ्युपगमे वा तत एवानुमितेरुपपत्तौ परामर्शस्य विफलत्वात् ।

॥ व्याप्यपक्षधर्मतयोः एकजातीयताग्रहस्य कारणत्वात् परामर्शस्यावश्यकता इति पक्षः ॥

यदपि मतं व्याप्यपक्षधर्मयोः वैजात्याभासेऽनुमितेरनुत्पत्तेः वाग्विषाणिनी[1] गोत्वादित्यादिष्वेकजातीयताग्रहः स्वीकार्यः तथा च तदेव परामर्शज्ञानमिति ।

॥ तत्खण्डनम् ॥

तत्रापीदं सम्प्रधार्यम् । कोऽयमेकजातीयताग्रहो विवक्षितः? वस्तुवृत्त्या यैकजातिस्तदवच्छिन्नतया व्याप्तिपक्षधर्मयोः प्रत्येकं प्रतीतिः, किं वा[ ते ]नैक-जातीय इति प्रत्ययः? इति । पूर्वत्र संप्रतिपत्तिः । तावता चानुमितिव्यभिचारे साधनस्य शक्यपरिहारे द्वितीयपक्षकक्षीकारेण परामर्शज्ञानमपरमभ्युपगम्य परार्थानु-माने च तदुत्पत्त्यर्थमुपनयाख्यमवयवान्तरमभ्युपगच्छतो न स्वदृष्टिपक्षपातादन्यत्र हेतुं पश्यामः । तस्मादुपनयवचनस्यान्यदेव प्रयोजनमभिधातव्यम् ।

---

1. व्याप्यं गोत्वमन्यत् वाचि पक्षे गोत्वमन्यत् इति भावः ।

॥ पक्षधर्मताप्रदर्शनार्थमुपनय इति पक्षः ॥

यदपीदमभिधीयते[1], हेतोः पक्षधर्मत्वप्रदर्शनार्थमुपनयवचनम् । न हेतुवचनेनैव तत्सिद्धिः । प्रतिज्ञानन्तरं प्रतिपत्त्रा साधनस्यैवापेक्षितत्वादपेक्षितसाधनस्वरूपप्रतिपादनपरस्य हेतुवचसः पक्षधर्मतायामतात्पर्यात् । यत्परश्शब्दः स शब्दार्थ इति हि शाब्दाः । तथाप्यभिधीयमानसाधनत्वसामर्थ्यादेव पक्षधर्मत्वमाक्षिप्यतामपक्षधर्मस्य साधनत्वानुपपत्तेरिति चेत् । हन्तैवमुदाहरणमपि न प्रयोक्तव्यम् । व्याप्तेरपि साधनत्वसामर्थ्यादेवाक्षेपोपपत्तेः । अव्याप्तस्य साधनत्वासम्भवात् ।

अथैवं मन्वीथाः । यद्यपि साधनत्वपरं हेतुवचनं, तथापि द्विविधा हि तत्परता शब्दानामुपपन्नतयोपपादनीयतया च । ततः प्रथम उपपन्नतया स्वार्थमवबोधयंस्तन्नान्तरीयकमर्थमाक्षिपति । यथा जितं नकुलेनेति सिद्धावस्थायां सर्पपराजयम् । द्वितीये तूपपादनीयतया स्वार्थं प्रतिपादयन्नपि कथं नान्तरीयकमर्थमाक्षिपेत् । यथा स एव नकुलविजयवाची शब्दः साधनीयावस्थायाम् । तथात्वे वा प्रतिज्ञैव सर्वमाक्षिपेदिति गतं हेतुनापि । तस्मात् साधनत्वेनोद्दिष्टेऽपि हेतौ ताद्रूप्यस्यासिद्धत्वात् न तेन व्याप्तेराक्षेप इति नानर्थकमुदाहरणं भवेत् तत्समानमुपनयेऽपीति ।

॥ उक्तपक्षखण्डनम् । अबाधितत्वख्यापनं तत्प्रयोजनमिति स्वमतं च ॥

स्यादेतदेवं यदि साधनत्वसामर्थ्यादाक्षिप्यते पक्षधर्मतेति ब्रूमः न त्वेवं, किं तर्हि? स्वरूपत एव साकाङ्क्षः साधनधर्मोऽभिधीयमानः तीव्रादिसन्निहितमेव शब्दाख्यं धर्मिणं उपादाय चरितार्थः पक्षधर्म एव फलिष्यतीति । सर्वं च साधनं तथाविधमेव प्रयोक्तव्यं यत्स्वभावपारतन्त्र्यात्परधर्मिणमपेक्षमाणं प्रकृत एव पक्षे पर्यव(धा)सातुमुत्सहते । यदा तु प्रतिपाद्यप्रज्ञातिशयं प्रमाणभेदेन परिकल्प्य स्वयमेवासौ स्वरूपतो निर्दिष्टस्यापि साधनस्य पक्षधर्मतां प्रत्येष्यतीति प्रयोक्ता सम्भावयेत तदा वह्निमान् पर्वतो धूमवत्त्वादित्यादिरपि प्रयोगो न विरुध्यते । अन्यथा पुनरापन्नपारतन्त्र्यमेव धूमवत्त्वादित्यादिसाधनं वचनीयम् । तेनैव धर्मिविशेषजिज्ञासामुखेन प्रस्तुत

1. तत्समानमुपनयेऽपि इत्यनेनान्वयः ।

**उपनयानन्तरं सहेतुकं प्रतिज्ञावद्वचनं निगमनम् तस्मादनित्य एवेति । न चेदमनर्थं[कं] साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादस्य ।**

---

एव पक्षे पर्यवस्येत् । नचैवं हेतोरेव सम्भवत्यपि प्रयोगनियमे पक्षधर्मताक्षेपिणि उपनयाख्यमवयवान्तरमभ्युपगन्तुमुचितम् अन्यथाप्युपपत्तौ वाक्यगौरवस्याप्रमाणकत्वात् ।

तदबाधितविषयत्व(व्या)ख्यापनमेव प्रयोजनं हेतोः ।
उपनयवचनस्येति स्थितमिदमाचार्यसम्मत्या ॥ १ ॥

॥ निगमनलक्षणम् ॥

अथ निगमनं प्रस्तौति—**उपनयानन्तरं निगमनं** वक्तव्यमिति शेषः । तस्येदं लक्षणं—**सहेतुकंप्रतिज्ञावद्वचनं निगमनमिति** । अयमर्थः—सहेतुकं तस्मादित्यनूद्यमानहेतुसहितं प्रतिज्ञावत् प्रतिज्ञातुल्यं न तु प्रतिज्ञैव । निगमनस्य भिन्नार्थत्वेन प्रतिज्ञालक्षणाभावात् । अभिन्नार्थत्वे वा पुनरुक्तत्वं स्यादिति । तस्येदमुदाहरणं—**तस्मादनित्य इति** । ये तु मन्यन्ते प्रतिज्ञाहेत्वोः पुनर्वचनमनर्थकमेवैतदिति, तान्प्रत्याह—**न चेदमनर्थकम्** । कस्मात्? **साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादस्येति** । साध्यविरुद्धः प्रतिपक्षः तदभावग्राहकस्य प्रमाणस्य सूचकं यस्मान्निगमनं तस्मान्नानर्थकमित्यर्थः ।

॥ निगमनप्रयोजनविवरणम् ॥

इदमुक्तं भवति । असत्प्रतिपक्षत्वाप्रतिपादनेऽप्यविनाभावः प्रतिपादितो न भवेत् । पक्षधर्मत्वादिवदसत्प्रतिपक्षत्वस्यापि तदङ्गत्वात् । तत्प्रकाशनार्थं च निगमनं तस्मादनित्य इति । सिद्धे सत्यारम्भो नियमयत्यनित्य एव, तस्मान्न नित्य इति । यदि हि स एव हेतुर्नित्यत्वमपि साधयेत्तदा सत्प्रतिपक्षः स्यात् । तस्मादनित्य एवायं सिध्यतीत्युक्ते सत्यसत्प्रतिपक्षत्वमेवाभिहितं भवति । ततो नायं प्रकरणसम इति सिद्धम् ।

**न च तदन्तरेण साध्यावधारणत्वमुपपद्यते ।**

**तथा चोक्तम्—विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः इति ।**

---

तथा चानित्य एव सिध्यति न नित्य इत्युक्ते प्रमेयापहारद्वारेण प्रतिहेतुनिरासाद्विरुद्धाव्यभिचारित्वमपि पराकृतं भवति । वचनमात्रं तु वादिनो न श्रद्धेयमिति प्रतिपादकप्रमाणसूचकत्वादित्युक्तम्, न तु साध्यविरुद्धाभावप्रतिपादकत्वादिति । पक्षधर्मत्वसिद्धावपि हि प्रमाणान्तरमेव हेत्वादिवचसा सूचनीयम् । न तु सन्दिग्धासभावस्य वादिनो वचनं वचनमित्येव प्रतिपादकमित्यभिसन्धिः ।

॥ साध्यावधारणं निगमनप्रयोजनमिति शङ्कानिरासः ॥

स्यादेतत् । साध्यावधारणमेव क्रियतां निगमनेन, प्रक्रमस्य तदर्थत्वात् । किमनेन साध्यविरुद्धाभावप्रतिपादकप्रमाणाभावसूचनेनेत्यत आह—**न च तदन्तरेण साध्यावधारणमुपपद्यत इति ।** यावत् प्रतिपक्षाभावो नावसीयते, तावत् साध्यमेव नावधारितं भवेदित्यर्थः । एतदेव सूत्रकारसम्मत्या द्रढयति—**तथा चोक्तम् "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः"** (1-1-41) **इति ।** विमर्शः संशयः । पक्षप्रतिपक्षशब्दौ च पक्षः, साधनं प्रमाणम्, प्रतिपक्षः दूषणं चोपचारादभिदधाते । प्रयोजनं चोपचारे पक्षविषयमेव साधनं प्रतिपक्षविषयमेव दूषणमिति विभागपरिज्ञानम् । साधनदूषणाभ्यामित्युच्यमाने तु मन्दमतिस्तयोरेकविषयत्वमप्याशङ्केतेति ।

॥ निर्णयस्वरूपविवरणम् ॥

एतदुक्तं भवति—संशयं कृत्वा साधनदूषणाभ्यां यदर्थस्यावधारणं स निर्णय इति । यद्यप्यर्थावधारणं निर्णय इत्येतावदेव निर्णयलक्षणं पूर्णं, तथापि निःश्रेयसोपयोगिन आत्मादिनिर्णयस्यैव विचारकमधिकृत्य लक्षणीयत्वात् पक्षप्रतिपक्षाभ्यामित्युदितम् । तादृशे च निर्णये साधनदूषणयोरुभयोरुपयोगप्रतिपादनार्थं विमृश्येत्यभिहितम् । विप्रतिपत्तिनिमित्ते हि विचारकस्य संशये सति निरासमुखेन निर्णयो, न साधनमात्रात् । उभयपक्षसाधनोपपत्तौ विरुद्धाव्यभिचारित्वप्रसङ्गात् । नापि दूषणमात्रात् । साधनाभावे साध्यसिद्धेरयोगात् । तस्मात्प्रतिपक्षदूषणसहितात् स्वपक्ष-

**निगमनाभिधानमसाधनाङ्गमभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो निग्रह स्थानं प्रसज्यते । निगमनार्थत्वात् बाधकस्य । निगमनार्थविप्रतिपत्तौ हि बाधकप्रमाणोपन्यासो युक्तः । हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवदिति ।**

---

साधनात्तथाविधो निर्णय इति युक्तम् । तस्मात्सूत्रकारसम्मत्यापि प्रतिपक्षाभावग्राहकप्रमाणाभिधानस्य सोपयोगत्वान्नानर्थकं निगमनमिति सिद्धम् ।

॥ निगमनस्यासाधनाङ्गत्ववादिनो निग्रहः ॥

ये पुनरेवंभूतस्यापि निगमनस्यासाधनाङ्गत्वं **सुगत**मतानुवर्तिनो मन्यन्ते, तेषामनिष्टं प्रसञ्जयति–**निगमनाभिधानमसाधनाङ्गमभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो निग्रहस्थानं प्रसज्यते ।**

कस्मात् ? **निगमनार्थत्वात् बाधकस्येति** । अस्यार्थः—यदि निगमनाभिधानमसाधनाङ्गमभ्युपगम्यते तत्क्षणभङ्गादिसिद्धये सत्त्वादिसाधनमेवाभिधातव्यम् "असन्तोऽक्षणिकास्तस्य क्रमाक्रमविरोधतः" इत्यादिना विपक्षबाधकं प्रमाणं नाभ्युपगन्तव्यम् । तदभ्युपगमे [हि ?] निग्रहस्थानं प्रसज्यते । [क](त)स्मात् ? **निगमनार्थत्वाद्बाधकस्य** । निगमनस्यैवार्थः प्रयोजनं यस्य बाधकस्येति वैयधिकरण्ये बहुव्रीहेरभिधानात् । इदमुक्तं भवति-यदेव हि प्रयोजनं विपरीतप्रसङ्गप्रतिषेधो नाम निगमनस्य, तदेव बाधकस्यापि भवदुपन्यस्यमानस्य । द्वाभ्यामपि हि विपक्षनिषेधद्वारेण हेतोरविनाभावस्य समर्थनमभिप्रेतमिति ।

॥ निगमनार्थविप्रतिपत्तावेव बाधकोपन्यासः ॥

ननु चाभिहितेऽपि निगमने तदर्थं प्रति यदा प्रतिवादी विप्रतिपद्यते तदाऽसौ बाधकेनैव बोधनीयः । न वचनमात्रेण । तस्माद्बाधकमेव साक्षादभिधातव्यमित्याशङ्कयाह-**निगमनार्थविप्रतिपत्तौ हि बाधकप्रमाणोपन्यासो युक्तः हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवदिति** । अन्यथा हेत्वाद्यवयवोऽपि [न] वक्तव्यः । किन्तु तदर्थसाधकप्रमाणोपन्यासः कर्तव्यः । सोऽपि वा नैव कर्तव्यस्तदर्थेऽपि विप्रतिपद्यमानो येन प्रमाणेन बोधनीयस्तदेवाभिधानीयमित्यनवस्था प्रसज्यते ।

**सोऽयं परमो न्यायः विप्रतिपन्नपुरुषं प्रति प्रतिपादकत्वात् । कथाप्रवृत्तिहेतुत्वाच्च ।**

**वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा । सा द्विविधा—वीतरागकथा, विजिगीषुकथा चेति । यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति, सा वीतरागकथा वादसंज्ञयैवोच्यते । तथाचोक्तम्—प्रमाणतर्कसाधनोपालंभः**

---

तस्माद्यदैव यदवयवार्थं प्रति विप्रतिपद्यते परस्तदैव तदवयवार्थसमर्थनार्थं बाधकं साधकं वा प्रमाणमभिधातुमुचितमित्यलं प्रसङ्गेन ।

॥ पञ्चावयवस्य परमन्यायत्वेन प्रशंसा ॥

तदेवं पञ्चावयवं परोपदेशार्थं समर्थितं प्ररोचनार्थं स्तौति—**सोऽयं परमो न्याय इति ।** सोऽयं पञ्चावयवलक्षणः परोपदेशः परमः प्रकृष्टो न्यायः । न्यायमनुमानं गोचरयतीत्युपचारत उपदेशोऽपि न्याय उच्यते । परमतोपपत्तिमाह-**विप्रतिपन्नपुरुषं प्रति प्रतिपादकत्वात् । कथाप्रवृत्तिहेतुत्वाच्चेति ।** यस्मादेष विप्रतिपन्नानां पुरुषाणां अभिमतस्यार्थस्य प्रतिपादको यतश्च कथायाः प्रवृत्तेर्हेतुस्तस्मात्परम इत्यर्थः ।

॥ कथालक्षणम् ॥

का पुनरियं कथेत्यत आह-**वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथेति ।** साधनोपालम्भरहितं पक्षप्रतिपक्षपरिग्रहमात्रं कथा मा प्रापदिति वादिप्रतिवादिग्रहणम् । यो हि स्वपक्षं साधयति स वादी, यस्तु तमुपालभते स प्रतिवादीति व्यवस्था । अथ कथायां कथाभेदनिबन्धनं भेदमाह—**सा द्विविधा । वीतरागकथा विजिगीषुकथा चेति ।** प्रथमां व्याचष्टे-**यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति सा वीतरागकथा वादसंज्ञयैवोच्यते ।** न तत्र विशेषसंज्ञान्तरमस्ति । यथा विजिगीषुकथायां वाद इति सामान्यसंज्ञा, जल्प इति वितण्डेति च विशेषसंज्ञे । तथा च वादसंज्ञयैव वीतरागकथामनूद्य सूत्रकृतापि लक्षणमुक्तमित्याह-**तथा चोक्तं प्रमाणतर्कसाधनोपालम्भः**

सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः इति ।

---

**सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद** इति ( 1·2-1 ) ऐकाधिकरण्येनाभ्युपगमगोचरौ परस्परप्रत्यनीकौ धर्मौ पक्षप्रतिपक्षौ, यथा नित्यश्शब्दोऽनित्यः शब्द इति । विरोधस्तु भिन्नाधिकरणयोर्न सम्भवतीति ज्ञापनार्थमैकाधिकरण्येनेत्यभिहितम् । तत्र पक्षप्रतिपक्षपरिग्रहः कथा(श्र)[त्र]यस्यापि साधारण इति विशेषलक्षणार्थमभिधीयते — **प्रमाणतर्कसाधनोपालम्भ इति ।**

॥ तत्र प्राचां व्याख्या ॥

तत्र साधनोपालम्भग्रहणं वितण्डाव्यवच्छेदार्थम् । नहि वितण्डायामुभाभ्यां साधनोपालम्भावभिधीयेते । प्रकृते पुनरुभाभ्यां तदभिधानं विवक्षितं; व्याख्यानतो विशेषप्रतिपत्तिः नहि सन्देहादलक्षणमिति न्यायात् । जल्पादभेदनिराकरणार्थं-**प्रमाणतर्क**ग्रहणन् । प्रमाणतर्काभ्यामेव साधनमुपाल[म्भश्च] योग्यतया पक्षे प्रतिपक्षे च साधनं च 'दूषणं च यथासङ्ख्यं वेदितव्यं विपश्चिता' यथा

॥ तत्रैव भूषणकारव्याख्या ॥

संक्षेपत इयं व्याख्या पूर्वाचार्यकृतोदिता ।
आचार्येण कृता त्वेषा सूत्रव्याख्या निगद्यते ॥ १ ॥

प्रमाणेन स्वपक्षस्य सिद्ध्यर्थं साधनं मतम् ।
प्रतिपक्षनिरासार्थमुपालम्भोऽभिधीयते ॥ २ ॥

प्रमाणेन परिज्ञातसामर्थ्यौ तर्कतोऽपि वा ।
विषयीकृतसामर्थ्यौ तौ वाच्यौ न्यायवादिना ॥ ३ ॥

एवं चानर्थशङ्कातो न कथासु विपश्चिताम् ।
युक्ता प्रवृत्तिरित्येतन्न चोद्यमवकाशवत् ॥ ४ ॥

एतच्च विस्तरेणैव पृथक्तर्कस्य संशयात् ।
प्रयोजनाभिधानस्य प्रसङ्गेन निराकृतम् ॥ ५ ॥

**सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न** इति पदयोः किं प्रयोजनम् ? केचिदाहुः—निग्रहस्थाननियमः प्रयोजनमिति । सिद्धान्ताविरुद्धपदेनापसिद्धान्तः किलाभ्यनुज्ञायते । पञ्चावयवोपपन्नपदेन च सव्यभिचारादयः पञ्च हेत्वाभासाः अधिकन्यूने चेत्येवमष्टौ निग्रहस्थानानि वादे नियम्यन्त इति ।

॥ तत्रान्येषां मतम् ॥

अन्ये प्रमाणशून्यत्वान्नियमस्यो[1]पलक्षणम् ।
निग्रहस्थानमात्रस्य पदद्वयमिदं विदुः ॥ १ ॥

प्रतीतिपूर्वकत्यागो वादे निग्रह इष्यते ।
जल्पादौ तु कथाभङ्गहेतुतैव विशिष्यते ॥ २ ॥

॥ तत्त्वप्रतिपत्तिविघातपर्यन्तं निग्रहस्थानप्रयोग इति परेषां मतम् ॥

अपरे पुनर्यावत्यनुद्भाविते तत्त्वप्रतिपत्तिविघातस्तावदेव निग्रहस्थानमुद्भावनीयं(म्) वादे । न त्वप्रतिपादितस्य, [ तस्य ] पुरुषासामर्थ्यप्रकटनमात्रप्रयोजनत्वादिति मन्यन्ते । सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नश्च वादो विधातव्य इति सूत्रकारः शिष्याननुशास्ति । न खल्वीश्वरज्ञानमनित्यं विभुविशेषगुणत्वादस्मद्बुद्धिवदित्यादिकं सिद्धान्तविरोधेन न्यायवादिना वदितव्यम् । तथा स्वपक्षसाधनं प्रतिपक्षदूषणं साधनसमर्थनं दूषणसमर्थनं शब्ददोषवर्जनं चेति एतैः पञ्चभिरवयवैरुपेतो वादो विधातव्य इति तत्त्वनिर्णयार्थं नियमः क्रियते । शब्ददोषवर्जनमित्येतेन निरर्थकापार्थकाप्रतीतप्रयोगातिद्रुतोच्चारणादिपरित्यागो लब्धः ।

॥ वादद्वैविध्यात् एकत्र सिद्धान्ताविरोधः अपरत्र पञ्चावयवाः
इति अभिप्रायान्तरम् ॥

अथवा द्विविधो वादः शास्त्राङ्गीकारपूर्वकः ।
एकस्तदङ्गीकरणरहितश्चेष्यते परः ॥ १ ॥

---

1. पूर्वोक्त निग्रहस्थाननियमस्येत्यर्थः

**तं प्रति प्रतिपक्षहीनमपि वा कुर्यात्, प्रयोजना(र्थम)र्थित्वेनेति**[1] **। यथा शिष्यो गुरुणा सह प्रश्नद्वारेणैवेत्यर्थः । यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते, वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्तते ।**

---

सिद्धान्तेन विरुद्धत्वमादिमे दूषणं भवेत् ।
अन्तिमे नास्ति दोषोऽयं यत्र सिद्धान्तसम्भवः ॥ २ ॥

स (ह) [हि] वादवितण्डाख्यः पञ्चावयवसङ्गतः ।
यथाकथंचित्कर्तव्य इति सूत्रकृतोच्यते ॥ ३ ॥

एतदेवाभिसन्धायाह—**तं प्रतिपक्षहीनमपि वा कुर्यात् । प्रयोजनार्थित्वेनेति ।** तादृशस्य विषयमुदाहरति—**यथा शिष्यैः गुरुणा सह प्रश्नद्वारेणैवेत्यर्थः** इति । विजिगीषुकथां व्याचष्टे—**यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते** सा विजिगीषुकथेत्युपरितनेनान्वयः । विजेतुमिच्छुर्विजिगीषुः, लाभपूजाख्यातीः कामयत इति विग्रहः । जयश्च पराजयश्च ताभ्यामिति तदर्थं जयपराजयावुद्दिश्येत्यर्थः । कल्पान्तरमाह—**वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च** यत्र **प्रवर्तते** सा विजिगीषुकथेति सम्बन्धः ।

॥ वितण्डायाः वीतरागेणापि कर्तव्यत्वनिरूपणम् ॥

एतदुक्तं भवति—यदा वीतरागोऽपि विजिगीषुणा क्षिप्यमाणः शिष्यादिभिश्चाभ्यर्थ्यमानः सर्वथाऽसावत्यन्तावलिप्तस्त्रयीमार्गविप्लावको विजेतव्य इति, तदुपरोधात्कथां परिहर्तुं न पारयते । प्रवर्तते च परेषामनुग्रहार्थं ज्ञानाङ्कुरस्य शिष्याद्यात्मन्यपरिपक्वस्य क्रमेण परिपच्यमानस्य च विज्ञानस्य मध्ये त्रुटितिर्माभूदित्यभिसन्धाय, तदा तेनापि विधीयमाना विजिगीषुकथैवेति । यानि तु "न निगृह्यकथां कुर्यात् ।"

---

1, प्रयोजनार्थित्वे-सूत्रपाठः

**सा चतुरङ्गा वादिप्रतिवादिसभापतिप्राश्निकाङ्गा । विजिगीषुकथा**

"विवादे ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया ।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ॥"

इत्यादिनिषेधप्रायश्चित्तवचनानि तानि लाभादिकामनया स्वयं प्रवृत्तविषयाणि वेदितव्यानि ।

"निगृह्णीयाद्यथाशक्ति देवताचार्यनिन्दकान् ।"

इत्यादिवचनात् ।

॥ कथायाश्चतुरङ्गत्वनिरूपणम् ॥

**सा चतुरङ्गेति** चत्वार्यङ्गान्यस्याः । तदेव व्याचष्टे—**वादिप्रतिवादिसभापतिप्राश्निकाङ्गा** । सा विजिगीषु कथेति । वादिप्रतिवादिव्यतिरेकेण कथं कथा प्रवर्तते (तत्) । कथं च तयोर्जयपराजयव्यवस्थितिः प्राश्निकपरिहारेण । कथं वा तयोर्नियमातिक्रमनिवारणमन्तरेण सभापतिमिति सिद्धं चतुरङ्गत्वम् । सम्भावितसमानविद्यावेव वादिप्रतिवादिनावुचितौ । अन्यथा पुनः अत्युच्चनीचयोरसत्यपि विवादे विद्यातिशयादतिशयविनिश्चयसम्भवेन विवादस्यानर्थक्यात् । एतदेवोक्तम्—

विवादश्च विवाहश्च समैरेवेष्यते बुधैः ।

प्राश्निकास्तु प्रमाणाभिज्ञाः, सिद्धान्तद्वयरहस्यवेदिनो, रागद्वेषविधुराः, पराभिहितग्रहणावधारणादिपटवः, पञ्च सप्त त्रयोऽपि वा विषमसङ्ख्याका ग्राह्याः । द्वैधे गुणसाधर्म्ये च बहूनां वचनेन निर्णयसम्भवात् । साम्ये तु विप्रतिपत्तावनिर्णयः स्यात् । तथा चोक्तम्—

रागद्वेषविनिर्मुक्ताः सप्तपञ्चत्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥

तथा च "द्वैधे बहूनां वचनं" इति । अथवैक एव बहुश्रुतः सर्वसम्मतः प्राश्निको भवति । "साक्षीभवत्येकोऽपि धर्मवित्" इति । सभापतिरपि वादिप्रतिवादिप्राश्निकसम्मतो रागद्वेषविरही निग्रहानुग्रहसमर्थः प्रतिपत्तव्य इति ।

**जल्पवितण्डासंज्ञोक्ता । तथाचाह—तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति । यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ।**

---

॥ जल्पवितण्डयोः लक्षणप्रयोजनकथनम् ॥

विजिगीषुकथाया एवान्तरालिकभेदनिबन्धनं संज्ञाभेदमाह-**जल्पवितण्डासंज्ञोक्तेति ।** जल्पवितण्डेति संज्ञया वक्ष्यमाणलक्षणानुरोधिन्या कथितेति । यदुवाच ज्ञानाङ्कुरसंरक्षणार्थमिति तदेव सूत्रकारोक्त्या द्रढयति-**तथा चाह—"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" (4-2-50) इति ।** तत्त्वाध्यवसायस्य तत्त्वनिश्चयस्य निःश्रेयसोपयोगिनः संरक्षणार्थं शाक्याद्युत्प्रेक्षितकुतर्कवशेन विप्लवो माभूदित्येतदर्थं जल्पवितण्डे कथिते । यथा बीजात् प्ररोहतोऽङ्कुरस्य माभूद्भक्षणं मृगैरिति तत्संरक्षणार्थं कण्टकशाखादिरावरणमुपयुज्यते । तथा जल्पाद्यपीत्यर्थः । एवं च मुमुक्षूणां तत्त्वाध्यवसायसंरक्षणार्थमुपदिष्टा विजिगीषुकथा । रागिणां ख्यात्यादिप्रयोजनाय प्रकल्पते सामर्थ्यादिति मन्तव्यम् । तदेवं यथोक्तमार्गेण मुमुक्षुणापि करणीयत्वं विजिगीषुकथायाः । ख्यात्यादिप्रयोजनतया च वर्जनीयत्वं प्रख्यापयितुं मोक्षशास्त्रे तस्याः प्रतिपादनमिति सर्वमुपपन्नम् ।

॥ सौत्रं जल्पलक्षणम् ॥

यदुवाच जल्पवितण्डासंज्ञोक्तेति, तत्र जल्पसंज्ञाया विषयं विवेचयितुं सौत्रमेव लक्षणं पठति-**यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति ।** (1-2-2) यथोक्तेन वादलक्षणेनोपपन्नः । कथं तर्हि वादाद्भिद्यत इत्याशङ्क्य छलाद्यङ्गाधिक्यप्रदर्शनेन भेदमाह—**छलजातिनिग्रहस्थानसाधनोपालम्भ** इति । छलजातीनामितरेतरयोगे सति ततः साधनमुपालम्भश्च यत्रेति योजना ।

नचैवं सति वादलक्षणस्याप्यतिव्याप्ति(त्व)दोषः उत्सर्गापवादन्यायादपि अन्यव्यवच्छेदसिद्धे[1][: ।] केचित्वेकस्योपपन्नपदस्य लुप्तनिर्देशं मन्यन्ते । तथाचैतदुक्तं

---

1. छेदे सिद्ध—मा.

**स प्रतिपक्षस्थापनाहीनो वितण्डा। (१-२-१, २, ३)**

---

भवति-यथोक्ते वादलक्षणे यद्यदुपपन्न घटमानं तेनोपपन्नः उपेतश्छलादिसाधनोपालम्भो जल्प इति। यद्यपि छलादिना न कस्य चित्साधनमुपालम्भो वा सम्भवेद्-सदुत्तरत्वात्। तथापि विजिगीषुभिः परव्यामोहार्थं छलादि प्रयुज्यते लोके। परेषां च मन्दधियां साधनोपालम्भसाधनत्वविश्रान्तिश्छलादिगोचरा भवन्ती दृश्यते। तदिदं दृष्टमनूद्यते विजिगीषुवन्मुमुक्षुभिरेवमसत्साधनाद्युपादातव्यमिति ज्ञापयितुम्।

॥ नैयायिकैरपि सम्यक्साधनानुस्मरणपर्यन्तं छलादिप्रयोगाभ्यनुज्ञा ॥

केचित्तु नैयायिकानामपि परैर्दण्डकाद्युपन्यासेनाकुलीकृतचेतसां यावत्सम्यक्-साधनाद्यनुस्मरणं न भवेत्, तावत् छलादिप्रयोगो युक्त इति मेनिरे। छलादि-कमनुपन्यस्यतां अप्रतिभां निग्रहस्थानमुद्भाव्य खल्वसद्वादिनो विजयमासाद्य गच्छेयुरिति। नचैवं सति अयमसदाचार एव। सतामपि "निगृह्णीयाद्यथाशक्ति देवताचार्यनिन्दकान्" इति वचनात्प्रमाणवतां सम्यक्साधनाप्रतिभासे छलादि-प्रयोगादपि परनिग्रहस्योपपत्तेः। नैवं सति चपेटादेरपि उपादानप्रसक्तिः, वाग्व्यतिरिक्तस्याभावात्। शरीरे मुमुक्षोरनधिकारादसामर्थ्याच्च।

यस्य तु शारीरदण्डविधानेऽप्यधिकारः पृथिवीपतेः तमधिकृत्य, चपेटादि-नापि पाषण्डिनिग्रहो दण्डनीतौ[1]—

वेदविप्लावकं चैव देवब्राह्मणनिन्दकम्।
निगृह्य दण्डयेद्राजा शारीरैस्ताडनादिभिः॥ इति।

॥ वितण्डालक्षणसूत्रव्याख्या ॥

वितण्डालक्षणसूत्रं पठति—**स प्रतिपक्षस्थापनाहीनो वितण्डेति।** स इत्यनेन जल्प एव परामृश्यते इत्येके। वादोऽपीत्यपरे। ततश्च द्विरूपा वितण्डा सिद्धा। विजिगीषुवितण्डा वीतरागवितण्डा चेति।

---

1. उच्यत इति शेषः

॥ वितण्डायाः तत्त्वनिर्णयहेतुत्वं नास्तीति मतोपन्यासः ॥

यत्त्विदं केचिदूचिरे तत्त्वबुभुत्सुकथा च वितण्डा चेति व्याघातः, नहि प्रथमसाधननिवृत्तावेव तत्त्वनिर्णयः, निःसाधनस्य तस्यानुपपत्तेः। नापि प्रतिपक्ष-साधनमनिवर्त्य प्रथमस्य साधनत्वावस्थितिः शङ्कितप्रतिपक्षत्वात्। यदि तु प्रतिपक्ष-साधनमनिरूप्यैव[सोऽ]पि विजिगीषुः वितण्डावत्तावतैव वादेनानेन कृती, नो तर्हि तत्त्वबुभुत्सुः इति।

॥ वितण्डायाः तत्त्वनिर्णयफलकत्वसमर्थनम् ॥

तदिदं प्रागेव पराकृतप्रायम्। वीतरागवितण्डायामनभ्युपगतशास्त्रभेद-स्यापि परप्रसिद्धव्याप्त्याद्युपजीवनेन पञ्चावयवप्रयोगस्य वादप्रस्तावे विहितत्वात् तत्राप्युपपत्तेरिति। प्रतिपक्षस्थापनाहीन इत्यत्र स्वपक्ष एव वैतण्डिकस्य प्रतिवादिपक्षम-पेक्ष्य प्रतिपक्ष उच्यते। तस्य प्रतिपक्षस्य स्थापना साधनं, तेन हीनः विकलो वादो जल्पश्च वितण्डेत्यर्थः। वीतरागवितण्डायां तु पञ्चावयवप्रयोगः स्वीक्रियमाणोऽपि न स्वपक्षसाधनमुद्दिश्य। किं तु परसाधनव्युदासार्थं प्रतिपक्षापादनमात्रम्। प्रथम-वादी तु परसाधनमाभासीकृत्य निष्प्रतिपक्षादात्मीयसाधनात्क(1)दाचन तत्त्वं व्युत्पादयति। कदाचित्तु न। प्रथमसाधनस्यैव परामृश्यमानस्य कुतश्चन वैगुण्याद-प्रामाण्यम्। प्रतिसाधनस्य च सर्वाङ्गसुन्दरत्वेन प्रामाण्यमुपपद्यत इति परस्तम्भनार्था-दपि प्रतिसाधनादार्थिकस्तत्त्वनिर्णय इति तत्त्वनिर्णयफलत्वं प्रतिपक्षस्थापनाहीनत्वं चेति नैकमपि दूषणम्।

स्थापनं वैतण्डिकस्याप्यस्तीति **प्रतिपक्षग्रहणम्**। प्रतिपक्षहीनत्वे तु कथं कथाप्रवृत्तिरेव सम्भविनीति **स्थापन**ग्रहणम्।

॥ वैतण्डिकस्य पक्ष एव नास्तीति मतं तस्य स्वपक्षोऽस्तीति तद्दूषणं च ॥

ये तु वैतण्डिकस्य न पक्ष एव कश्चिदिति मन्यन्ते, तेषां मते वैतण्डि-कश्चेद्वितण्डायाः प्रयोजनमनुयुक्तः प्रतिपद्येत सोऽस्य पक्ष इति वैतण्डिकत्वं जह्यात्। अथ न प्रतिपद्येत तदापि नायं लौकिको न परीक्षक इति विचक्षणैरुपेक्ष्येत। किञ्च स्थापनाविरहिवचननिचयो वितण्डा। तस्य यद्यर्थं प्रतिपद्येत सोऽस्य पक्ष इति कथमयं वैतण्डिकः? न चेत्प्रतिपद्येत प्रलापमात्रमिति वितण्डापि न भवेत्।

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । तत् त्रिविधम्—वाक्छलं, सामान्यच्छलं, उपचारच्छलं चेति । यथा—अविशेषाभिहितेऽर्थे वक्तु- रभिप्रायादर्थान्तरकल्पना वाक्छलम् ।** (1-2-12)

---

तस्मात्पारिशेष्यात्स्वपक्षसिद्धिमभिसन्धाय परपक्षदूषणमेवाभिदधानो वैतण्डिकः, न तु पक्षमात्रेणापि शून्य इति युक्तम् ।

॥ छललक्षणम् ॥

यदुक्तं छलजातिसाधनो जल्प इति तत्र छलादिरूपं निरूपणीयमिति छलं तावत्सामान्यतो लक्षयति—**वचनविघातोऽर्थविकल्पोपपत्त्या छलमिति** (1-2-10) । वचनस्य विघातो निराकरणं यत्क्रियते तच्छलं केन प्रकारेण वचनविघात इत्यत उक्त**मर्थविकल्पोपपत्त्येति** । वैपरीत्येन कल्पनं विकल्पः । अर्थस्य विकल्पोऽर्थविकल्पः । नानार्थसाधारणस्य शब्दस्य वक्तुरभिप्रेतादर्थादर्था- न्तरकल्पनमित्यर्थः । **तस्योपपत्तिः** सम्भवः तया क्रियमाणो **वचनविघातश्छलम्** । न पुनर्वचनविघातमात्रमित्यर्थः । उदाहरणं विशेषलक्षणे द्रष्टव्यम् । निर्विशेष- सामान्यासम्भवेन तन्मात्रोदाहरणस्याशक्याभिधानत्वात् ।

॥ छलभेदाः ॥

कतिविधं छलं? अत आह—**तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचार- च्छलञ्चेति** । यथैतदेव लक्षणभेदानुसारि तथोच्यत इत्याह—**यथेति** । वाक्छलं लक्षयति—**अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलमिति ।** अत्रार्थग्रहणं वचनस्यार्थप्रतिषेधात्प्रतिषेधो न स्वत इति ज्ञापनार्थम् । अनेकार्थाभि- धायि पदं वाक्यं वा । न विशिष्यत इत्यविशेषः । तेनाभिहितेऽर्थे तस्यार्थाभिधानाय प्रयोग एवाभिहितोऽर्थ इत्युक्तम् । तस्मिन् अभिप्रायात् अभिप्रेतात् अर्थान्तरकल्पना निमित्तं[1] यत्र वचनविघाते तद्वाङ्निमित्तं छलं वाक्छलम् ।

---

1. अर्थान्तरकल्पनापदं अर्थान्तरकल्पनानिमित्तवचनविघातपरमिति भावः ।

**नवकम्बलोऽयं माणवक इत्युक्ते छलवाद्याह—कुतोऽस्य नवकम्बला इति। तस्याप्रतिपत्तिलक्षणं नाम निग्रहस्थानम् वाच्यम्। नवः कम्बलोऽस्येति वक्तुरभिप्रायापरिज्ञानात्, उत्तरापरिज्ञानाद्वा। विप्रतिपत्तिर्वा, विपरीतपरिज्ञानादिति।**

**संभवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलम्।**

---

॥ छलान्तरस्यापि वाङ्निमित्तत्वेऽपि अत्र प्राधान्योपपत्तिः ॥

यद्यपि छलान्तरमपि वाङ्निमितं तथापि तत्र सामान्यादि निमित्तं प्राधान्येनास्तीति तेनैव व्यपदिश्यते। भवति खल्वसाधारणेन व्यपदेश इति। **नवकम्बलोऽयं माणवक इत्युक्ते छलवाद्याह—कुतोऽस्य नवकम्बला इति।** प्रत्यग्रकम्बलसम्बन्धित्वं वक्तुर्विवक्षितम्। छलवादी तु नवसङ्ख्यावच्छिन्नकम्बलसम्बन्धित्वं विवक्षितमध्यारोप्य तदसम्भवेन निराकरोतीति। **तस्य** छलवादिनोऽप्रतिपत्तिलक्षणमप्रतिपत्तिरूपं **निग्रहस्थानं वाच्यम्** कस्मात्? **नवःकम्बलोऽस्येति वक्तुरभिप्रायापरिज्ञानात्।** [यद्यपि] [1]जानन्नेवाभिप्रायं मयापि किञ्चिदुत्तरं वचनीय मित्येवाह तथापि सम्यगुत्तरापरिज्ञानादप्रतिपत्तिरेवेत्याह—**उत्तरापरिज्ञानाद्वेति।** तथार्थपरिज्ञाने हि स(त्य)ति सिद्धसाध्यतेत्युत्तरं युक्तम्। न खलु तोयपूर्णं तटाकमित्युक्ते कुतोऽत्र वह्निरिति वदितव्यमिति। कल्पान्तरमाह—**विप्रतिपत्तिर्वा** निग्रहस्थानमुत्तरस्य **विपरीतपरिज्ञानादिति।** यद्वा वक्तुरभिप्रायविपरीतस्य परिज्ञानाद्विप्रतिपत्तिर्निग्रहस्थानमिति। सामान्यशब्दप्रयोगे हि वक्तैव प्रष्टव्यः कोऽर्थस्त्वया विवक्ष्यत इति। न पुनरर्थविशेषाधिगतिहेतुं प्रकरणादिकमप्रतिप(त्त्यै) [द्यै]व निर्युक्तिकमर्थं परिकल्प्य परवचनोपालम्भः करणीय इति।

॥ सामान्यछललक्षणम् ॥

छलान्तरमाह — **सम्भवतोऽर्थस्य अतिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलमिति।** विवक्षितधर्मेण चतुर्वेदाभिज्ञत्वादिना सह यः प्रायेण संभवति स सम्भवच्छब्देनोक्तः, तमतिक्रम्य धर्मान्तरमपि व्रात्यादिकं व्याप्नोति

---

1. अजानन्—मा.

अहो नु खल्वयं ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्ते केनचित् न्यायवाद्याह–किमत्राश्चर्यम् । संभवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वमिति । अत्र च्छलवाद्याह–न, व्रात्येऽनैकान्त्यात् इति । तस्यापि पूर्ववन्निग्रहस्थानं वाच्यम् । कस्मात्? हेतुत्वेनाविवक्षितत्वात् । किन्तर्हि? ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वं आश्चर्यकारणं न भवतीत्यभिप्रायः सुक्षेत्रशालिसम्पत्तिवदिति ।

उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम्, यथा मञ्चाः क्रोशन्तीत्युक्ते च्छलवाद्याह–पुरुषाः क्रोशन्ति न मञ्चाः,तेषामचेतनत्वादिति ।

---

यत्सामान्यं ब्राह्मणत्वादिलक्षणं, तेन सम्भवतोऽर्थस्य योगात् असद्भूतस्य, अविद्यमानस्यार्थस्य कल्पना निमित्तं यत्र वचनविघाते तत्सामान्यछलं सामान्यनिमित्तत्वादिति ।

॥ सामान्यच्छलोदाहरणम् ॥

अत्रोदाहरणम्—**अहो तु खल्वसौ ब्राह्मणः चतुर्वेदाभिज्ञ इत्युक्ते केनचित् न्यायवाद्याह—किमत्राश्चर्यं? संभवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वमिति । अत्रावसरे छलवाद्याह—न, व्रात्येनानैकान्तिकादिति । तस्यापि** छलवादिनः **पूर्ववन्निग्रहस्थानं वाच्यमिति ।** पूर्ववदिति वक्तुरभिप्रायापरिज्ञानाद्वाऽप्रतिपत्तिर्निग्रहस्थानम् । अभिप्रायोत्तरयोर्विपरीतपरिज्ञानाद्विप्रतिपत्तिर्वेत्यर्थः । अज्ञानविपरीतज्ञानयोरेव सद्भावे प्रश्नपूर्वकं हेतुमाह–**कस्माद्धेतुत्वेनाविवक्षितत्वादिति ।** यदि ब्राह्मणत्वं चतुर्वेदाभिज्ञत्वे हेतुत्वेन विवक्षितं भवेत् ततो युक्तमनैकान्तिकत्वोद्भावनं; न त्वित्थं विवक्षितमित्यर्थः । **किं तर्हि** विवक्षितमिति पूरणीयम् । विवक्षितमाह **—ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वे आश्चर्यं कारणं न भवतीत्यभिप्राय इति ।** तत्रायं दृष्टान्तः **सुक्षेत्रशालिसम्पत्तिवदिति** । यथा सुक्षेत्रे शालिसम्पत्तिराश्चर्यकारणं न भवति बहुलमुपलब्धत्वात् तथा ब्राह्मणे चतुर्वेदाभिज्ञत्वमित्यर्थः ।

॥ उपचारच्छललक्षणम् ॥

छलान्तरमाह—**उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारछलमिति । प्रतिषेधो** मुख्यार्थासम्भवेन वचनविघातः । उदाहरणमाह—**मञ्चाः क्रोशन्तीत्युक्ते छलवाद्याह-पुरुषाः क्रोशन्ति न मञ्चाः तेषामचेतनत्वादिति ।**

**तस्यापि निग्रहस्थानं पूर्ववत्, उभयथापि लोके शास्त्रे च शब्दप्रयोगदर्शनादिति । प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिः ।**

---

**निग्रहस्थानं पूर्ववत् ।** अप्रतिपत्तिरूपं विप्रतिपत्तिरूपं वेत्यर्थः। तत्र हेतुः—**उभयथापि लोके शास्त्रे च शब्दप्रयोगदर्शनादिति ।** एतदुक्तं भवति-यस्मादुभयथापि मुख्येन गौणेनापि प्रकारेण लोके शास्त्रे च शब्दप्रयोगो दृश्यते तेन वक्ता यथेष्टं मुख्यं गौणं वा शब्दं प्रयुङ्क्ते । (कः) स्वयं गौणमर्थं विवक्षितमविज्ञाय मुख्यं च विवक्षितमध्यारोप्य वचनविघातं कुर्वन्नुपालब्धैव खलीक्रियते। तस्याप्रतिपत्तेर्विप्रतिपत्तेश्च निग्रहस्थानत्वात् । वक्तुः पुनः न कोऽप्यपराधः । श्रोतुरपि निग्रहस्थानविशेष[1] चिन्तायां, सर्वप्रकारं छलं जातिश्च निरनुयोज्यानुयोग एवेति मन्तव्यम् ।

॥ जातिसामान्यलक्षणम् ॥

अथ जातेः सामान्यलक्षणमाह—**प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिरिति ।** प्रसङ्गमात्रं माभूज्जातिरिति **समीकरणाभिप्रायेण** प्रतिपक्षसाम्यापादानबुद्ध्येत्युक्तम् । तादृश्यपि सम्यक्प्रसङ्गे जातित्वं मा प्रसाङ्क्षीदित्येतदर्थमसम्यक्पदमध्याहरणीयम् । तथा च समीकरणाभिप्रायेण प्रसङ्गाभासो जातिरित्युक्तं भवति । तदेवमवसरप्रदर्शनम् । **प्रयुक्ते हेताविति** हेत्वाभासस्यापि निदर्शनमेतत् । हेतौ हेत्वाभासे वा प्रयुक्ते सतीत्यर्थः ।

जातिश्च समासतो द्वेधा साधर्म्येण वैधर्म्येण च । तथा च सूत्रं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः इति । प्रत्यवस्थानं प्रतिषेध इत्यर्थः । उदाहरणं विशेषलक्षणे वक्ष्यते ।

॥ निग्रहस्थानसामान्यलक्षणकथनम् ॥

सौत्रमेव क्रममनुसरन्निग्रहस्थानस्यापि सामान्यलक्षणं जातिसामान्यलक्षणा-

---

1. विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानं तद्विकल्पात् जातिनिग्रहस्थानबहुत्वमिति सूत्रात् विप्रतिपत्त्यादेः विशेष एव निरनुयोज्यानुयोगादयः ।

**पराजयनिमित्तं निग्रहस्थानम् । बह्वश्चानयोः सूक्ष्माभेदाः तेषां कियन्तोऽपि भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते ।**

---

नन्तरमेवाह—**पराजयनिमित्तं निग्रहस्थानमिति ।** तदपि संक्षेपेण द्विप्रकारम् । तथा हि सूत्रं—विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति ।

॥ विप्रतिपत्त्यप्रतिपत्तिशब्दार्थः जातिनिग्रहस्थानभेदाश्च ॥

विपरीता कुत्सिता वा प्रतिपत्तिः विप्रतिपत्तिः अप्रतिपत्तिरारम्भविषयेऽनारम्भः । निग्रहस्थानपदं च निग्रहस्य पराजयस्य स्थानं निमित्तमिति व्युत्पादनीयम् । कियत्यो जातयः कियन्ति वा निग्रहस्थानानीत्याह—**बह्वश्चानयोः सूक्ष्मा भेदा इति ।** अनयोर्जातिनिग्रहस्थानयोः सूक्ष्मा भेदा अवान्तरविषया बह्वः परिसङ्ख्याताः । तथा च सूत्रं तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् (1–2–20) इति । तयोर्जातिभेदयोः निग्रहस्थानभेदयोश्च विकल्पात् अवान्तरविशेषात् जातिबहुत्वं निग्रहस्थानबहुत्वं च । बहुत्वं चात्रापरिसङ्ख्यातत्वमेव विवक्षितम् । अन्यथा चतुर्विंशतिद्वाविंशतिभेदाभिधानादेव बहुत्वं सिद्धमिति निरर्थकं बहुत्वाभिधानं प्रसज्येत । तदेवमानन्त्ये जातिनिग्रहस्थानभेदानां निश्शेषाभिधानमशक्यकरणमिति कियन्त एव भेदा लक्षणेनोदाहरणेन च प्रदर्श्यन्ते शिष्यबुद्धिविकासायेत्याह–**तेषां कियन्तोऽपि भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्त इति ।**

॥ जातिप्रभेदवादिसूत्रव्याख्या ॥

तत्र लिलक्षयिषितजातिविशेषनिर्देशपरमिदं सूत्रं—"साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा" इति । समशब्दः प्रत्येकं सम्बध्यते साधर्म्यसमो वैधर्म्यसमः उत्कर्षसम इत्यादि योजनीयम् । पुंलिङ्गनिर्देशस्तु प्रसङ्गसामानाधिकरण्याभिप्रायेण । साधर्म्यमेव समं यस्मिन् प्रसङ्गे स साधर्म्यसमः । एवं वैधर्म्यसमादावपि योजनीयम् । साम्यं चात्र प्रतिवाद्यभिमानमात्रकृतं नतु वास्तवं ; वास्तवत्वेऽसदुत्तरत्वाप्रसक्तेः । न चेदं विभागसूत्रं जातिसङ्ख्यानियमार्थं, प्रागुक्तप्रकारेण तदनुपपत्तेः । किमर्थं तर्हि ? विशेषलक्षणप्रवृत्त्यर्थम्, विशेषतो हि

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ (5-1-2) । अनित्यश्शब्दः कृतकत्वात् घटवदित्युक्ते जातिवाद्याह— यद्यनित्यघटसाधर्म्यात् कृतकत्वादनित्यश्शब्दः इष्यते, नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यस्तावत्प्राप्नोति । यदि च नित्याकाशवैधर्म्यात्कृतकत्वादनित्यश्शब्द इष्यते; घटाद्यनित्यवैधर्म्यादमूर्तत्वात्तर्हि नित्यश्शब्दः प्राप्नोति ।**

---

निर्दिष्टासु जातिषु तल्लक्षणजिज्ञासायामवहितमनसः शिष्यास्तद्विशेषलक्षणानि सुखेन ज्ञास्यन्तीति ।

॥ साधर्म्यवैधर्म्यसमयोः लक्षणम् ॥

तत्र साधर्म्यवैधर्म्ययोः सौत्रमेव लक्षणं पठति — **साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ** । साधर्म्येण, अन्वयेन वैधर्म्येण व्यतिरेकेण चोपसंहारे दृष्टान्ते कथिते सति उपसंह्रियेतेऽविनाभावेन प्रदर्श्येते साध्यसाधने यत्रेति व्युत्पत्तेः उपसंहारो दृष्टान्तः, तद्धर्मविपर्ययो दृष्टान्तधर्मविपर्ययः प्रतिदृष्टान्तधर्म इत्यर्थः । तस्योपपत्तेः सम्भवाद्यौ प्रसङ्गौ भवतस्तौ साधर्म्यवैधर्म्यसमौ साधर्म्यसमो वैधर्म्यसमश्चेति ।

॥ साधर्म्यसमोदाहरणम् ॥

तत्र साधर्म्यसममुदाहरति — **यथाऽनित्यः शब्दः कृतकत्वात् घटवदित्युक्ते जातिवाद्याह — यद्य(प्य)नित्यघटसाधर्म्यात् कृतकत्वादनित्य इष्यते नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यस्तर्हि प्राप्नोति ।** उभयोरपि साधर्म्ययोः विशेषाभावादित्यर्थः ।

अथ वैधर्म्यसमस्योदाहरणम्—

**यदि च नित्यवैधर्म्यात्कृतकत्वादनित्य इष्यते घटाद्यनित्यवैधर्म्यादमूर्तत्वात्तर्हि नित्यः प्राप्नोति विशेषाभावात्** द्वयोरपि वैधर्म्ययोरिति । इदं चोदाहरणं वैधर्म्योदाहरणे सति द्रष्टव्यम् । यथा च नास्तिकव्यामोहनाय सदुत्तराप्रतिपत्तौ जातिपरिज्ञानमुपयुज्यते, तथा परप्रयुक्तजातिनिराकरणमपि स्वपक्षोप-

**अविशेषादिति । अनयोरुत्तरं, अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युपगमादप्रसङ्गो धूमादिवदिति । साध्यदृष्टान्तयोर्धर्मविकल्पादु-**

---

योगीति कारुणिकतया तद्व्युत्पादनार्थमाह—**अनयोरुत्तरम्, अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युपगमादप्रसङ्गो धूमादिवदिति ।**

॥ साधर्म्यवैधर्म्यसमयोरुत्तरम् ॥

अयमर्थः । यथाऽग्निमद्भिर्महानसादिभिः साधर्म्यादनग्निमद्भिः सलिलादिभिः वैधर्म्याच्च धूमादेवाग्निमत्त्वं भूधरादौ सिद्ध्यति । तस्याविनाभावित्वात् न पुनरग्निमत्साधर्म्यात् अनग्निमद्वैधर्म्याच्च वनस्पत्यादिसम्बन्धादनग्निमत्त्वमपि सिध्यति । तस्य तदविना[भावा]भावात् । तथैवानित्यसाधर्म्यस्य नित्यवैधर्म्यस्य च कृतकत्वादेरविनाभाविन एव हेतुत्वं, न पुनस्तद्विकलस्य मूर्तत्वादेः । विशेषाभावादिति चासिद्धं अविनाभावतदभावयोरेव विशेषत्वात् ।

॥ जातेः प्रसङ्गाभासत्वसमर्थनम् ॥

तस्मान्नित्यसाधर्म्यादनित्यवैधर्म्याच्च नित्यत्वमपि सिद्ध्येदित्ययं प्रसङ्गो नायं सम्यक्प्रसङ्गः प्रसङ्गाभासस्त्वित्यर्थः । सूत्रकृताप्येतदेवाभिहितं गोत्वाद्गोसिद्धिवत् तत्सिद्धिः (न्या सू. 5–1–3) इति । गोत्वाविनाभूतं सास्नादिलिङ्गमिह गोत्वपदेन विवक्षितम् । तथा च [न] हेतोः साध्याविशिष्टतादोषः । इदमुक्तं[भवति[1]] सास्नादिलिङ्गमेव गोसाधर्म्यं वैधर्म्यं च यथा गोः साधनं भवति अविनाभावात् । न पुनः प्राणित्वाद्यपि साधर्म्यमित्येव व्यभिचार्यपि साधनम् । तथा प्रकृतेऽपि वेदितव्यमित्यर्थः ।

॥ उत्कर्षसमादीनां लक्षणानि ॥

अथोत्कर्षसमादीनां च लक्षणमाह—**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षविकल्पसाध्यसमा इति ।** यद्यप्युत्कर्षापकर्षवर्ण्यावर्ण्य-

---

1. भाव—मा.

**भयसाध्यत्वाच्चोत्कर्षापकर्षविकल्पसाध्यसमाः साध्ये दृष्टान्तादनिष्टधर्मप्रसङ्गः उत्कर्षसमः, इष्टधर्मनिवृत्तिरपकर्षसमः । यदि कृतकत्वाद्घटवदनित्यश्शब्दः, तदा घटवदेव सावयवः स्यात् । अथ, नैवमनित्योऽपि तर्हि न स्यादविशेषात् । अश्रवणश्च घटो दृष्टश्शब्दोऽपि श्रावणो न स्यादविशेषात् । अथ विकल्पसमः-कृतकत्वाविशेषेऽपि यथा मूर्तत्वामूर्तत्वादि धर्मविकल्पः, तथा नित्यत्वानित्यत्वादिविकल्पोऽपि स्यादविशेषात् ।**

---

विकल्पसाध्यसमा इति सौत्रः पाठः तथापि वर्ण्यावर्ण्ययोः साध्यसमादुक्तिमात्रनिबन्धनो भेद इति मत्वा तथा न पठितमाचार्येण सङ्ग्रहप्रस्तावादिति मन्तव्यम् ।

अभिप्रेतार्थसंसिद्ध्यै यद्भवेत्सूत्रमञ्जसा ।
पठ्यते तत्तथाऽन्यत्र स्वाक्यमिह रच्यते ॥ १ ॥

अत्रोत्कर्षापकर्षयोः समाख्यानिर्वचनेन सूत्रे लक्षणमुन्नीयाह-**साध्ये दृष्टान्तादनिष्टधर्मप्रसङ्ग उत्कर्षसमः इष्टधर्मनिवृत्तिरपकर्षसम इति** । उत्कर्षः समोऽस्मिन्, अपकर्षः समोऽस्मिन्निति निर्वचनमेवैतदर्थं सूचयतीत्यर्थः । साध्यदृष्टान्तयोर्धर्मविकल्पात्, धर्मवैचित्र्यादुच्यमानः प्रसङ्गो विकल्पसमः । उभयसाध्यत्वात् उभयोः साध्यत्वापादनेन विद्यमानः प्रसङ्गः साध्यसम इति । एवं चत्वारि लक्षणानि साध्यदृष्टान्तयोरित्यादिवाक्येन सङ्गृहीतानि । विकल्पसाध्यसमयोस्तु लक्षणे सङ्ग्रहवाक्य एव स्पष्टत्वात् उत्कर्षापकर्षसमयोरिव पृथक् न व्याख्याते ।

॥ उत्कर्षसमोदाहरणम् ॥

तत्रोत्कर्षसममुदाहरति—**यदि कृतकत्वाद्घटवदनित्यः शब्दः तदा घटवदेव सावयवः स्यात् । अथ नैवमनित्योऽपि तर्हि न स्यादविशेषादिति ।** अथापकर्षसमस्योदाहरणं—**अश्रावणश्च घटो दृष्टः शब्दोऽपि श्रावणो न स्यादविशेषादिति ।**

॥ विकल्पसमलक्षणम् ॥

**अथ विकल्पसमः ।** उदाहरिष्यत इति शेषः । **कृतकत्वाविशेषेऽपि यथा मूर्तामूर्तत्वादिधर्मविकल्पस्तथा नित्यत्वानित्यात्वादिविकल्पोऽपि स्यादविशेषादिति ।**

**अथ साध्यसमः । यदि कृतकत्वादुभयोरप्यनित्यत्वं, तर्हि साध्यत्वमप्युभयोः स्यात् । नवा कस्यचित् । अविशेषात् । एतेषामुत्तरम्-किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः (5-1-5) । किं चित्साधर्म्याद्धूमवत्त्वादिलक्षणात् साध्यदृष्टान्तयोर्धर्मविकल्पे व्यवस्था दृष्टा ।**

---

॥ साध्यसमादीनां लक्षणानि ॥

**अथ साध्यसमो** निदर्श्यते । **यदि तु कृतकत्वादुभयोरप्यनित्यत्वं तर्हि साध्यत्वमप्युभयोः स्यात, नवा कस्यचिदविशेषादिति ।** वर्ण्यावर्ण्यसमयोस्तु साध्यसमादुक्तिभेदेनोदाहरणे द्रष्टव्ये । तथाहि—यदि तु कृतकत्वादनुमानेनानित्यो वर्ण्येत शब्दः, तथा सति घटोऽपि कृतकत्वानुमानेनैव वर्ण्यः स्यात्, अथानवस्थाभयात घटस्तेनैवानुमानेनानित्यो न वर्ण्येत ततः शब्दोऽप्यवर्ण्यः स्याद्विशेषादिति । लक्षणं चानयोर्वर्ण्यौ समौ यत्र [साध्य]दृष्टान्तौ स वर्ण्यसमः । अवर्ण्यौ समौ यत्रासाववर्ण्यसम इति समाख्यानिर्वचनेन द्रष्टव्यम् ।

॥ विकल्पसमादीनां प्रत्युत्तरम् ॥

**एतेषामुत्तरमिदं** सूत्रं - **किञ्चित्साधर्म्यादुपसंहारसिद्धेः वैधर्म्यादप्रतिषेध इति ।** सूत्रं व्याचष्टे – **किञ्चित्साधर्म्याद्धूमवत्त्वादिलक्षणात् साध्यदृष्टान्तयोर्धर्मविकल्पेऽपि व्यवस्था दृष्टेति ।** व्यवस्था दृष्टेत्यनेनोपसंहारसिद्धेरिति सूत्रपदं व्याख्यातम् । तथाहि—पूर्ववदुपसंहारो दृष्टान्तः । उपसंह्रियत इति कर्मव्युत्पत्त्या तु साध्यं हे(तो)तुर्वा तस्य सिद्धिः, तथाभावव्यवस्था । सा तु महीधरमहानसादिप्रदेशयोः धर्मविकल्पे धर्मवैचित्र्येऽपि दृष्टा सर्वलोकप्रसिद्धा । न सर्वो महानसादिधर्मः पर्वतादौ सिद्ध्यति । नच तदसिद्धौ वह्नेरप्यसिद्धिः । नापि महानसादावनुपलब्धो धर्मः पर्वतादेरुपलब्धोऽपि विनिवर्तते । नापि धूमवतां धर्मान्तरविकल्पवदग्निमत्त्वविकल्पोऽपि भवति । नाप्यनयोः प्रदेशयोः [1]साध्यत्वमसाध्यत्वं वोभयोरिति ।

---

1. साध्यपदं साध्यवत्पक्षपरम्

**तदपलापे लोकादिविरोधः । सर्वानुमानाप्रामाण्यप्रसङ्गश्चेति । प्राप्यसाध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ । यद्ययं हेतुः प्राप्यसाध्यं साधयेदुभयोः प्राप्त्याऽविशिष्टत्वादङ्गुल्योरिव किं कस्य साधनं साध्यं वा, अप्राप्यसाधकं नास्ति काष्ठाग्निवदिति घटादिनिष्पत्तिदर्शनात्पीडने वाऽभिचारादप्रतिषेधः (5-1-8) प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तयः एवैते**

---

॥ उत्कर्षसमादीनामुत्तरम् ॥

माभूदसावपि व्यवस्था का नो हानिरित्यत आह—**तदपलापे लोकादिविरोधः ।** आदिपदेन शास्त्रविरोधोऽप्यवरुध्यते **सर्वानुमानाप्रामाण्यप्रसङ्गश्चेति ।** सर्वानुमानेष्वपि उत्कर्षादीनां सम्भवादित्यर्थः । तस्मात्साध्यधर्मिदृष्टान्तोः किञ्चित्साध्यधर्मादेवाविनाभूतादुपसंहारसिद्धेस्तद्वैधर्म्यमात्रदर्शनादुत्कर्षसमादिप्रकारेण प्रतिषेधो न युक्त इति स्थितम् । अथ साध्यसमस्यापरं सौत्रं उत्तरं "साध्यातिदेशाच्च दृष्टान्तोपपत्तेः" (5–1–6) इति । येन खलुभयवादिप्रसिद्धेन साध्यधर्मो धर्मिण्यतिदिश्यते तस्य दृष्टान्तभाव एवोपपद्यते न पुनः सोऽपि साध्य इति शक्यमापादयितुमित्यर्थः ।

॥ प्राप्त्यप्राप्तिसमयोः लक्षणे ॥

अथान्यौ प्रसङ्गौ लक्ष्येते—**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमाविति ।** अयमर्थः । हेतोः कृतकत्वादेः साध्यं प्राप्य तत्साधकत्वम् अप्राप्य वा ? प्रथमे दूषणमाह—**यद्ययं हेतुः प्राप्य साध्यं साधयेदुभयोः प्राप्त्याऽविशिष्टत्वादङ्गुल्योरिव किं कस्य साधनं साध्यं वेति ।** इदमेव साधनमिदमेव साध्यमिति नियामकं नास्तीत्यर्थः । द्वितीये दूषणमाह—**अप्राप्यसाधकं नास्ति काष्ठादिवदिति ।** न खल्वप्राप्तं काष्ठमग्निर्दहतीत्यर्थः । प्रकाशको हि प्रदीपादिः प्राप्तिसापेक्ष उदाहरणीयः ।

॥ प्राप्त्यप्राप्तिसमयोः उत्तरम् ॥

अनयोरुत्तरमाह –**घटादिनिष्पत्तिदर्शनात् पीडने वाऽभिचारादप्रतिषेध इति ।** सूत्रतात्पर्यमाह—**प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तय एवैते**

**साध्यसाधनत्वादयो धर्मा दृष्टाः । ते निराकर्तुमशक्याः । सर्वप्रमाण-विरोधादिति ।**

---

**साध्यसाधनत्वादयो धर्मा दृष्टा इति ।** इदमुक्तं भवति । प्राप्तयविशेषेऽपि मृत्पिण्डः कुलालेन घटीक्रियते न कुलालः, प्रदीपेन च प्राप्तेन घटः प्रकाश्यते न पुनः प्रदीप एव घटेन । तथैवाप्राप्तयविशेषेऽप्यभिचारः पीडनं करोति । तस्माद्द्वेधापि प्रागुक्तः प्रतिषेधो न युक्तः । अथोक्तप्रकारानपि नियतधर्मान्निराकरोति जातिवादी तत्राह—ते **निराकर्तुमशक्याः सर्वप्रमाणविरोधादिति ।**

॥ प्रसङ्गप्रतिदृष्टान्तसमयोः लक्षणे ॥

दृष्टान्तकारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ (5–1–9) इति सूत्रान्तरम् । तस्यायमर्थः-दृष्टान्तस्य कारणं प्रमाणं, तस्यानभिधानान्न दृष्टान्तो घटादिरनित्यः सिद्ध्यति । तस्मात्तत्रापि प्रमाणाभिधानप्रसङ्ग इति प्रत्यवस्थानं प्रसङ्गसमः । प्रतिदृष्टान्तेन प्रत्यनीकदृष्टान्तेन प्रत्यवस्थानं प्रतीपमवस्थानं प्रतिदृष्टान्तसमः । यथा—शब्दोऽनित्यः कृतकत्वाद्घटवदित्युक्ते परः प्रत्यवतिष्ठते श्रोत्रग्राह्यं शब्दत्वं नित्यं दृष्टं तथा शब्दोऽपि नित्यः स्यात् । न ह्यस्ति विशेषो घटादिदृष्टान्तादनित्येन भवितव्यं, न पुनः शब्दत्वदृष्टान्तान्नित्येनेति ।

॥ प्रसङ्गप्रतिदृष्टान्तसमयोः ग्रन्थकृता अनुक्तौ हेतुः ॥

तत्र प्रसङ्गसमः साध्यसमादुक्तिमात्रेण भिद्यते । प्रतिदृष्टान्तसमश्च साधर्म्यवैधर्म्यसमाभ्यामुक्तिमात्रादेव भिद्यत इति न तयोः सङ्ग्रहप्रवृत्तेनाचार्येण कृतमभिधानम् । नच कृत्स्नाभिधानं प्रतिज्ञातं, कियन्तो भेदाः प्रदर्श्यन्त इत्युपक्रान्तत्वात् ।

॥ प्रसङ्गसमस्योत्तरम् ॥

तत्र प्रसङ्गसमस्येदमुत्तरं—“प्रदीपोपादानप्रसङ्गनिवृत्तिवद्विनिवृत्तिः” इति (5–1–10) यथा घटादिप्रकाशनायोपादीयमानेऽपि प्रदीपे प्रकाशनाय प्रदीपान्तरोपादानं न प्रसज्यते प्रदीपस्य प्रदीपान्तरनिरपेक्षस्यैव प्रत्यक्षत्वात्, तथा दृष्टान्तस्यापि दृष्टान्तान्तरसापेक्षसाधनमनपेक्ष्य प्रत्यक्षेणापि सिद्ध्युपपत्तेः न साधनपरम्पराप्रसङ्ग इत्यर्थः ।

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । अनित्यश्शब्दः कार्यत्वादित्युक्तेः प्रागुत्पत्तेरनित्यत्वकारणं नास्तीति नित्यः प्रसक्तः । तस्योत्पत्तिरनुपपन्नेति । तथा भावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेधः ।**

---

॥ प्रतिदृष्टान्तसमस्योत्तरम् ॥

अथ प्रतिदृष्टान्तसमस्योत्तरं—"प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ।" (5·1·11) अस्यार्थः—प्रतिदृष्टान्तः केवलमभिहितो भवतु वा । न त्वसद्दृष्टान्तस्य कोऽपि दोषः । तथा च दोषाभावात् नाहेतुः । असाधको न भवत्यसद्दृष्टान्तः, प्रतिदृष्टान्तहेतुत्वे भवताभिधीयमानेऽपीति ।

॥ प्रतिदृष्टान्तस्यासाधकत्वे युक्त्यन्तरम् ॥

यद्वा यः प्रतिदृष्टान्तः कथितः स केनाभिसन्धिना ? यथा दृष्टान्तस्य साधकत्वं तथा प्रतिदृष्टान्तस्यापीत्यभिसन्धिः? किं वा यथा प्रतिदृष्टान्तस्यासाधकत्वं तथा दृष्टान्तस्यापीति । तत्र यदि प्रथमः पक्षः, "प्रतिदृष्टान्तहेतुत्वे नाहेतुर्दृष्टान्तः" (5-1-11) दृष्टान्तवत् प्रतिदृष्टान्तस्यापि हेतुत्वेऽभ्युपगम्यमाने भवतैव तावद्दृष्टान्तस्य हेतुत्वमनित्यत्वसिद्धावभ्युपगतम्, तथा च तत्रावयोः संप्रतिपत्तिरिति सिद्धो मत्पक्षः । प्रतिदृष्टान्तस्य तु हेतुत्वं विप्रतिपन्नम् । द्वितीयेऽपि पक्षे प्रतिदृष्टान्त इव दृष्टान्तोऽप्यसाधक इत्यभिदधानेन भवतैव तावदभ्युपगतं प्रतिदृष्टान्तस्यासाधकत्वम् । दृष्टान्ते पुनर्विचारणीयम् । तथा चास्मिन्नपि पक्षे सङ्गतं सूत्रं—दृष्टान्तस्य असाधकत्वसिद्धौ प्रतिदृष्टान्तस्यासाधकत्वरूपेण हेतुत्वेऽभिधीमाने नाहेतुर्दृष्टान्त इति ।

॥ प्रसङ्गसमलक्षणम् ॥

प्रसङ्गान्तरमाह—"**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम**" इति । सूत्रं व्याचष्टे—**अनित्यः शब्दः कार्यत्वादित्युक्ते प्रागुत्पत्तेरनित्यत्वकारणं** कार्यत्वं **नास्तीति नित्यः शब्दः प्रसक्तः ततस्तस्योत्पत्तिरनुपपन्नेति ।** अनुत्पत्त्याप्रत्यवस्थानमनुत्पत्तिसमः ।

॥ प्रसङ्गसमस्योत्तरम् ॥

अस्योत्तरमाह—**तथाभावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेध इति ।**

अनुत्पन्नश्शब्द एव नास्ति । कस्य नित्यत्वादि धर्मश्चिन्त्येत ।

---

सूत्राभिसन्धिमाह—**अनुत्पन्नः शब्द एव नास्ति कस्य नित्यत्वादिधर्मश्चिन्त्येतेति** । एतदुक्तं भवति । तथाभावादुत्पन्नस्येति निष्पत्त्यनन्तरमेव शब्द(ा) भावादित्यर्थः । निष्पन्नः खलु शब्दो भवति । तथा च कारणमनित्यत्वसाधनं कार्यत्वमप्युत्पद्यते तस्मान्नित्यस्योत्पत्तिरनुपपन्नेत्ययमप्रतिषेध इति । किञ्च ज्ञापकं कार्यत्वमुपन्यस्तं न कारकम् । कारकं तु निवर्तमानं कार्यं निवर्तयितुमलं न ज्ञापकं तत्र ज्ञापके कारकधर्माध्यारोपेण प्रत्यवस्थानमयुक्तमिति ।

॥ संशयसमलक्षणम् ॥

"सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसम" इति सूत्रान्तरम् । तस्यायमर्थः । सत्यपि कृतकत्वाख्ये हेतौ शब्दे नित्यानित्यसंशयः तथैवावतिष्ठते । संशयकारणसम्भवात् । स एव संशयकारणसम्भवः प्रदर्श्यते—**सामान्येत्यादिना** । सामान्यघटयोर्नित्यानित्ययोः ऐन्द्रियकत्वे समाने साधारणे सति शब्दस्याप्यैन्द्रियकत्वेन नित्यानित्याभ्यां साधर्म्यात् कारणभूतात्संशयो युक्त इति संशयेन प्रत्यवस्थानं संशयसमः । संशयकारणे सत्यपि संशयश्चेन्न भवेन्मा तर्हि भून्निश्चयकारणे सति निश्चयोऽपि विशेषाभावादित्यभिसन्धिः ।

॥ संशयसमस्योत्तरम् ॥

अस्येदमुत्तरं "साधर्म्यात् संशयो न संशयो वैधर्म्यात् उभयथा संशये सत्यनन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेध" इति । (5-1-15) अयमर्थः । सामान्यादैन्द्रियकत्वात् संशये प्रसक्तेऽपि वैधर्म्यात्कृतकत्वान्न युक्तः । तस्य (संशयस्य) विशेषत्वेनोपलभ्यमानस्य संशयविरोधित्वादनित्यनिश्चयहेतुत्वाच्च । यदि कृतकेऽपि संशय एवाभ्युपेयते तदा साधर्म्याद्वैधर्म्यादप्युभयथा संशयेऽभ्युपगम्यमाने (संशये) सत्यनन्तसंशयप्रसङ्गः संशयस्य निवर्तकाभावात् ।

॥ संशयानुपपत्तिरेवेति सिद्धान्तनिरूपणम् ॥

यत्त्विदमभिधीयते सत्यपि कृतकत्वे संशयकारणस्यापि संभवात् शब्दे संशयो युक्त इति तत्राह—**नित्यत्वानभ्युपगमादित्यादि** । सर्वदा संशयकर्तृत्वान-

भ्युपगमात् सामान्यस्य समानधर्मस्येत्यर्थः । न खलु शिरःपाण्यादिविशेषदर्शनेऽप्यूर्ध्वत्वसामान्यात्संशेरते जनाः । तस्मादयं अप्रतिषेधः प्रतिषेधाभासस्त्वित्यर्थः । सङ्ग्रहाधिकारे पुनरस्यानभिधानं विस्तरभयादेवेति मन्तव्यम् ।

॥ प्रकरणसमसूत्रार्थवर्णनम् ॥

"उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम" (5 - 1 - 16) इति सूत्रान्तरम् । तस्यार्थः--उभयं च तत्साधर्म्यं चोभयसाधर्म्यं द्वयमित्यर्थः । प्रक्रियत इति प्रक्रिया पक्षः प्रतिपक्षश्च तत्रानित्यसाधर्म्यात् पक्षसिद्धिरिव नित्यसाधर्म्यात्प्रतिपक्षस्यापि सिद्धिरिति । साधर्म्यग्रहणमुपलक्षणार्थम् । उभयवैधर्म्यादित्यपि द्रष्टव्यम् । अस्यापि प्रसङ्गस्य साधर्म्यवैधर्म्यसमाभ्यामुक्तिमात्रनिबन्धनो भेद इत्य[न]भिधानं सङ्ग्र(हो)हे । यदि पुनर्विरुद्धाव्यभिचारिवत्त्रिरूपेण साधर्म्येण प्रत्यवस्थानं प्रकरणसमः, साधर्म्यमात्रेण प्रत्यवस्थानं साधर्म्यसम इति भेदोऽभ्युपेयते तदा संभवत्यपि किंचिद्वैलक्षण्ये विस्तरभयादेवानभिधानम् ।

॥ विरुद्धाव्यभिचारिप्रकरणसमयोः असङ्कीर्णोदाहरणे ॥

इह च यदा[1]प्रतिवादिस्तम्भनार्थमेव द्वितीयो हेतुप्रयोगः तदा विरुद्धाव्यभिचारिहेत्वाभासत्वम् । यदा द्वितीयवाद्यपि स्वपक्षनिश्चयमेवाभिसन्धाय प्रतिहेतुं प्रयुञ्जीत तदा प्रकरणसमजात्युत्तरं वेदितव्यमिति विवेकः ।

॥ प्रकरणसमस्योत्तरम् ॥

उत्तरं पुनरस्योच्यते—"प्रतिपक्षोपपत्तेः प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः ।" (5 - 1 - 17) प्रतिपक्षोपपत्तिरिति । द्वितीयपक्षमपेक्ष्य प्रथमसाधनमेवात्र प्रतिपक्ष उक्तः । तस्मात्प्रतिपक्षात् प्रथमसाधनात् प्रकरणस्य प्रथमपक्षस्य सिद्धेः तत्प्रतिषेधानुपपत्तिः, द्वितीयपक्षस्योत्थानमेव न संभवतीत्यर्थः । तत्र हेतुः प्रतिपक्षोपपत्तेरिति । प्रथमसाधनस्य निर्दोषत्वादित्यर्थः ।

---

1. प्रतिहेतु—मा.

**त्रैकाल्यासिद्धेर्हेतोरहेतुसमः । यदि पूर्वं साधनम् असति साध्ये कस्य साधनं, अथ पश्चात् अविद्यमानं कथं साधनं ? अथ युगपत् किं कस्य साधनं, साध्यं वा, द्वयोस्तुल्यकालत्वादिति । अस्योत्तरमाह—न हेतुतः साध्यसिद्धेः । प्रवृत्त्यादिविरोधः सूत्रार्थः ।**

---

॥ अहेतुसमलक्षणम् ॥

प्रसङ्गान्तरमाह—**त्रैकाल्यासिद्धेः हेतोरहेतुसम इति** । सूत्रार्थमाह-यदीति । त्रेधाऽत्र विकल्पनीयम्—साध्यात्पूर्वं साधनमुत पश्चादाथ युगपदिति । पक्षत्रयेऽपि क्रमेण दोषमाह—**यदि पूर्वं साधनं साध्यात् असति साध्ये कस्य साधनम् ? अथ पश्चात् अविद्यमानं कथं साधनं ?** साध्यसिद्धिसमसमय-मविद्यमानं भविष्यद्रूपत्वात् कथं साधनं भवितुमर्हतीत्यर्थः । **अथ युगपत्तथापि किं कस्य साधनं साध्यं च द्वयोस्तुल्यत्वा**द्विद्यमानत्वेनेति । तदेवं त्रैकाल्या-सिद्धेः कालत्रयसम्बन्धित्वेन हेत्वसिद्धेः हेतुः कथं साधनं साध्याद्विशिष्यत इति प्रत्यव-स्थानमहेतुसमः ।

॥ अहेतुसमस्योत्तरम् ॥

अस्योत्तरमाह—**न हेतुतः साध्यसिद्धेरिति** । अयमर्थः । कारकात् ज्ञापकाद्वा हेतुतः साध्यस्य कार्यस्य ज्ञाप्यस्य वा सिद्धेर्निष्पत्तेः ज्ञप्तेश्च हेतोर्न प्रागुक्तः प्रतिषेध उपपद्यत इति । यदि तु लोकसिद्धोऽपि साध्यसाधनभावः कुतर्कवशादपल-प्यते तर्हि सर्वहेतूनामहेतुत्वं प्राप्नोति न कश्चन क्वचन प्रवर्तेत निवर्तेत वेति जगत् अन्धमूकमिव सर्वमेव व्यापारविरहि स्यात् । तदेतदाह—**प्रवृत्त्यादिविरोधः सूत्रार्थ** इति ।

॥ साध्यसाधनयोः सहभावपूर्वापरभावादिविवेकः ॥

पूर्वापरसहभावाःपुनः साधनानां साध्यैः सह यथादर्शनमभ्युपगमनीयाः । तथा हि—कारकहेतुः कार्यात् प्रागेव । ज्ञापकस्तु कश्चित्प्राग्भावी यथा सम्प्रत्यु-पलभ्यमानानां रूपादीनां चक्षुरादिः । कश्चन पश्चाद्भावी यथा कार्यहेतुः कारकस्य । कश्चित्तु सहभावी यथा रूपं स्पर्शस्य । साध्याभावेऽपि च साधनव्यपदेशः साधनाभावे साध्यव्यपदेशश्च योग्यतामात्रमपेक्ष्य न विरुध्यत इति ।

**प्रतिषेधानुपपत्तिश्च** (5 - 1 - 20) **त्रैकाल्यासिद्धेः । स्ववचनेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थः ।**

---

॥ प्रतिषेधानुपपत्तिविवरणम् ॥

परिहारान्तरमाह— **प्रतिषेधानुपपत्तेश्च ।**

अस्यार्थः । प्रतिषेधस्यापि प्रतिषेधः स्यात् पूर्वापरसहभावेन विकल्प्यमानस्यानुपपत्तेः निरवद्यो हेतुराद्य इति । तदिदमाह—**त्रैकाल्यासिद्धेः** हेतोः **स्ववचनेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थ इति ।**

॥ अर्थापत्तिसमलक्षणम् ॥

अर्थापत्तितः प्रतिपक्षसिद्धेः अर्थापत्तिसम ( 5 - 1 - 21 ) इति सूत्रान्तरम् । अयमर्थः । अनित्यसाधर्म्यात् कार्यत्वादनित्यः शब्द इत्यभिदधानस्यार्थादापन्नं नित्यसाधर्म्यादस्पर्शनत्वान्नित्य इति । तथा वैधर्म्यप्रयोगेऽप्यर्थापत्त्या प्रत्यवस्थानं प्रत्येतव्यम् । साधर्म्यवैधर्म्यसमाभ्यां अस्याप्युक्तिमात्रेण भेद इत्यनभिधानं सङ्ग्रहे । अथ साधर्म्येण प्रयोगे साधर्म्येणैव प्रत्यवस्थानं साधर्म्यसमः । तथा वैधर्म्यप्रयोगे वैधर्म्येणैव प्रत्यवस्थानं वैधर्म्यसमः । अर्थापत्तिसमः पुनरनित्यसाधर्म्यादनित्यशब्दमभिदधानस्यार्थादापन्नमनित्यवैधर्म्यान्नित्य इत्येवं साधर्म्यप्रयोगे वैधर्म्येण प्रत्यवस्थानम् । तथा वैधर्म्येण प्रयोगे साधर्म्येण प्रत्यवस्थानं नित्यवैधर्म्यादनित्यः शब्द इति ब्रुवाणस्यार्थादापन्नं नित्यसाधर्म्यादस्पर्शत्वात् नित्य इति भेदः । तर्हि सम्भवत्येवंविधे भेदे विस्तरभयादनभिधानं सङ्ग्रहे ।

॥ अर्थापत्तिसमस्योत्तरम् ॥

अत्रोत्तरम्—"अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वात्" इति । ( 5 - 1 - 21 )

अस्यार्थः । अनुक्तस्य नित्यत्वपक्षस्यार्थापत्तितः सिद्धौ स्वीक्रियमाणायां पक्षस्य नित्यत्वस्य हानेरुपपत्तिर्जाता । कस्मात् ? पक्षहानेरप्यनुक्तत्वात् । नचेदमर्थापत्तेः स्वरूपं यदुत वाक्यार्थविपर्ययेणार्थान्तरप्रसाधनम् । अपि तर्हि, येन

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तिरविशेष-समः (5-1-23) । यदि घटशब्दयोरेकस्य कार्यत्वस्योपपत्तेरनित्यत्वेनाविशेष इष्यते सर्वभावानां तर्हि सद्भावोपपत्तेरविशेषः प्रसज्यत इति ।**

**तत्रेदमुच्यते—सर्वथाऽविशेषे प्रत्यक्षादिविरोधः, अनित्यत्वेनाविशेषेऽनुमानागमविरोधः । केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनमिति ।**

---

विना यन्नोपपद्यते तत्सोपपादकमाक्षिपदर्थापत्तिरभिधीयते । नचेह नित्यसाधर्म्यात् नित्यत्वसिद्धिं विना कृतकत्वादनित्यत्वसिद्धेरनुपपत्तिः काचित् । येन नित्यसाधर्म्यान्नित्यत्वसिद्धिराक्षिप्येतेति ।

॥ अर्थापत्तिसमस्यादूषकत्वे अनैकान्तिकत्वरूपहेत्वन्तरकथनम् ॥

दूषणान्तरमाह—**अनैकान्तिकत्वाच्चार्थापत्तेरिति** । अस्यार्थः—येयं वाक्यार्थविपर्ययेणार्थान्तरापादनरूपार्थापत्तिस्तस्या अनैकान्तिकत्वात् 'पक्षहानेरुपपत्तिः' अनुषज्यते । न खलु घनस्य ग्रा(व)ण्णः पतनमित्युक्तेऽर्थादापद्यते द्रवत्वादपाम-पतनमिति । तत्र हि पाषाणपतनोपयोगिगौरवप्रकर्षप्रतिपादनाय केवलं घनपद-मुपादीयते प्रयोक्तृभिः न पुनरपामपतनप्रतिपत्तय इति ।

॥ अविशेषसमलक्षणम् ॥

प्रसङ्गान्तरमाह—**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्ति-रविशेषसम इति** । सूत्रार्थमाह—**यदि घटशब्दयोरेकस्य कार्यत्वस्योपपत्तेर-नित्यत्वेनाविशेष इष्यते सर्वभावानां तर्हि सद्भावोपपत्तेरविशेषः** सत्वाख्यैक-धर्मोपपत्तेरविशेषः **प्रसज्यते । तत्रेदमुत्तरमुच्यत इति** । सर्वाविशेषः सर्वथा विवक्षितः, किं वा अनित्यत्वेनैव, किं वा येन केनचिद्रूपेणेति । कल्पत्रयेऽपि क्रमेणोत्तरमाह—**सर्वथाऽविशेषे प्रत्यक्षादिविरोधः । अनित्यत्वेनाविशेषे त्वनुमानादिविरोधः** आत्मादेः [1]सदकारणत्वाद्यनुमानेन नित्यत्वसिद्धेः । **केन-चिदविशेषे प्रमेयत्वादिना सिद्धसाधनमिति ।**

---

1, सदकारणवन्नित्यं इति काणादं सूत्रम्

**निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः (5-1-27)। पृथिव्यादिषु कार्यत्वसिद्धये निर्दिष्टस्य सावयवत्वस्याभावेऽपि बुद्ध्यादौ कार्यत्व-**

---

॥ अविशेषसमस्य सौत्रमुत्तरम् ॥

सौत्रं त्विदमुत्तरम्—"क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः" (5-1-34) इति। अस्यार्थः। क्वचित् घटादौ तद्धर्मस्यानित्यत्वस्योपपत्तेः प्रमाणेनोपपत्तेः, क्वचिदाकाशादौ चानुपपत्तेः प्रमाणतोऽनुपलब्धेः, प्रतिषेधाभावः सर्वाविशेषप्रसङ्गाभाव इति। अथ वा क्वचिदनित्यत्वादौ तत्साधकस्य धर्मस्य कार्यत्वादेः हेतुत्वेनोपपत्तेः सम्भवात्, क्वचिच्च सर्वाविशेषे सत्त्वस्यान्यस्य वा प्रमाणान्तरबाधादिना हेतुत्वेनानुपपत्तेरसम्भवात् प्रतिषेधाभाव इति पूर्ववद्व्याख्येयम्।

॥ उपपत्तिसमस्य लक्षणम् ॥

अथापरं सूत्रं "उभयकारणोपपत्तेरुपपत्तिसमः।" (5-1-25) यद्य-नित्यत्वकारणोपपत्तेः अनित्यः शब्दो नित्यत्वकारणस्याप्यस्पर्शत्वस्योपपत्तेः नित्योऽप्येषितव्य इत्युपपत्त्या प्रत्यवस्थानमुपपत्तिसमः। साधर्म्यवैधर्म्याभ्यामुक्तिमात्रेणैवास्यापि भेद इत्यनभिधानं सङ्ग्रहाधिकारे।

॥ उपपत्तिसमस्योत्तरम् ॥

अस्योत्तरं—"उपपत्तिकारणानुज्ञानादप्रतिषेधः" इति (5-1-26)। तस्यार्थः। उभयकारणोपपत्तेरिति ब्रुवाणेनानित्यत्वकारणोपपत्तिरप्यनुज्ञातेति न तत्प्रतिषेधो युक्तः। अस्माभिः पुनरस्पर्शत्वस्य व्यभिचारिणो न कारणत्वमनुज्ञायत इति तत्प्रतिषेधो युक्त एवास्माकमिति भेदः।

॥ उपलब्धिसमस्य लक्षणम् ॥

प्रसङ्गान्तरं लक्षयति—**निर्दिष्टकारणाभावेऽप्युपलम्भात् उपलब्धिसम इति।** सूत्रं योजयति—**पृथिव्यादिषु कार्यत्वसिद्धये निर्दिष्टस्य सावयवत्वस्याभावेऽपि बुद्ध्यादौ कार्यत्वमुपलब्धमिति।** तस्मादप्रयोजकोऽयं हेतुरिति भावः। उपलब्ध्या प्रत्यवस्थानमुपलब्धिसम इति व्युत्पादनीयम्।

**मुपलब्धम् । इत्यतोऽप्रयोजको हेतुः । सपक्षैकदेशस्यापि धूमादेर्गमकत्वदर्शनादप्रतिषेधः । कथं तर्हि बुद्ध्यादौ कार्यत्वसिद्धिः ? अत आह–कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः (5–1–28) । प्रमाणान्तरादपि कार्यत्वसिद्धेरित्यर्थः । प्रमाणं चानुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं चानुपलभ्यमानत्वात् घटादिवदिति । तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपलब्ध्युपपत्तेरनुपलब्धिसमः (६–1–29) । तस्य बुद्ध्यादिकार्यस्य,**

---

॥ उपलब्धिसमस्योत्तरम् ॥

अत्रेदमुत्तरम्––**सपक्षैकदेशस्यापि धूमादेः गमकत्वदर्शनादप्रतिषेधः इति ।** सपक्षस्यैकदेशे वर्तमानो हेतुः सपक्षैकदेश इत्युपचर्यते । यद्वा सपक्षस्यैकदेशोऽस्त्यस्येति वैयधिकरण्ये बहुव्रीहिः । नचाप्रयोजको नामासिद्धादिभ्यो भिद्यमानहेत्वाभासः सम्भवति । यस्य तु व्यतिरेकः सन्दिह्यते बाधो वा तस्यापि सन्दिग्धानैकान्तभेदत्वं सन्दिग्धकालातीतभेदत्वं वेति निरूपितं हेत्वाभासप्रस्तावे । न चात्र भागासिद्धत्वमप्रयोजकं विवक्षितं बुद्ध्यादेरपक्षीकृतत्वात् । न खलु बुद्ध्यादौ सावयवत्वेन कार्यता साधयितुमभिप्रेता । परः पृच्छति––**कथं तर्हि बुद्ध्यादेः कार्यत्वसिद्धिरिति ।** सूत्रकृतैवात्र उत्तरमुदितमित्याह – **कारणान्तरादपि तद्धर्मोपपत्तेः अप्रतिषेध इति ।** योजयति––**प्रमाणान्तरादपि कार्यत्वसिद्धेरित्यर्थ इति ।** किं तर्हि तत् प्रमाणमित्यत आह––**प्रमाणं चानुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं चानुपलब्धिरिति ।** कार्यं बुद्ध्यादिकं अनुपलब्धिकारणेष्वसत्स्वपि प्रागूर्ध्वं चानुपलभ्यमानत्वात् घटादिवदित्यनुमानं प्रमाणमित्यर्थः । कारणसमवायं, प्रागसतः सत्तासमवायं वा कार्यत्वमभिप्रेत्य प्रागूर्ध्वं चेति हेतुविशेषणद्वयं वेदितव्यम् । अपरथा तु अभावेन व्यभिचारात् ।

॥ अनुपलब्धिसमस्य लक्षणम् ॥

एतेनैव प्रसङ्गेन प्रसङ्गान्तरमुत्थापयति––**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसम इति ।** सूत्रं विवृणोति–**तस्य बुद्ध्यादिकार्यस्यानुपलब्धेरनुपलम्भादभावसिद्धौ अनुपलब्धिविपरीतोपलब्ध्युपपत्तेः**

**अनुपलब्धेः अनुपलम्भादभावसिद्धौ अनुपलब्धिविपरीतोपलब्ध्युपपत्तेः प्रागूर्ध्वमपि बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्रायः। अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः। नास्तीति ज्ञानमनुपलब्धिः। सा च तत्स्वभावतया प्रत्यात्मसम्वेद्या अतस्तदनुपलब्धिरसिद्धेत्यभिप्रायः।**

---

**प्रागूर्ध्वमति बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्रायः** इति। यदि पुनरनुपलब्धिरप्युपलभ्येत तर्ह्युपलभ्यत इत्युपलब्धिरेव भवेदसाविति द्रष्टव्यम्। तदेतत् परिहरति — **अनुपलम्भात्मकत्वादनुपलब्धेरहेतुरिति।** तद्विवृणोति—**नास्तीति ज्ञानमनुपलब्धिः** पर्युदासवृत्त्या **सा तत्स्वभावतया प्रत्यात्मवेद्या।** **अतः तदनुपलब्धिरसिद्धेत्यभिप्रायः।**

॥ अनुपलब्धिपदस्य प्रसज्यप्रतिषेधार्थत्वेन व्याख्याय सूत्रयोजनम् ॥

यदाप्युपलब्धेरभावोऽनुपलब्धिरिति प्रतिषेधवृत्तिराश्रीयते तदाप्युपलब्ध्यभावस्य प्रत्यात्मवेद्यत्वाद्धेत्वसिद्धिरिति व्याख्येयम्। तथा च सूत्रं "ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम्" (5-1-31) इति। ज्ञानभेदानां प्रत्यात्मं भावाभावयोः संवेदनादहेतुरयमिति प्रकृतानुषङ्गेण योजयितव्यम्। यत् पुनरुपलभ्यत इत्युपलब्धिरेव भवेदनुपब्धिरपीत्युदितम्। तदसत्। कयाचन व्युत्पत्त्या शब्दसाम्येऽप्यर्थभेदस्यानुभवभेदानुसारिणः पराकर्तुमशक्यत्वादिति।

॥ अनित्यसमलक्षणविवरणम् ॥

अथापरं सूत्रं "साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः" (5-1-32) इति। अयमर्थः। यद्यनित्यघटसाधर्म्यादनित्यः शब्द इत्यभिधीयते हन्त घटेन सर्वभावानां सत्त्वादिसाधर्म्यं समस्तीति सर्वेषामनित्यत्वप्रसङ्ग इत्यनित्यत्वेन प्रत्यवस्थानमनित्यसम इति। अयं पुनरविशेषसमादुक्तिमात्रेण भिद्यत इति नाभिहितः सङ्ग्रहे। तत्रोक्तमेवोत्तरमिहाप्यनुसन्धेयम्।

॥ उत्तरान्तरकथनम् ॥

व्युत्पत्त्यर्थमुत्तरान्तरमाह सूत्रकृत् "साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्" (5-1-33) इति। प्रसङ्गवादी पर्यनुयोक्तव्यः—सर्वानित्यत्वप्रसङ्गः

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः (5–1–35) । अनित्यत्वधर्मस्य नित्यं सर्वदा सद्भावाद्धर्मिणोऽपि शब्दस्य सर्वदा सद्भावप्रसङ्गः । अथानित्यत्वं सर्वदा नास्ति तथाप्यनित्यत्वस्याभावात् नित्यः शब्दः इति । अनित्यत्वस्य सर्वदाऽभ्युपगमे नित्यत्वस्य विरोधः । अनभ्युपगमे चासिद्धो हेतुः नित्यानित्यत्व-**

---

किमर्थमभिधीयते भवता ? न खलु सर्वानित्यत्वप्रसञ्जनेन शब्दानित्यत्वमपाकृतं भवतीति । स पुनरेवं पर्यनुयोक्तो यद्यभिदधीत यस्मादतिप्रसङ्गः तस्मान्नार्थः सिद्ध्यति यथा वचनमात्रादिति । तत्रेदमभिधीयते । वचनमात्रेण साधकेन साधर्म्यात् शब्दानित्यत्वहेतोः हेतुत्वासिद्धेः स्वीकारे भवदुक्तस्यापि प्रतिषेधस्यासिद्धिः प्राप्नोति । कस्मात् ? प्रतिषेध्येनासाधकेनास्मदीयहेतुना साधर्म्यादभिधेयत्वादिलक्षणात् । तस्मादयुक्तो भवदीयः प्रतिषेध इति ।

॥ नित्यसमलक्षणम् ॥

प्रसङ्गान्तरमाह—**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसम इति ।** अस्यार्थमाह—अनित्यत्वधर्मस्य नित्यं सर्वदा **सद्भावाद्धर्मिणोऽपि शब्दस्य सर्वदा सद्भावः प्रसज्येत ।** नह्यसति धर्मिणि धर्मः संभवेदिति भावः । **अथानित्यत्वं सर्वदा नास्ति तथाप्यनित्यत्वाभावान्नित्यः शब्द इति** नित्यत्वेन प्रत्यवस्थानं नित्यसमः ।

॥ नित्यसमस्योत्तरम् ॥

अस्येदमुत्तरम्—अनित्यत्वस्य सर्वदाभ्युपगमान्नित्यत्वविरोधः अनभ्युपपमे चासिद्धो हेतुरिति । तथा च सूत्रं "प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभाव (5 - 1 - 36) इति । अस्यायमर्थः—अनित्यत्वविशिष्टतया पतिषेध्ये शब्दे नित्यमनित्यभावादिति वदता तावदनुज्ञातं शब्दस्यानित्यत्वम् । अतश्च नित्यत्वोपपत्तेः प्रतिषेधो न युक्त इति । यदि पुनरनित्यत्वं शब्दे नाभ्युपगम्यते तथापि नित्यमनित्यभावादिति हेतोरसिद्धत्वादयुक्त एव प्रतिषेध इत्यभिसन्धिः ।

॥ नित्यत्वापादनपरत्वेऽपि दूषणोक्तिः ॥

स्यादेतत् अनित्यत्वं न प्रतिषिध्यते । किं तर्हि ? नित्यत्वमप्यापाद्यते शब्द

**विरोधाच्च प्रध्वसंश्चानित्यत्वं न तस्मिन्सति शब्दसद्भावः इति । एतेना-**

---

इति तत्राह—**नित्यानित्यत्वविरोधाच्चेति** । न वै विधिप्रतिषेधावेकत्र सम्भवतः कुम्भतदभाववदेकत्र भागे इत्यर्थः । एतमेव विधिप्रतिषेधविरोधमभिप्रेत्याह—**प्रध्वंसश्चानित्यत्वं न तस्मिन् सति शब्दसद्भाव इति** । हन्तैवं सति शब्दकाले प्रध्वंसाभावात्कथमनित्यः शब्द इति । नैष दोषः । भविष्यतस्तद्धर्मत्वात् । भविष्यन्नेव खलु प्रध्वंसः पदार्थस्यानित्यता । तदधीननिरूपणत्वाच्च तद्धर्म इत्याख्यायते । नतु तदाश्रयत्वेन । तथा च यस्य नाशो भविष्यति, तदनित्यमित्यभिधीयते । यद्वा प्रध्वंसयोग्यतैवानित्यता प्रध्वंसपदेनोपचारादुक्तेति ।

॥ कार्यसमस्य लक्षणम् ॥

अथापरं सूत्रं "कार्यानेकत्वात् कार्यसम" (5 - 1 - 37) इति ।

एषोऽर्थः—वर्णात्मकः शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद्घटवदित्युक्ते परः प्रत्यवतिष्ठते-न तावत् प्रयत्नानन्तरोत्पादः प्रयत्नानन्तरीयकत्वं विवक्षितव्यं परं प्रत्यसिद्धिप्रसक्तेः । तस्मात प्रयत्नानन्तरमुपलम्भो वाच्यः । तथा सति प्रयत्नानन्तरमुपलभ्यमानानां घटादीनां उत्पादश्च दृष्टः, दृष्टा चाभिव्यक्तिः चिरनिखातनिध्यादीनाम् । तत्किं प्रयत्नानन्तरमुत्पादः शब्दस्य, किं वा अभिव्यक्तिरिति नियमकारणं न पश्याम इति कार्यभेदेन प्रत्यवस्थानं कार्यसम इति ।

॥ कार्यसमस्योत्तरकथनम् ॥

अस्येदं समाधानं—"कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः" इति । (5 - 1 - 38) कार्यादभिव्यक्तिरूपादन्यत्वं यस्योत्पादस्य तस्मिन् प्रयत्नस्याहेतुत्वमनुपलब्धिकारणोपपत्तेर्भवति । नच शब्दस्यानुपलब्धिकारणं (नो)उपलभ्यते किंचित् । (प्राप्य) तेन प्रयत्नादुत्पाद एव शब्दस्य युक्त इति ।

॥ सूत्रस्य व्याख्यान्तरम् ॥

यद्वा कार्यात् जन्मनोऽन्यत्वं यस्य शब्दाभिव्यक्तिरूपस्य तत्र प्रयत्नस्याहेतुत्वम् । कस्मात् ? अनुपलब्धिकारणस्यावरणादेरुपपत्तेः सद्भावादभिव्यक्तिं प्रति

न्यत्वस्यात्मनोऽनन्यत्वाद्न्यत्वं नास्तीत्यादीन्यसदुत्तराणि प्रत्युक्तानि ।

---

प्रयत्नस्य हेतुत्वमन्यत्रोपलब्धम् । नच आवरणादिकमस्ति शब्दस्येति व्यतिरेक-मुखेन योजनीयम् ।

॥ उक्तजातीनां इतरजातिभेदोपलक्षणत्वम् ॥

एतेन जातिभेदतदुत्तरविस्तराभिधानेनापरेऽपि जातिभेदाः तदुत्तराणि च सुखेन व्युत्पादितानि भवन्ति प्रकारदर्शनादिति । **एतेनान्य[1]स्यात्मनोऽनन्यत्वा-(न)द्न्यत्वं नास्तीत्यसदुत्तराणि प्रत्युक्तानीति** । शब्दानित्यत्वपरीक्षायां हि अभ्यासादिति (2 - 2 - 30) पूर्वपक्षं कृत्वा नान्यत्वेऽप्यभ्यासोपचारादिति दूषयित्वा पुनः पूर्वपक्षमाह सूत्रकारः—" अन्यदन्यस्मादनन्यत्वादनन्यदित्य(न)न्यताऽभावः (2 - 2 - 31) इति । अस्यार्थः । यदिदमन्यदित्युच्यते तत्किमात्मनोऽन्यदुतानन्यत् । यद्यन्यत्तदाऽऽत्महानान्नास्त्येव । यद्यनन्यत्तदाप्यनन्यत्वादेवा (न) न्यन्न भवतीत्य-न्यताऽभाव इत्यनन्यसमा जातिः । अयमर्थः सङ्गृहीतोऽन्यस्येत्यादिना ।

॥ सम्प्रतिपत्तिसमाख्यजातिलक्षणम् ॥

अदिपदेन च " विप्रतिपत्तौ च सम्प्रतिपत्तेः " इति सङ्गृहीतम् । अस्यार्थः—यदि न विप्रतिपत्तिः सम्प्रतीयते तदाऽस्तीति कथं प्रतिपद्यसे । अथ सम्प्रतीयते तथापि सम्प्रतीयत इति सम्प्रतिपत्तिरेव सा, न विप्रविपत्तिरिति सम्प्रतिपत्तिसमा जातिः ।

॥ व्यवस्थासमस्य लक्षणम् ॥

तथा " अव्यवस्थाऽऽत्मनि व्यवस्थापितत्वाच्च[2] अव्यवस्थाया " (2 - 1 - 4) इति । अत्र षष्ठी विवक्षायां अव्यवस्थाया अभाव इत्यध्याहार्यम् । पञ्चमीविवक्षाया-मव्यवस्थातो न संशय इति योजनीयम् । इदमुक्तं भवति । यद्यव्यवस्थात्मनि न व्यतिष्ठेताव्यवस्था तदात्महानान्नास्त्येव । यदि तु नचात्मनि व्यवतिष्ठेत तथापि व्यवस्थानाद्व्यवस्थैवासाविति व्यवस्थासमा जातिरिति ।

---

1. अन्यत्वस्य    2. व्यवस्थितत्वाच्च—सू.

**निमित्तान्तरात् संज्ञान्तरे योज्यमानेऽप्यर्थे तथाभावस्य निराकर्तुमशक्यत्वात् आनन्त्यान्न सर्वाणि जात्युत्तराण्युदाहर्तुं शक्यन्ते । सूत्राणामप्युदाहरणार्थत्वादिति । उक्ता जातिभेदाः । अथेदानीं निग्रहस्थानान्युच्यन्ते । तान्यपि विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पानन्त्यादसङ्ख्यातानीत्यतः संक्षेपत उच्यन्ते**

---

॥ असदुत्तराणां निराकरणप्रकारः ॥

कथं पुनरेतान्यसदुत्तराणि पराकरणीयानीत्यत आह—**निमित्तान्तरात्संज्ञान्तरे योज्यमाने सत्यर्थे तथाभावस्य[1] निराकर्तुमशक्यत्वादिति ।**

न खलु कार्यान्तरजनकत्वेन कारणशब्दे कार्य एव योज्यमाने तस्य स्वकारणापेक्षया कार्यत्वमपहीयते । नाप्याकाशादौ स्वात्माजनकत्वेनाकारणत्वाभिधाने योज्यमाने स्वकार्यं प्रति कारणत्वमपावर्तत इत्यभिसन्धिः । **आनन्त्यान्न सर्वाणि जात्युत्तराणि उदाहर्तुं शक्यन्ते ।** नन्वेवं सति सूत्रविरोध इत्यत आह-**सूत्राणामप्युदाहरणार्थत्वादिति ।** यदि चतुर्विंशतिनियमं जातिषु सूत्रकारोऽभ्यधास्यत् न जात्यन्तरेण पूर्वपक्षं व्यधास्यत । अभ्यासाचानन्यसमादिजात्यन्तरेणेत्यभिसन्धिः ।

॥ निग्रहस्थानानां संक्षेपतः स्वरूपकथनपूर्वकं निरूपणम् ॥

वृत्तानुकीर्तनपूर्वकं वर्तिष्यमाणसङ्गतिमाह—**उक्ता जातिभेदाः । अथेदानीं निग्रहस्थानान्युच्यन्ते ।** क्रमप्राप्तत्वादिति शेषः । **तान्यपि जातिवद्विप्रतिपत्त्यप्रतिपत्त्योरवान्तरसामान्ययोर्विकल्पानन्त्या**द्विशेषणानामनन्तत्वात् । **असङ्ख्यातानीत्यतः** कारणात्**संक्षेपतो** व्युत्पाद्यन्त इति । तत्र विशेषलक्षणप्रवृत्तये विभागसूत्रमिदं "प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तं अननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञापर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि[2] । (5-2-1) इति । वचनधर्माणामपि प्रतिज्ञाहान्यादीनां

---

1. अर्थतथाभावस्य—मा.
2. इदं सूत्रं मूले नास्तीति गम्यते

**—साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः यदि कृतकत्वादनित्यश्शब्द इष्यते तर्ह्याकाशवदमूर्तत्वान्नित्यः किं नेष्यते । एवं प्रतिवादिनोक्ते वाद्याह—भवतु किं नो बा[ध्यत] इति । तस्य नित्यत्वाभ्युपगमेना नित्यत्वप्रतिज्ञा हीयत इत्यतः प्र[ति]ज्ञाहानिर्नाम निग्रहस्थानं भवति ।**

---

विप्रतिपत्त्यप्रतिपत्तिलिङ्गतया परम्परया पराजयनिमित्तत्वात् निग्रहस्थानत्वमुदितमिति वेदितव्यम् ।

॥ प्रतिज्ञाहानिलक्षणम् ॥

तत्र तावत्प्रतिज्ञाहानिं लक्षयति—**साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः ।** अस्यार्थः । साधनमर्हतीति साध्यः पक्षः तत्र प्रतिदृष्टान्तः प्रत्यनीकदृष्टान्तो वैधर्म्यदृष्टान्तस्तद्धर्मस्य साध्यधर्मविरुद्धस्यानुज्ञा अङ्गीकारः प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवतीति । एतेन "प्रतिदृष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः (5-2-2) इति सूत्रस्यार्थः सङ्गृहीतः । साध्यपदेन च स्वदृष्टान्तपदस्यार्थो दर्शितः । साधनाधिकरणत्वादिसाधर्म्यात्पक्षस्यैव साध्यपर्यायस्य स्वदृष्टान्तशब्देनोपचरितत्वात् । प्रयोजनं चोपचारे प्रतिदृष्टान्तधर्मानभ्युपगमेऽपि प्रतिज्ञातार्थत्यागमात्रे प्रतिज्ञाहानिरिति द्योतनम् । तत्रेदमुदाहरणं—**यदि कृतकत्वादनित्यः शब्द इष्यते**[1] **नन्वाकाशवदमूर्तत्वान्नित्यः किं नेष्यते । एवं प्रतिवादिनोक्ते वाद्याह-भवतु किं नो बाध्यत इति । तस्य नित्यत्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयत**[2] इत्यतः **प्रतिज्ञाहानिर्निग्रहस्थानं भवतीति ।**

॥ प्रतिज्ञात्यागे निदानकथनम् ॥

कथं पुनः स्वयमनित्यं शब्दमभ्युपगम्य नित्यं प्रतिपद्येत ? नैष दोषः । परोदीरितजात्युत्तरेणाकुलीकृतस्य सिद्धसाध्यतापहृतचेतसो नित्यत्वाभ्युपगमसम्भवात् । भ्रान्तेः पुरुषधर्मत्वात् । अभ्रान्तापेक्षयात्वसाधनाङ्गवचनादेरप्यनिग्रहप्रसक्तेः

---

1. इत्युच्यते नन्वाकाश—मा.
2. इत्यर्थः - इति शेषः

**प्रतिज्ञातार्थस्य प्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् । सर्वमनित्यं सत्त्वादित्यत्र दृष्टान्ताभावेन प्रतिज्ञातार्थस्य प्रतिषेधे धर्मो विवादास्पदीभूतत्वादिलक्षणः । तस्य विकल्पः प्रतिज्ञातार्थविशेषणत्वेन योजनं; तदर्थः प्रतिषेधनिवृत्त्यर्थः । यथा मशकार्थो धूम इति निर्देशः । विवादास्पदीभूतं सर्वमनित्यमिति एतत्प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवदिति ।**

---

अस्तंगतैव तपस्विनी निग्रहकथेति प्रसज्येतेति । प्रतिज्ञाहानिसमानन्यायतायां हेतुहान्यादिकमपि निग्रहस्थानमूहनीयं सूत्रस्योपलक्षणपरत्वादिति ।

व्याख्यानं भाष्यकारीयं दूषितं न्यायभूषणे ।
सङ्ग्रहप्रक्रमान्नेह तत्प्रपञ्चोऽभिधीयते ॥ १ ॥

॥ प्रतिज्ञान्तरलक्षणम् ॥

एवमुत्तरत्रापि सूत्रान्तरमाह—**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरमिति** (5 - 2 - 3) सूत्रार्थं वर्णयति—**सर्वमनियं सत्त्वादित्यत्र दृष्टान्ताभावेन प्रतिज्ञातार्थस्य प्रतिषेधे कृते धर्मो विवादादीभूतत्वलक्षणः तस्य विकल्पः प्रतिज्ञातार्थविशेषणत्वेन योजनं** विशेषणत्वेन कल्पनं विकल्प इति व्युत्पत्त्या । **तदर्थ इति प्रतिषेधनिवृत्त्यर्थो-यथा मशकार्थो धूम इति निर्देशः विवादास्पदीभूतं सर्वमनित्यमित्येतत् प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवदिति ।** यथाखल्वविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरं तथा तत्राप्यविशेषोक्तायां प्रतिज्ञायां पराकृतायां विशेषमिच्छतः प्रतिज्ञान्तरं निग्रहनिमित्तं तुल्यन्यायत्वादित्यर्थः ।

॥ प्रतिज्ञान्तरेण हेत्वन्तरमपि उपलक्ष्यतां प्रतिज्ञाहान्या हेतुहानिवत्
इत्याक्षेपः तद्दूषणं च ॥

ननु तुल्यन्यायत्वादेव प्रतिज्ञाहान्या हेतुहान्यादिकमिव प्रतिज्ञान्तरेण हेत्वन्तरमप्युपलक्ष्यताम् किं तस्य पृथगभिधानेन । पृथगभिधाने वा कथं दृष्टान्तान्तरादिकमपि पृथक् नाभिहितमिति । **नैष दोषः ।** समानन्यायतयेह सङ्ग्रहे हेत्व-

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः; यथा गुणव्यतिरिक्तं द्रव्यं भेदेनानुपलम्भादिति ।**

---

न्तरादेर्दत्तोत्तरावसरस्य वादिनो निग्रहाधिकरणत्वं नान्यथेति द्योतनार्थं हेत्वन्तरस्य पृथगभिधानाभिहितत्वात् इति ।

॥ प्रतिज्ञाविरोधलक्षणम् उदाहरणं च ॥

सूत्रान्तरं पठति—**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध** इति । उदाहरणमाह—**यथा गुणव्यतिरिक्तं द्रव्यं भेदेनानुपलम्भादिति ।** ननु व्यतिरिक्तानामपि कुतश्चिद्विप्रकृष्टानां भावानां तद्व्यतिरेकेणानुपलब्धावपि[1] व्यतिरेकस्य सम्भवात्कथं विरोधावगतिः? मैवम् । वक्तृदोषोद्भावनस्य विवक्षितत्वात् । यदि भेदं नोपलभसे कथं गुणव्यतिरिक्तं द्रव्यमिति प्रतिजानीषे । नह्यविदित एवार्थः युक्तः प्रतिज्ञातुम् । अथोपलभसे भेदं गुणद्रव्ययोः तथापि भेदेनानुपलब्धेरिति कथमभिदधासीति । प्रतिज्ञाहेत्वभिधानयोः परस्परविरोधादयं प्रतिज्ञाविरोधः । तथा विरोधस्य द्विष्ठत्वेऽपि तदप्रामाण्यविवक्षायां प्रतिज्ञाया हेतुना विरोधः प्रतिज्ञाहेत्वोर्विरोध इत्युभयथोदाहरणं द्रष्टव्यम् । तत्र प्रतिज्ञाया हेतुना विरोधस्योदाहरणं—अभेदवादी साङ्ख्यो ब्रूते—गुणव्यतिरिक्तं द्रव्यं तदव्यतिरेकादिति । प्रतिज्ञाहेतूच्चारणमात्रादेवात्र विरोधोऽपि गम्यते । विरुद्धे हेत्वाभासे व्याप्तिस्मरणसापेक्षा प्रतिज्ञाहेत्वोर्विरोधाधिगतिरिति भेदो द्रष्टव्यः । प्रतिज्ञया हेतुविरोधस्योदाहरणं-नास्त्येको भाव इति प्रतिज्ञायां समूहे भावशब्दप्रयोगादिति हेतौ विवक्षिते द्रष्टव्यम् । न खल्वेकाभावे समूहः संभवेत्तस्यैकसमुच्चयरूपत्वात् ।

॥ धर्मकीर्तिकृतप्रतिज्ञाविरोधोदाहरणदूषणं तदाक्षेपश्च ॥

यदत्राकीर्तयद्धर्मकीर्तिः—न चैकमेव किंचिन्नास्तीति ब्रुवाणः कश्चित्समुच्चयरूपमेकं च समूहमिच्छति येन विरोधः स्यादिति । तदसत् । न खलु निःशेषं जगत्प्रत्यक्षम् तत्र विचित्राभिसन्धिषु पुरुषेषु कश्चित्कदाचिदेवमपि प्रमादिच्छतीति सम्भावनायां युक्तमेवोदाहरणमिति । समूहे भावशब्दप्रयोगादिति व्यधिकरणासिद्धोऽयम् । अतो हेत्वाभासतयैव निग्रहस्थानम् । कस्तत्र प्रतिज्ञाविरोधस्योपयोग इति चेत् ।

---

1. ·नुपलम्भावपि—मा·

नैतत्। प्रमाणदूषणानामप्यनियमकथायां संप्लवाभ्युपगमात्। लोके चैकत्र वस्तुनि ना(हा)नादोषसङ्कीर्तनस्य दृष्टत्वात्। शास्त्रे चैकस्मिन् विस्मरणेऽप्यपरस्योद्भावनार्थमेकस्मिन्नपि विषये नानादोषव्युत्पादनोपपत्तेः।

॥ प्रतिज्ञादृष्टान्तविरोधस्य उपलक्षितस्य स्वरूपं दृष्टान्तश्च ॥

प्रतिज्ञाहेतुग्रहणस्येहोपलक्षणार्थत्वात् दृष्टान्तादिनापि प्रतिज्ञाया, हेतोः विरोधश्च (दृष्टान्तादिविरोधः।) प्रतिज्ञायाः प्रत्यक्षादिविरोधश्च प्रतिज्ञाविरोधः सङ्गृहीतो वेदितव्यः। तत्र प्रतिज्ञाया दृष्टान्तेन विरोधो यथा-शब्दो नित्यः कृतकत्वात। यत्कृतकं तदनित्यं यथाऽऽकाशमिति। हेतोर्दृष्टान्तेन विरोधो यथा शब्दो नित्यः ऐन्द्रियकत्वादनैन्द्रियकद्व्यणुकवदिति। प्रतिज्ञायाः प्रत्यक्षादिविरोधोदाहरणानि तु प्रपञ्चितानि कालातीतप्रस्तावे। यद्यपि च प्रत्यक्षादिविरोधो हेत्वाभासान्तर्भावी तथाप्युद्भावयितुः विवक्षाभेदेन प्रतिज्ञादोषतयापि भिद्यत इति तत्रैवोक्तम्।

॥ प्रतिज्ञाविरोधस्य पृथक् निग्रहस्थानत्वं निराकुर्वतो धर्मकीर्तेर्मतम् तत्खण्डनं च ॥

यत्पुनः प्रतिज्ञाविरोधापाकरणायाभ्यधाद्धर्मकीर्तिः—अत्रापि प्रतिज्ञायाः साधनवाक्ये प्रयोगप्रतिषेधात्तदाश्रयस्तत्कृतो वा न हेतुदृष्टान्तयोर्विरोध इति न प्रतिज्ञाविरोधो नाम किंचिन्निग्रहस्थानमिति। तदसारम्। प्रतिज्ञायाः साधनाङ्गत्वस्यावयवप्रस्तावे प्रतिपादितत्वात्।

॥ प्रतिज्ञाविरोधस्य हेत्वाभासेऽन्तर्भावं वदतः धर्मकीर्तेराशयः ॥

यदप्ययमाह स्म—अपि च सर्वत्रायं प्रतिज्ञाहेत्वोः विरोधः सम्भवन्न द्वयीं हेतुदोषजातिमतिपतति; विरुद्धतामसिद्धतां वा। विरुद्धता सिद्धे हेतोः धर्मिणि भावे साध्यधर्मिणि भावे; साध्यधर्मविपर्यय एव भावेन प्रतिज्ञार्थविरोधात्। असिद्धता पुनः धर्मिणि साध्यधर्मसिद्धौ विरुद्धयोः स्वभावयोरेकत्रासम्भवात्। नचान्यथा विरोध इति।

॥ धर्मकीर्तिमतदूषणम् ॥

**तदपि** दूषणं सम्प्लवप्रतिपादनेन प्रागेव पराकृतप्रायम्। (सम्प्लवानभ्युपगमे) प्रतिज्ञाविरोधस्य हेत्वाभासैः सह सत्यपि सङ्करे प्रतिज्ञाविरोध एव वाचनिकतया

**स्वपक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्यासः अनुष्णोऽयमग्निरित्यस्य प्रतिषेधे वाद्याह—संपश्यध्वमहोमध्यमस्थाः नाहमनुष्णमग्निं ब्रवीमि अनुक्तोपालम्भोऽयमिति । एतत्तस्य प्रतिज्ञासन्यासलक्षणं निग्रहस्थानमिति ।**

---

प्रथमतरं [वादि]ना ज्ञापयितव्यो न पुनः व्याप्तिस्मरणाद्यन्तरितप्रतीतिर्विरुद्धहेत्वाभासादिः । यथा खलु विरुद्धहेत्वाभाससम्भवे सत्यपि दृष्टान्तस्य साधनविकलत्वे प्रथममवतरन् विरुद्धहेत्वाभास एवोद्भाव्यत इति ।

॥ प्रतिज्ञासन्यासस्य लक्षणकथनम् ॥

सूत्रान्तरं पठति—**स्वपक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्यासः** (5-2-5) **इति** । एतद्योजयति—**अनुष्णोऽग्निरित्यस्य** पक्षस्य हेतोः **प्रत्यक्षविरोधेन प्रतिषेधे** कृते **वाद्याह—सम्पश्यध्वमहो मध्यस्थाः साक्षिणो नाहमनुष्णाग्निं ब्रवीमि अनुक्तोपालम्भोऽयमित्येतत्तस्य प्रतिज्ञासन्यासलक्षणं निग्रहस्थानमिति** । सूत्रे प्रतिज्ञातार्थापनयनमिति तदपह्नवो विवक्षितः । तथा च प्रतिज्ञाहानितोऽस्य स्पष्ट एव भेदः । तत्र ह्यसामर्थ्यात्प्रतिज्ञातमर्थं परित्यजति । प्रकृते तु "नैवं मया प्रतिज्ञातं" इति साक्षादेवापलप्यत इति । समोगम्यृच्छिभ्यां (पा. 1-3-29) इत्यादिसूत्रे "दृशश्च" (वा. ७२६) इति वक्तव्यमित्यनेन सम्पश्यध्वमित्यात्मनेपदं सिद्धम् ।

॥ तूष्णींभावप्रपलायितादीनां निग्रहस्थानत्वं प्रसञ्जयतो धर्मकीर्तेराशयः ॥

यदत्र **धर्मकीर्तिः** कीर्तयति स्म-किमिदानीमुत्तरप्रतिज्ञासन्यासापेक्षया । तस्यैतदेवाद्यं हेत्वाभासाभिधानं निग्रहस्थानमिति किमपरैरशक्यपरिच्छेदैः क्लीबप्रलापचेष्टितैरुपन्यस्तैः । एवं ह्यतिप्रसङ्गात्स्यात् पक्षप्रतिषेधे तूष्णीं भवतः **तूष्णींभावो** नाम निग्रहस्थानम् । प्रपलायमानस्य **प्रपलायितं** नाम निग्रहस्थानमित्येवमाद्यपि वाच्यं स्यात् । तस्मादेतदप्यसम्बद्धमिति ।

॥ तन्मतदूषणम् ॥

तदिदमयुक्तम् । यतो 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति न्यायेन प्रतिज्ञापह्नवात् हेत्वाभासदोषं वादी परिहरति । तदेतस्यां दशायां नायं हेतुदोषेण

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् । यथा नित्या वेदाः असमर्थमाणकर्तृकत्वादित्यस्य जीर्णकूपादिभिरनैकान्तिकत्वेन प्रतिषेधे कृते संप्रदायाविच्छेदे सतीति विशेषणमिच्छतो हेत्वन्तरं निग्रहस्थानम् पूर्वस्यासाधकत्वोपादानादिति ।**

---

शक्यः पराजेतुम् । तस्य निमित्तापायेनापायात् विषापाये विषनिमित्तदुःखवत् । तत्र प्रतिज्ञापह्नवप्रकटनमन्तरेण न हेत्वाभासत्वमेव शक्यस्थापनमिति प्रथमभावी प्रतिज्ञापह्नव एव पूर्वापरपराहत्या निग्रहनिमित्तम् । अपि च समीचीनसाधन-प्रयोगेऽपि यदि जात्याद्याकुलीकृतः प्रतिज्ञामपह्नुवीत(क)तस्याप्येतन्निग्रहनिमित्तम् । सम्प्लवाभ्युपगमाद्वा(न्य)ऽनयोः समुच्चयोऽस्तु । यदा वाद्यभ्युपगम्य ब्रूते माभूत्तन्निग्रहस्थानं, तथाप्यनेन तव निग्रह इति । यदा पुनः पक्षप्रतिषेधे तूष्णींभावादिकं भजेत, तदा न प्राचीनदूषणं परिहृतमिति तेनैव तन्निग्रहोपपत्तौ नान्यस्योद्भावनमतीवोपयुज्यते । नचाभ्युपगच्छामः परिसङ्ख्यां निग्रहस्थानस्येति न दोषः कश्चित् ।

प्रतिज्ञाग्रहणं सौत्रं यदत्राप्युपलक्षणम् ।
तेन हेत्वादिसन्न्यासा ऊह्या निग्रहहेतवः ॥ इति ।

॥ हेत्वन्तरस्य लक्षणकथनम् ॥

सूत्रान्तरमनुवदति—**अविशेषे हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरमिति ।** विशिष्यतेऽनेनेति विशेषो विशेषणम् । स नास्ति यस्यासावविशेषः । स चासावुक्तश्चेति विग्रहः । हेतावविशेषोक्ते प्रतिषिद्धे सति प्रतिवादिना विशेषं विशेषणान्तरं इच्छतो हेत्वन्तरं नाम निग्रहस्थानमित्यर्थः । इदमुदाहरति—**यथा नित्या वेदाः असमर्थमाणकर्तृकत्वादित्यस्य जीर्णकूपादिभिरनैकान्तिकत्वेन प्रतिषेधे संप्रदायाविच्छेदे सतीति विशेषणमिच्छतो हेत्वन्तरं** नाम **निग्रहस्थानमित्यर्थः ।** कस्मात् ? **पूर्वस्यासाधकत्वोपादानादिति**[1] ।

---

1. असाधकस्योपादानात्—मा.

**प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् । यथा अनित्यश्शब्दः अस्पर्शत्वादिति हेतुः । हेतुश्च हिनोतेर्धातोस्तुन्प्रत्यये कृते कृदन्तं पदमित्यादि प्रसक्तानुप्रसक्त्या प्रकृतार्थानुपयोगि शास्त्रान्तरमुपदिशतोऽर्थ-नन्तरं नाम निग्रहस्थानमिति ।**

---

॥ हेत्वन्तरस्याधिकनिग्रहस्थानत्वनिराकरणं धर्मकीर्तेः ॥

यदत्रापि कथितं **ध र्म की र्ति ना** पूर्वस्यैव हेतोरनैकान्तिकत्वाभिधानात् निगृहीते हेत्वन्तरचिन्ता क्वोपयुज्यते ? यदि प्राक्साधनवादी हेतुमनैकान्तिकमुक्त्वा दत्तोत्तरावसरस्तर्हि तेनैव निगृह्यते । अथ न दत्तोत्तरावसरो हेत्वन्तराभिधानेऽपि तर्हि न निग्रहमर्हत्यविरामादिति ।

॥ धर्मकीर्तिमतदूषणम् ॥

तस्येदं समाधानम्-दत्तोत्तरावसरे वादिनि प्रतिवादिना च व्यभिचारोद्भावनेन साधनाभासत्वे ख्यापिते पुनस्तृतीये वचसि वर्तमाने सविशेषणोऽयं हेतुः ततो न व्यभिचरतीत्यनैकान्तिकत्वे परिहृते, सविशेषणस्य निर्विशेषणाद्धेत्वन्तरतामप्रतिपाद्य न शक्यते पूर्वस्य व्यभिचार एव स्थापयितुमिति प्रथमोपनिपातिहेत्वन्तरमेव निग्रह-स्थानं युक्तम् । तेनैव पूर्वस्य[ा] सामर्थ्यख्यापनात् । [समर्थ](सामर्थ्य)हेत्वन्तरो-पादानस्य निरर्थकत्वात् । यदा पुनरविशेषितं हेतुमभिधाय स्वयमेव व्यभिचारं पर्या-लोचयन् पूर्वहेतुं विशिनष्टि वदति वा हेत्वन्तरं तदा न निग्रहः । एवमपशब्दादा-वपि योजनीयम् ।

॥ अर्थान्तरलक्षणम् ॥

सूत्रान्तरमाह—**प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरमिति** (5-2-7) । अस्यार्थः—प्रकृतार्थो वादिनः साध्यसाधनं, प्रतिवादिनस्तु तद्दूषणं ; तस्मात् । अर्थान्तरमिति लक्ष्यपदमावृत्त्या लक्षणेऽपि सम्बध्यते । तथापि प्रकृतोपयोग्यर्थान्त-राभिधानस्य निग्रहनिमित्तत्वं मा प्रापदिति अप्रतिसंबद्धार्थमित्युक्तम् । तदेतदुदितं भवति-प्रकृतादर्थादर्थान्तरं तेनाप्रतिसंबद्धार्थमर्थान्तरं निग्रहस्थानमिति । उदाहरण-माह— **नित्यः शब्दः अस्पर्शत्वादिति हेतुः हेतुश्च हिनोतेर्धातोस्तुन्प्रत्यये**

वर्णक्रमनिर्देशवन्निरर्थकम् । यथा अनित्यश्शब्दः कचटतपानां शबगडदश्त्वात् झभघढधवदिति ।

---

कृते कृदन्तं पदमित्यादि प्रसक्तानुप्रसक्त्या प्रकृतार्थानुपयोगि शास्त्रान्तरमुपदिशतोऽर्थान्तरं निग्रहस्थानमिति ।

॥ निरर्थकलक्षणम् ॥

सूत्रान्तरमुपादत्ते—**वर्णक्रमनिर्देशवत् निरर्थकमिति** । वर्णानां क्रमनिर्देशः सिद्धमातृकापाठः तेन तुल्यं वर्णक्रमनिर्देशवत् । परिषत्प्रतिवादिभ्यां पदार्थोऽपि यत्र न ज्ञायते तन्निरर्थकमित्यर्थः । एतदेवोदाहरति—**यथाऽनित्यः शब्दः कचटतपानां जबगडदशत्वात् झभघढधवदिति** ।

॥ सूत्रोपरि धर्मकीर्तिदूषणम् तत्परिहारश्च ॥

**एतेनात्र**[1] मतुबर्थमध्यारोप्य यदभिहितं **धर्मकीर्तिना**—(नहि)वर्णक्रमनिर्देशादेवेष्टार्थसंसिद्धावानर्थक्यम् । यदेव किंचिदसाधनाङ्गस्य वचनं तदनर्थकं, साध्यसिध्युपयोगिनोऽभिधेयस्याभावान्निष्प्रयोजनत्वाच्चेति । तदपहस्तितं, वतिस्वीकारात् ।

वतिपक्षे तु यदुक्तं अर्थान्तरादेः निग्रहस्थानस्यावचनप्रसङ्गो निरर्थकेनैवाभिधानादिति । तदप्यसत् । निरभिधेयान्निरर्थकात्साभिधेयत्वेऽपि प्रकृतासङ्गतस्यार्थान्तरस्य, मात्रया सत्यभिधेये समुदायार्थशून्यतया निष्प्रयोजनस्यापार्थकस्य च स्पष्टभेदत्वात् । अज्ञातार्थे च बाहुल्येन पदार्थानुसन्धानेऽपि वाक्यार्थप्रत्ययाभावेन विवेकोपपत्तेः । कथंचिदभेदे तु सर्वसङ्करा[त्] पराभिमतोऽपि निग्रहभेदो नाभिधेयः स्यादिति ।

॥ वर्णक्रमनिर्देशस्य सार्थकत्वशङ्कापरिहारौ ॥

यदप्युदितं वर्णक्रमनिर्देशोऽपि सर्वत्र न निरर्थकः, क्वचित्प्रकरणे प्रत्याहारादावप्यर्थवत्त्वादिति । तदप्यसत् । अकारादीनां वर्णानां स्वरूपपरत्वेन प्रत्याहारादौ

---

1. सूत्र इत्यर्थः ।

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ।** **यद्वाक्यं वादिना त्रिरभिहितमप्यप्रतीतप्रयोगातिद्रुतोच्चारणादिना निमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते तदज्ञानसंवरणायैवोक्तमविज्ञातार्थं नाम निग्रहस्थानमिति ।**

---

प्रयोगेऽपि घटादिपदवद्वादोपयोगिलौकिकार्थानभिधानेन निरर्थकत्वस्वीकारात् । **यदपि** अनेनाभिहितमत्यल्पमिदमुच्यते वर्णक्रमनिर्देशो निग्रहस्थानमिति, कपोलवादित्रं कक्षविहितमित्येवमादीनामपि वाच्यत्वादिति । **तदप्यसत् ।** सूत्राणामुदाहरणार्थत्वेन तेषामपि निग्रहनिमित्तत्वा(त्) प्रतिषेधादिति ।

॥ अविज्ञातार्थलक्षणम् ॥

सूत्रान्तरमनुभाषते—**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थमिति ।** इदं विवृणोति—**यद्वाक्यं वादिना त्रिरभिहितमपि अप्रतीतप्रयोगातिद्रुतोच्चारितादिना निमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते तदज्ञानसंवरणायोक्तमविज्ञातार्थं नाम निग्रहस्थानमिति ।** उदाहरणं त्विदं—अर्थान्तरभूतसवर्थिग्राहकेन्द्रियज्ञानाधारतथागतविशुद्धज्ञानग्राह्यविषयग्रहणाधारक्षपणकतीर्थकरादिसत्त्वसमनुगतपटसत्वघटो न घटः शशविषाणानुत्पादकत्वात्पटवदिति ।

॥ अत्र धर्मकीर्तिदूषणम् ॥

एवं च यदिहोदितं **धर्मकीर्तिना** नेदं निरर्थकाद्भिद्यते । स यदि प्रकृतार्थसम्बद्धं गमकमेव ब्रूयात्, नास्यासामर्थ्यम् । यदि तत्र जाड्यात्परिषदादयो न प्रतिपद्यन्त इति (न विघात्) न निग्रहमर्हति । परिषत्प्रज्ञामपरिकलय्य वचनान्निग्रहार्ह एवेति चेत्; न्यायवादिना जाड्यात् उक्तमपरिजानन् प्रतिवादी किं न निगृह्येतेति ।

॥ तत्परिहारः ॥

तदपहस्तितम् । अप्रतीतप्रयोगातिद्रुतोच्चारितादिना निमित्तेनेत्युदितत्वात् । यो हि स्पष्टाभिधानसमर्थोऽपि तथाभिधाने प्रतिवादी दूषणं वक्ष्यतीति बिभ्यदात्मीया-

**पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ।**

---

सामर्थ्यसम्वरणार्थमतिद्रुतोच्चारणादिभिः अस्पष्टमभिदधीत स कथं केवलमसामर्थ्य-सम्वरणमेवाचरन् न निग्राह्यो नाम? कथं वोभयसम्मताः प्राश्निकाः शक्यन्ते जडतया व्यवस्थापयितुम्? कथं वा तथाविधानपि प्राश्निकान् अवबोधयितुमक्षमस्य वादिनो वैदुष्यमुद्घुष्यते? कथं च परव्यामोहमापादयन्नतिद्रुतोच्चारितादिना न्यायवादी नाम? कथं च प्रतिवादी निग्रहार्हः न खल्वेष स्पष्टाभिहितं प्राश्निकैश्चानुबुद्धमपि स्वयमेव न बुद्ध्यते, येन निग्रहार्ह इति ।

यदप्यनेनोदितं जाड्यात् परिषदादेरविज्ञातसाधनसामर्थ्ये इति जेता न स्यात् न निग्रहार्ह इति । तदप्यसुन्दरम् । परिषत्प्रतिपादनेऽपि न समर्थ एकः, इतरस्तु समर्थ इत्येतावतैव जयपराजयोपपत्तेः । पुरुषसामर्थ्यासामर्थ्यपरीक्षणप्रयोजनत्वाच्च विजिगीषुकथायाः । किं च परिषत्प्रतिपादनेऽप्यसमर्थः कथामसौ कथमेवाभ्युपगच्छेत्? कथं नास्य युक्तिवादित्वमपरे प्रतिपद्येरन्निति ।

॥ अविज्ञातार्थनिरर्थकयोः अभेदापत्तिदूषणं तत्परिहारश्च ॥

यदप्यवोचदसम्बन्धाभिधाने निरर्थकमेवेति[न] पृथगविज्ञातार्थं नाम निग्रहस्थानमिति । तदप्यसारम् । निरर्थकाविज्ञातार्थयोरर्थाप्रतिपादकत्वमात्रेणाविशेषेऽपि निरर्थके स्पष्टाभिधानेऽपि न भवत्यर्थप्रतीतिः, अविज्ञातार्थे पुनरस्पष्टाभिधानं निमित्तीकृत्य बाहुल्येन पदपदार्थाभिधानेऽपि न वाक्यार्थाधिगतिरिति स्पष्टभेदत्वात् । नचापार्थकादस्याभेदः शङ्कनीयः, यतस्तत्र वाक्यार्थ एव न सम्भवी । प्रकृते तु सम्भवन्नप्ययमतिद्रुतोच्चारणादिनिमित्तान्नाधिगम्यत इति महानेव भेद इति ।

॥ अपार्थकलक्षणम् ॥

सूत्रान्तरमनुपठति—**पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकमिति ।** (5-2-10) एषोऽर्थः—पूर्वं प्रधानम्, अपरो गुणः, तयोर्भावः पौर्वापर्यम्, प्रधानगुणभावः तेनायोगोऽसङ्गतिः, पदार्थानां, तस्मात् गुणप्रधानभावेनायोग्यतयाऽन्वयविरहाद्धेतोरप्रतिसम्बद्धोऽर्थोऽन्वयलक्षणो यस्य वाक्यस्य तत्समुदायार्थशून्य-

**यथा दशदाडिमानि षडपूपाः कुण्डमजाजिनमित्येवमादि ।**

---

मपार्थकं नाम निग्रहस्थानमिति । उदाहरणमाह—**यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनमित्येवमादीनि ।** आदिशब्देन भाष्यकारोदाहृताम(ादि)तिविपुला-मार्थां कात्स्न्येंन सङ्गृह्णाति—"यथा दशदाडिमानि षडपूपाः कुण्डमजाजिन पललपिण्डः । अथ रौरुकं कुमार्याः पाय्यं तस्याः पिता अप्रतिशीन इति । एतेना-सम्बद्धवाक्यमसम्बद्धपदं चोभयमपि सङ्गृहीतम् । वाक्यार्थपौर्वापर्यासम्बन्धे दशदाडि-मानि षडपूपा इत्युदाहरणम् । पदार्थानां पौर्वापर्यासम्बन्धे कुण्डमजाजिनमित्यादि । रौरुकं रुरुसम्बन्धि, पाय्यं पाययितव्यम् । अप्रतिशीनो वृद्धः । निरर्थकापार्थक-योस्तु भेदः स्फुटीकृतो निरर्थकप्रस्तावे ।

॥ धर्मकीर्त्युक्तं दूषणम् ॥

यत्तूक्तं **धर्मकीर्तिना** नन्वेवमसम्बद्धवाक्यमसम्बद्धप्रकरणमपि पृथग्वाच्यं स्यात्, नचोभयसङ्ग्रहोऽपार्थके, निरर्थकस्यापि सङ्ग्रहप्रसङ्गात् । एवंविधाच्च विशेष-सङ्ग्रहाश्रयत्वात्पृथङ्निग्रहस्थानप्रणयनेऽतिप्रसङ्गोऽप्युक्तः । न च सङ्ग्रहनिर्देशे कंचिद्दोषं पश्यामः[1]प्रभे[दे]वा गुणान्तरमिति ।

॥ उक्तदूषणपरिहारः ॥

**अत्रेदमेवाभिधातव्यम् ।** असाधनाङ्गवच (नाद्दो) [नत्वदो] षोद्भावनयोः परप्रतिपत्त्यर्थत्वाविशेषेऽपि पृथगभिधाने एतदवान्तरस्यापि बहुभेदस्य सम्भवात् पृथक्पृथगनेकानि निग्रहस्थानान्यभिधीयेरन् । असाधनाङ्गवच (नाद्दो) [नत्वदो] षोद्भा-वनाभ्यामवान्तरभेदस्य सर्वस्य सङ्ग्रहस्वीकारेऽपि परप्रतिपादनासामर्थ्यविशेषेणैकतया सङ्ग्रहोपपत्तौ द्वैविध्यमपि किं न निवर्तेत । न च सङ्ग्रहनिर्देशे दोषं पश्यामः, प्रभेदे वा गुणान्तरमिति । यदि मतम्—

श्रोतृबुद्धिविकासाय संभवत्यपि सङ्ग्रहे ।
निग्रहस्थानभेदस्य निर्देशो नैव दुष्यति ॥ 1 ॥

---

1. प्रभेदा मा.

**अवयवविपर्यासवचनम् अप्राप्तकालम् । प्रतिज्ञादीनामर्थवशात्क्रमस्तेषां विपर्ययेणाभिधानं निग्रहस्थानम् ।**

---

अत्यन्तसूक्ष्मेक्षिकया न निरूपयितुं क्षमः ।
प्रभेदः कश्चिदित्यास्था नातिभेदनिरूपणे ॥ 2 ॥

हन्तैवं मुनिनाप्येते भेदाः केचिन्निरूपिताः ।
तदवान्तरभेदास्तु नोक्ताः सङ्ख्यानहानितः ॥ 3 ॥

एतावांस्तु विशेषोऽत्र व्युत्पत्त्यतिशयार्थिना[1] ।
द्वैविध्यमभिधायापि तद्भेदाः केचिदीरिताः ॥ 4 ॥

॥ अप्राप्तकाललक्षणम् ॥

**अवयवविपर्यासवचनमप्राप्तकालमिति सूत्रान्तरमिति** । (5–2–11)
अस्यार्थः—प्रतिज्ञादीनामवयवानां विपर्यासेन विपरीतक्रमेणाभिधानमप्राप्तकालं नाम निग्रहस्थानमिति । नियमकथायामेवैतन्निग्रहस्थानं निर्णीतं श्री **न्या य भू ष णे** ।

॥ अत्र धर्मकीर्त्युक्तदूषणम् ॥

ततश्च यदत्रोपपादितं **धर्मकीर्तिना**—विपर्यस्तानामप्यवयवानां यदि गुणप्रधानभावेन सम्बन्धः प्रतीयते, तदा न निग्रहस्थानं साध्यार्थसिद्धेरविशेषात् । अथ न सम्बन्धः प्रतीयते, तर्ह्यपार्थकादप्राप्तकालो न भिद्यत इति ।

॥ तत्परिहारः ॥

**तदपाकृतम्** । यदा हि प्रज्ञातिरेकप्रकटनपरतयाऽपरमपि प्रकारं नियम्य कथायां प्रवर्तते वादी(दित) तदा एकस्य प्रतिज्ञातनियमपरित्याग एव पराजयस्थानं द्यूतादिष्विति न तत्रापरो न्याय्य इति । तत्त्वतः पुनरेतादृशो निग्रहप्रकारः प्रतिज्ञाहानावन्तर्हितोऽपि तदवान्तरभेदमेव व्युत्पादयितुमनसा व्युत्पादितः शिष्यमतिविकासाय सूत्रकृतेति वेदितव्यम् ।

---

1. श्रोतृणामित्यादिः

**हीनमन्यतमेनाप्यवयवेन न्यूनं; साधनाभावे साध्यसिद्धेरयोगात्। हेतूदाहरणाधिकमधिकम्। एकेन कृतत्वादितरानर्थक्यात्। शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्। सार्थकंपुनरभिधानमनुवादः तद्व्यतिरेकेण पुनरभिधानं पुनरुक्तम्। नित्यश्शब्दो नित्यश्शब्द इति**

---

॥ न्यूनलक्षणम् ॥

**हीनमन्यतमेनाप्यवयवेन न्यूनमिति** सूत्रान्तरं (5-2-12) निगदव्याख्यानम्। निग्रहस्थानत्वं तस्य **साधनाभावे साध्यसिद्धेरनुपपत्तेः**। प्रतिपादितं हि पञ्चानामप्यवयवानां साधनाङ्गत्वमवयवनिरूपणप्रस्तावे। ततश्च न प्रतिज्ञाहीनं न्यूनं तदभावे प्रतीतिभावादिति वदन् भदन्तः परास्त एवेति विरम्यते।

॥ अधिकलक्षणम् ॥

तथाऽपरं सूत्रम्—**हेतूदाहरणाधिकमधिकमिति**। (5-2-13) यत् हेतूदाहरणाभ्यामधिकं साधनवाक्यं, तदधिकं नाम निग्रहस्थानम्। उदाहरणं तु शब्दो नित्यः कृतकत्वात् सामान्यवत्त्वे सत्यस्मदादिबाह्यकरणग्राह्यत्वात् घटपटवदिति। निग्रहस्थानं **पुनरेकेन कृतार्थत्वादितरस्यानर्थक्यमिति**। नियमकथायामेवैतन्निग्रहस्थानमित्याचार्यः। संप्लवाभ्युपगमात्सिद्धमेवार्थं साधनान्तरेण संपादयितुमनसः साधनान्तरप्रयोगेऽपि विरोधाभावात्। अनभ्युपगच्छतस्तु संप्लवमनियमकथायामपि भवत्येवेदं निग्रहस्थानमिति। त्रिसूत्री चैषा सङ्ग्रहेण व्याख्याता विस्तरभयात् कृत्स्नाप्रतिज्ञानाच्चेति।

॥ पुनरुक्तलक्षणम् ॥

सूत्रान्तरमाह—**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादादिति**। (5-2-14) तद् विवृणोति—**सार्थकं पुनरभिधानमनुवादः तद्व्यतिरेकेण पुनरभिधानं पुनरुक्तं** नाम निग्रहस्थानमिति शेषः। एवं च पुनर्वचनं पुनरुक्तम्, अन्यत्रानुवादादित्येतावदेव पुनरुक्तसामान्यलक्षणमभिप्रेतम्। तस्य तु द्वैविध्यप्रतिपादनार्थं **शब्दार्थयोरिति** पदम्। तत्राभिहितस्यार्थस्य तेनैव शब्देनाभिधानं

**शब्दपुनरुक्तम् । नित्यो ध्वनिरविनाशी शब्द इत्यर्थपुनरुक्तम् । अर्थादापन्नस्य स्वशब्देन पुनरभिधानं पुनरुक्तम् । यथा साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाभिधानमिति ।**

---

शब्दपुनरुक्तम् । तस्यैव पर्यायान्तरेणाभिधानमर्थपुनरुक्तमिति विशेषलक्षणद्वयं वेदितव्यम् ।

॥ पुनरुक्तोदाहरणम् ॥

क्रमेण तयोरुदाहरणमाह—**नित्यः शब्दो नित्यः शब्द इति** शब्दपुनरुक्तम् । **नित्यो ध्वनिरविनाशी शब्द इत्यर्थपुनरुक्तमिति ।** यत्त पुनः प्रयोजनवशेन शब्दस्यार्थस्य वा पुनरभिधानं, तन्न पुनरुक्तमनुवादत्वात् । यथा खलु निगमने शब्दान्तरेण तस्मादिति हेत्वर्थस्यानुवादः । प्रतिपादितं च प्रयोजनं निगमनवचनस्येति नात्रापि विप्रतिपत्तेरवकाशः ।

॥ शब्दपुनरुक्तं पृथक् न दूषणमिति धर्मकीर्त्युपालम्भः तत्परिहारश्च ॥

यत्पुनरिदमुदीरितं **धर्मकीर्तिना** न शब्दपुनरुक्तं पृथग्वाच्यम् । अर्थपुनरुक्तवचनेनैव गतत्वात् । नह्यर्थभेदे शब्दाभेदेऽपि कश्चिद्दोषो यथा—

हसति हसति स्वामिन्युच्चैः रुदत्यपि रोदिति
कृतपरिकरःस्वेदोद्गारी प्रधावति धावति ।
गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति
धनलवपरिक्रीतो जन्तुः प्रनृत्यति नृत्यति ॥

यथा वा—यद्यस्मिन् भवति भवति न भवति[न भवति]तत्तस्य कार्यमितरत्कारणमिति । तत्रैष एव परिहारः—शिष्यबुद्धिविकासाय यथोक्तेनावान्तरलक्षणभेदेन पुनरुक्तोदाहरणप्रपञ्चनं कृतं शिष्यहितेन सूत्रकृता सूत्रलाघवमनादृत्येति ।

॥ पुनरुक्तलक्षणम् ॥

तथा पुनरुक्तविशेषलक्षणान्तरपरं सूत्रान्तरं सङ्गृह्णाति—**अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तमिति (5-2-16)** सुगमं सूत्रम् । अत्रोदाहरणमाह—**यथा साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाभिधानमिति ।** एतदुक्तं

**कथं तन्निग्रहस्थानं ? कथावसानविरोधित्वात् । एकेन कृतत्वादितरानर्थ-क्यादिति । विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ।**

---

भवति - व्याप्तिसिद्ध्यर्थमुदाहरणमभिधीयते । व्याप्तिश्चैकेनैवोदाहरणेन सिद्धेति किम-पराभिधानेन । यदि पुनरेकस्य उदाहरणस्य व्याप्तिसिद्धावसामर्थ्यं, न तर्हि केवला-न्वयिनः केवलव्यतिरेकिणश्च व्याप्तिः सिद्ध्येत् ।

॥ अन्वयव्यतिरेक्येव हेतुरिति मते अन्यतरवैयर्थ्यम् ॥

योप्याह—अन्वयव्यतिरेक्येव हेतुरिति, तन्मतेऽपि नान्वयोऽव्यति-रेकोऽस्ति । नचाव्यतिरेकोऽन्वय इति एकाभिधानादेव द्वितीयस्यापि सिद्धेः पुनस्तद्वचनमनर्थकमेव ।

॥ प्रतिज्ञावचनं पुनरुक्तमिति भिक्षुमतम् ॥

**यत्तु** प्रतिज्ञाया गम्यमानार्थाया वचनं पुनरुक्तमुदाहरति स्म **भिक्षुः** । तदसङ्गतं, प्रतिज्ञायाः साधनाङ्गत्वस्य समर्थितत्वात् । गतार्थत्वमत्रापि सूत्रे पूर्ववद-पाकरणीयम् । शङ्कते—**कथं तत् निग्रहस्थान**मिति । परिहरति—केवलं **कथावसानविरोधित्वादेकेन कृतत्वादितरानर्थक्यादिति** । नियमकथायामेवै-तदपि निग्रहस्थानं नान्यत्र । व्याचक्षाणो हि कदाचिदसम्यक्श्रवणप्रवृत्तिशङ्कया साक्षिप्रभृतीनां पुनः पुनर्ब्रूयादपि न तत्र किञ्चिच्छलम् । नायं गुरुर्न शिष्य इति न यत्नत प्रतिपादनीयो येन पुनः पुनरुच्यत इति पुनर्वचने निग्रह एवेपि चेन्न ।

साक्षिणां यत्नेन प्रतिपाद्यत्वात् । तदप्रतिपादने दोषाभिधानम् । त्रिरभि-धानवचनात् पुनर्वचनप्रसङ्गे समयनियमाभावाच्च । यद्यपि चाधिकात्पुनरुक्तं न भिद्यते तथाप्यवान्तरविवक्षया प्रपञ्चार्थ एव पृथगारम्भ इति मन्तव्यम् ।

॥ अननुभाषणलक्षणम् ॥

सूत्रान्तरं सङ्गृह्णाति—**विज्ञातस्य परिषदा त्रिरभिहितस्याप्रत्युच्चारण-मननुभाषणमिति** । अयमर्थः । विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना च त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति । एतच्च सामर्थ्या-

**प्रतिवादिनो निग्रहस्थानम् । अप्रत्युच्चारयन् किमाश्रयः परपक्षप्रतिषेधं ब्रूयादिति ।**

---

दूदूषणं न वादिन इत्याह—**प्रतिवादिनो निग्रहस्थानमिति ।** निग्रहस्थानत्वोपपत्तिमाह—**अप्रत्युच्चारयन् किमाश्रयः परपक्षप्रतिषेधं ब्रूयादिति ।** प्रदर्शितविषयः प्रतिषेधः शक्यप्रतिपादन इत्यर्थः । एवं च यावदेव दूषणीयं तावदेवानुभाषणीयं न पुनः सर्वमपि वादिवचनम्, अदूष्य भाषणे सत्यर्थान्तरेण निग्रहापत्तेः । यदा त्वात्मीय(व)धारणशक्त्यतिशयप्रदर्शनायाशेषमपि वादिनो वचनमनुभाषणीयं मयेति नियममभ्युपगच्छति तदा सर्वमननुभाषमाणस्य निग्रह एव । यदा तु न मया द्विरभिधानीयं किमपीति नियच्छति, तदा प्राक् सर्वानुभाषणे पुनरुक्तदूषणापत्तिरपि । यस्माद्दूषणाभिधानसमयेऽप्यस्यायं दूषणस्य विषय इति प्रतिदूषणं विषयमुपदर्शयितुं पुनरनुभाषणं करणीयमिति पुनरुक्तिरवश्यंभाविनी । यदा त्वनियमकथा तदा यथेष्टानुभाषणेऽपि दूषणस्य न दोष इति । त्रिरभिधानग्रहणं चेह परिषदनुज्ञोपलक्षणार्थम् । यावद्धि पारिषदैरन्यतरस्यासामर्थ्यं न निश्चीयते तावत् वचनीयमिति ।

॥ अत्रापि धर्मकीर्त्युक्तदूषणपरिहारः ॥

ततश्चैतदपास्तं यदाह **धर्मकीर्तिः** —कश्चायं समयनियमः त्रिरभिहितस्याननुभाषणमिति । यदि तावत्परिषत्प्रतिपादनार्था प्रवृत्तिः, किं त्रिरभिधीयते; तथा तथा स ग्राहणीयो यथा यथास्य प्रतिपत्तिर्भवति । अथ परोपतापनार्था, तथापि किं त्रिरभिधीयते, साक्षिणां कर्णे निवेद्य प्रतिवादी कष्टप्रतीतिर्द्रुतसङ्क्षिप्तादिभिरुपादातव्यः, यथोत्तरं प्रति विमूढस्तूष्णीं भवति । न हि परोपतापनप्रक्रमे कश्चिन्न्यायोऽस्ति येन श्लिष्टप्रयोगद्रुतोच्चरितानि निवार्यन्ते, त्रिरभिधानं वाऽभिधीयत इति ।

॥ अननुभाषणस्य अप्रतिभया गतार्थत्वशङ्का ॥

**यदप्यनेनोदितं** नाननुभाषणं पृथङ्निग्रहस्थानं वाच्यं, अप्रतिभया गतत्वात्, उत्तरस्याप्यप्रतिपत्तिरप्रतिभा । नचोत्तरविषयमप्रदर्शयन्नुत्तरं प्रतिपत्तुं समर्थः । न ह्यनाक्षिप्तानुत्तरप्रतिपत्ति[कमन]नुभाषणम् । तेनाननुभाषणस्य व्यापिकायां[अप्रतिभायां]विहितं निग्रहस्थानत्वमननुभाषणे लब्धमेव, गवि विहितमिव सास्नादिमत्त्वं बाहुलेये । तस्मादप्रतिभैव निग्रहाधिकरणत्वेन वाच्या, नाननुभाषणमिति ।

**अविज्ञातं चाविज्ञानम् । यच्च वाक्यं त्रिरभिहितमपि परिषदाऽवगतार्थं प्रतिवादी प्रत्युच्चारयन्नपि नार्थतः सम्यगधिगच्छति तदज्ञानं नाम प्रतिवादिनो निग्रहस्थानम् ।**

---

॥ उक्तशङ्कापरिहारः ॥

तदप्यसारम् । अननुभाषणस्याप्रतिभातो भिन्नविषयत्वस्याप्रतिभाप्रक्रमे प्रदर्शयिष्यमाणत्वादिति ।

॥ अविज्ञातलक्षणम् ॥

अथापरं सूत्रं **अविज्ञातं चाज्ञानमिति**[1] (5-2-18) अविज्ञातमिति भावे क्तः । त्रिरभिहितं वादिना, विज्ञातार्थं च यद्वाक्यं प्राश्निकैः तदर्थानवबोधोऽ**ज्ञानं नाम प्रतिवादिनो निग्रहस्थानमिति ।** नचेदमननुभाषणेनैव गतत्वादवाच्यमिति युक्तम् । धारणसमर्थस्यार्थानिरूपणेऽपि वाद्युदीरिताक्षरस्वरूपमात्रपाठसम्भवादनुभाषणोपपत्तेः ।

॥ अप्रतिभया अज्ञानस्य गतार्थत्ववादिकीर्तिमतम् ॥

यदप्युपपादयामास **कीर्तिः**—अप्रतियैव गम्यमानत्वादज्ञानं पृथगवाच्यम्, न खलु जानन्नेवोत्तरविषयमुत्तरं न प्रतिपद्येत । तस्मादज्ञानस्य व्यापिकायामुत्तराप्रतिपत्तिरूपायामप्रतिभायां उदितं निग्रहाधिकरणत्वमज्ञानेऽपि लब्धमिति । तदप्यप्रतिभातो भिन्नविषयमज्ञानमित्यप्रतिभाप्रस्तावे निरूपयिष्यमाणत्वात् अयुक्तम् । यदप्ययं वदति स—एवं तर्ह्यननुभाषणं निर्विषयमज्ञानेनाक्षेपात् । नहि विषयं सम्यक् प्रतिपद्यमानः कश्चिन्नानुभाषेतेति नाननुभाषणं पृथग्वाच्यमिति । तदप्यवद्यम् । यावता पुरुषशक्तिवैचित्र्येण कश्चन दूष्यं जानन्नपि वचनपाटवाभावमात्रेण नानुभाषितुं पारयत इति अतिरिच्यत एवाज्ञानादननुभाषणस्य विषय इति ।

---

1. क्वचित् अविज्ञातार्थमिति पाठः, अविज्ञातमित्येव न्यायसूत्रपाठः

**कथमभ्युपगम्य तूष्णींभावोऽप्रतिभा वादिप्रतिवादिनोर्निग्रहस्थानमिति ।**

---

॥ अप्रतिभालक्षणम् ॥

अथाप्रतिभाया लक्षणमाह—**कथमभ्युपगम्य तूष्णींभावोऽप्रतिभेति ।** एतच्च द्वयोरपि वादिनोः स्वावसरे तूष्णींभावसम्भवात्साधारणं निग्रहस्थानमित्याह—**वादिप्रतिवादिनोर्निग्रहस्थानमिति ।** एवं च सति साधनवाक्यप्रयोगसमनन्तरं तूष्णींभवतोः [वादि]प्रतिवादिनोः स्वावसरे तूष्णीं[भावेन]यद्यप्यप्रतिभा निग्रह-स्थानमुत्थाप्यते तथापि यः कदाचिदननुभाषणेऽपि न तूष्णीमास्ते किंतु यत्किंचन ब्रूते तद्ध्यननुभाषणमेव निग्रहस्थानमित्यस्त्येवाननुभाषणस्याप्रतिभया सहाऽसङ्कीर्ण-विषयः । कदाचित्त्वनुभाषणं कृत्वाप्युक्ताप्रतिपत्त्या तूष्णीं भवत अप्रतिभैव निग्रह-स्थानम् । न त्वननुभाषणं इत्यप्रतिभाया अप्यननुभाषणेनासङ्कीर्णविषयसिद्धिः । साधनवादिनस्तु अननुभाषणप्रसङ्गाभावे सति तूष्णींभवतो अप्रतिभैवेति स्पष्ट एवासङ्करः ।

॥ अज्ञानस्यासङ्कीर्णोदाहरणोपन्यासः ॥

यदा तु साधनोपन्याससमनन्तरं प्रतिवादी न तूष्णीमास्ते, नापि यत्किञ्चन ब्रूते, किं तर्हि ? साधारणसामर्थ्यमात्रेणा(न)नुभाषत एव वादिवचनं प्राश्निकैरव-गतार्थमपि नार्थतः सम्यगधिगच्छति, तदा तस्याज्ञानमेव निग्रहस्थानं नाप्रतिभा, तूष्णींभावाभावात् । नाप्यननुभाषणम् ; अक्षरस्वरूपानुभाषणादिति अज्ञानस्याप्य-प्रतिभाननुभाषणाभ्यां असङ्कीर्णविषयसिद्धिः । नचैवं सति यथोक्तमप्रतिभालक्षणं सूत्रासङ्गतमिति शङ्कनीयम् । उत्तरस्याप्रतिपत्तिरप्रतिभा इति हि सूत्रम् । (5-2-19) तत्र चोत्तरग्रहणमुपलक्षणार्थं पूर्वोपन्यासस्यापि इति अप्रतिपत्तिर-प्रतिभेत्यभिहितम् । नचाप्रतिपत्तिशब्दोऽप्यपरिज्ञानमात्रविषयः । किं तर्हि ? वचना-नध्यवसायं ब्रूते । तथा च प्रति(भा)[वा]द्यवष्टम्भादिना भीतस्य वचनीयं जानतोऽपि वचनानध्यवसायात् अब्रुवाणस्याप्रतिभेत्यभिसन्धिः ।

॥ अप्रतिभायाः असङ्कीर्णस्थलान्तरप्रदर्शनम् ॥

यद्वा प्रथमवादिनोऽपि वचनमुत्तरमत्रोक्तम् । तथा(पि)[हि]—प्राश्निकानां प्रतिवादिनो वा 'कस्ते पक्षः ? किंसाधनं वेति' प्रश्नान् 'त्वमेव प्रथमं ब्रूष्व'

**कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः । कथामभ्युपगम्य सभ्येषु सम्मिलितेषु ब्रवीति अद्य मे महत्प्रयोजनं विद्यते तस्मिन्नवसिते पश्चात्कथयिष्यामीति ।**

---

इत्यनुयोगं वाऽपेक्ष्य पक्षादिवचनमप्युत्तरं भवति । तस्मिन् वचनीये तूष्णींभवतः साधनवादिनोऽप्यप्रतिभैव निग्रहस्थानम् । अवश्यं चैतदेवमेव व्याख्यातव्यम् ; अन्यथोत्तरापरिज्ञानमात्ररूपायां अप्रतिभायामज्ञानस्याप्रतिभया सह नासङ्कीर्णो विषयः सिद्ध्येत् । दूष्याज्ञानं ह्यज्ञानम् । नचास्ति सम्भवो दूष्यं न वेद दूषणं पुनरस्य वेदेति । तथा (वा)[चा]ज्ञानस्य व्यापिकायामप्रतिभायां निहितं निग्रहाधिकरणत्वमज्ञानेऽपि तद्व्याप्ये लब्धमिति पृथक्कथनमज्ञानस्यानर्थकमाचक्षमाणा भिक्षवो विजयेरन्नेवेति ।

॥ विक्षेपलक्षणम् ॥

सूत्रान्तरमनुब्रूते—**कार्यव्यासङ्गात्कथाविच्छेदो विक्षेप इति** (5-2-20) । कार्यं करणीयं तेन व्यासङ्गो व्याकुलत्वं ; तस्मादभ्युपगतो यः कथाया विच्छेदोऽनारम्भो यः स विक्षेपो नाम निग्रहस्थानम् । अस्योदाहरणमाह—**कथामभ्युपगम्य सभ्येषु मिलितेषु ब्रवीति—अद्य मे महत् प्रयोजनम् तस्मिन्नवसिते पश्चात्कथयिष्यामीति** । कार्यव्यासङ्गश्च कथाविच्छेदनिमित्तोपलक्षणार्थः । तेन दुर्ज्वरादिदुःखाकुलत्वमपि मिथ्योपक्षिप्यमाणं संगृहीतमवगन्तव्यम् । यदा पुनः सत्यमेव तात्कालिकं कथाविच्छेदनिमित्तं साक्षिणोऽपि जानन्ति, तदा न कश्चिद्दोषः । अन्यथा तु सभ्यमेलनात्प्राक् किमपि कथानारम्भनिमित्तमुपक्षिप्य कथां विच्छिन्दन् नष्टाभिप्रायत्वमात्मनः स्पष्टयति । तथा चायमन्यतरपराजयपर्यन्तायां कथायां स्वयमेव कथां प्रतिपद्यमानो निग्राह्य इति ।

॥ अत्र कीर्तिकृतं दूषणम् ॥

अत्राप्यभिहितं **कीर्तिना**—इदमपि यदि पूर्वपक्षवादी कुर्यात् व्याजोपक्षेपमात्रेण[न]पुनर्भूतस्य तथाविधकथोपरोधिनः कार्यस्य भावे । तस्य स्वसाधनासामर्थ्यपरि[छेदा]देव विच्छेदः स्यात् । तथा चेदमर्थान्तरगमन एवान्तर्भवेदिति ।

॥ तत्परिहारः ॥

तदेतदसारम् । साधनोपन्यासं प्रयुज्य तदनुपयोगिनोऽर्थान्तरस्य वचनमर्थान्तरम् । विक्षेपस्तु साधनोपन्यासमेव कालान्तरे कथयिष्यामीत्यभिधानमिति कथमविशेषः ? कदाचित्तु कथामारब्धां विच्छिन्दन्नपि प्रतिवाद्यवष्टम्भमुपलभ्य (तया) वितथमेव प्रकृतानुपयोगिनिमित्तमुपक्षिप्य विच्छिनत्ति विक्षेपे । अर्थान्तरे तु, हेतुश्च हिनोतेर्धातोरित्यादिप्रकृतसिद्धार्थमेव प्रसक्तानुप्रसक्तमवतारयन् प्रकृतोपयोगिवचननिचयं विच्छिनत्तीति व्यक्तो विवेकः ।

॥ असमर्थसाधनात् हेत्वाभासेषु विक्षेपान्तर्भावशङ्कापरिहारौ ॥

**यद्**प्यनेनोदितं—असमर्थसाधनाद्धेत्वाभासेषु वा विक्षेपो भवेदिति । तदपि न पेशलम् । असिद्धविरुद्धादेरिव हेतुधर्मविशेषानुविधानविरहात् । साध्यप्रतिपत्तिमुद्दिश्य अनुपादीयमानत्वाच्च । यदापि हेत्वाभासोपन्याससमनन्तरं विक्षेपनिमित्तमुपक्षिपति, तदापि न हेत्वाभासान्तर्भावः सम्भवी । अर्थान्तरस्यापि हेत्वाभासानन्तरभाविनस्तत्रैवान्तर्भावप्रसक्तेः । तस्य च हेत्वाभासभेदस्य भवतोऽपि सिद्धत्वात् । किंच कदाचन निर्दोषमपि साधनमभिधाय कथां विच्छिन्दन् कथं हेत्वाभासेन(सो न) निग्राह्यो नाम । न चासावनिग्राह्यः । तस्मादयं विक्षेपेणैव निग्राह्यः ।

॥ प्रकृतसाधनासंबन्धप्रतिपत्तेः निरर्थकापार्थकयोरन्तर्भावः तद्दूषणं च ॥

**यद्**प्ययमवोचत् प्रकृतसाधनासम्बद्धप्रतिपत्तिश्च निरर्थकापार्थकाभ्यां न भिद्यत इति । **तदप्यसम्बद्धम्** वर्णक्रमनिर्देशवदिति निरर्थकलक्षणस्य पौर्वापर्यायोगात् अप्रतिसंबद्धार्थस्य चापार्थकलक्षणस्यासङ्गतत्वात् ।

॥ तत्रैवातिप्रसक्तिदूषणं इष्टापत्त्या परिहारश्च ॥

**यत्पुनराह** स्म—अतिप्रसङ्गश्चैवंप्रकाराणां असम्बद्धप्रतिपत्तिभेदानां पृथक् निग्रहस्थाने प्रोक्त इति । **तदप्यदूषणम् ।** आनन्त्येऽपि निग्रहस्थानानां ज्ञेयानां (वि)मतिविकासाय कियतामेव लक्षणोदाहरणाभ्यां प्रपञ्चस्य प्रस्तुतत्वात् । **यदप्युवाच** अथोत्तरपक्षवाद्येवं विक्षिपेत् तस्यापि साधनानन्तरमुत्तरे प्रतिपत्तव्ये तदप्रतिपत्त्या विक्षेपप्रतिपत्तिरप्रतिभायामर्थान्तरे वाऽन्तर्भवतीति । तदपि न हृद्यम् । अर्था-

**स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा । यः स्वपक्षे मनागपि दोषं न परिहरति केवलं परपक्षे दोषं प्रसञ्जयति यथा भवांश्चोर इत्युक्ते त्वमपि चोर इति तस्येदं निग्रहस्थानम् स्वयं दोषाभ्युपगमात् परेणानभ्युपगमादिति । निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ।**

---

न्तराद्भेदस्य प्रागेव प्रतिपादितत्वात् । कथमभ्युपगम्य तूष्णीं भावस्य चाप्रतिभालक्षणस्याचार्योन्नीतस्यासम्भवात् ।

॥ मतानुज्ञालक्षणम् ॥

सूत्रान्तरमनुवक्ति—**स्वपक्षदोषाभ्युपगमात् परपक्षदोप्रसङ्गो मतानुज्ञा** (5-2-2) स्वपक्षे दोषाभ्युपगमादिति ल्यब्लोपे पञ्चमी । स्वपक्षे परोदीरितं दोषमभ्युपगम्य भवत्पक्षेऽप्ययं समानो दोष इति परपक्षे दोषस्य मतानुज्ञा नाम निग्रहस्थानम् । एवं हि ब्रुवाणेन परमतमनुज्ञातं स्यात् । तथा च परमतस्य अनुज्ञैव पराजयनिमित्तमित्यर्थः । एतस्यैव सूत्रस्य तात्पर्यं सोदाहरणमाह—**यः स्वपक्षे मनागपि दोषं न परिहरति, केवलं परपक्षे दोषं प्रसञ्जयति । यथा भवांश्चोर इत्युक्ते त्वमपि चोर इति तस्येदं निग्रहस्थानं स्वयं दोषाभ्युपगमात् परेणानभ्युपगमादिति ।**

अत एव यश्चोभयोरित्यादिन्यायोऽत्र निरवकाशः । परमते दोषस्य प्रमाणेनासाधितत्वात्, अन्यथा भवानपीत्यपिशब्दविरोधात् । तस्मात्स्वपक्षदोषे परिहृतेऽपि परो यदि व्यामोहेन तत्परिहारं न जानीयात्तदा परव्यामोहमपाकर्तुमनसा परप्रतीतन्यायेन सहात्मीयन्यायस्यैकयोगक्षेमतामुपपाद्य यश्चोभयोरिति न्यायः प्रतिपादनीय इति वेदितव्यम् । यद्यपि चेह स्वदोषाभ्युपगम एवोत्तराप्रतिपत्त्या पूर्णं पराजयनिमित्तं[तथापि]भवानपीति परत्र स्वदोषोपक्षेपप्रकारविशेषादेवासौ विज्ञायत इति तथैवोदाहरणं नानुपपन्नम् ।

॥ पर्यनुयोज्योपेक्षणलक्षणम् ॥

सूत्रान्तरमनुब्रवीति—**निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ।** (5-2-22) निग्रहं प्राप्तो निग्रहप्राप्तः, तस्यानिग्रहो निगृहीतोऽसीत्यपर्यनुयोगः, तत्

**पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः । तस्योपेक्षणं निग्रहं प्राप्तोऽसीत्यननुयोग इति ।**

पर्यनुयोज्योपेक्षणं नाम पराजयनिमित्तम् । **पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः । तस्योपक्षणं निगृहीतोऽसीत्यननुयोग इत्यर्थः** । इदं च निग्रहनिमित्तं निग्रहप्राप्तेन प्रतिवादिनं(पादिदं)प्रत्युद्भावनीयम् । न खल्वसौ दूषणमप्रमत्तो विवृणोति । नापि तदुपेक्षणेन असौ स्वात्मानमेव स्वयं पर्यनुयोज्योपेक्षणेन प्रेक्षावतां निगृह्णातीति सम्भवति । नच पर्यनुयोज्यतां परस्य परिकलयन्नेवोपेक्षत इति संभवति । तस्मात्सभापतिना, वादिप्रतिवादिभ्यां, वा क(स्य)स्यात्र पराजयः ? इति पर्यनुयुक्तया परिषदा पराजयनिमित्तमिदं प्रतिपादनीयम् । तथा च सति तत्त्वनिर्णयावसाने वादे द्वयोरपि निग्रहात्परिषदेव विजयते । जल्पवितण्डयोः पुनरुपेक्षक एव निग्राह्यः ।

॥ अत्र जयन्तभट्टसम्मतिः ॥

तथा चाभिहितं **भट्टजयन्तेन**—पूर्वपाक्षिकेण साधनाभासे प्रयुक्ते उत्तरपाक्षिकेण च तस्मिंस्तथात्वेनानुद्भाविते प्राश्निकानामपृष्टानां वक्तुमवसराभावात्स एव साधनाभासवादी कदाचिद्वैयात्यादेवं ब्रूयात्—"मयाऽस्य शक्तिं जिज्ञासमानेन साधनाभासप्रयोगः कृतः; एष तु मूर्खस्तं न जानाति" इति तदा कथं नाज्ञो निगृह्येत । एतेन दूषणाभासवाद्यपि व्याख्यातः । अथ वोभयाभ्यर्थिताः सभापतिनियुक्ता वा प्राश्निकास्तथा कथयन्तो निगृह्णन्त्येव पर्यनुयोज्योपेक्षिणम् । साधनाभासवादिनो धूर्ततया तदभिधानं सम्यक्साधनमजानतोऽर्थसंशयाद्वा संभवति । उत्तरपाक्षिकस्य तु तदनुद्भावनं मोहादेवेति स एव पराजीयत इति ।

॥ अत्र धर्मकीर्त्युक्तदूषणं तत्परिहारश्च ॥

अत्र यदुदीरितं **धर्मकीर्तिना**—यदि साधनाभासवादिनं निग्रहप्राप्तं प्रतिवादी न पर्यनुयुङ्क्तेऽप्रतिभैवास्योत्तराप्रतिपत्तेरिति न पर्यनुयोज्योपेक्षणं निग्रहस्थानमिति । **तदयुक्तम्** । अप्रतिभायास्तूष्णींभावरूपतया पूर्वनिरूपितायाः प्रकृते प्राप्त्यभावात् । **यदप्ययमवोचत्** न्यायचिन्तायां पुनर्द्वयोरेकस्याप्यत्र [न] जयपराजयौ; साधनाभासेन (अ)प्रतिपादनात् भूतदोषानभिधानाच्चेति । **तदपि** जल्पादौ जयन्तोदीरितन्यायनिरस्तम् ।

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः । यथा सावयवत्वेन पृथिव्यादौ कार्यत्वसाधने परो ब्रूयात् अप्रयोजकोऽयं हेत्वाभास इति तस्येदं मिथ्याभियोगलक्षणं निग्रहस्थानमिति ।**

---

य(द्य)दप्यनेनाभिहितं अथ कश्चिद्दोषमुद्भावयति (किं)कश्चिन्न तदा न निग्रहमर्हति, उत्तरप्रतिपत्तेः । अर्हत्येव सतो दोषस्यानभिधानादिति चेत्, न सन्त इति कृत्वा सर्वे दोषा अवश्यवक्तव्याः । अवचने चानिग्रहार्हः । एकेनापि तत्साधनविघातात् एकसाधनवचनवत् । यथैकस्यार्थस्यानेकसाधनसम्भव(वो)वेऽप्येकेनैव साधनेन तत्सिद्धेर्न सर्वोपादानमिति नैकं दोषमुद्भावयन्नेव परस्यानुद्भावनान्निग्रहार्ह इति । तत्र सम्प्रतिपत्तिरेवोत्तरम् । सर्वसम्भवद्दोषोद्भावननियमाभ्युपगमपूर्विकायां तु कथायामेकदूषणानभिधानेऽपि पर्यनुयोज्योपेक्षणं भवत्येव पराजयनिमित्तम् ।

**यत्पुनरुवाच** । अथ पूर्वपक्षवादी उत्तरपक्षवादिनं निग्रहप्राप्तं न निगृह्णाति तदा तयोर्न्यायेन नैकस्यापि जयपराजयौ । दोषाभासं ब्रुवाणमुत्तर(क्त)वादिनं स्वसाधनात् अनुत्सारयतोऽसमर्थितसाधनाङ्गत्वान्न जयो वादिनः, सर्वदोषासम्भवप्रदर्शनेन साधनाङ्गासमर्थनात् । नाप्युत्तरवादिनः भूतदोषाप्रतिपादनादिति । अत्रापि वादकथामपेक्ष्य सम्प्रतिपत्तिरेव । जल्पादौ पुनरेतदपि जयन्तोदीरितन्यायनिरस्तमिति ।

॥ निरनुयोज्यानुयोगलक्षणम् ॥

सूत्रान्तरमुद्धरति—**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोग इति** । (5-2-23)

एषोऽर्थः । अनिग्रहस्थाने निग्रहस्थानस्याभावेऽपि निग्रहस्थानलक्षणस्य समारोपात् निगृहीतोऽसीत्ययं निग्रहस्थानस्याभियोगो निरनुयोज्यानुयोगो नाम निग्रहस्थानम् । निरनुयोज्यो नाम, अनिग्राह्यः, तस्यानुयोगो निगृहीतोऽसीत्यभियोग इत्यर्थः ।

॥ अत्रोदाहरणम् ॥

अत्रोदाहरणमाह—**यथा सावयवत्वेन पृथिव्याः कार्यत्वसिद्धौ परो ब्रूयात् अप्रयोजकोऽयं हेत्वाभास इति । तस्येदं मिथ्याभियोगलक्षणं**

**स्वसिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ।**

---

**निग्रहस्थानमिति** । न खल्वसिद्धादिभेदेनाप्रयोजको नाम हेत्वाभासः सम्भवी । यथा चैतत्तथोपपादितं पुरस्तात् ।

॥ निरनुयोज्यानुयोगस्य निग्रहस्थानत्वाभाववादिभिक्षुमतम् ॥

यदत्र व्याचचक्षे भिक्षुः, यदि साधनवादिनमभूतैः दोषैरुत्तरवाद्यनुयुञ्जीत सोऽस्थाने निर्दोषं निग्रहस्थानस्य दोषस्याभियोक्तोद्भावयिता भवति । तथा च अभूतदोषोद्भावनलक्षणस्योत्तरस्याप्रतिपत्तेरितरेणोत्तराभासत्वेऽप्रतिपादिते अप्रतिभयैव निगृह्यत इति नेदमपि निग्रहस्थानान्तरमिति ।

॥ भिक्षुमतखण्डनम् ॥

तदप्यसङ्गतम् । अप्रतिभायास्तूष्णींभावरूपतया पूर्वमेव निरूपितत्वात् । यदप्युदितं–अथोत्तरवादिनं भूतं साधनदोषमुद्भावयन्तमपरः दोषाभासवचनोऽभियुञ्जीत, तस्य तेन भूतदोषत्वे प्रतिपादिते साधनाभासवचनेनैव निगृह्यत इत्येवमपि नेदं हेत्वाभासेभ्यो भिद्यते । अवश्यं हि विषयान्तरव्याप्त्यर्थं हेत्वाभासाः निग्रहस्थानत्वेन वक्तव्याः । तदुक्तं **परोक्तिरनर्थिकेति** । **तदप्यभद्रम्** । यस्मात् प्रतिवाद्युद्भावितहेत्वाभासोद्धारणमकुर्वाणोऽपि प्रतिवादिनमनिग्रहस्थाने निग्रहस्थानाभियोगेन भ्रामयन् अव्यवहितेन निरनुयोज्यानुयोगेन पराजीयते न पुनः व्यवहितेन हेत्वाभासेनेति ।

यद्वा प्रतिवादिन एव निरनुयोज्यानुयोगः, हेत्वाभासस्तु वादिन इति विषयविवेको भवत्विति ।

॥ अपसिद्धान्तलक्षणम् ॥

सूत्रान्तरमुपादत्ते–**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त (5-2-24) इति ।** अस्यार्थः—कथारम्भसमसमयं कस्यचिच्छास्त्रकारस्य सिद्धान्तमभ्युपगम्य, अनियमात्, अभ्युपगतसिद्धान्तविपर्ययेण, कथायाः प्रसङ्गोऽपसिद्धान्तो नाम निग्रहस्थानमिति ।

**यथा मीमांसामभ्युपेत्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह—कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गस्य साधिका भवितुमर्हतीत्यनुयुक्तः प्राह—तया क्रियया आराधितः परमेश्वरः फलं ददाति राजादिवदिति। तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानम्। प्रतिज्ञातार्थविपर्ययस्तु प्रतिज्ञाहानिः नापसिद्धान्तः इति। हेत्वाभासाश्च यथोक्ताः हेत्वाभासलक्षणेनैव यथोक्तेन हेत्वाभासा निग्रहस्थानानीत्यर्थः।**

---

॥ अपसिद्धान्तोदाहरणम् ॥

अस्योदाहरणमाह—**यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह। कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गसाधिका भवतीत्यनुयुक्तः प्राह—तया क्रिययाऽऽराधितः परमेश्वरः फलं ददाति राजवदिति। तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानमिति।** केचित्पुनरन्यथेदं सूत्रं व्याचक्षते—कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययात् कथाप्रसङ्गं कुर्वतोऽपसिद्धान्तो ज्ञेय इति। तानपाकुर्वन्नाह—**प्रतिज्ञातार्थविपर्ययस्तु प्रतिज्ञाहानिर्नापसिद्धान्त इति।** तस्मादभ्युपगतशास्त्रार्थविपरीतरूपैव कथाप्रसक्तिरपसिद्धान्त इत्यर्थः। यद्वा स्वीकृतार्थविपर्ययाविशेषात् [1]प्रतिज्ञाहानेः नापसिद्धान्तस्य भेद इत्याशङ्क्याह—**प्रतिज्ञातार्थेत्यादि।**

एतदुक्तं भवति—साधनवचनसम्बन्धिनी या प्रतिज्ञा तदर्थविपर्यासादेव प्रतिज्ञाहानिर्भवति। या पुनः शास्त्रविशेषप्रसिद्धमर्थमभ्युपगम्य प्रवृत्तस्य तदर्थविपरीता कथाप्रवृत्तिः सोऽपसिद्धान्त इति।

॥ हेत्वाभासेषु लक्षणातिदेशः ॥

सूत्रान्तरं संगृह्णाति—**हेत्वाभासाश्च यथोक्ताः** (5-2-25) **इति।** हेत्वाभासाश्च निग्रहस्थानानि भवन्ति। किमेते लक्षणान्तरयोगान्निग्रहनिमित्ततां

---

1. पञ्चम्यन्तमिदम्

**एतेन दुर्वचनकपोलत्रादित्रादीनां साधनानुपयोगित्वेन निग्रहस्थानत्वमुक्तं वेदितव्यम् । नियमकथायां त्वपशब्दादीनामपीति ॥**

---

भजन्ते यथा प्रमाणानि प्रमेयत्वमित्याशङ्क्याह—**यथोक्ता इति** । यथालक्षिताः पूर्वं तथैव हेत्वाभासा निग्रहस्थानानीत्यर्थः । चशब्देन दृष्टान्ताभासादिरपि संगृह्यते ।

॥ कपोलवादनादीनामप्युपलक्षणं सूत्रमिति तात्पर्यवर्णनम् ॥

सूत्राणि चैतानि लक्षणोदाहरणप्रपञ्चमुपलक्षयन्ति, न पुनरेतावन्त्येव निग्रहस्थानानीति परिसङ्ख्यापर्यवसायीनीति । तथा सत्येकेनैवोपलक्षणपरेण सूत्रसन्दर्भेणानुक्तस्यापि दुर्वचनादेरवरोधः सिद्ध इत्याह—**एतेन दुर्वचनकपोलवादित्रादीनामपि साधनानुपयोगित्वेन निग्रहस्थानत्वं वेदितव्यम् इति ।** कपोलवादित्रादीनामित्यादिपदेन कक्षविहितकमुत्प्लुत्य गमनं तालवादनं नृत्तकरणमित्येवञ्जातीयकमपरमपि साधनानुपयोगि संगृहीतं वेदितव्यम् । साधनानुपयोगश्चोपलक्षणार्थः । तेन दूषणानुपयोगित्वेनेत्यपि द्रष्टव्यम् ।

॥ सूत्रतात्पर्यवर्णनम् ॥

इदमुक्तं भवति — साधने दूषणे वा प्रतिपादनीये तदपहायापरं परानु[प]योगि प्रतिपद्यमानस्य विप्रतिपत्त्यप्रतिपत्तिभ्यामुपपन्न एव पराजय इति । कानिचित्तु निग्रहनिमित्तानि नियमाभ्युपगमपूर्विकायामेव कथायां उपलक्ष्यन्त इत्याह—**नियमकथायां त्वपशब्दादीनामपीति ।** तथा च लोके धनक्षेत्रविषयं व्यवहारं कुर्वाणः केनापि शब्देन प्रकृतोपयोगिनं न्यायमभिदधानः कदाचिदपशब्दप्रयोगेऽपि विजयवानेव व्यवस्थाप्यते । तस्मान्नापशब्दस्य स्वतः पराजयकारणत्वम् । नियमकथायां पुनरभ्युपगतनियमपरित्याग एव पराजयहेतुरिति प्रतिपादितम् ॥

तस्मात्साधुशब्दैरेव मया कथायां कथयितव्यमिति नियम्य प्रवृत्तस्यैवापशब्दो निग्रहनिमित्तमपीति युक्तम् । आदिपदेन वर्गापवर्गपरित्यागनियममङ्गीकृत्य प्रवृत्तस्य तत्प्रयोगो निग्रहनिमित्तमित्येवञ्जातीयकं कथानियममपरमपि परिगृहीतमूहनीयमिति ॥

इति भासर्वज्ञविरचिते न्यायसारे
॥ द्वितीयः परिच्छेदः ॥

---

ऊहानुमानं निरणायि साङ्गं
कथाश्रयं च छलजात्युपेतम् ।
सन्निग्रहस्थानमपाकृतं च
परोदितं दूषणजातमेषाम् ॥

इति महाराजाधिराजश्रीमदपरादित्य-
देवविरचितायां न्यायमुक्तावल्यां

इति महाराजाधिराजश्रीमदपरादित्यदेवविरचितायां
न्यायमुक्तावल्यां द्वितीयः परिच्छेदः ॥

—: * :—

श्री भासर्वज्ञविरचिते

# न्यायसारे

अपरार्कदेवविरचितया

न्यायमुक्तावल्या संवलिते

## द्वितीयो भागः

## ॥ अथ तृतीयः परिच्छेदः ॥

**अवसितमनुमानम् । आगमस्येदानीं लक्षणमुच्यते ।**
**'समयबलेन सम्यक् परोक्षानुभवसाधनमागमः ।'**

---

### तृतीयः परिच्छेदः

जयति भुवनबीजं ज्योतिरेकं मुरारेः
हृदयनिहितमात्रे यत्र संसारयन्त्रम् ।
गलति गलितमोहं शश्वदानन्दसान्द्रं
यदभिदधति वेदा विश्वतश्चक्षुरेकम् ॥ १ ॥

नमः सकलसंसारदारुदारणकारिणे ।
शिवाय शिवसङ्कल्पकल्पिताशेषभूतये ॥ २ ॥

अथ अनुमाननिरूपणानन्तरं निर्दिष्टस्यागमस्यानुमाननिरूपणादनन्तरमेवावसरो लक्षणादिनिरूपणस्य । निर्णीतं चानुमानम् । तस्मादागमलक्षणमधुनाऽभिधीयत इत्याह—**अवसितमनुमानम् । आगमस्येदानीं लक्षणमुच्यत** इति ।

लक्षणमेवाह—**समयबलेन सम्यक्परोक्षानुभवसाधनमागम इति ।** समयबलेनेत्यनुमानव्यवच्छेदार्थम् । नहि समयसामर्थ्येनानुमानं प्रवर्तते । किं तर्हि ? अविनाभाववशेन । समयश्चाविनाभावाद्भिन्न एव । स्वाभाविको ह्यविनाभावः । समयः पुरुषबुद्ध्यधीन इति ।

॥ शब्दस्यानुमानेऽन्तर्भावं वदतः कन्दलीकारस्य मतम् ॥

एवं च सति शब्दस्याप्यविनाभावान्तर्भावमुपपादयता यदभिहितं **न्यायकन्दलीकारेण** प्रथमं गोशब्दादुच्चरिताद्वक्तुः ककुदादिमदर्थविवक्षा गम्यते । स्वसन्ताने गोशब्दोच्चारणस्य तदर्थविवक्षापूर्वकत्वोपलम्भात् । तदर्थविवक्षया

चार्थानुमानम् । एवं चात्र प्रयोगः—पुरुषो धर्मी ककुदादिमदर्थविवक्षावान् गोशब्दोच्चारणकर्तृत्वादहमिवेति । अर्थाभावेऽप्यनाप्तानां विवक्षोपलब्धेर्न विवक्षातोऽर्थसिद्धिरिति चेत्, शब्दादपि कथं तत्सिद्धिः? भ्रान्त्या विप्रलम्भधिया चार्थशून्यस्य शब्दस्य प्रयोगात् । आप्तोक्ताच्छब्दादर्थप्रतीतिरिति चेत्; आप्ताभिप्रायादेवार्थस्याधिगतिरिति समानमिति ।

॥ उक्तमतखण्डनम् ॥

**तदेतत्पर्यनुयुज्येत ।** किमभिप्रायानुमानद्वारेण पदार्थमात्रमनुमीयते? यद्वा पदार्थानां पर[स्पर]संसर्गोऽपि? पूर्वत्र वैयर्थ्यं स्फुटमेव । नहि भूयो भूयः समधिगतं पदार्थमात्रं केचिद्बुभुत्सन्ते प्रतिपिपादयिषन्ति वेति । संसर्गे तु बुभुत्सिते यद्याप्ताभिप्रायोऽधिग(मो)मकः अभिप्रायमात्रस्यानेकान्तात् । तर्हि[विशे]षणीभूतमाप्तत्वं कीदृशं? न तावद्विप्रलम्भकत्व[ाभाव]मात्रं, तदभिप्रायस्यापि भ्रान्तिमूलस्य पदार्थसंसर्गव्यभिचारात् । अथ विभ्रमाद्यशेषदोषवैधुर्यमाप्तलक्षणं, तदपि न तावत्सर्वविषयं शक्यमध्यवसातुं असर्वज्ञानां, भ्रान्तेः पुरुषधर्मत्वात् । यत्र क्वचनाप्तत्वमप्यनाप्तसाधारणमिति कथमनेन व्यभिचारव्यवच्छेदः । विवक्षितसंसर्गविशेषविषयं पुनराप्तत्वं प्रथमत एव संसर्गाग्रहे दुर्ग्रहम् । नह्यनधिगते विशेषणे विशिष्टबुद्धिरुत्पत्तुमर्हतीति ।

॥ शब्दस्यानुमानविधया प्रामाण्ये उदयनोक्तरीतिः ॥

यदपि संसर्गभेदे पदानामनुमानभावमुपपादयन् **किरणावल्यामुदयनो** वदति स्म — यद्यप्येते पदार्था मिथः संसर्गवन्तः वाक्यत्वादिति व्यधिकरणम् पदार्थत्वादिति चानैकान्तिकम् पदैः स्मारितत्वादित्यपि तथा । यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ साध्याभावः । नह्यत्र संसर्गः संयोगस्समवायः तादात्म्यं विशेषणविशेष्यभावो वा संभवति । ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येणानुमानान्तर्भाववादिभिर्नेष्यते । नच लिङ्गतया ज्ञापकत्वं यल्लिङ्गस्य तदेव तस्य विषयः; इति परस्पराश्रयप्रसङ्गात् । तदुपलम्भे हि व्याप्तिसिद्धिः तत्सिद्धौ तदनुमानमिति । तथाप्याकाङ्क्षादिमद्भिः पदैः स्मारितत्वाद्गामभ्याजेति पदार्थवदिति स्यात् । नच विशेषासिद्धिर्दोषः संसर्गस्य संसृज्यमानविशेषापेक्षयैव विशिष्टत्वात् । यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वे

सति तत्स्मारकत्वात् गामभ्याजेति पदकदम्बकवदिति । नन्वेवमर्थासिद्धिः दोषः, ज्ञानावच्छेदकतयैव तत्सिद्धेः । तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति ।

॥ उदयनमतखण्डनम् ॥

तत्रापि यथाश्रुतस्य प्रथमहेतोरनाप्तोदितपदस्मारितैः पदार्थैः स्पष्ट एव व्यभिचारः । द्वितीयेऽपि संसर्गज्ञानपूर्वकत्वे यथाश्रुते साध्ये श्रोतुः संसर्गप्रमित्यनुपपत्तिः संसर्गज्ञानमात्रस्याप्यनुमितस्यायथार्थत्वसम्भवात् । संसर्गप्रमितिपूर्वकत्वे तु साध्ये विवक्षिते हेतोस्तदवस्थ (मि) मेव (हेतो) सव्यभिचारत्वम् । अनाप्ताभिहितानामपि पदानामाकाङ्क्षा [दिम] त्त्वे सति स्मारकत्वात् । नच तेषां संसर्गप्रमितिपूर्वकत्वमिति । आप्तोक्तत्वेन विशेषणाद्धेतुद्वयेप्यव्यभिचारसिद्धिरिति चेन्न । पूर्वोक्तेन मार्गेण विशेषणीभूतस्याप्तत्वस्यैव विमर्दासहत्वात् ।

॥ आप्तवाक्यं पृथक् प्रमाणं इति वदतः दोषसाम्यनिषेधः ॥

एतदनुमानात्पृथग्भावेन शब्दः प्रमाणमिति वर्णयतापि तस्याप्तोक्तत्वेन प्रामाण्यमवश्याभ्युपेयम् । तत्र च समानो दोषः । तथा च कथं वयमेव पर्यनुयोज्या इति । **नैतत्सारम् ।** अस्मन्मते खल्वापाततो वाक्यमात्राद्वाक्यार्थाध्यवसायो जायत एव । अप्रामाण्यसंशये तु तदपसारणार्थमाप्तोक्तत्ववेदनमुपयुज्यते । तच्चावसिते संसर्गे तद्विषयतया सुज्ञानमेव । तदपाकरणोपायश्च निवेदयिष्यते । लिङ्गं पुनरविदिताव्यभिचारमनिश्चायकमेव । अन्यथा त्वव्यभिचारपरिच्छेदवैयर्थ्यात् सर्वानुमानेषु । नच यथोदितयोः हेत्वोराप्तोक्तत्वाविशेषितयोरव्यभिचारः समस्तीत्युदितम् । नचैवमपि आरोपिताव्यभिचाराभ्यामेताभ्यां अर्थाध्यवसाय इति साम्प्रतम् । लोलाक्षीलक्षमभिरमयेत् विद्याधरराज्यकाम इत्यनाकलिताप्तभावस्यापि पुंसो वचनमात्रादव्यभिचारानुसन्धानमन्तरेणाप्यर्थाध्यवसायस्याप्यनुभवसिद्धत्वात् । प्रामाण्यमात्रसन्देहदर्शनात् । अव्यभिचारनिश्चये तु प्रामाण्यसन्देहोऽपि स न सम्भवेत् अन्तर्भावितप्रामाण्यस्यैवाव्यभिचारस्य सिद्धेः [1][स] हि तन्नान्तरीयकतया तदुपस्थापयति । तत्र चाप्रमाणमिति शङ्काऽवकाशवती ।

---

1. अव्यभिचारः

॥ आप्तत्वं परिष्कृत्योक्तदोषवारणम् ॥

**यत्त्विदं**[1] गदितं—तदेतच्छब्देऽपि समानम्। नहि शब्दमात्रं विवक्षितार्थप्रतिपादकं घटशब्दस्यापि शकटार्थप्रतिपादकत्वोपपत्तेः। नाप्यर्थप्रतिपादकत्वमात्रं शब्दत्वम्। शब्दापशब्दविवेकानुपपत्तेः। तद्विभागव्यवस्थापकव्याकरणादिवैयर्थ्याच्च। किंतु यच्छब्दो यदुपाधिसम्बन्धात् यस्मिन्नर्थे आप्तेन सङ्केतितः, स एव तस्य प्रतिपादक इति। तच्चैतच्छब्दस्वरूपमात्रे संभवति। नचैवं सति 'सृण्येवजर्भरी तुर्फरीतु' इत्येवमादेः वेदवाक्यादाप्तोक्तत्वप्रतिसन्धानमात्रेणाविदितपदपदार्थस्याप्यर्थप्रतीतिसङ्गः।

नह्याप्तेनोच्चारणमात्रं तदुक्तत्वम्। किंतु सङ्गतिमत्तया प्रतिपादनम्। कथं तर्हि शब्दाभासेऽपि प्रवृत्तिसम्भवः? अशब्द एव शब्दत्वाध्यारोपात् अलिङ्ग एव लिङ्गत्वाध्यारोपवत्। यथा चलन्तीं पताकां दृष्ट्वा वायुः वातीत्यादिष्वविनाभावशालिष्वपि प्रचुरतराभ्यासदशापन्नत्वेन मुहूर्तमपि अनुमितौ न विलम्बन्ते तथा शब्देऽपीति न कश्चिद्विशेषः। अन्यथा त्वाप्तोपदेशः शब्द इति लक्षणस्य निर्लक्षणत्वादिति।

॥ अस्यापि पक्षस्य खण्डनम् ॥

तदेतदपि सुप्तप्रायं पश्यामः। तथाहि—इदमत्र सम्प्रधार्यम्—किमाप्तेन सङ्गतिमत्तया प्रतिपादितत्वमाप्तोक्तत्वं संसर्गप्रतीत्युपपत्तये प्रत्येतव्यम्। अथवा संसर्गविशेषप्रतिपादनाभिप्रायेणाप्तप्रयुक्तत्वमपीति। प्रथमे पदानां पदार्थेषु सङ्गतिमत्ताप्रतिपादकाद्वाक्यादापाततस्तदर्थाधिगतौ तद्विषयमाप्तत्वमधिगन्तुं शक्यते सङ्केतयितुरिति नानुपपत्तिः। यदा पुनः प्राथमिकी व्युत्पत्तिरुत्तमवृद्धप्रयुक्तशब्दश्रवणसमनन्तरभाविनीं मध्यमवृद्धप्रवृत्तिमुपलभ्य तत्कारणभावेन संसर्गविज्ञानमनुमाय तस्य शब्दानन्तरभावितया तत्र शब्द एव कारणमित्येवं प्रतीतिरूपा संवृत्ता तदापि तथैवाविदितसङ्गतिभ्यः पदेभ्यः समभिव्याहृतेभ्यः पदार्थानां आकाङ्क्षाद्यनुसन्धानमात्रेण संसर्गप्रतिपत्तिर्दृश्यत एव। तस्यां तु प्रामाण्यनिर्णयार्थं तत्संसर्गविषयमाप्तत्वं वक्तुः प्रतिपिसन्ति लौकिकाः तत्र चानुपपत्तिर्नास्तीति निवेदितम्।

---

1. किरणावली P. 313

॥ द्वितीयविकल्पखण्डनम् ॥

अत एव न द्वितीयपक्षस्यावकाशः। न खलु संसर्गविशेषप्रतिपादनाभिप्रायेणाप्तोक्तत्वं विदित्वा वाक्यात् संसर्गमधिगच्छति। लोलाक्षीलक्षवाक्याददविदितेऽप्याप्तोक्तत्वे संसर्गप्रतीतिमात्रस्योदितत्वादिति किमवशिष्यते, यत्प्रागेव परिहृतप्रायं न भवेदिति। तदेवमनुमानात्पृथग्भावेन शब्दप्रामाण्ये शब्दमाहात्म्यादेवाधिगमकं संसर्गमधिकृत्य शब्दनिश्चेयमाप्तोक्तत्वम्। अनुमानपक्षे पुनर्विशेषणीभूतमाप्तोक्तत्वमेव दुर्निश्चयमिति निरूपितम्। यस्मादविनाभावं विहाय शब्दः प्रमाणं स्यात्, बाह्ये वस्तुनि तस्मादनुमानाद्भिन्न एवासौ।

॥ शब्दानां अर्थव्याप्तत्वाभावे प्रामाण्यानुपपत्तिः ॥

परः पुनः प्रत्यवतिष्ठते—प्रामाण्यमेव तर्हि दुरुपपादम्। तथा हि—यस्य यत्र प्रतिबन्धो नास्ति न तस्य तत्र प्रामाण्यं, यथा दहनेऽप्रतिबन्धस्य रासभस्य। अप्रतिबन्धाश्च शब्दा बहिरर्थ इति व्यापकानुपलब्धिः। प्रामाण्यं हि विषयविशेषे प्रतिबन्धव्याप्तमन्यथा नियामकाभावात् सर्वस्य सर्वत्र प्रामाण्यप्रसङ्गात् नियामकान्तरानुपलम्भाच्च। तथाचाप्रतिबन्धविरुद्धप्रतिबन्धव्याप्तं प्रामाण्यमिति विरुद्धव्याप्तोपलब्धिर्विपक्षे बाधिकेति।

॥ उक्तनियमखण्डनम् ॥

तदपि न हृदयङ्गमम्। तथाहि, कः प्रतिबन्धार्थः सम्बन्धमात्रं, उताविनाभावः? प्रथमे समवायाख्यसम्बन्धस्वीकारेण हेत्वसिद्धिः। द्वितीये चक्षुरादिना व्यभिचारः, तस्य रूपादिनाऽस्य गोचरेणाविनाभावाभावात्। रूपादिकार्यतया चक्षुरादेरप्यविनाभूतस्यैव तत्र प्रामाण्यमिति चेत्; न। क्षणभङ्गासिद्धावस्याः प्रक्रियाया असम्भवात्। क्षणभङ्गभङ्गस्य करिष्यमाणत्वात्। अविनाभावबलेन प्रमापकत्वे प्रत्यक्षेऽप्यविनाभावपरिज्ञानप्रसङ्गात्। नहि इदमविनाभावमाहात्म्यं यदिदं सत्तामात्रेण विषये बोधमादधाति। तथा सति धूमादपि सत्तामात्रेण धूमध्वजे बोधाधानप्रसक्तेः।

॥ प्रत्यक्षस्याविनाभावापेक्षत्वे योगिप्रत्यक्षे व्यभिचारः ॥

किञ्च यद्यविनाभावसापेक्षं प्रत्यक्षमपि स्वगोचरे प्रमाणं, न तर्हि योगिप्रत्यक्षमनागतार्थविषयं प्रामाण्यमासादयेत्। नहि तत्राविनाभावनियामकं भवदभिमतं तादात्म्यं

तदुत्पादो वा संभवति। नहि भावि भूतस्यात्मा, नापि कारणमिति समर्थितम्। तस्माद-विनाभावव्याप्तं प्रामाण्यमित्यसिद्धत्वात् शब्दानामपि बाह्ये वस्तुनि युक्तं प्रमाणत्वम्।

॥ शब्दस्यार्थासंस्पर्शित्वमतनिराकरणम् ॥

यत्पुनः करशाखाग्रे करिसत्तावबोधकम्।
वाक्यं व्यभिचरत्यर्थमर्थासंस्पर्शितोदिता ॥ १ ॥

इन्द्रियप्रतिबन्द्यैव कर्तव्या तन्निराक्रिया।
यस्मादिन्द्रियजा बुद्धिरप्यर्थव्यभिचारिणी ॥ २ ॥

निर्दोषेन्द्रियजा नैषा यद्यर्थव्यभिचारिणी।
आप्तोपदेशजाप्येषा नार्थं व्यभिचरिष्यति ॥ ३ ॥

तदलमनया प्रसक्तानुप्रसक्त्या। प्रकृतमनुसरामः। समयसहायादपि यतः कुतश्चन सन्देहो विपर्यासो वा जायते तद्व्यवच्छेदार्थं सम्यग्ग्रहणम्। सविकल्पकप्र-त्यक्षमपि समयसापेक्षमेवानुभवनमाधत्त इति तद्व्यवच्छित्तये परोक्षग्रहणम्। सम्यक्चासौ परोक्षानुभवश्च तस्य साधकं न करणमित्यर्थः।

॥ आगमप्रामाण्यस्य विकल्प्य खण्डनम् ॥

अत्राह-भवत्वेवंलक्षणः आगमः। तथापि न शक्यमस्य प्रामाण्यमवधारयितुं, तद्धि प्रवृत्तिसामर्थ्यादवधारणीयमाप्तोक्तत्वेन वा? न प्रथमः चक्रकप्रसक्तेः। प्रामाण्यनिर्णये हि प्रवृत्तिः प्रवृत्तस्य प्रवृत्तिसामर्थ्यपरिज्ञानं ततश्च प्रामाण्यनिर्णय इति। प्रामाण्यसन्देहेऽपि प्रवृत्तिरिति चेत्, व्यर्थस्तर्हि प्रवृत्तिसामर्थ्याधीनः पश्चात् प्रामाण्य-निर्णयः। तदभावेऽपि प्रवृत्तेः सिद्धत्वात्। नापि द्वितीयः, पुरुषाणां भ्रमविप्र-लम्भादिसम्भवात् आप्तत्वस्याशक्यनिश्चयत्वादिति।

अत्रोच्यते—

प्रवृत्तिसामर्थ्यवशेन यत्र
प्रामाण्यमाप्तप्रणयश्च सिद्धः।
व्याप्तिग्रहात्तत्र वचोऽन्तराणां
प्रामाण्यमाप्तप्रणयानुमेयम् ॥

**स द्विविधः। दृष्टादृष्टार्थभेदात्। तत्र दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात् प्रामाण्यं गम्यते। अदृष्टार्थानां पुनः आप्तोक्तत्वेन। कथं? 'पुत्रकामो यजेत' इत्यादि वाक्यानां प्रवृत्तिसामर्थ्यात् प्रामाण्यमनुमाय तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्य तत्प्रणीतानां सर्ववाक्यानामप्रामाण्यकारणाभावात्प्रामाण्यमनुमीयते।**

---

एतदेवोपपादयितुं द्विविधस्तावदागमः कश्चिद्दृष्टफलः कश्चिददृष्टफल इत्यवान्तरभेदादित्याह—**स द्विविधो दृष्टादृष्टार्थभेदादिति।** भवत्वेवं प्रस्तुते किमायातमत आह --**तत्र दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात् प्रामाण्यं गम्यत इति।** तत्र तन्मध्ये दृष्टार्थानां वाक्यानां बाहुल्येन प्रायेण प्रवृत्तिसामर्थ्यात् प्रवृत्तेः फलाभिसम्बन्धलक्षणात्प्रामाण्यं गम्यत इति।

॥ दृष्टार्थवाक्यप्रामाण्योपपादनम् ॥

नचेह प्राचीनचक्रकप्रसरसम्भवः, फलप्राप्तिसंशयादेवाभिनववैद्योपदिष्टेष्वौषधे-[ष्विव व्याधि]पीडया[प्रवृत्ति](विप्रत्तिपत्ति)सम्भवात्। नचैवं सति पाश्चात्यप्रामाण्यनिर्णय-नैष्फल्यं, तदेककर्तृकेष्वदृष्टार्थेषु वचनान्तरेष्वाप्तोक्ततया प्रामाण्यानुमितौ दृष्टान्त-सिद्ध्यर्थत्वात्। न चादृष्टार्थेष्वपि कर्मसु फलसन्देहादेव प्रवृत्तिरस्तु किं प्रामाण्यानुमानेनेति वर्णनीयम्। बहुवित्तव्ययायाससाध्येषु तेषु फलनिश्चयं विना विचारकाणां प्रवृत्त्यसम्भवात्। क्वचित्पुनः कर्मकर्तृसाधनवैगुण्यादसामर्थ्यमपि प्रवृत्तेः सम्भवतीति **प्रायेणे**त्युदितम्। न खलु सामग्रीवैगुण्यात् क्वचित्फलानिष्पत्तावपि अन्वयव्यतिरेकावसितं साधनत्वं अन्यथा भवतीति; सर्वसाधनानां असाधनत्वप्रसङ्गादित्यर्थः।

तदेवं दृष्टार्थेषु प्रामाण्यनिर्णयमुपपाद्य तत्रैव गृहीतव्याप्तिकादाप्तोक्तत्वाद-दृष्टार्थानामपि तदेककर्तृकानां प्रामाण्यमवसीयत इत्याह—**अदृष्टार्थानां पुनराप्तोक्तत्वेनेति।** एतदेव प्रश्नपूर्वकं स्पष्टयति —**कथं? पुत्रकामो यजेतेत्यादिवाक्यानां प्रवृत्तिसामर्थ्यात्प्रामाण्यमनुमाय तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्य तत्प्रणीतानां सर्ववाक्यानामप्रामाण्यकारणाभावात्प्रामाण्यमनुमीयत इति।**

॥ आप्तद्वैविध्यकथनम् ॥

अत्र चाप्तत्वं प्रक्षीणरागादिदूषणत्वे सत्युपदेष्टृत्वम्। तच्च द्विविधम् —परमपरं च। परं सर्वविषयं सर्वज्ञस्यैव सम्भवेत्। अपरं पुनरसर्वविषयं आर्यम्लेच्छादेरसर्वविद एव। तत्रापराप्तस्यातीन्द्रियार्थदर्शनमनुपपन्नम्। तत्र तदिन्द्रियाणामप्रवृत्तेः। अत्यन्तादृष्टे व्याप्तिग्रहणासम्भवेनानुमानस्याप्यसम्भवात्। न खलु सामान्यतोऽप्यत्र वैदिककर्मभेदस्य फलविशेषसाधनत्वे प्राथमिकी व्याप्तिप्रतीतिः सम्भविनी। नचागमान्तरेणातीन्द्रियार्थदर्शनं, तस्याप्यस्मदादिप्रणीतत्वे सत्यनाश्वासात्। अनवस्थापत्तावन्धपरम्पराप्रसक्तेः। अन्ततोऽप्यतीन्द्रियार्थसाक्षात्कर्तुर्विलक्षणपुरुषस्याभ्युपगमे "प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धन" इति न्यायेन स एव प्रथमतोऽवधार्यते।

तदिदमभिसन्धायाभिहितं—**तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्येति।** हन्तैवं सति सुगतादिप्रणीतानामप्यागमानां प्रामाण्यं प्रसक्तं, तत्रापि ज्योतिर्गारुडादिरूपाणामेकदेशानां संवाददर्शनादित्याशङ्क्याभिहितम्—**प्रामाण्यकारणाभावादिति।**

॥ इतरागमानामनाप्तमूलता वेदानामीश्वरप्रणीतत्वं च ॥

अयमभिसन्धि :—यत्रैकदेशसंवादः प्रणेतुरतीन्द्रियार्थेष्वपि (कथं) साक्षात्कारमापादयन्नखिल[म]प्रामाण्यकारणमपह[न्ति](स्ति) तत्रैव प्रामाण्यमवधारयितुं शक्यम्। नचागमान्तरेषु तादृशः संवादः सम्भवति। वेदवेदाङ्गेभ्योऽपि ज्योतिर्गारुडादिकमाकृष्य भाषान्तरेण स्वागमेष्वेकदेशसंवाददर्शनेन श्रद्धामुत्पादयितुं उपदेशोपपत्तेः। नच वचनीयं—

शास्त्रान्तरेषु दृष्टा[न्तदृष्टान्येव](न्तिदृष्टानि)प्रतारकः।
कर्माण्युपदिशन् वेदैर्लोकं विप्लावयेदिति ॥ १ ॥

हेतुदर्शनशून्यानां बहूनां हि परिग्रहः।
प्रतारकप्रणीतत्वशङ्कायां संभवेत्कथम् ॥ २ ॥

हेतुदर्शनमन्येषां आगमानां परिग्रहे।
प्रतारकप्रणीतत्वशङ्कायामपि विद्यते ॥ ३ ॥

तथा ह्यभक्ष्यभक्षादिविभागाभाववेदिषु ।
रागिणामर्थसन्देहेऽप्यागमेषु परिग्रहः ॥ ४ ॥

येऽपि भक्ष्यादिभेदानां प्रतिपादनकारिणः ।
सुतीव्रब्रह्मचर्यादिविधियोगिन आगमाः ॥ ५ ॥

तेषामप्यर्थसन्देहादर्ष्टार्थपरिग्रहः ।
निर्णीतमानभावेषु वेदेष्वनधिकारतः ॥ ६ ॥

अन्यस्यानधिकारेण वेदस्य तु परिग्रहः ।
गत्यन्तरस्य भावेन न शङ्कामधिरोहति ॥ ७ ॥

तत्रोत्तमाधिकारेऽपि वैदिकैरपरिग्रहात् ।
वेदाधिकारभ्रष्टानामपि तत्र प्रवेशनात् ॥ ८ ॥

साधिकारास्तु ये केचित् वेदवेद्येषु कर्मसु ।
तेऽपि दारिद्र्यदोषेण केचिज्जीवनकाङ्क्षिणः ॥ ९ ॥

बाह्यलिङ्गानि बिभ्राणा मोहयन्ति धनेश्वरान् ।
त्रैवर्णिकास्तु श्रीमन्तो नहि दृष्टास्तथाविधाः ॥ १० ॥

तस्माद्बहुषु देशेषु हेतुदर्शनवर्जितैः ।
पुंभिः परिगृहीतत्वात् वेदा आप्तप्रणेतृकाः ॥ ११ ॥

हेतुदर्शनमूलत्वाद्बाह्या(ना)[ग]मपरिग्रहः ।
आप्तप्रणीततां तेषां नोपपादयितुं क्षमः ॥ १२ ॥

एवं व्यवस्थिते वेदे प्रणेता परमेश्वरः ।
अपि वा कोऽपि योगर्द्धिसिद्धातीन्द्रियदर्शनः ॥ १३ ॥

इति शङ्कामपाकर्तुं युक्तिरेषाऽभिधीयते ।
योगसिद्धेष्वनाश्वासादीशः कर्ता श्रुतेरिति ॥ १४ ॥

॥ योगशक्तिजत्वमागमानामिति पक्षनिरासः ॥

न खलु योगप्रभावजनितातीन्द्रियदर्शन एव कोऽपि प्रणेता वेदानामिति शक्यमाश्रयितुम् । नहि योगाभ्यासप्रभावभावितः संस्कारः सत्य एवेति समाश्वास-

कारणं पश्यामः । तज्जातीयकारणस्य लोके बहुलं व्यभिचारोपलम्भात् । तथा च कथं तन्मूलान्वेदानपि विश्वस्य महाजनः परिगृह्णीयात् । प्रमाणान्तरेण संवादेन समाश्वास इत्यप्ययुक्तम् । अदृष्टार्थेषु कर्मसु तदसम्भवात् । न च तत्राप्यागमान्तर-संवादसंभव इति साम्प्रतम् । यौगिकसाक्षात्कारमूलत्वे सत्यागमान्तरेऽप्यनाश्वासात् । परमेश्वरप्रणीतत्वाभ्युपगमे त्वन्ततः प्रथमस्यैव तथाभावोपपत्तेः । तथापि दृष्टार्थस्यैकदेशस्य संवादादन्यत्राप्याश्वास इति चेन्न ।

मिथ्यादर्शनमूलेषु स्वप्नाख्यानवचस्स्वपि ।
संवादस्यैकदेशेषु दर्शनाद्व्यभिचारतः ॥ १ ॥

किं चैकदेशसंवादः सुगताद्यागमे समः ।
सत्यार्थतासमाश्वासं(ः) कथं वेदे करिष्यति ॥ २ ॥

विशेषहेतुर्यस्तूक्तः महाजनपरिग्रहः ।
स एव प्रथमं सिद्ध्येत्कथमाप्तोक्त्यनिश्चये ॥ ३ ॥

ग्रन्थराशिमियन्तं को हेतुदर्शनवर्जितम् ।
कुर्यान्नैकोऽपि कण्ठस्थं तदर्थं वा समाचरेत् ॥ ४ ॥

॥ महाजनपरिग्रहः वेदस्येश्वरप्रणीतत्वसूचकः ॥

न खलु सर्वस्वदक्षिणाप्रदानादौ महाप्रयासे प्रमाणमन्तरेण कस्यापि प्रवृत्तिः संभवति । किं पुनर्बहूनाम् । एतेन[1] जीविकार्थमध्ययनमर्थानुष्ठानं चेति निरस्तम् । को हि नाम सर्वस्वं परित्यज्य प्रतारणया जीवितुमिच्छेत् । किमर्थं वैनं जीवयन्ति परेऽपि । न तावददृष्टोपकारं दृष्ट्वा तथाविधेभ्यो दानम् । अदृष्टोपकारस्त्वागमप्रामाण्यमन्तरेण कथं सिद्ध्येत् । तस्मात्परमाप्तप्रणीततामवधार्यैव प्राथमिको महाजनपरिग्रहः, न योगसिद्धानां (शमा) संभवत्यपि तादृश्याप्तभावे समाश्वाससम्भव इत्युदितम् ।

॥ ईश्वरे तु समाश्वासात् वैदिके प्रवृत्त्युपपत्तिः ॥

देवे तु जगतां नाथे शिवे वेदप्रणेतरि ।
निसर्गसिद्धसार्वज्ञे समाश्वासः समञ्जसः ॥ १ ॥

---

1. एकेन

प्रभावातिशयोऽप्यस्य शक्यज्ञानस्तदातनैः ।
विचित्रकार्यनिर्माणनिपुणत्वप्रवेदनात् ॥ २ ॥

दर्शयत्यत एवायं विभूतीरन्तरान्तरा ।
आश्वासमात्मन्युत्पाद्य मार्गे लोकं प्रवर्तयन् ॥ ३ ॥

तस्य प्रामाणिकत्वं च विस्तेरणाभिधास्यते ।
पुरुषाधीनरचना वेदा इत्यपि वक्ष्यते ॥ ४ ॥

तस्मादाप्तकृतत्वेन महाजनपरिग्रहः ।
उपपादयितुं वेदविधाता कल्प्यते शिवः ॥ ५ ॥

[शिवोऽपि हि] शरीरादिरहितो रचयेत्कथम् ।
वेदराशिं समग्रे हि कारणे कार्यसिद्धयः ॥ ६ ॥

नेयमप्यनुपपत्तिर्यस्मात्—

॥ अशरीरस्य वेदकर्तृत्वम् ॥

स्वेच्छानिर्मितदेहभेदसचिवो वेदप्रणेता शिवः
न ह्येतादृशदेहयोगिनममुं नेच्छन्ति नैयायिकाः ।
तद्भोगायतनस्तु भोगविरहान्नेष्टं तृणादेर्विधौ
वैलक्ष्याच्च न कार्यमात्रकरणे कार्यान्वयः स्वीकृतः ॥ ७ ॥

कथमपरथा मूर्तिं त्रेधा वदन्ति महर्षयः
कथमिव दश प्रादुर्भावान् स्मरन्ति च शार्ङ्गिणः ।
त्रिपुरदहनं नीलग्रीवं क्षपाकरभूषणं
विविधमसकृद्देहं वेदा वदन्ति च शंसितुः ॥ ८ ॥

पराशरोऽपि भगवान् स्वेच्छाविग्रहमीशितुः ।
पुराणे वैष्णवे प्राह पुराणपुरुषस्तुतौ ॥ ९ ॥

नाकारणात्कारणाद्वा कारणाकारणादपि ।
शरीरग्रहणं चापि धर्मत्राणाय ते नमः ॥ १० ॥

परं—

नामभेदप्रवृत्तिं चोपाधिभेदनिबन्धनाम् ।
ब्रह्मा विष्णुर्महेशान इत्याहुस्तत्त्वदर्शिनः ॥ ११ ॥

तथा च पौराणिकाः—

तमसा कालरुद्राख्यं रजसा कनकाण्डजम् ।
सत्वेन सर्वगं विष्णुं निर्गुणं परमेश्वरम् ॥ इति ॥

ततश्चैतत्सिद्धम् ।

क्वचित्कुशेशयासनः क्वचित्त्रिलोचनः परः
प्रशासितेति चागमाः परस्परं विरुद्धधी—
निमित्तभावभागिनो भवन्ति नापि भे(दतो)[दिनो]
यतो न वस्तु भिद्यते क्वचिच्च कश्चिदुत्तमः ॥ १ ॥

निरूप्यते मुनीश्वरैरुपासकप्ररोचना—
प्रकर्षमात्रसिद्धये............ ॥

एतदेवाभिप्रेत्य **न्यायमञ्जर्यां भट्टजयन्तोऽप्याह**—

एकस्य कस्यचिदशेषजगत्प्रसूति-
हेतोरनादिनिधनस्य महाविभूतेः ।
सर्गस्थितिप्रळयकारणशक्तियोगात्
ब्रह्मेति विष्णुरिति रुद्र इति प्रसिद्धिः ॥

तदेवं वेदवच्छैववैष्णवागमयोर्भवेत् ।
प्रामाण्यं परमेशानप्रणीतत्वाविशेषतः ॥

सर्वागमप्रणेतृत्वं **जयन्तादि**भिरीरितम् ।
तदाचार्यमतं नेति नास्माभिरुपपादितम् ॥

**न नित्यत्वेन। वाक्यानां हि नित्यत्वे प्रमाणाभावात्,**

---

॥ आगमानामपि परमेश्वरसंस्पर्शादेव प्रामाण्यम् ॥

ये पुनः परमहर्षिभिः प्रणीता आगमास्तेषामपि पारम्पर्येण परमेश्वरसंस्पर्शादेव विश्वासविषयत्वम्। तथा हि—तेषामपि पारमेश्वरं वा वचनं मूलं यौगिकं वा वेदनम्? आद्ये मूलोपदेष्टारमेवमेवेश्वरमाद्रियमाणो विश्वस्य महाजनः परिगृह्णीयादिति युक्तम्। द्वितीयेऽपि यौगिकवेदनस्य यथार्थत्वं साक्षात्परंपरया वा अतीन्द्रियार्थ-प्रमित्यर्थपारमेश्वरयोगविधिनिबन्धनत्वे सत्येव विश्वसनीयम्। प्रकारान्तरेण विश्वा-सानुपपत्तेः प्रागेव निरूपितत्वात्। तदेवं साक्षात्परम्परया वा परमेश्वरस्पर्शमेव विदित्वा सर्वत्रातीन्द्रियार्थोपदेशिनि शास्त्रकलापे प्राथमिको महाजनपरिग्रहस्तत्परिग्रहा-न्यथानुपपत्त्या च प्रामाण्यनिश्चये सत्युत्तरोत्तरमहाजनपरिग्रहोपपत्तिरिति स्थितम्।

ये पुनः परमेश्वरप्रणीततया प्रामाण्यमसहमाना वेदानां नित्यत्वमास्थिषत तान् प्रत्याह—**न नित्यत्वेन** प्रामाण्यमिति वाक्यशेषः। तत्र हेतुमाह—**वाक्यानां नित्यत्वे प्रमाणाभावादिति।**

॥ वेदनित्यत्वे प्रमाणम् ॥

नन्वस्त्येव प्रमाणम् तथा हि — वेदवाक्यानि नित्यानि अस्मर्यमाणकर्तृकत्वादा-काशादिवदिति। मैवम्। अनुभूयमानकर्तृकैर्घटादिभिर्व्यभिचारात्। न चाज्ञायमान-कर्तृत्वं, हेतोरसिद्धेः। अनुमानागमाभ्यां तज्ज्ञानस्य वक्ष्यमाणत्वात्। यदि चास्मर्यमाणकर्तृत्वं हेतुर्दुष्परिहरो जीर्णकूपारामादिभिर्व्यभिचारः। व्यवहारा-विच्छेदे सतीति विशेषणाददोष इति चेन्न, एवमपि गाव्यादिशब्दैः सुभाषितश्लोकैश्च व्यभिचारस्य तादवस्थ्यात्।

॥ अस्मर्यमाणकर्तृकत्वस्य, गुर्वध्ययनपूर्वकत्वानुमानस्य च दूषणम् ॥

किञ्चेदमस्मर्यमाणकर्तृकत्वं समस्तपुरुषापेक्षमसिद्धम्। नहि असर्वज्ञो विज्ञातुमलमतीतानागतवर्तमानकालवर्तिनः सर्वेऽपि पुमांसो न वेदानां विरचयितारं अनुस्मरन्तीति। कतिपयपुरुषापेक्षया त्वस्मर्यमाणकर्तृकत्वमिदानीन्तनैरेव प्रासादादि-भिरनैकान्तिकम्। **यदपि** वेदानामपौरुषेयत्वमुपपादयितुं वदन्ति-विवादपदं

**अनित्यत्वे पुनर्वाक्यत्वाद्यनेकमनुमानं, सर्वदोपलब्धिप्रसङ्गश्च ।**

---

वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वात् इदानीन्तनवेदाध्ययनवत् । **तदप्यसाधु ।** वेदाध्ययनस्यापि कस्यचिद्भारताध्ययनवत् स्वतन्त्रपुरुषपूर्वकत्वे विरोधानुपलम्भात् । विपक्षविरोधाभावे च हेतोः सन्दिग्धानैकान्तिकतया सन्दिग्धकालातीतत्वेन (चा)साध्यासाधकत्वात् । अन्यथा भारतादेरप्यनेनैव न्यायेनापौरुषेयत्वप्रसङ्गस्य दुर्वारत्वात् । तत्र कर्तृप्रतीतिदाढर्यात् बाधितविषयत्वं विशेष इति चेन्न । प्रकृतेऽपि समानत्वात् ।

॥ वेदस्य ईश्वरकर्तृकत्वे श्रुतिस्मृतयः ॥

अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ।
प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते ॥

'वेदान्तकृद्वेदविदेव चाहं' इत्यादिस्मृतेः ।

यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै ।

"तस्मात्तेपानाच्चत्वारो वेदा अजायन्त" "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" "त्रयो वेदा अजायन्त" इत्यादिश्रुतेश्च । तदेतदशेषमर्थवादमात्रमिति चेत् । मैवम् । अपरत्रापि कर्तृश्रवणस्याविध्यर्थत्वेन भारतादेरपि कृष्णद्वैपायनाद्यकृतत्वप्रसङ्गात् । नचामीषां वेदवचसां कर्तृविशेषवेदनाधीनं प्रामाण्यं तत्प्रामाण्याच्च कर्तृविशेषसिद्धिरिति परस्पराश्रयप्रसक्तिराशङ्कनीया । हेतुदर्शनशून्यमहाजनपरिग्रहान्यथानुपपत्त्यैव भारतादितुल्यतया प्रामाण्यनिर्णयोपपत्तेः ।

तस्माद्भारतवत्कर्तृप्रतीत्या बाधसम्भवात् ।
वेदेऽप्यपौरुषेयत्वं नानुमेयमिति स्थितम् ॥

॥ वेदानित्यत्वे प्रमाणम् ॥

तदेवं परपक्षं प्रतिषिध्य स्वपक्षे प्रमाणमाह—**अनित्यत्वे पुनर्वाक्यत्वाद्यनेकमनुमानमिति ।** अनित्यत्वं चेह स्वतन्त्रपुरुषपूर्वकत्वमेव लक्षणया

विवक्षितम्। अपरथा सिद्धसाधनप्रसङ्गात्। येऽपि हि वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपगन्तव्यम्। आनुपूर्वीभेदवन्तो हि वर्णाः पदम्। पदानि चानुपूर्वीभेदवन्ति वाक्यम्। आनुपूर्वी पुनरभिव्यक्तिधर्मो न वर्णधर्मः, तेषां नित्यविभुतया कालतो देशतो वा पूर्वापरभावासम्भवात्। अभिव्यक्तिस्त्वनित्येति कथं तदुपगृहीतानां नित्यः पूर्वापरभावः सम्भवी। तथा च पूर्वापरीभूतवर्णस्वरूपं पदमनित्यमेव। पदानित्यतया च वाक्यानित्यता व्याख्याता।

॥ वेदस्य स्वतन्त्रपुरुषप्रणीतत्वम् ॥

तस्मान्न जैमिनीयानामपि सकलपदवाक्यानित्यतायां विप्रतिपत्तिः संभविनी। कथं तर्हि? वैदिकपदवाक्यानुपूर्वीपरम्परायाः स्वतन्त्रपुरुषपूर्वकत्वमात्रे विवादः। तथा चाहुः "यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता" इति। तदेवं सति स्वतन्त्र-पुरुषपूर्वकत्वमेव मीमांसकं प्रति साधनीयम्। तदेवं प्रयोगमधिरोहति-वेदवाक्यानि स्वतन्त्रपुरुषपूर्वाणि वाक्यत्वात्। यदुक्तसाधनं तदुक्तसाध्यं, यथा कालिदासवाक्यम्। तथा चामूनि वाक्यानि। तस्मादुक्तसाध्यानीति। यद्वा वैदिक्यो रचनाः स्वतन्त्रपुरुषसम्पाद्याः रचनात्वात्। या रचना सा तथा, यथा भारतादिरचना; तथा चामूः। तस्मादुक्तसाध्या इति। अत एवञ्जातीयकमन्यदप्यूह्यम्। स्वतन्त्रपुरुषपूर्वकत्वाभावे तद्गुणनान्तरीयकं प्रामाण्यं तदभावे निवर्तेत नास्तिकशास्त्रवदिति विपक्षे बाधकमुन्नेयम्। परतः प्रामाण्यं च प्रागेव प्रसाधितम्।

॥ तिमिरारिणा अत्रोपाधिविशेषोद्भावनम् ॥

**यत्पुनः तिमिरारिणा** समीरितम्—अस्मदादिशक्यक्रियं हि वाक्यं पौरुषेयं दृष्टं न वाक्यमात्रम्। तदेव चास्मदादिभिः शक्यक्रियं यदस्मदादिप्रत्यक्षादि-प्रमाणप्रतिपन्नार्थप्रतिपादकम्। अतो वाक्यविशेषस्योपाधेः शङ्क्यमानत्वाच्छङ्कितो-पाधितयाऽनैकान्तिकोऽयं हेतुरिति। **तत्** अस्मदादिशक्यक्रियस्य वाक्यविशेषस्या-स्मदादिप्रणीतत्वेन प्रतिबन्धः स्यात्। न त्वसौ वाक्यमात्रस्य पुरुषप्रणीततामात्रव्याप्तिं प्रतिक्षिपेत्। नहि कलमाङ्कुरत्वं कलमबीजप्रतिबद्धमङ्कुरमात्रस्य बीजमात्रव्याप्तिं

प्रतिक्षेप्तुमलम् । किं तर्हि? सामान्यस्य सामान्येन व्याप्तिस्थितौ विशेषाणां विशेषेणैव व्याप्तिमुररीकुर्यात् । अन्यथा तथाविधविशेषस्य तदवान्तरविशेषसम्भवे सत्यव्याप्तिप्रसङ्गात् ।

॥ तत्र दृष्टान्तवैषम्यमाशङ्क्य परिहारः ॥

कलमाङ्कुरत्वमन्तरेणाप्यङ्कुरे बीजं दृष्टं, न पुनरस्मदादिशक्यक्रियत्वं विना वाक्येषु पौरुषेयत्वं दृष्टमिति विशेष इति चेत् । मैवम् । कार्यविशेषः कारणविशेषे व्यवतिष्ठते । नतु कार्यकारणयोः सामान्ययोः प्रतिबन्धमन्यथा कुर्यादिति दृष्टानुसारिणो न्यायस्यावतारात् । पौरुषेयत्वमात्रे च शक्यक्रियत्वस्यैव व्याप्त्युपपत्तावस्मदादिविशेषणवैयर्थ्यात् । शक्यक्रियत्वमात्रस्य च साधनव्यापकत्वेनानुपाधित्वात् । नच वाच्यं प्रकृते शक्यक्रियत्वमेव न विद्यते वैदिकवाक्यानां प्रमाणान्तरागोचरार्थत्वादिति । धर्मादिरपि साक्षात्कारविषयः केषांचिदिति समर्थितत्वात् ।

॥ शब्दार्थव्यवहारस्यानादित्वखण्डनम् ॥

किंच पुंसां साङ्केतिकाःशब्दा वाक्यभावेन वाचकाः इति व्यवस्थाप्यते । यावता पूर्वे गवादिशब्दार्थसंव्यवहाराः वृद्धव्यवहारप्रसिद्धगवादिशब्दार्थसंव्यवहारान्तरपूर्वका गवादिशब्दार्थसंव्यवहारत्वात् अधुनातनगवादिशब्दार्थसंव्यवहारवत् इति शक्यमनुमातुम् । मैवम् । अंशतः सिद्धसाधनत्वात् । अस्माभिरपि पूर्वेषां केषाञ्चन गवादिशब्दार्थसंव्यवहाराणां तथाविधवृद्धव्यवहारान्तरपूर्वकत्वाभ्युपगमात् । सर्गादिभुवां तथाविधव्यवहाराणां पक्षीकरणेऽपि भवन्मतानुसारेणाश्रयासिद्धेः । सिद्धौ वा धर्मिग्राहकप्रमाणबाधितार्थत्वेन हेतोः कालात्ययापदिष्टत्वात् । यस्यैव परेण सङ्केतपूर्वकत्वं गवादिव्यवहारस्येष्यते स एव धर्मीत्युक्ते न दोष इति चेत् न, एवमपि गवादिशब्दार्थसंव्यवहारस्य संङ्केताधीनत्वेऽपि विरोधानुपलम्भात् । सन्दिग्धानैकान्तिकत्वेन सन्दिग्धकालात्ययापदिष्टत्वेन वा हेतोः साध्यासाधकत्वात् । अन्यथा गाव्यादिशब्दसंव्यवहारस्यापि अनयैव दिशा प्रवाहानादित्वप्रसङ्गात् । प्रवादमूलतया तत्र प्रवाहविच्छेदेऽपि न दोष इति चेत् । प्रकृतेऽपि तर्हि सङ्केतमूलतया सादिप्रवाहस्वीकारे कीदृशो दोष इति समानम् ।

॥ सर्गादौ ईश्वर एव व्यवहारप्रवर्तकः ॥

यदि मतं—

सर्गादौ येन शब्देन सङ्केतः प्रतिपद्यते ।
तस्याप्यन्येन सङ्केतस्वीकारादनवस्थितिः ॥ १ ॥

असङ्केतितशब्दस्य बोधकत्वं च नेष्यते ।
तस्मात्सङ्केतवादस्य द्वेधाप्यनुपपन्नता ॥ २ ॥

अत्राभिधीयते—

नानाशरीरनिर्माणनिपुणः परमेश्वरः ।
व्युत्पादयतु सङ्केतं व्यवहारविशेषतः ॥

स हि भगवान् विचित्राणि शरीराणि निर्माय कश्चिदुत्तमवृद्धभावेन पिकमानयेत्यादिवचनानि प्रयुञ्जानः पिकानयनादि च शरीरान्तरैः कुर्वाणः पार्श्वस्थानां व्यवहारत एव शब्दानां स्वयं निमित्तं सङ्केतं व्युत्पादयेदिति नानुपपत्तिं पश्यामः । अवश्याश्रयणीयं चैतत् । अन्यथा सर्गप्रलयप्रतिपादकागमप्रामाण्यविप्लवापत्तेरिति ।

॥ जैमिनीयानां वर्णनित्यत्वोपगमवैयर्थ्यम् ॥

तस्मादपौरुषेयस्य सम्बन्धस्याप्रसिद्धितः ।
वेदनित्यत्ववादानामर्थो दूरपराकृतः ॥ १ ॥

वर्णानामपि नित्यत्वं यद्भवद्भिरुदीर्यते ।
तावता न प्रमाणत्वं वेदानामुपपद्यते ॥ २ ॥

अन्यथा नास्तिकोक्तीनां प्रामाण्यं केन वार्यते ।
तत्रापि वर्णनित्यत्वं समानमिति हि स्थितिः ॥ ३ ॥

तस्मादनर्थिकैवैषा वर्णनित्यत्ववर्णना ।
वेदप्रामाण्यसिद्ध्यर्थं यतमानस्य जैमिनेः ॥ ४ ॥

॥ वर्णनित्यताप्रतिपादनस्य परम्परया वेदप्रामाण्योपयोगकथनम् ॥

**स्यान्मतं** न यद्यपि वेदप्रामाण्ये वर्णनित्यत्ववर्णनं साक्षादुपयुज्यते तथापि वृद्धव्यवहाराधीनसंबन्धग्रहणोपपादनद्वारेण तदुपयोगि भविष्यति। भूयोभूयः प्रयोगदर्शनेन हि तत्तदन्यथार्थपरिहाण्या स्वार्थाभिधानसामर्थ्यमध्यवसातव्यम्। नच क्षणभङ्गिनः शब्दस्य भूयो भूयः प्रयोगोपलम्भः सम्भवी। तथा चागृहीतसङ्गतिकाः शब्दाः प्रथमश्रुतादविशिष्टाः कथमर्थाध्यवसायं जनयेयुः। अजनयतां चार्थनिश्चयं कथं प्रामाण्यमिति पारम्पर्येण नित्यताप्रतिपादनमपि वेदप्रमाणतायामुपयुज्यत एव। तथा चोक्तम्—

अपौरुषेये सम्बन्धे शब्दः प्रामाण्यमृच्छति।
स च नित्यत्वसिद्धौ स्यादिति स प्रतिपाद्यते॥ इति।

॥ उक्तोपयोगस्य वर्णानित्यत्वेऽपि संभवः ॥

**नैवम्।** अनुपयोगात्। यदि खल्वाशुतरविनाशित्वे वर्णानां अशक्योपपादनमेव सम्बन्धग्रहणं, तदा वर्णनित्यत्वमवश्योपवर्णनीयं स्यात्। शक्यते तु तत्तद्गत्वादिजातिपुरोधानेन वृद्धव्यवहारादपि सम्बन्धाध्यवसानमुपपादयितुम्। सिद्धे च वक्ष्यमाणनीत्या प्रत्युच्चारणं वर्णभेदे प्रत्यभिज्ञाप्रामाण्यादेव तत्तद्गत्वादिसामान्यमवश्याश्रयणीयमिति स्थास्यति।

॥ वर्णनित्यत्वेऽपि आनुपूर्व्यनित्यता ॥

येऽपि च वर्णानां नित्यत्वमास्थिषत न तेषामप्यानुपूर्वीभेदविरहिणो वर्णाः पदभावेन पदार्थसङ्गताः। आनुपूर्वीभेदावच्छिन्नं च तद्रूपमनित्यमिति प्रागेव निवेदितम्। तथा चान्तेऽपि कश्चिदानुपूर्व्यादिजातिभेदं पुरोधायैव सङ्गतिग्रहादिव्यवहार इति व्यर्था वर्णानित्यत्ववर्णना।

॥ अनित्यपक्षेऽपि पदानां बोधकता ॥

एतेनैतदपास्तम् यदाहुः—अनित्यपक्षे कथञ्चन[गृहीत]सङ्गतिकोऽपि शब्दः तदैव नष्ट इति कालान्तरे कथमर्थं प्रतिपादयेदिति। जात्युपधानेन सम्बन्धबोधे धूमादिवत्तज्जातीयान्तरादप्यर्थावबोधनस्याविरोधात्। तस्मादनन्तानामप्यर्थव्यक्तीनां

तत्तद्गोत्वादिसामान्यपुरोधानेन बोध्यत्वं, गत्वाद्युपधानेन गवादिशब्दानां बोधकतां विनानुपपन्ना ।

तस्मान्न वर्णनित्यत्ववर्णनस्य प्रयोजनम् ।
प्रामाणिकत्वमप्यस्य न कथञ्चन युज्यते ॥

॥ वर्णनित्यत्वेऽनुमानोपन्यासः ॥

**स्यादेतत् ।** अन्यदेवात्र प्रमाणम् तथा हि—शब्दो नित्यो द्रव्यत्वादाकाशादिवदिति । मैवम् । प्रत्यक्षप्रस्ताव एव शब्दस्य द्रव्यत्वापाकरणेन हेत्वसिद्धेः । भवतु तर्ह्याकाशैकगुणत्वात् तद्गतपरममहत्ववदिति हेतुदृष्टान्तयोः उपादानेन प्रयोगसामञ्जस्यम् । **तदप्यसत् ।** अवयविनाशानन्तरमाकाशैकसमवायिभ्यां संयोगविभागाभ्यां व्यभिचारात् । सर्वदेति विशेषणाददोष इति चेन्न; एवमप्यकार्यत्वस्योपाधेः सम्भवात् । अन्यथा त्वात्मविशेषगुणा नित्याः सर्वदा तदेकाश्रितत्वात्, तद्गतपरममहत्ववदित्येतदपि स्यात् । प्रत्यक्षबाधितत्वादयमहेतुर्न सोपाधिकतयेति चेत् । मैवम् । उपाध्यभावे बाधकस्यापि अवकाशाभावात् । अपरथा स्वभावप्रतिबन्धस्यापि बाधप्रसङ्गे स्वाभाविकप्रतिबन्धप्रलयोपपत्तेः । अत एवोक्तं "बाधेन वोपाधिरुन्नीयतामन्यथा वा इति न कश्चिद्विशेषः" (न्या. कु.) इति ।

॥ उक्तोपाधेरुपाधित्वनिर्वाहः ॥

तस्मादकार्यतोपाधेरवश्याश्रयणीयता ।
अन्यथाऽतिप्रसङ्गस्य बाधकस्य प्रवर्तनात् ॥ १ ॥

साधनव्यापिता चास्य तत एव न सिद्ध्यति ।
प्रतिकूलप्रसङ्गे हि प्राप्तयोर्दुर्निरूपणात् ॥ २ ॥

एवञ्च श्रावणत्वेन शब्दत्वादिवदित्यपि ।
परास्तमिति मन्तव्यं प्रस्तुतोपाधिसम्भवात् ॥ ३ ॥

अन्यथा गन्धरूपादेरपि नित्यत्वमापतेत् ।
घ्राणाद्येकैकवेद्यत्वाद्गन्धरूपादिजातिवत् ॥ ४ ॥

नादधर्मा अनित्यास्ते श्रावणा इति च स्थितम् ।
तत्कथं श्रावणत्वस्य नित्यत्वप्रतिबद्धता ॥ ५ ॥

॥ वर्णनित्यत्वेऽनुमानान्तरम् ॥

भवतु तर्ह्यपाकजत्वे सत्यनवयवभूतविशेषगुणत्वात्तेजः परमाणुरूपवदिति । मैवं, अनित्यः शब्दो गुणत्वे सत्यस्मदादीन्द्रियग्राह्यत्वाद्रूपादिवदित्यनेन सत्प्रतिपक्षत्वात् ।

॥ वर्णानित्यत्वस्य प्रत्यक्षसिद्धता ॥

कालात्ययापदिष्टं च वर्णनित्यत्वसाधनम् ।
प्रत्यक्षेणापि वर्णानां विनाशप्रतिभासनात् ॥ १ ॥

श्रुतो गकारो नास्तीति प्रत्येति व्यापृतेन्द्रियः ।
विनष्टः शब्द इति च प्रत्ययः सर्वसाक्षिकः ॥ २ ॥

नचायमन्यत्र गतो गकार इत्यन्यथासिद्धः प्रत्ययः । तस्य विभोर्विभुगुणस्य वा मूर्तिविरहिणो गमनायोगात् । नचायमावरणे सत्यनुपलम्भनिबन्धनो भ्रमः सम्बन्धप्रतिबन्धो ह्यावरणार्थः । न च नित्यविभोस्तत्सम्भवः सर्वदा श्रवणसन्निधानात् । नच विषयान्तरव्यासक्तचेतस्तया तदनुपलब्धिः, अवहितमनसापि तदनुपलब्धेः । नचेन्द्रियोपघातात्, शब्दान्तरस्य तथैवोपलब्धेः । नापि तत्प्रतिनियतव्यञ्जकविरहात् । तदसम्भवस्य निरूपयिष्यमाणत्वात् ॥

तस्मादनन्यथासिद्धमभावप्रतिभासनम् ।
लिङ्गादिबोधविरहे जातमिन्द्रियहेतुकम् ॥ १ ॥

अभावमानवेद्यत्वमभावे निरसिष्यते ।
तेन प्रत्यक्ष एवायं विनाशप्रत्ययः स्थितः ॥ २ ॥

सम्प्रयोगं बिना तस्य कथं प्रत्यक्षतेति चेत् ।
न सम्बद्ध(न्ध)विशेष्यादिभावसम्बन्धसम्भवात् ॥ ३ ॥

॥ श्रोत्रेण शब्दाभावस्य विशेषणतासंबन्धेन ग्रहणोपपत्तिः ॥

तथा हि—कर्णशष्कुल्यां शब्दाभावः शब्दाभावं वेत्ति कर्णशष्कुलीति तेन विशेषणविशेष्यभावः कर्णशष्कुल्या **इत्याचार्याः**। कर्णशष्कुली च त्वगिन्द्रियेण गृह्यते, भिन्नेन्द्रियग्राह्ययोरपि विशेषणविशेष्यभावः सुरभि द्रव्यमित्यादौ दृष्टः। तेनात्राप्यविरुद्ध इति गृहादिप्रदेशो वाऽस्तु विशेषणम्। यथैव हि शब्दस्य विशेषणं तथा तदभावस्यापि। यद्धि यस्य विशेषणत्वेन विशेष्यत्वेन वोपलब्धं तत्तदभावस्यापीति। विशेषणविशेष्यभावस्तु विशिष्टप्रतीतिवशेन व्यवस्थाप्यते इत्यादि।

॥ शब्दाभावप्रत्यक्षोपपादनम् ॥

**स्यादेतत्।**

शब्दाभाववतीं वेत्ति न कश्चित्कर्णशष्कुलीम्।
मैवं, कदाचित्तद्दृष्टियोग्याहष्ट्या भविष्यति ॥ १ ॥

सर्वदा तु न तद्दृष्टिःविशेष्यानुपलम्भनात्।
विशेषणविशेष्यत्वसम्बन्धस्तु तदापि सः ॥ २ ॥

सर्वो विशिष्टबोधस्य हेतुःकश्चन सन्निधिः।
स तथाविधकार्यस्य विगमेऽप्यस्तु का क्षतिः ॥ ३ ॥

तादृक्सम्बन्धमाहात्म्याच्छब्दाभावःप्रमीयताम्।
विना शष्कुल्यवच्छेदं शब्दः संप्रति नेत्यपि ॥ ४ ॥

कथं पुनरधिकरणग्रहणमन्तरेणाभावप्रतीतिरिति चेत्। नेयमप्यनुपपत्तिः तथा हि—

॥ अधिकरणग्रहं विनापि शब्दाभावस्य विशेष्यतया ग्रहणम् ॥

यथा प्रदेशावच्छिन्नः प्रदेशो[ऽन्यो]ऽनुभूयते।
तत्राधिकरणस्यापि प्रतीतिरुपयुज्यते ॥ १ ॥

प्रतियोगिनिरूप्यत्वमात्रमेव तु शाश्वतम्।
सविकल्पकसंवित्तावभावानामिति स्थितिः ॥ २ ॥

**विपर्यये नियामकाभावात्। अभिव्यञ्जकभावाभावौ तन्नियामकाविति चेन्न, तदनिर्देशात्। वायुसंयोगविभागाविति चेत्।**

---

तस्मात्प्रदेशभेदस्य कर्णादेरनिरूपणे।
नास्ति श्रुतः शब्द इति प्रतीतिर्न विरोधिनी ॥ ३ ॥

यदा तु कर्णदेहादिराधारोऽप्यवभासते।
इन्द्रियान्तरसंवित्त्या तदारूढतयाऽथवा ॥ ४ ॥

तथा कर्णे ध्वनिर्नास्ति गेहे शब्दो न विद्यते।
इत्येषापि मनीषा स्यादतो दोषो न कश्चन ॥ ५ ॥

तस्मात्प्रत्यक्षमानेन शब्दाभावप्रवेदनात् ॥
नित्यत्वसाधनं शब्दे कालातीतमिति स्थितम् ॥ ६ ॥

॥ शब्दनित्यत्वे सर्वदोपलम्भप्रसङ्गः ॥

अपि चामी शब्दा उपलभ्यस्वभावा अनुपलभ्यस्वभावा वा स्वीकरणीयाः नित्यवादिभिः। प्रथमेऽवहिते चेतसि अविकले च श्रवसि शाश्वतिकः तदुपलम्भो भवेत् अनुपलम्भनिमित्तस्यावरणादेरपाकृतत्वादिति। [द्विती]ये न कदाचिदपि साक्षात्कारगोचराः स्युरदृष्टवत्। तदिदमभिसन्धायाह—**सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गश्च, विपर्यये नियामकाभावादिति।** शङ्कते—**अभिव्यञ्जकभावाभावौ नियामकाविति चेत्** इति। दूषयति—**न, तदनिर्देशाद**भिव्यञ्जकस्य निर्देष्टुमशक्यत्वादित्यर्थः। परमतमाशङ्कते—**वायुसंयोगविभागाविति चेदिति।**

अयमर्थः। कौष्ठ्या वायवः प्रयत्नवदात्मप्रेरिता हृत्कण्ठं भित्त्वा तत्संस्कृताः स्तिमितानि वाय्वन्तराणि प्रतिबाधमाना यावद्वेगमभिप्रतिष्ठमानाः कर्णशष्कुलीमण्डलावच्छिन्नमाकाशमनुप्राप्य तत्रस्थं स्तिमितवायुमपनयन्ति। तत्र कौष्ठ्यवायोः कर्णाकाशसंयोगः स्तिमितवायुविभागो वा शब्दाभिव्यञ्जकः।

परमार्थतस्तु कौष्ठ्यवायुसंयोग एवाभिव्यञ्जकः प्राथम्यात्। न पुनः स्थिरवाय्वपनय इति मीमांसकसिद्धान्तरहस्यम्। उक्तं हि "न हि वयं स्थिर-

**सर्वशब्दानां युगपद्ग्रहणप्रसङ्गात्, कथं? श्रोत्रं तावत् समानेन्द्रियग्राह्यसमानदेशस्थानां ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यं न भवति, इन्द्रियत्वाच्चक्षुर्वदिति। शब्दा वा प्रतिनियतसंस्कारसंस्कार्या न भवन्ति। समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसंबन्धित्वात् घटादिवत्।**

---

वाय्वपनयं संस्कारमाचक्ष्महे। किन्तु कौष्ठ्यवायुसंयोगमेव प्रथमभावित्वात्। किमिति तर्हि भाष्यकारेण स्तिमितानि वाय्वन्तराणीत्युक्तं? कौष्ठ्यस्य वायोः वेगविनाशार्थम्। स्पर्शवद्द्रव्यसंयोगाद्धि वेगविनाशोऽन्यत्रापि प्रतीयत इति भावितदर्थमेव स्तिमितवायुकीर्तनं भाष्य" इति।

तदेतत्परमतमाशङ्कितं दूषयति — न, **सर्वशब्दानां युगपद्ग्रहणप्रसङ्गात् इति**। यथा खल्वेकेनैव प्रदीपेन युगपदिन्द्रियसम्बद्धास्सर्वेऽपि कुम्भादयो नयनग्राह्या भावा भासन्ते तथा श्रोत्रग्राह्या अपि सर्वे शब्दाः अपर्यायमेकेनैव वायु-[संयोगेन भासन्तां अविशेषा]दित्यर्थः। नन्वभिव्यञ्जकवायूनामान्तरालिकस्वभावभेदादेकैको वायुसंयोगः एकैकमेव शब्दमभिव्यनक्तीति कार्यव्यवस्थादर्शनेन कल्प्यतामित्यभि[प्रायेण शङ्कते — कथमिति] उत्पत्तिपक्षमुपादाय कार्यं व्यवस्थापयितव्यम्। तत्राभिव्यक्तिपक्षे श्रोत्रस्य वा कौष्ठ्यपवनाः प्रतिनियतं संस्कारमादध्युर्वर्णानां वा?

श्रोत्रपक्षे तावदव्यवस्थां प्रसञ्जयति—**श्रोत्रं तावत्समा[नेन्द्रियग्राह्यसमानदेशस्थानां ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यं न भवति— इन्द्रियत्वाच्चक्षुर्वदिति**। वर्णसंस्कारपक्षेऽव्यवस्थां प्रसञ्जयति—**शब्दा वा प्रतिनियतसंस्कारसंस्कार्या न भवन्ति समानेन्द्रियग्राह्य [समानदेश समानधर्मापन्न]त्वे सति युगपदिन्द्रियसंबद्धत्वाद्घटादिवदिति**। (संस्कार्यत्वं) नियताभिव्यञ्जकाभिव्यङ्ग्यानां रूपरसादीनां व्यवच्छेदार्थं **समानेन्द्रियग्राह्यपदम्**। ये पुनः समानेन्द्रियग्राह्या अपि देशकाल[वि]प्रकर्षेण युगपदिन्द्रियासंबन्धात् प्रतिनियतव्यञ्जकव्यङ्ग्यास्तद्व्यवच्छेदार्थं [समानदेशेति।] अनेन सम्बन्ध एवोपलक्ष्यत इति मन्तव्यम्।

तथा चैतदनाशङ्कनीयमेव तप्ततैलादिष्वग्निज्वालायाः संस्कारान्तरेणाभिव्यक्तेः अनेकान्त इति। तत्राग्निज्वालायाः पूर्वावस्थायामवस्थितौ प्रमाणा-

भावेन [तत्संस्कारासिद्धेः]। [एतेन] [वृष्टि] बिन्दुभिः पृथिव्या गन्धविशेषस्य च प्रतिनियमेनाभिव्यक्तेरनैकान्तिकत्वमपास्तम्। तदापि मन्दप्रकाशे वेश्मनि शुक्लरूपाभिव्यक्तावपि श्यामादिरूपानभिव्यक्तेः अनैकान्तिकत्वमापन्नमिति चेन्न। विपक्षे.... ?

प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं पुनरन्योन्यव्यञ्जका[व्यङ्ग्यत्वं]विवक्षितम्। नचैतदस्ति शुक्लश्यामादिरूपविशेषाणां, शुक्लाभिव्यञ्जकेन मन्दप्रकाशेन श्यामरूपानभिव्यक्तावपि श्यामरू[पाभिव्यञ्जकेन शुक्लरूपाभिव्यक्तेः।] [नरत्वाभिव्यक्तिसमये नरसम]वायिनो ब्राह्मणत्वस्यानभिव्यक्तावपि ब्राह्मणत्वाभिव्यक्तिसमसमयं नरत्वमभिव्यज्यत इति न ताभ्यामनैकान्तिकत्वावकाशः। एतच्च ब्राह्मणत्वसामान्यमभ्युपगम्याभिहितम्।

॥ ब्राह्मणत्वादिजात्यनभ्युपगन्तृमतेन समाधानम् ॥

वस्तुतः पुनराचार्यमते[परिमाणा]वच्छेदेनोपलब्धे वंशदण्डे सङ्ख्योपलम्भसमसमयं परिमाणानुपलम्भेऽपि परिमाणस्य दीर्घत्वस्योपलम्भकाले सङ्ख्योपलभ्यैतैव नीलोत्पलस्यापि दीपप्रभायां उत्पलत्वजातिप्रतिभास[वत्।] वस्तुतस्तु नीलारुणमेव नीलोत्पलं दीपे पश्यन्ति। हरीतक्यास्वादनसमनन्तरं पिबतो रसनेन्द्रियपरिवर्ति हरीतकीशकलानां कषायरसोद्भेदेन मधुरस्योपलम्भेऽपि कषायरसोपलम्भसमकालं [मधुररसो]नोपलभ्यते तथापि क्रियायां चक्षुषोपलभ्यमानायां तदेकार्थसमवेतमुपलभ्यत एव रूपमित्यादिकमभ्यूह्याव्यभिचारः समर्थनीयः।

॥ समानेन्द्रियाग्राह्याणां वर्णानां प्रतिनियतव्यङ्ग्यत्वाभावात् वर्णाभावादेवानुपलब्धिः ॥

एवं स्थिते गौरहरितादिपदार्थसार्थस्य प्रतिनियतव्यञ्जकव्यङ्ग्य................... ..............भूषणानुसारेण निर्णीयते। यद्यपि च वर्णानां कत्वादिसामान्यव्यवस्थापनात्समानधर्मत्वं नैयायिकस्यासिद्धं, तथापि परसिद्ध्या परस्यानिष्टप्रसङ्गे क्रियमाणे पराभिमतत्वमात्रेण विशेषणप्रसिद्धिर्द्रष्टव्या।

........प्रसक्तिस्तथापि गौरहरितादिवदुज्ज्वलत्वादेरभिव्यक्तिनियमहेतोर्धर्मस्याभावमात्रेण समानधर्मत्वं विवक्षितमिति मन्तव्यम्। यदि हि ककाराभिव्यक्तौ

गकारानभिव्यक्तिस्तदपेक्षायामुज्ज्वल..........................................भिव्यक्तौ ककारानभिव्यक्तिः दुर्निवारा। हरितरूपानभिव्यक्तौ गौररूपाभिव्यक्तिवत्। तथा यदि ककारापेक्षया गकारस्य सूक्ष्मत्वादनभिव्यक्तिस्तथापि गकाराभिव्यक्तौ ककाराभियक्तिः[भवेदेव, महानसाद्यभिव्यक्तौ] गेहाभिव्यक्तिरिवेत्यादिकमन्यदपि स्वयमेव निपुणैरभ्यूहनीयमिति। तस्मात्समानेन्द्रियग्राह्यत्वाद्युपेतानां वर्णानां प्रतिनियतव्यङ्ग्यत्वानुपपत्तेः अश्रवणदशायामनुपलब्धिरभावादेवेत्यवश्याश्रयणीयम्। अन्यथैवंभूतानामपि प्रतिनियतव्यञ्जकविरहादनुपलम्भसम्भवे कण्टकादिकरम्बितभूभागाद्युपलम्भसमकालं कुम्भाद्यनुपलम्भोऽपि व्यञ्जकाभावादेव संभाव्यत इति[कुम्भाद्यभाव] निश्चयो न भवेदिति विपक्षे बाधकसिद्धेर्न सन्दिग्धानैकान्तिकत्वादिशङ्कावकाशोऽपि।

॥ अत्रैव गुरुमताभिप्रायः॥

गुरुमतानुवर्तिनस्त्वाहुः समानेन्द्रियग्राह्येत्यादिसाधनस्य शङ्कितोपाधित्वेनाप्रयोजकत्वं रूपिद्रव्यसमवाय[स्योपाधित्वात्। न च]रूपिद्रव्ये रूपिद्रव्यसमवायित्वं न साध्यमनुगच्छति। रूपिद्रव्यस्यापि रूपवत्स्वावयवद्रव्यसमवायेनानुगतेः स्पष्टत्वात्। तस्माच्छङ्कितोपाधित्वादप्रयोजकमेव समानेन्द्रियग्राह्यत्वादित्यादिसाधनमिति। तदिदं[न युक्तम्। शङ्कितोपाधेरदूषकत्वात्। यदि पक्षे साध्यसन्देहेन साध्यव्यापकत्वशङ्]कया शङ्कितोपाधित्वेनाप्रयोजकत्वमुच्यते, हन्त सर्वानुमानेषु साध्येतर[1]त्वोपाधेः शङ्क्यमानत्वात् सर्वोऽपि हेतुरप्रयोजक एव स्यात्। तस्मान्नैतादृशस्योपाधित्वं न तरां तदवच्छिन्नस्याप्रयोजकत्वमिति। [तदुक्तम्]—

साध्याभावाविनाभावी स उपाधिर्यदत्ययः।
समासमाविनाभावावेकत्र स्तो यदा तदा।
समेन यदि नो व्याप्तः तयोर्हीनोऽप्रयोजकः॥

इति। प्रकृते चैवंरूपलक्षणासङ्गतिः स्पष्टैव रूपिद्रव्यसमवायस्य[प्रतिनियतसंस्कारसंस्कार्यत्वाभावेऽपि]रूपिद्रव्यसमवायाभावस्य सम्भवेन साध्याभावाविनाभाव्यत्ययत्वाभावात्। अतएव समाविनाभावाभावात् तदवच्छिन्नस्याप्रयोजकत्वमपास्तम्। कथं चासत्यपि रूपिद्रव्यसमवाये समानेन्द्रिय[ग्राह्यसमानदेशस्थानां

1. पक्षेतरत्वेत्यर्थः

**उत्पत्तिपक्षेऽप्ययं दोषः समान इति चेन्न, मृत्पिण्डप्रदीपदृष्टान्ताभ्यां कारकव्यञ्जकवैधर्म्यसिद्धेरित्यलमतिप्रसङ्गेन ।**

---

ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यत्वाभावमु]पलभमाना रूपिद्रव्यासमवाया ? चाधिकतरं सापत्रपा वक्तुमर्हन्तीति कृतमलीकनिर्बन्धेन ।

॥ न्यायमते दोषसाम्यनिराकरणम् ॥

परमतमाशङ्कते—**उत्पत्तिपक्षेऽप्ययं समानो दोष इति चेदिति ।** अस्यार्थः । यदिहि वर्णाना[मुत्पत्तिवादी] मन्यते । कश्चिदेव कौष्ठ्यपवनः स्थानभेदाभिघातसंस्कृतः कस्यचिदेव वर्णस्योत्पत्तौ निमित्तभावमवलम्बते न सर्वेषा-मिति, तथा सति सर्वेषामसत्वाविशेषादेको वायुरुत्पादकः स्यादिति समानः [पर्यनुयोगः । कश्चिदेव वायुः कञ्चिदेव वर्णमुत्पादयति] नापरमिति चेत् तर्हि सर्वेषां सम्बन्धाविशेषेऽपि पकाराभिव्यक्त्यर्थमुत्थापितः पवनस्तमेव संस्कर्तुं समर्थो न वर्णान्तरमिति समानः परिहारः । तथा चाहुः—

अन्यार्थं प्रेरितो वायुर्यथाऽयं न करोति वः ।
तथान्यवर्णसंस्कारशक्तोऽन्यं न करिष्यति ॥ इति

॥ कारकव्यञ्जकवैलक्षण्यस्य दृष्टान्ते प्रदर्शनम् ॥

**मृत्पिण्डप्रदीपदृष्टान्ताभ्यां कारकव्यञ्जकवैधर्म्यसिद्धेरित्यलमति-प्रसङ्गेन ।** मृत्पिण्डदण्डादिकारकनिकरः कुम्भकाराभिप्रायनियमितः कुम्भमेव करोति न शरावमिति कारकेषु व्यवस्था दृष्टा । प्रदीपादिः पुनरेक एव पटाभि-व्यक्तिमभिसन्धाय [आरोपितः घटाभिव्यञ्जक] उपलब्ध इति नोत्पत्त्यभिव्यक्तिपक्षयोः समानशक्तित्वमित्यर्थः । तस्मात् वर्णोत्पत्तिव्यवस्थैवोपलब्धीनां स्वीकरणीया नियतिर्नाभिव्यक्तिव्यवस्थातः ।

॥ अत्र न्यायप्रयोगप्रदर्शनम् ॥

प्रयोगोऽप्यत्र भवति-वर्णा उत्पद्यन्ते नाभि [व्यज्यन्ते श्रोत्रेन्द्रियग्राह्यत्वात्] शब्दत्वादिसामान्येनानैकान्तिकत्वं उद्भावितं तन्निरसनाय सामान्यवत्वे सतीति

विशेषणीयम् । अन्यथा सदुपलम्भक एव पवनादिर्भवेत् । तथा च प्राचीनन्याय-विरोध इति विपक्षे बाधकसिद्धिः ।

### शब्दे प्रत्यभिज्ञासमर्थनम्

पूर्वमश्रावि यो वर्णः स एवायमितीदृशी ।
प्रत्यभिज्ञाऽनुमानस्य सामर्थ्याद्बाधिकेति चेत् ॥ १ ॥

मैवं वादीः सुसादृश्यात् सम्भवत्यन्यथापि सा ।
अन्यथानुपपन्नस्य नानुमानस्य बाधिका ॥ ३ ॥

अन्यथा न प्रदीपादौ भेदः सिद्ध्येत् कथञ्चन ।
दीपः स एवायमिति प्रत्यभिज्ञा स्फुटा यतः ॥ २ ॥

### ॥ प्रत्यभिज्ञाया जातिविषयतया समर्थनम् ॥

भवतु वा सामान्यविषयत्वेन प्रत्यभिज्ञासामञ्जस्यं वर्णेष्ववान्तरसामान्यस्यावश्या-श्रयणीयत्वात् । अन्यथा युगपदनेकेष्वधीयानेषु तारतारतरत्वादिरूपेण भासमानेऽप्य-कारादिभेदे स एवायमिति प्रत्यभिज्ञाविज्ञानं कथमाञ्जसं स्यात् । नच तारतारतर-त्वादय एव भिन्ना भासन्ते न त्वकार इति साम्प्रतम् । तेषां सङ्करप्रतिभासविरोधात् । काल्पनिकभेदप्रदेशमुपादायापि तत्सङ्करो भविष्यति निर्भागेऽपि गगने संयोगा-देरिवेति चेत् । तदसत् । सिद्धस्य भेदस्य हि तात्त्विकत्वे [यदि] बाधकमुपलभ्येत, काल्पनिकत्वं व्यवस्थापनीयम् । गगनवत् । नचेह [तार] तारतरत्वादिधर्माणा-माधारभेदे बाधकं पश्यामः । प्रत्यभिज्ञानमेव बाधकमिति चेत्; न, केशादि-भेदस्यापि विलयापत्तेः । तत्रापर्यायमनेकत्वावभासे सति सामान्यगोचरत्वेनापि प्रत्यभिज्ञाप्रामाण्यादिति चेत् समं समाधानम् । व्यक्तिप्रत्यभिज्ञायामेव स एवाय-मित्याकारो न सामान्यनिबन्धनप्रत्यभिज्ञायामिति चेत्; न, कदाचित्सामान्यप्रत्यभि-ज्ञायामपि तथा दर्शनात् । तथा हि—

मलयाचलमेखलाभुवः
पनसादीनुपलभ्य पादपान् ।
प्रतियन्ति विशेषगामिनः
तरुभेदास्त इमे द्रुमा इति ॥ १ ॥

तस्मात्स एवायमिति प्रत्यभिज्ञा समञ्जसा ।
सामान्यगोचरत्वेन न भेदज्ञानबाधिका ॥ २ ॥

॥ तारत्वादीनां व्यञ्जकपवनधर्मत्ववादिनिराकरणम् ॥

एतेनेदमपास्तम् । यदाहुः—व्यञ्जकपवनधर्मा एव तारत्वादयः वर्णेष्वारोपिता भासन्ते तदुपाधिकश्च वर्णभेद इति ।

यस्मात्—

बाधाभावे समारोपवाचोयुक्तिरनर्थिका ।
अन्यथा सर्वधर्माणां तात्त्विकत्वाव्यवस्थितेः ॥ १ ॥

पवनाश्रिततायां च श्रवसा प्रतिभासनम् ।
तारतारतरत्वादेः स्पर्शवन्नैव संभवेत् ॥ २ ॥

नचेन्द्रियान्तरेणापि वचनेष्वनुभूयते ।
तारत्वादिरदृष्टस्य समारोपः कथं भवेत् ॥ ३ ॥

तस्माद्यस्मिन्नकारादौ श्रवसा व्यवसीयते ।
तारानुनासिकत्वादिस्तत्र सत्य इति स्थितम् ॥ ४ ॥

तदेतदभिसन्धायाभिहितमन्यैरपि[1]—

अनुनासिकतादीनां धर्माणां सदसत्त्वतः ।
यौगपद्येन भिन्नत्वमकारस्य गवाश्ववत् ॥

इत्यादि ।

तस्मान्न प्रत्यभिज्ञानविज्ञानेनापबाधितम् ।
वर्णोत्पत्तावुपन्यस्तमनुमानमिति स्थितम् ॥

---

1. तथागतैरित्यर्थः

॥ वर्णानामुत्पत्तिमत्वे प्रयोगः ॥

किंच—

उत्पत्तिमन्तो वर्णाः स्युर्निकर्षो[त्कर्ष]योगतः[1] ।
[2]माधुर्यवद्भवे(न्ना)सौ अन्यथा गगनादिवत् ॥ १ ॥

उत्कर्ष एव सर्वस्मात् गगनादावहेतुके ।
निकर्षः सर्वतो दृष्टः परमाणावकारणे ॥ २ ॥

तस्मात्कस्माच्चिदुत्कर्षः कुतोऽपि च निकृष्टता ।
दृष्टा कारणवत्स्वेव ज[न्म]ना प्रतिबध्यते[3] ॥ ३ ॥

नियामकातिरेकेण भवन्ती साऽन्यथा भवेत् ।
आकाशपरमाण्वादावपि कारणवर्जिते ॥ ४ ॥

मन्दमन्दतरत्वादिनिकर्षो[कर्ष]भागिनः ।
प्रत्येकमनुभूयन्ते वर्णाः प्रत्यक्षसंविदा ॥ ५ ॥

औपाधिकत्वं चैतेषां धर्माणां विनिवारितम् ।
वर्णेष्वतो नासिद्धत्वकलङ्कोऽपि प्रमाणवान् ॥ ६ ॥

किञ्च प्रत्यक्षसंपत्त्याप्यभूत्वा भवनात्मिका ।
उत्पत्तिः जायते शब्दः संप्रतीति प्रतीयते ॥ ७ ॥

अत्राप्यनन्यथासिद्धिः वर्णनाशप्रतीतिवत् ।
प्रत्येतव्या ततः सिद्धा शब्दानां जायमानता ॥ ८ ॥

ततस्तेषामनित्यत्वमनुमित्यापि सिद्ध्यति ।
वस्तुत्वे सति जातत्वात् कलशाद्यविशेषतः ॥ ९ ॥

---

1. षोत्पत्तियोगतः—मा
2. यथा माधुर्यस्योत्कर्षापकर्षौ स्तः तद्वत् ।
उत्पत्त्यभावे गगनादिवत् उत्कर्षापकर्षौ न स्यातामित्यर्थः ॥
3. व्याप्तेत्यर्थः

|| अस्मिन्ननुमाने विपक्षे बाधकनिरूपणम् ||

किं पुनरत्र विपक्षे बाधकमिति चेत्, तदुच्यते—

जायमानस्य नित्यत्वे प्रध्वंससमता भवेत् ।
ततो निमित्तमात्रेण तस्योत्पत्तिः प्रसज्यते ॥ १ ॥

कार्यसाम्यमनादृत्य नहि हेतुसमानता ।
आकस्मिकत्वे सर्वस्य सर्वसाम्यप्रसङ्गतः ॥ २ ॥

तदतद्रूपिणो भावास्तद[त] द्रूपहेतुकाः ।
इत्येतदत एवोक्तमपरैरपि सूरिभिः ॥ ३ ॥

निमित्तमात्रजन्यत्वे को दोष इति चेच्छृणु ।
द्रव्यादिवर्गबाह्यत्वाद्वस्तुत्वमवहीयते ॥ ४ ॥

|| द्रव्याद्यन्यतमस्यैव वस्तुत्वमिति पक्षस्य आचार्यसिद्धान्तानुसारिता ||

यदि मतं नैषाऽस्माभिर्व्यवस्था स्वीक्रियते द्रव्यादिपदार्थषट्कान्तर्गतमेव सर्वं वस्त्विति । भवत्वेवं ; तथापि प्रकृतसाधनविशेषणीभूतं वस्तुपदं द्रव्याद्यन्यतमाभिप्रायेणेति तदवच्छिन्नस्य हेतोः सिद्ध एव विपक्षविरोधः । आचार्यसिद्धान्तश्चैवमनुसृतो भवति । स खलु द्रव्यादिपृथग्भावादेवावस्तुत्वं विषयविषयिभावाख्यस्य सम्बन्धस्य मोक्षाधिकारे निरूपयिष्यति "न, द्रव्याद्यनन्तर्भावेन तदसिद्धेः" इत्यादिना । तथा सति वस्तुत्वविशेषणोपादानेनैव विषयविषयिभावाख्यसम्बन्धेनापि प्रकृतहेतोर्व्यभिचारः परिहरणीयः ।

एतेनानित्यः शब्दः वस्तुत्वे सति कार्यत्वात् घटादिवत् इति **श्रीन्यायभूषण**गतोऽपि प्रयोगोऽनुगतो भवति । तदुपपादनार्थमेवास्माभिर्द्रव्याद्यन्यतमत्वे सतीति हेतुविशेषणमनभिधाय वस्तुत्वे सतीत्युपक्षिप्य विचारोऽयं विहितः । तस्मात् सर्वं निर्मलम् ।

|| शब्दानित्यत्वे प्रयोगान्तरम् ||

अपि चानित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वात् घटवत् । व्याख्यातमेतदनुमानप्रस्तावे । विपक्षे तु बाधकमुच्यते । सामा-

न्यवता तावन्नित्येन द्रव्यगुणयोः अन्यतरेणैव भवितव्यम् । (परस्)परस्यासम्भवात् । [1]तत्र नित्यद्रव्यत्वे कथमिव बहिरिन्द्रियग्रहणार्हता ? सावयवस्यैव द्रव्यस्य बहिरिन्द्रियजनितज्ञानगोचरत्वात् । तदेव कुत इति चेत् । अवययवभूयस्तया द्रव्येषु साक्षात्परम्परया वा बहिरिन्द्रियद्वारकविज्ञानोत्पादे हेतुत्वात् । अन्यथा दूरदूरतरादिदेशवासिनि द्रव्ये तदवयवप्रकर्षानुविधायिविज्ञानप्रकर्षो न भवेत् । न खल्वनिमित्तस्य प्रकर्षं नैमित्तिकप्रकर्षोऽनुविदध्यादतिप्रसंगात् । गुणोऽपि भवन्नवयविगुणश्चेत् अनित्य एव स्यात् । अन्यथा त्वाश्रयविनाशेऽपि चिरतरावस्थानप्रसङ्गे सामान्यरूपतापत्तेः । परमाणुगुणत्वे पुनः स्पष्टमेवातीन्द्रियत्वप्रसङ्गः । परममहतोऽपि गुणो भवन् [2]साधारणगुणश्चेत् बहिरिन्द्रियागोचर एव संङ्ख्यादेः [3]आश्रययोग्यतान्तर्भावेनैवेन्द्रिययोग्यत्वात् । विशेषगुणस्तु भवन्नात्माकाशयोरन्यतरस्यैव भवेत् । अन्यविशेषगुणवतो [4]व्यापकस्याप्रमाणत्वात् ।

तस्मान्नात्मविशेषगुणस्तावद्बाह्येन्द्रियग्राह्य इति सिद्ध एव । आकाशविशेषगुणस्तु न शब्दादन्यः प्रामाणिकः । स च नित्यश्चेदाकाशात्मनि श्रवसि नित्यस्तस्य समवाय इति सर्वदोपलम्भप्रसक्तिर्निपुणतरं निरूपिता । परिशेषादनित्यस्यैव सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वमिति सर्वमवदातम् ।

॥ शब्दस्य अनित्यत्वपक्षे श्रवणानुपपत्तिरिति शङ्का ॥

स्यादेतत् । अनित्यपक्षे शब्दस्य श्रवणमेवानुपपन्नम् । तथा हि—दूरे शारिकयोक्तः श्रवसा कथं वेद्यः । बहिरिन्द्रियमप्राप्तग्रहणसमर्थं नहीष्टं वः । दूरदूरतरादिदेशोत्पादितोऽपि शब्दस्तत्रैव तावदाकाशदेशे समुत्पद्यत इत्याश्रयणीयम् । व्यापकविशेषगुणानामसमवायिकारणदेशाविरोधेनोत्पादनियमात् बुद्ध्यादिवत् । नच तत्रोत्पन्नस्यापि शब्दस्य श्रोत्रदेशपर्यन्तमागमनं भवत्यमूर्तत्वात् । नापि कर्णशष्कुलीमण्डलावच्छिन्नो नभोदेशः श्रोत्ररूपः तत्प्रदेशमुपसर्पति । कर्णशष्कुल्याः

---

1. परस्य द्रव्यगुणभिन्नस्य असंभवात्, सामान्यवत्त्वे सति नित्यत्वस्यासंभवात्, कर्मणः अनित्यत्वात् इतरेषां सामान्याभावादिति भावः ।

2. सामान्यगुणः

3. योग्याश्रयवृत्तिसङ्ख्यादेरेव योग्यत्वमित्यर्थः ।

4. आत्माकाशभिन्नयोः व्यापकयोः कालदिशोः विशेषगुणानधिकरणत्वादित्यर्थः

प्रत्यक्षतः तत्रैवावस्थानोपलम्भात् तदवस्थाने च तदुपहितोऽपि नभःप्रदेशस्तत्रैवेति कथं देशान्तरप्रत्यासत्तिः। नचाप्राप्यकारि बहिरिन्द्रियम्। अपसिद्धान्तप्रसक्तेः। तस्मादनित्यपक्षे दूरादिदेशजातस्य शब्दस्य श्रवणानुपपत्तिरिति।

॥ उक्तशङ्कासमाधानम् ॥

नैतदपि दूषणम्। यस्मात्सन्तानस्वीकरणान्नैष दोषःप्रसङ्गमाप्नोति। कल्प्यः खलु सन्तानः कार्यस्यान्यथाऽसिद्धेः। दृष्टा खलु लोके वीचीसन्ताने पूर्वदेशे विनश्यतामपि स्वप्रत्यासत्तिमपेक्ष्य तत्तदव्यवहिते देशे सदृशसदृशकार्यारम्भपरम्परया देशान्तरप्राप्तिः तद्दर्शनेन शब्दानामपि श्रवणपथप्राप्तये सन्तानमभ्युपगच्छामः, प्रकारान्तरेण प्राप्त्यनुपपत्तेः।

॥ बहिरिन्द्रियाणां प्राप्यकारित्वनियमात् वीचीतरङ्गन्यायेन शब्दोत्पत्तिस्वीकारः ॥

प्राप्यकारित्वनियमाच्च बहिरिन्द्रियाणां त्वगिन्द्रियवत्। नचैवं सत्युपरमहेत्वभावात् सन्तानानुपरतिप्रसक्तिरिति शङ्कनीयम्। तीव्रमन्दमन्दतरादिभावेनारम्भकत्वात्। अत्यन्तमन्दस्यानारम्भकत्वादन्त्यतरङ्गवत् सन्तानोपरतेः तस्मात्सन्तानारम्भपरम्परया सजातीयादुत्पन्न एव शब्दः श्रूयत इति युक्तं पश्यामः।

॥ अत्र न्यायप्रयोगप्रदर्शनम् ॥

तथाच प्रयोगः—श्रूयमाणः शब्दः सजातीयादुत्पन्नः अस्मदादिबाह्येन्द्रियप्रत्यक्षत्वे सति विशेषगुणत्वात्, अवयविरूपवदिति। ग्रहणान्यथानुपपत्तिरेव विपर्ययबाधिकेति न सन्दिग्धकालातीतत्वम्। नापि सन्दिग्धानैकान्तिकत्वं, अस्मदादिबाह्येन्द्रियप्रत्यक्षविशेषगुणस्यावयविरूपादेः कारणवर्तिसजातीयगुणप्रक्रमेणोत्पत्तिनियमात्। परमाणुगुणानां चातीन्द्रियत्वादिति।

तस्माद्वर्णे पदे वाक्ये तत्प्रवाहेप्यनित्यता।
सिद्धेति वेदनित्यत्वं न कथञ्चन युक्तिमत् ॥ १ ॥

आप्तोक्तत्वे तु मानत्वं यथा तस्योपपद्यते।
निरूपितं तथा पूर्वमिति सर्वमनाकुलम् ॥ २ ॥

**एवमेतानि त्रीण्येव प्रमाणानि, एष्वेवोपमानार्थापत्तिसंभवाभावैतिह्यादीनामन्तर्भावः। तत्र यथा गौः, एवं गवयः, इत्युपमानं शब्देऽन्तर्भूतम्। अनेन सदृशी मदीया गौरिति उपमानमिति चेत्, न, तस्य स्मृतित्वात्, पूर्वमेव हि सादृश्यविशिष्ट उपलब्धो गोपिण्डः, कस्मात्? उपलब्धियोग्यत्वात्, अयोग्यत्वे च न कदाचिदुपलभ्येत, अदृष्टवत्।**

---

उपसंहरति—**एवमेतानि त्रीणि प्रमाणानीति।**

॥ उपमानादीनामुक्तप्रमाणेष्वन्तर्भावनिरूपणम् ॥

ननूपमानादीन्यपराण्यपि प्रमाणानि सञ्चक्षते परीक्षका इत्यत आह—**एष्वेवोपमानार्थापत्तिसम्भवाभावैतिह्यादीनामन्तर्भाव इति।** उपमानादेरितरेतरयोगे सति आदिपदेन बहुव्रीहिः। आदिपदेन चेष्टालिप्यक्षरसिद्धदर्शनानामवरोधः। तत्र निर्देशक्रमेणोपमानं तावच्छब्देऽन्तर्भावयति—**तत्र यथा गौरेवं गवय इत्युपमानं शब्देऽन्तर्भूतमिति।** येषामेतादृशं अतिदेशवाक्यमेवोपमानं तेषां तच्छब्द एवान्तर्भूतं वाक्यरूपत्वात् अग्निमानयेत्यादिवाक्यवत्। उपमानरूपत्वेनावान्तरवैलक्षण्यात् प्रमाणान्तरत्वाभिधाने विध्यर्थवादाद्यवान्तरभेदबाहुल्यात् प्रमाणानन्त्यप्रसङ्ग इत्यभिप्रायः।

॥ मीमांसकसम्मतोपमितेः स्मृतावन्तर्भावः ॥

स्यादेतत्। गोस्वामिनो [1][वन]गतस्य गवयमुपलभमानस्य 'अनेन सदृशी मदीया गौः' इति गोगोचरं वेदनमुपजायमानं उपमानमित्याख्यायते। तस्य चासम्प्रयुक्तगोचरत्वात्, असति च लिङ्गादिवेदने जायमानत्वात् मानान्तरत्वमेवेति, तदाह—**'अनेन सदृशी मदीया गौः' इति उपमानमिति चेदिति।** दूषयति—**न, तस्य स्मृतित्वादिति।** कथं पुनरननुभूते स्मृतिसम्भव इत्यत आह—**पूर्वमेव हि सादृश्यविशिष्टो गोपिण्ड उपलब्धः इति।** तत्रैव प्रश्नपूर्वकं हेतुमाह—**कस्मात्? उपलब्धियोग्यत्वात्** सादृश्यस्य विषाणादिवदिति शेषः। विपक्षे दण्डमाह—**अयोग्यत्वे वा न कदाचिदुपलभ्येतादृष्टवदिति।** गवयं

---

1. गगन मा

**निर्विकल्पकेन तु प्रत्यक्षेण पूर्वं सादृश्यमुपलब्धम्, तेन तथोपलब्ध्यभिमानो न भवति । निर्विकल्पकोपलम्भेऽपि सहकारिसामर्थ्यादभावादिषु सविकल्पका स्मृतिर्दृष्टा ।**

---

दृष्ट्वा गां पश्यतोऽपि तेन सदृशीयमित्यनुभवो न भवेत् गवयगतं च सादृश्यं न चक्षुषा निरीक्षेतेत्यर्थः । ननु प्रागेव सदृशोपलम्भे तथोपलब्ध्यभिमानः स्यादित्यत आह — **निर्विकल्पेन तु प्रत्यक्षेण पूर्वं सादृश्यमुपलब्धं तेन तथोपलब्ध्यभिमानो न भवति** प्रथमगोपिण्डोपलम्भसमकालं गोत्वोपलम्भवत् पथि गच्छतस्तृणाद्युपलम्भवच्चेति शेषः ।

॥ निर्विकल्पकानुभवात् सहकारियोगेन सविकल्पकस्मृतिकथनम् ॥

यदि मतं स्मृतेरनुभवाकारानुकारित्वान्निर्विकल्पकानुभवे सविकल्पकाकारानुसारिणी स्मृतिरयुक्तेति नायं नियम इत्याह — **निर्विकल्पकोपलम्भेऽपि सहकारिसामर्थ्यादभावादिषु सविकल्पिका स्मृतिर्दृष्टेति ।** अभावसामान्यस्थूलत्वदीर्घत्वादिषु निर्विकल्पकानुभूतेष्वपि प्रतियोगिज्ञानादिसहकारिसामर्थ्यात् सविकल्पिका स्मृतिरनुभवसिद्धा । नचानुभवप्रसिद्धेष्वप्यर्थेषु पर्यनुयोगः प्रतिषेधो वा युक्तः । तत्राभावे तावन्निर्विकल्पकानुभूते सविकल्पिकां स्मृतिमुपपादयिष्यामः । सामान्येऽपि प्रथमगोपिण्डानुभवसमसमयमनुभूते द्वितीयपिण्डदर्शनसमनन्तरं 'एतत्साम्यं तस्यास्ति' 'तत्समानः स' इति सविकल्पिका स्मृतिः संप्रतिपन्नैव । तथा पूर्वमविकल्पानुभूत एव स्थूलदीर्घत्वादिपरिमाणे सविकल्पिका स्मृतिः प्रतियोगिदर्शनानन्तरमुपलब्धा स्थूलं तदेतस्मात् दीर्घं वेति । साच स्मृतिरेवावश्याश्रयणीया; तदानीं तत्रेन्द्रियलिङ्गाद्यभावेऽपि जायमानत्वात् उपलम्भमा[त्र]स्य च नियतविषयत्वात् । नच प्रतियोगिदर्शनात्पूर्वं सविकल्पिका स्थूलास्थूलादिबुद्धिरासीदिति निर्विकल्पकानुभवपूर्विकैव सविकल्पिका तत्र स्मृतिराश्रयणीया । तथा च सादृश्येऽपि तादृशी स्मृतिराश्रीयमाणा न दोषकारिणी ।

॥ सादृश्यस्य निर्विकल्पकेनाग्रहणमिति तिमिरादिशङ्का ॥

यत्पुनः **तिमिरारिणा**ऽभिहितं — किंचिद्वस्त्वाश्रयमात्रग्रहणापेक्षं किंचित्तु आश्रयप्रतियोग्युभयग्रहणापेक्षम् । परिमाणं हि आश्रयमात्रग्रहणापेक्षं प्रतियोग्यग्रहणेऽपि

पूर्वपरिमाणव्यवहारदर्शनात् । सादृश्यग्रहणं तूभयग्रहणापेक्षमेव ; केवलाश्रयमात्रग्रहणपूर्वकसादृश्यव्यवहारादर्शनादिति विवेकः । अयमर्थः । व्यवहारदर्शनात्पूर्वं अगृहीतमेव सादृश्यं ; निर्विकल्पकेन गृहीतत्वेनाप्रत्यभिज्ञानादिति ।

॥ तिमिरारिपक्षखण्डनम् ॥

तदिदमतिमन्दम् । प्रथमगोपिण्डोपलम्भसमसमयं गोत्वोपलम्भवदविकल्पकस्यैव सादृश्योपलम्भस्य स्मृत्यन्यथानुपपत्त्यैव पूर्वोत्पन्नतायाः कल्पयितुं शक्यत्वात् । प्रतियोग्यपेक्षायाश्च सविकल्पकज्ञान एव हेतुत्वव्यवस्थापनात् । ह्रस्वदीर्घादिज्ञानवत् गोत्वाविकल्पवच्च निर्विकल्पको(तो)पलम्भानन्तरं व्यवहारादर्शनं गृहीतत्वेनाप्रत्यभिज्ञानं च तद्वच्छतस्तृणादौ गोत्वादौ च समानमिति न तद्वशादनुभवापाकरणं युक्तमिति ।

किञ्च ‘ कथमिहावस्थित एव त्वं जानीषे सा गौरनेन सदृशी इति पृष्टः ‘ पूर्वं प्रत्यक्षेणैव मया तथाविधा गौरुपलब्धे’ति प्रतिवक्ति । तस्मादपि पूर्वानुभूतमेव सदृशरूपं सम्प्रत्यनुस्मर्यत इत्यवश्याश्रयणीयम् । ‘ स्थूलं तत् ’ ‘ एतस्मादतिदीर्घं ’ (तदस्माभिर्दीर्घमि)इत्यादिज्ञानस्यापि एष एव न्यायः स्मृतित्वं व्यवस्थापयति ।

॥ स्थूलं तदेतस्मादिति ज्ञानमर्थापत्तिफलं न स्मरणमिति शङ्का ॥

**स्यान्मतं** स्थूलं तदेतस्मात् [इति] ज्ञानमर्थापत्तिफलमेव; न स्मरणं, परिमाणस्वरूपस्येदन्ताद्यवच्छेदेन प्रागनुभवेऽपि प्रतियोगिविशेषावच्छिन्नस्य पूर्वम[न]नुभवा[द]नुस्मरणगोचरत्वानुपपत्तेः । न खलु पूर्वानुभवाविषयीकृतमर्थं कलयापि कलयन्ती स्मृतिरुत्पत्तुमर्हति । तस्माद्यदि तदेतस्मात् स्थूलं दीर्घं वा न भवेत्तर्ह्येतदपि तस्मात्सूक्ष्मं ह्रस्वं वा न भवेदित्यनुपपत्तिपरामर्शप्रसूतमर्थापत्तिफलमेवैतादृशं संवेदनम् । तथा सति सादृश्यसंवेदनमपि प्रतियोग्यवच्छेदेनोत्पद्यमानं मानान्तरमेव, न स्मरणं विशिष्टे पूर्वानुभवाभावादिति युक्तमुत्पश्याम इति ।

॥ उक्तज्ञानस्यार्थापत्तित्वे एतत्सदृशी मदीया गौः इति ज्ञानस्यापि अर्थापत्तिरूपता ॥

अत्रोच्यते—

एतस्मात्स्थूलमित्यादिवेदनेनाविशेषतः ।
अनेन सदृशी गौरित्यर्थापत्तेर्न भिद्यते ॥ १ ॥

**संज्ञासंज्ञिसंबन्धप्रतिपत्तिरप्याप्तवचनकार्या, तथा प्रश्नोत्तराभिधानात् ।**

---

अर्थापत्तिस्तु नास्माकमनुमानाद्विभिद्यते ।
सर्वथाप्युपमानस्य न मानान्तरता भवेत् ॥ २ ॥

यदि खलु ' एतस्मात् तत्स्थूल'मित्यादिज्ञानमर्थापत्तिफलमिति ' सा गौरनेन सदृशी'ति संवेदनस्य स्मरणरूपत्वोपपादने नोदाहरणं; तथापि तद्वदेव सदृशसंवेदनमपि सप्रतियोगिकमर्थापत्तिफलं भविष्यति । यद्यनेन सदृशी सा न स्यात् तर्हि तयापि सदृशोऽयं नोपलभ्येत उपलभ्यते चायं तया सदृशः । तस्मात् अनुपपत्तिप्रसूतमेव "सा गौरनेन सदृशी" इति संवेदनमपीत्यर्थापत्तावुपमानमन्तर्भूतम् । वस्तुतः पुनः अर्थापत्तिरप्यनुमानमेवेति वर्णयिष्यामः ।

॥ अत्र अर्थापत्तिरूपानुमानप्रयोगप्रकारः ॥

तथा चैवं प्रयोक्तव्यम्—सा गौरनेन सदृशी स्वप्रतियोगिकसादृश्येनास्यावच्छेदकत्वात् । यत्स्वप्रतियोगिकसादृश्येन यस्यावच्छेदकं तत्तेन सदृशं, यथा मात्रा मात्रन्तरमिति । तस्मात्सादृश्यमात्रं स्वरूपेणानुस्मर्यते । तथाविधा गौः प्रागेवोपलब्धेत्यनुसन्धानात् प्रतियोग्यवच्छिन्नं तदनुमीयते इति । सर्वथापि मीमांसकोन्नीतमुपमानं न प्रमाणान्तरमिति सिद्धम् ।

॥ जरन्नैयायिकाभिमतोपमानस्वरूपं तत्खण्डनं च ॥

**जरन्नैयायिका**स्त्वाचक्षते क्वचित्कर्मणि गवयस्योपयोगं विदित्वा नागरिकः कश्चिदारण्यकं यदा पृच्छति ' कीदृग्गवय ' इति ; स तदा तं प्रतिवक्ति ' यादृशो गौः तादृशो गवय 'इति । तदनन्तरं च वनेचरवचनमवधार्यारण्यं गतो नागरिकः कञ्चन वृत्तकण्ठं गोसदृशमर्थं पश्यन्नयं स गवयशब्दवाच्य इति प्रतिपद्यते । तत्र वाक्यजनितज्ञानाहितसंस्कारसमुद्भूतस्मरणसहकारीन्द्रियजनितं सारूप्यसंवेदनमुपमानं; संज्ञासंज्ञिसम्बन्धसंवेदनमुपमानफलमिति । तान्प्रत्याह—**संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरप्याप्तवचनकार्ये**ति । एषोऽर्थः । संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः पूर्वमाप्तवचनादेवोदपादि । गवयदर्शने पुनर्वाक्यार्थमेव केवलमनुस्मृत्य प्रत्यभिजानाति । ' अयं स गवयशब्दवाच्य ' इति । तत्र हेतुमाह—**तथा प्रश्नोत्तराभिधानादिति ।** कथं जानीषे गवयशब्दवाच्योऽयमिति परैः पृष्टो नागरिकः प्रश्नो-

**अन्यप्रमाणानिर्देशाच्च । अस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानसिद्धिः, तथाशब्दाश्रवणादिति चेत् । एवं तर्हि गौरयमित्येवं सङ्केते कृते अस्य गोशब्दःसंज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यम्, समानन्यायत्वात्, गोपिण्डान्तरेऽपि सङ्केतग्रहणे प्रमाणान्तराभिधानप्रसङ्ग इति । तथा शब्दानभिधानेऽपि प्रतिपादकप्रतिपत्त्रोरेवमभिप्रायः, ईदृशस्य सर्वस्य गोशब्दःसंज्ञेति सामर्थ्यात्त्वेवं प्रतिपत्तिरिति चेत्,**

---

त्तरमर्थमभिधत्ते—वनेचरवचनान्मयैतदवगतमिति न तूपमानाख्यात्प्रमाणादिति ब्रूत इत्यर्थः ।

॥ लोके उपमानस्य पृथक्प्रमाणत्वेनानिर्देशाच्च न तस्य पृथक् प्रमाणत्वम् ॥

किंच यथा प्रत्यक्षेण कुम्भमुपलभामहे, धूमेन धूमध्वजं जानीमो, देवतास्वर्गादिकमागमेनावगच्छाम इति तत्र तत्र प्रमाणत्रितयं लौकिका निर्दिशन्ति न पुनरेवमुपमानं क्वचिन्निर्दिशन्तः प्रतिपत्तारः प्रतीयन्ते । तस्मादप्युपमानं न प्रमाणान्तरमित्याह—**अन्यप्रमाणानिर्देशाच्चेति ।**

॥ उपमानस्य शक्तिग्राहकत्वेन प्रमाणान्तरत्वशङ्का तन्निराकरणं च ॥

शङ्कते—**एतस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानसिद्धिः तथा शब्दाश्रवणादिति ।** सम्बन्धबोधकशब्दाश्रवणादित्यर्थः । इदं निराकरोति—**एवं तर्हि गौरयमित्येव सङ्केते कृतेऽस्य गोशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यं समानन्यायत्वादिति ।**

नन्वस्य गवयशब्दः संज्ञेति पुरोवर्तिविशेषनिष्ठा प्रतिपत्तिर्न पूर्वं वाक्यादुपजायत इति तदर्थमुपमानं प्रमाणमुच्यत इति तत आह—**गोपिण्डान्तरेऽपि सङ्केतग्रहणे प्रमाणान्तराभिधानप्रसङ्ग इति ।** न खलु तत्पिण्डविशेषनिष्ठा सङ्केतकालीना प्रतिपत्तिः किं तर्हि साधारणोपाधिप्रवृत्तेत्यर्थः । शङ्कते—**तथा शब्दानभिधानेऽपि प्रतिपादकप्रतिपत्त्रोरेवमभिप्रायः ईदृशस्य सर्वस्य गोशब्दः संज्ञेति । सामर्थ्यादेवं प्रतिपत्तिरिति चेदिति ।** सामर्थ्यं प्रश्नोत्तरत्वान्यथानुपपत्तिः । नहि गोशब्दार्थं पृच्छतः प्रतिवचनमन्यथा सङ्गच्छत इत्यर्थः ।

**समानमेतदितरत्रापि, गोसदृशो गवय इति, शब्दादुभयोरेवमेवाभिप्रायः। गोसदृशस्यार्थस्य गवयशब्दः संज्ञेति सामर्थ्यादेवंप्रतिपत्तिरिति। न च प्रत्यक्ष एवार्थे संज्ञासंज्ञिसंबन्धप्रतिपत्तिः अप्रत्यक्षेऽपि शक्रादौ संज्ञासंज्ञिसंबन्धप्रतिपत्तिदर्शनात्।**

---

प्रकृतेऽपि तर्हि समानोऽयं न्याय इत्याह—**समानमेतदितरत्रापि गोसदृशो गवय इति शब्दादुभयोरेवमभिप्रायो गोसदृशस्यार्थस्य गवयशब्दः संज्ञेति सामर्थ्यात्** प्रश्नोत्तरान्यथानुपपत्त्यैवं **प्रतिपत्तिरिति।** नहीहापि गवयशब्दार्थं पृच्छतः प्रतिवचनमन्यथाभिहितं स्यादित्यर्थः। प्रतिभा वा सामर्थ्यम् ऊह—शक्तिर्वा। तथाहि यथा गौस्तथा गवय इत्यभिधानेऽपि गोसदृशस्य गवयशब्दः संज्ञेति प्रतिपद्यत इति।

॥ तत्रैव शङ्कान्तरं समाधानं च ॥

ननु वाक्यश्रवणसमसमयमप्रत्यक्षे गवये संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरनुपपन्नेत्यत आह—**न च प्रत्यक्ष एवार्थे संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः अप्रत्यक्षेऽपि शक्रादौ संज्ञासंज्ञिसम्बन्धप्रतिपत्तिदर्शनादिति। स्यादेतत्**—गोसदृशो गवय इति वाक्यश्रवणसमसमयं गवयत्वसामान्यरूपनिमित्तप्रतिपत्त्यसम्भवात् तदवच्छिन्ने गवयशब्दवाच्यताप्रतिपत्तिराविर्भवन्ती परिशेषात्प्रमाणान्तरफलं व्यवतिष्ठत इति। **नैतदपि साधु संलक्ष्यते।** [वाक्यमेव]स्मरणपरिवर्ति विचारविशदीकृतं गोसदृशोपलक्षितगवयत्वसामान्यावच्छिन्नपदार्थगोचरं गवयशब्दस्य वाच्यवाचकभावं व्यवस्थापयितुमलमिति किमत्र मानान्तरान्वेषणप्रयासेन।

॥ गवयपदस्य गवयत्वावच्छिन्ने शक्तिग्राहकविचारप्रदर्शनम् ॥

कः पुनरयं विचारो यदवष्टम्भादिमां प्रतिपत्तिमुपजनयितुमीष्टे वाक्यमिति चेत्। उच्यते। (न)गोसादृश्यमेव गवयशब्दप्रवृत्तिनिमित्तमिति न युक्तम् अप्रतीतगोजातीयानामरण्यवासिनां गवयव्यवहारविलोपप्रसङ्गात्। भूयोऽवयवसामान्यात्मनश्च सादृश्यस्य निमित्ततायां गौरवात् गवयत्वसामान्यनिमित्तमात्रत्वे लाघवात्। **प्राभाकरा**भिमतपदार्थान्तररूपसादृश्याभ्युपगमेऽपि तस्य धर्मिप्रतियोगि-

निरूपणाधीननिरूपणतया गुरुत्वात् धर्मिमात्राधीननिरूपणगवयत्वसामान्यमेव निमित्तमित्युक्तं, तत्समानकक्षस्यान्यस्यादर्शनात्। तस्मिंश्च दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्। तथा सति गोसदृशपदं स्वाभिधेयाविनाभूतगवयत्वसामान्योपलक्षणपरं व्यवस्थापनीयम्। [एवं] विचारपरिशोधितं वचनमेव स्मरणपरिवर्ति गवयत्वसामान्यविशिष्टवस्तुविषयं संज्ञासंज्ञिसम्बन्धं बोधयितुमुत्सहते। कृतं मानान्तरेण। [अन्यथा अधीतवेदस्य] (नच) कालविप्रकर्षेण साङ्गोपाङ्गपर्यवदातस्या[नु](त्म) सन्धीयमानस्य विगलितनिखिलविपर्ययाशङ्कवाक्यार्थबोधनविलोपप्रसङ्गात्। विचा(का)रसहकारित्वं(त्वान्)मानान्तरपक्षेऽपि अवश्याश्रयणीयं यस्मादाह[1] "तस्य च प्रमाणस्य सततस्तर्कस्सहायतामापद्यते सादृश्यस्यैव निमित्ततायां कल्पनागौरवम्। निमित्तान्तरकल्पने क्लृप्तकल्प्यविरोध इति तदेव निमित्तमवगच्छति" इति।

तस्मात्समाने सर्वस्मिन् आग्रहस्त्वतिरिच्यते।
भवतामुपमानस्य पृथक्प्रामाण्यमिच्छताम्॥ १॥

॥ लौकिकवाक्यस्य वैलक्षण्यशङ्का तत्परिहारश्च ॥

अथ मतं प्रागेव स्वार्थमवबोध्य पर्यवसितं वचनमिति किमनेन पुनः पुनःपीडितेन। वैदिकं पुनर्वचनमपर्यवसितमिति। नैतत्सारम्। गोसदृशपदस्योपलक्षणनिमित्तयोरन्यतरकारणनिर्णय(कारण)विरहिणो वचनस्य पूर्वमपर्यवसानात्। आपाततो गोसादृश्यमेव निमित्तमुपादाय सङ्केतप्रतिपत्तिसम्भवेऽपि गवयदर्शनसमसमयभाविना विचारेण तत्प्रतिपत्तौ बाधितायां वचनादेव विचारसहकारिणो वाक्यार्थप्रमितौ सत्यामेव वाक्यस्य वास्तवपर्यवसानोपपत्तेः। पूर्वं तु अपर्यवसिते विचारसहकारिविरहाद्वैदिकेष्विव वचनेष्वध्ययनकालीनेष्वन्यथार्थमवबोधयत्सु पर्यवसितत्वभ्रममात्रं श्रोतुरिति युक्तं पश्यामः। न खलु गोसदृशो गवय इति सामानाधिकरण्यमात्रे वाक्यपर्यवसानम्। किं तर्हि? गवयशब्दार्थस्य समग्रस्योपपादने सति नान्यथा; अन्यथा गवयशब्दार्थं पृच्छतः प्रतिवचनमाप्तेनानभिहितं स्यात्।

---

1. कुसुमाञ्जलाविति शेषः।

॥ गोसदृशो गवय इत्रि वचनस्य विचारेणैव पर्यवसानमिति शङ्का समाधानं च ॥

किञ्च कीदृग्गवय इति निमित्तभेदप्रश्न एवायमिति भवद्भिर्निरणायि । नच विचारात्पूर्वं गवयत्वरूपं निमित्तमुपदर्शितमिति कथं प्रतिवचनपर्यवसानम् । उपमानसामग्रीसमुत्थापनमात्रेण प्रतिवचनं पर्यवसितं साक्षान्निमित्तस्योपदर्शयितुमशक्यत्वादिति चेत्—मैवम् । आपाततस्तस्योपदर्शयितुमशक्यत्वेऽपि प्राचीनया नीत्या विचारपरिकरस्य वचस एव निमित्तपर्यवसानसम्भवे सति प्रमाणान्तरप्रवृत्त्यङ्गीकारगौरवस्य निरवकाशत्वात् । तस्माद्गोसदृशो गवयशब्दवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ सादृश्यस्य निमित्तत्वोपलक्षणत्वविशेषसन्देहेऽपि पर्यवसितमेव वाक्यमिति न मन्तव्यम् । प्रश्नोत्तरत्वान्यथानुपपत्त्यैव प्रष्टुरपेक्षितार्थप्रतिपादनपर्यन्तमस्य[1] पर्यवसानासम्भवात् ।

॥ कुसुमाञ्जल्युक्तपक्षखण्डनम् ॥

यः पुनरयं श्लोकः सोऽसङ्गतः—

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः[2] ॥ इति ॥

श्रुतान्वयादनाकाङ्क्षं न वाक्यं पर्यवस्यति ।
श्रुतार्थान्वयमात्रेण नाभिप्रेतार्थधीर्यतः ॥

किं च श्रुतार्थान्वयमात्रमप्यत्र वैशेषिकसिद्धान्तमुपपादयता किरणावल्यामुदयनेनैव[3] दूषितमिति किमत्रास्माकमधिकायासेन । तत्र ह्येषा वचनव्यक्तिः "द्विविधं हि सामानाधिकरण्यं शाब्दमार्थं च । तत्र न तावच्छाब्दसामानाधिकरण्यमात्रेणान्वयोपपत्तिः । माता वन्ध्येत्यादिष्वपि प्रसङ्गात् । नापि क्रियाकारकयोः परस्परमपेक्षामात्रेण । तथा सति गङ्गायां जलमितिवद्गङ्गायां घोष इत्यत्रापि परस्परमाधाराधेयभावप्रमितिप्रसङ्गात्[4] । आर्थं तु सामानाधिकरण्यं यथा (के)

---

1. अपेक्षितार्थबोधनेनैव पर्यवसानमिति भावः
2. कुसुमाञ्जलिः (3-12)
3. (किर पु 32 3)
4. प्रमितावन्वयः—किरणावलीमुद्रित पाठः

**सूत्रविरोध इति चेत्, न, प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथगभिधानात्। तर्हि प्रयोजनं वाच्यम्। उच्यते। शब्दप्रामाण्यसमर्थनम्। कथम्? केचिदाहुः—प्रत्यक्षानुमानविषयत्वे शब्दस्य**

---

घोषपदार्थपर्यालोचनायामिह दुर्लभं तथा गोसदृशो गवय इत्यत्रापि दुर्लभमेव। गोसादृश्यं हि गवयशब्दप्रवृत्तिनिमित्तं न भवतीति आयुष्मतैव निष्टङ्कितम्। उपलक्षणमात्रेण चोदाहृतेन गोसादृश्येन यदुपलक्षणीयं गवयत्वं तेन सह यद्यन्वयः तदानीं गङ्गापदेनाप्युपलक्षणीयतीरेणैव सह घोषस्याप्यन्वयोपपत्तौ नान्वयवैषम्यम्[1]। तस्माद्वास्तवसामानाधिकरण्यविरहादपर्यवसितं वाक्यमेवैवंविधप्रमां करोति" इति। तस्मात्सर्वमवदातम्।

॥ उपमानस्याप्रामाण्ये सूत्रविरोधपरिहारः ॥

शङ्कते—**सूत्रविरोध इति चेदिति।** यद्युपमानं प्रमाणान्तरं न भवेत्तर्हि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति सूत्रे यदुपमानस्य पृथग्ग्रहणं तेन विरोधः स्यादित्यर्थः। परिहरति—**न, प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथगभिधानादिति।** यथा प्रमाणान्तर्भूतोऽपि दृष्टान्तः पृथगभिहितस्तदाभासविवेकेन व्युत्पादयितुं, यथापि निग्रहस्थानान्तर्भूता अपि हेत्वाभासाः पृथगभिहिताः विशेषाकारेण तेषां व्युत्पादने सति स्ववाक्येषु परिवर्जनं परवाक्येषु चोद्भावनं सुकरमिति, तथोपमानस्यापि यथोक्तप्रमाणान्तर्भूतस्य पृथगभिधानं प्रयोजनानुसारेणेति नास्ति सूत्रविरोधः।

॥ सूत्रे उपमानशब्दस्य प्रयोजनम् ॥

पूर्ववाद्याह—[2]**तर्हि प्रयोजनं वाच्यमिति।** सिद्धान्ती ब्रूते—**शब्दप्रामाण्यसमर्थनमिति।** परः पृच्छति—**कथमिति।** प्रतिवचनमाह—**केचिदाहुः प्रत्यक्षानुमानविषयत्वे** प्रत्यक्षानुमानयोः यो विषयस्तन्मात्रप्रतिपाकत्वे **शब्द-**

---

1. वैधुर्यम् (कि. पाठः)
2. प्रतत्र्हि—मा

**अनुवादकत्वमेव। तदविषयत्वे संबन्धाग्रहणादवाचकत्वम्। पदार्थस्याप्रसिद्धत्वात्। न च पदेन सम्बन्धग्रहणम्, इतरेतराश्रयत्वात्। वाक्यार्थस्तु प्रसिद्धार्थानां पदानामन्वयमात्रम्। तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम्। यथा कार्यार्थिनोऽप्रसिद्धगवयस्य प्रसिद्ध**

---

**स्यानुवादकत्वमेव** न प्रामाण्यम्। **तदविषयत्वे** तद्विषयाप्रतिपादकत्वे, **सम्बन्धाग्रहणादवाचकत्वम्**। कस्मात्? **पदार्थस्याप्रसिद्धत्वात्। न च पदेन सम्बन्धग्रहणमिति।** न खल्वपरिच्छिन्ने सम्बन्धिनि सम्बन्धपरिच्छेदः शक्यत इत्यर्थः। माभूत्प्रत्यक्षानुमानाभ्यां सम्बन्धिपरिच्छेदः शब्देनैव तु परिच्छिन्ने सम्बन्धिनि सम्बन्धः परिच्छिद्यतामित्यत आह— **इतरेतराश्रयत्वात्**। तेनैव शब्देन परिच्छिन्ने सम्बन्धिनि (त्य)[तस्य] सम्बन्धग्रहणाभ्युपगमे स्पष्ट इतरेतराश्रयः। शब्दान्तरेण सम्बन्धिपरिच्छेदे भवेदनवस्थेत्यभिसन्धिः।

॥ शब्दप्रामाण्यसमर्थनं प्रयोजनम् ॥

स्यादेतत्। वाक्यार्थस्तावत् वाक्येन प्रतिपाद्यते। नच वाक्यस्य सङ्गतिग्रहणसापेक्षत्वं तस्य पदधर्मत्वात् वाक्यस्य चानन्त्येन तदसम्भवात्। तथा सति वाक्यार्थं विनिश्चित्य तत्र पदानि सङ्केत्यन्तामित्यत आह-**वाक्यार्थस्तु प्रसिद्धार्थानां पदानामन्वयमात्रमिति।** तुशब्दो वाक्यालङ्कारार्थः। प्रसिद्धाश्च तेऽर्थाश्चेति प्रसिद्धार्थाः, त एव पद्यन्ते गम्यन्त इति पदानि, तेषामन्वयमात्रं वाक्यस्यार्थ इति। यद्वा प्रसिद्धा अर्था येषां तानि प्रसिद्धार्थानि। तान्येव पद्यन्त एभिरिति पदानि, तेषां पदानां अन्वयमात्रम्, वाक्यमेवार्थो वाक्यार्थः। अर्थ्यतेऽनेनेत्यर्थः। एतदुक्तं भवति। गृहीतसङ्गतिकैः पदैः प्रतिपन्नानां पदार्थानामन्वयमात्रं वाक्येन प्रतिपाद्यं न त्वप्रसिद्धः कोऽपि। तस्मात्प्रथमत एव प्रमाणान्तरप्रसिद्धेषु पदार्थेषु पदानां सङ्गतिग्रहणमङ्गीकरणीयमिति।

॥ शब्दानां सङ्गतिग्रहसंभवात् प्रामाण्यम् ॥

तदेवं शब्दप्रामाण्ये परैः प्रतिक्षिप्ते **तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम्। यथा कार्यार्थिनोऽप्रसिद्धगवयस्य प्रसिद्धं गोसादृश्यमुपलक्षणमुपादायोपमानाख्येन वाक्येन** प्रत्यक्षाद्यगोचरीकृतेऽप्यर्थे **संज्ञा-**

**गोसादृश्यमुपलक्षणमुपादायोपमानाख्येन वाक्येन संज्ञासंज्ञिसंबन्धप्रतिपत्तिः क्रियते। तथा किञ्चिन्निमित्तमुपादाय शक्रादिपदपदार्थयोरपीति। तस्मादन्यार्थत्वान्न सूत्रविरोध इति।**

---

**संज्ञिसम्बन्धप्रतिपत्तिः क्रियते। तथा किञ्चिन्निमित्तं** नेत्रसहस्रादिक**मुपादाय शक्रादिपदपदार्थयोरपीति।**

अयमभिसन्धिः। न खलु दृष्टेऽप्यनुपपन्नं नाम। दृश्यते चैष सङ्गतिप्रकारो लोके। न खलु सङ्केतप्रतियोग्यपूर्वं वस्तु शब्देनैवोपस्थापयितुं न शक्यम्। किन्तु सामान्येन विदितसङ्गतिभिः शब्दैः परस्परसमभिव्याहार(परा)[वशा]द्विशेषपर्यवसायिभिः शक्यमेवापूर्वं वस्तूपस्थापयितुम्। यथाहु**राचार्यमण्डनमिश्राः ब्रह्मसिद्धौ**—

सामान्येन पदार्थत्वे सिद्धे साधारणैः पदैः।
शक्याऽपूर्वपदार्थस्य लोकवत्प्रतिपादना॥ इति। (ब्र. सि. ४-२)

तस्मात्प्रत्यक्षाद्यगोचराद्यर्थत्वेऽपि शब्दानां सङ्गतिग्रह(ा)सम्भवात् [न] अप्रामाण्यं, नाप्यनुवादकत्वात् प्रकरणाद्यपेक्षया विशेषनिष्ठत्वात् प्रमाणसंप्लवस्येष्टत्वादिति।

॥ उपसंहारः ॥

उपसंहरति—**तस्मादन्यार्थत्वान्न सूत्रविरोध इति।** लक्षणमप्यस्य पृथक्कथितं अलक्षितस्य प्रयोजनमन्तर्भावो वा न शक्यते सुखेन प्रतिपत्तुमिति। "प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं" इति लक्षणसूत्रम्। प्रसिद्धात्प्रज्ञातात्साधर्म्यान्निमित्ताद्वाक्यं निष्पद्यते, 'यथा गौस्तथा गवय' इत्यादिकम्। तदेव साध्यसाधनमुपमानं साध्यस्य संज्ञासंज्ञिसम्बन्धविषयं ज्ञानं साध्यं तस्य, साधनं निष्पादकं वाक्यं उपमानमित्याचार्यसंमता सूत्रयोजना द्रष्टव्या। तथा च लक्षणसूत्रानुसारादपि शब्दात्मकमुपमानं प्रसिद्ध्यति।

॥ उपमानस्य सूत्रे पृथक्प्रामाण्यपरीक्षाप्रयोजनम् ॥

स्यान्मतिः—शब्दात्मकं चेदुपमानं शब्दप्रामाण्यपरीक्षयैव तत्प्रामाण्यं परीक्षितमिति पृथक्प्रामाण्यपरीक्षणं किमित्यकार्षीत्सूत्रकारः? तत्राह—**परीक्षा**

**परीक्षा त्वर्थापत्तिवत् प्रमाणस्य सतः प्रमाणेष्वन्तर्भावज्ञापनार्थमिति। अन्तर्भावस्तु अनुमान एवास्य यथाश्रुतोऽपि निराकृतो नागम इति। चतुष्ट्वाभिधानं पञ्चत्वनिराकरणार्थम्, न त्रित्वप्रतिषेधार्थम्। प्रमाणसिद्धत्वादन्तर्भावस्य। त्रित्वानभिधानादयुक्तमिति चेत्**

---

**त्वर्थापत्तिवत् प्रमाणस्य सतः प्रमाणेषु अन्तर्भावज्ञापनार्थमिति।** ननूपमानस्य यथोक्तनीत्या यद्यन्तर्भावो विवक्षितः कस्मादन्तर्भावं प्रतिषेधति सूत्रकार इत्यत आह—**अन्तर्भावस्त्वनुमान एवास्य यथाश्रुतोऽपि निराकृतो नागम इति।** यथाश्रुतोऽप्यन्तर्भावप्रतिषेधो नागम इति योजना। न ह्युपमानस्यागमान्तर्भावनिरासपरं सूत्रमस्तीत्यर्थः।

॥ सूत्रे प्रमाणेषु चतुष्ट्वाभिधानप्रयोजनम् ॥

"न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्" इति (२-२-१) पूर्वपक्षं विधाय "शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेध" इति (२-२-२) सिद्धान्तयन् सूत्रकारः प्रमाणचतुष्ट्वमभिप्रैतीति गम्यते। तत्कथं प्रमाणानि त्रीण्येव निर्णीयन्त इत्यत आह—**चतुष्ट्वाभिधानं पञ्चत्वादिनिराकरणार्थम्। न त्रित्वप्रतिषेधार्थम्। प्रमाणसिद्धत्वादन्तर्भावस्येति।** पूर्वपक्षिणा खल्वाधिक्यमेव शङ्कितमर्थापत्त्यादिप्रामाण्यमभिदधानेनेति सिद्धान्तेऽप्यन्तर्भावाभिधानद्वारेणाधिक्यमेव निरस्तम्। न्यूनत्वं तु नाशङ्कितं नापि निरस्तमिति न्यायसिद्धं त्रित्वं केन वार्यते। तस्माद्यथेन्द्रियाणां पञ्चत्वपरीक्षायां न्यूनत्वमेव प्रतिषिद्धमित्याधिक्यमभ्युपगतं इन्द्रियातिरेकस्य प्रमाणसिद्धत्वात्, तथा प्रमाणानामाधिक्यप्रतिषेधे यथाश्रुते न्यूनत्वमयुक्तमपि यौक्तिकत्वादाश्रयणीयमिति भावः।

॥ प्रमाणत्रित्वानभिधानेऽपि त्रित्वाभ्युपगमो युक्तः सूत्रकारस्वाभाव्यात् ॥

शङ्कते—**त्रित्वानभिधानादयुक्तमिति चेदिति।** त्रितयं चेत्प्रमाणानां वास्तवं किमर्थं तर्हि सूत्रकारः स्ववाचैवोपमानस्याप्यैतिह्यादिवदन्तर्भावमभिधाय प्रमाणत्रित्वमेव स्पष्टं नाभिदधीत। नचैवमभ्यधात्। तस्मादयुक्तं त्रित्वाङ्गीकरणमित्यर्थः।

**न, अस्य सूत्रकारस्यैवंस्वभावत्वात् यत् सिद्धान्तमपि क्वचिन्नाभिधत्त इति। यथा कृत्स्नैकदेशविकल्पादिना अवयविनिराकरणे। शिष्याणामूहादिशक्त्यतिशययुक्तानामेवात्राधिकारज्ञापनार्थम्। तस्मात् स्थितमुपमानं शब्देऽन्तर्भूतम्। अर्थापत्तेरप्यनुमानेऽन्तर्भावः अविनाभावबलेनार्थप्रतिपत्तिसाधनत्वात्।**

---

**न, अस्य सूत्रकारस्यैवंस्वभावत्वात् यत्सिद्धान्तमपि क्वचिन्नाभिधत्त इति।** निश्चितो हि सूत्रकारस्यैतादृशः स्वभावः प्रदेशान्तरेऽपीत्युदाहरति—**यथा कृत्स्नैकदेशविकल्पादिनाऽवयविनिराकरण इति।** अयमर्थः। कृत्स्नैकदेशावृत्तित्वादवयवानां अवयव्यभाव (४-२-७) इत्यादिना सूत्रसन्दर्भेणावयविनं निराकृत्य सूत्रकारः तत्समर्थनार्थं न किंचित्सूत्रमुक्तवानिति।

॥ भाष्यकारीयवाक्यसमर्थनम् ॥

यत्पुनः एकस्मिन् भेदाभावात् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः' इति तद्भाष्यकारीयमेव वाक्यं नतु सूत्रपाठे दृश्यते। भाष्यस्य त्वयमर्थः। कृत्स्नैकदेशशब्दौ भेदापेक्षौ ; कृत्स्नं नाम समस्तम्। न चावयविनः सामस्त्यं एकदेशश्च बहूनामन्यतम उच्यते। न चावयविनि तथाभावसम्भवः एकत्वात् तस्मादेकस्मिन्नवयविनि भेदापेक्षयोः कृत्स्नैकदेशशब्दयोः प्रयोगानुपपत्तेः प्रश्न एवायमयुक्तः। तस्मादेक एवावयवी समवायवृत्त्या सर्वदा सर्वावयवेषु वर्तत इति।

॥ स्पष्टं सिद्धान्तमनुक्तवतः सूत्रकारस्याशयः ॥

कस्मात्पुनः स्पष्टमेव सिद्धान्तं न ब्रवीति स्म सूत्रकार इत्यत आह—**शिष्याणामूहादिशक्त्यतिशययुक्तानामेवात्राधिकारज्ञापनार्थमिति।** आदिशब्देन प्रतिभा सङ्ग्राह्या। प्रकृतमुपसंहरति—**तस्मात्स्थितमुपमानं शब्देऽन्तर्भूतमिति।**

॥ अर्थापत्तेरनुमानेऽन्तर्भावकथनम् ॥

साम्प्रतं अर्थापत्तेरनुमानान्तर्भावमाह—**अर्थापत्तेरप्यनुमानेऽन्तर्भावः।** कस्मात्? **अविनाभावबलेनार्थप्रतिपत्तिसाधनत्वात्।** नन्वन्यथानुपपत्त्या प्रवृत्ति-

**अन्यथा नोपपद्यत इत्युक्ते सति एवमुपपद्यत इति लभ्यते अयमेवाविनाभाव इति ।**

---

रर्थापत्तेः न पुनरविनाभावेन तत्कथमनुमानान्तर्भावः ? अत आह—**अन्यथा नोपपद्यत इत्येवमुक्ते**[1] **सत्येवमुपपद्यत इति लभ्यते अयमेवाविनाभाव इति** इदमाह । कुतः ? गणितागमाधिगतजीवनस्य हि चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्य अदृष्टस्य कल्पनामर्थापत्तिमामनन्ति । तस्यां स्पष्ट एवानुमानेऽन्तर्भावः । तथा हि— बहिर्देशे चैत्रस्तिष्ठति गृहाभावे सति विद्यमानत्वात् य एवं स तथा यथाऽहमेवेति ।

॥ भट्टमतेन अर्थापत्तेः पृथक्प्रमाणत्ववर्णनम्, तत्खण्डनं च ॥

स्यान्मतं—गृहाभावप्रमित्या बाध्यमानत्वाद्विद्यमानता गणितागमेन गणितापि सती सन्देपदवीमुपारूढा [इदमपि अपरी]क्षिताभिधानम् । न खलु गृहाभावेन चैत्रस्य गणितागमाधिगम्यमाना विद्यमानतैवापह्नोतुं शक्या येन सा सन्देहपदवीं गच्छेत् । तथा हि—इदमत्र सम्प्रधार्यम् । चैत्रगृहासत्तया सत्त्वमात्रं विरुध्यते गृहे सत्त्वं वेति । न तावत्प्रथमः, विशिष्टाविशिष्टयोः भिन्नविषयत्वेन विरोधाभावात् । सत्तया सामान्यतो देशमाक्षिपन्त्या गृहविशेषाक्षेपोऽपि पाक्षिकः क्रियत इति समानगोचरतया विरोध इति चेत् । हन्तैवमपि गृहावच्छिन्ने चैत्रासत्त्वेन पाक्षिकं गृहसत्त्वं प्रतिक्षिप्यतां नाम, सत्त्वमात्रं पुनरविरोधप्रतिक्षिप्तं गृहासत्त्वावच्छिन्नतया बहिर्देशसम्बन्धिनीं सत्तां लिङ्गतयैवावगमयिष्यतीति काऽनुपपत्तिः ? अत एव न द्वितीयपक्षाङ्गीकरणेऽपि दूषणमस्ति ।

॥ सन्देहस्यैव अर्थापत्तित्वं तस्य चालिङ्गत्वमिति मीमांसकपक्षः ॥

यदि मतं—येन गृहाधिकरणैव चैत्रसत्ता भूयो भूयः समधिगता तस्य बहिर्देशसम्बन्धप्रत्ययानुत्पत्तौ गृहाभावदर्शने सति चैत्रसत्तायां मानान्तरमीयमानायामपि सन्देहो भवति गृहे चेन्न वर्तते चैत्रः कथमसौ विद्यत इति । तस्मात्सन्देहग्रस्ता न चैत्रसत्ता बहिर्भावे लिङ्गतां गन्तुमलम् । अर्थापत्तिपक्षे त्वनुत्पन्नायां बहिर्भावकल्पनायां सत्तासन्देहः (न) यद्गृहाभाव एव बहिर्भावकल्पनाबीजम् । यद्वा गृहाभावप्रत्ययापादितसन्देहा चैत्रसत्तैव स्वात्मा[नं] बहिरेव स्थापयन्ती विगलितसन्देहा भवति । यथाहुः—

---

1. Ms. सत्येवोप

तत्सन्देहव्युदासाय कल्पनायां प्रवर्तते ।
सन्देहापादकादर्थादर्थापत्तिरसौ स्मृता ॥ १ ॥

यत्कल्पनां विना योऽर्थः प्रतीतोऽप्येति संशयम् ।
तेन तत्कल्पनामेके त्वर्थापत्तिं प्रचक्षते ॥ २ ॥ इति ।

सन्देहापत्तिरेव चार्थापत्तौ अनुपपत्तिरपीत्यामनन्ति ।

गम्यस्यानुपपन्नत्वमिह कल्पनया विना ।
मानान्तरविरोधेन सन्देहापत्तिलक्षणम् ॥ १ ॥ इति ।

यथा खलु निश्चितमेव लिङ्गमनुमितिं प्रसूते तथा सन्देहग्रस्तमेव रूपमर्थापत्तिमुपजनयतीति दर्शनबलादाश्रीयमाणं स(क्का)[त् न का]मपि वस्तुक्षतिमापादयति ।

तेनानुमानाद्भिन्नेयमर्थापत्तिरुदीर्यते ।
न जातु संशयग्रस्तमनुमानस्य साधनम् ॥ १ ॥

॥ मीमांसकसिद्धान्तखण्डनम् ॥

तदिदं स्वसिद्धान्तश्रद्धावशादनालोचितार्थतत्त्वमेवाभिहितम् । तथा हि— चैत्रस्य गृहाधिकरणैव विद्यमानतेति विपर्ययबाधकविरहिभूयोदर्शनमात्रनिबन्धनसम्भावनाप्रत्यय एवायम्? यद्वा व्याप्तिनिश्चितिरेवैषा कुतश्चिदुत्पन्नेति? प्रथमे गणितागमाधीननिर्णयनिरस्ता सम्भावना गृहा-..................यमेवाभिहितम् । द्वितीये तु व्यापकगृहसम्बन्धादर्शनेन चैत्रसत्ता व्याप्या व्युदस्यमाना गणितागमेनैव मीयमाना यावन्नान्यतरप्रतीतिकारणप्राबल्यनिर्णयस्तावत् कथमर्थापत्तिमपि प्रसुवीत । यदि हि परस्परप्रत्यनीकप्रमाणद्वयपरिप्रापितसन्देहं वस्त्वर्थापत्तेर्जनकं तर्हि यत्र सत्प्रतिपक्षमनुमानं तत्र सर्वत्रापि कारणसम्भवादर्थापत्तेः उत्पत्तिं को निवारयेत्?

॥ अत्र तिमिरारिपूर्वपक्षः ॥

यत्पुन**स्तिमिरारिणा** निरूपितं—न ह्येतावन्मात्रं कारणं किन्तु सन्देहावगमहेतूपपादकसम्बन्धनियमज्ञानमपि । न च तदिहास्ति सत्प्रतिपक्षाभावप्रसङ्गात् । कुत्रचित् कथंचित् भावे वाऽर्थापत्तिस्तत्राङ्गीक्रियत एवेति ।

**यत्र सामान्याकारेणाप्यन्वयग्रहणं नास्ति यथा मुख्यकारणत्वाप्रतिबद्धशक्त्योः तत्रार्थापत्तिः पृथक् प्रमाणमिति चेत् ।**

---

॥ तिमिरारिमतखण्डनम् ॥

तत्रैतावदेव वाच्यम् । (सयस्य)[सत्त्वस्य][1] सम्बन्धनियमज्ञानमुपजातं सत्वस्यासत्यपि पक्षधर्मत्वनिश्चये यथोक्तसन्देहकारिण एव सम्बन्धनियमस्मरणान्नियामकं बहिर्भावनिश्चये(यः)? किंवा कथंचित्पक्षधर्मतापि निश्चीयत इति । प्रथमे स्पष्टदृष्टश्चेत् प्रमितिकार्योदयस्तदन्यथानुपपत्त्या तादृशमेव कारणमुपवर्ण्येत । कार्यमेव त्वेतादृशि स्थले न्यायवादिनो न संप्रतिपन्नमिति कथमयं प्रतिबोधनीयः? द्वितीये तु अनुमानान्तर्भावः स्पष्ट एवेति ।

॥ तिमिरार्युक्तसत्प्रतिपक्षानुमानत्वखण्डनम् ॥

**यद**प्यनेनापरमभिहितं सत्प्रतिपक्षानुमानत्वं, यदपि विशेषविषयं यत्रैकं सामान्यविषयमपरं च, विशेषविष(यं)ये तत्रार्थापत्तिः सावकाशेति तदपि केवलं तुरगारूढस्य तुरगविस्मरणवृत्तान्तमनुसरति । सामान्यविशेषविषययोः विरोधाभावेन द्वयोरपि सर्वथा समानविषयतया सन्देहोपपत्तेः तेनैव समर्थितत्वात् ।

तस्मादस्पष्टाभिर्वाणीभिर्मोहयन् लोलमतिः ।
तिमिराहतदृष्टित्वात् तिमिरारिर्नेक्षते तद्वत् ॥ १ ॥

तस्मादर्थापत्तेरनुमानान्तर्गतिर्वाच्या ।
नोचेत्प्रमाणताऽस्याः सिद्धयति नोन्नीतमार्गेण ॥ २ ॥

॥ शक्तिसिद्धौ अर्थापत्तेः प्रमाणत्वमिति मीमांसकशङ्का ॥

परमतमाशङ्कते—**यत्र सामान्याकारेणाप्यन्वयग्रहणं नास्ति यथा मुख्यकारणत्वाप्रतिबद्धशक्त्योस्तत्रार्थापत्तिः पृथक् प्रमाणमिति चेदिति ।** मुख्यकारणत्वं कारणसाकल्यं विवक्षितं तच्चातीन्द्रियत्वान्न कदाचिद्दृष्टमित्यन्वयग्रहणानुपपत्तिः । तथैवाप्रतिबद्धशक्तेरपि प्रत्यक्षाविषयत्वादन्वयग्रहणानुपपत्तावनुमानानुप-

---

1. देवदत्तसत्वस्येत्यर्थः ।

पत्तिः। न वै दैवमानुषमन्त्रध्यानौषधिप्रयोगप्रकारप्रतिबन्धाभावविशिष्टा शक्तिरसर्वविद्ध्यक्षगोचरः कदाचनेति भावः।

॥ शक्तेः अतीन्द्रियत्वात् कार्यार्थापत्तिगम्यत्वमेवेति मीमांसकमतम् ॥

यद्यपि च दहनकरतलसंयोगादिकारकनिकरातिरेकिणी काचिदतीन्द्रियैव तद्धर्मभूता शक्तिरिति परसिद्धान्तः तथापि प्रत्यक्षादिपरिकलितपावकपाणिसंपर्कादिकमेव शक्तिपदास्पदमिति न्यायसिद्धान्तमभ्युपगच्छता परेणाप्रतिबद्धग्रहणं कृतमिति मन्तव्यम्। भवतु पावकपा(ली)[णि]सम्पर्कादिरेव शक्तिर्भवन्मतानुसारेण, तथापि निरस्तनिखिलप्रतिबन्धा सती नास्मदादिप्रत्यक्षगोचरतामाचरतीत्यन्वयग्रहणानुपपत्तेः कार्यार्थापत्तिप्रवेदनीयैषा स्वीकरणीया भविष्यतीति भावः।

॥ अतिरिक्तशक्तिनिरासः ॥

कथं पुनः पराभिमतशक्तिव्युदासः? प्रमाणव्युदासादेव। कार्यान्यथानुपपत्तिरूपमेव हि परेण प्रमाणं(मतो) वर्णनीयम्। तच्चोभयाभिमतकरतलसंयोगादिकारकादेव विस्फोटादिरूपमुत्पत्तुमर्हतीति किमतिरिक्तकल्पनया। नचैवं सति मणिमन्त्रादिप्रतिबन्धसमसमयमपि स्फोटादिजननप्रसङ्ग इति वाच्यम्। प्रतिबन्धाभावस्यापि सहकारिकारणत्वात्। अत एव सामग्रीविघटनात्मनैव प्रतिबन्धपदवेदनीयतां मण्यादेरामनन्ति।

प्रतिबन्धो[वि] सामग्री, तद्धेतुः प्रतिबन्धकः इति। (न्या. कु. १)। यथा च भाववदभावस्यापि कारणभावसम्भवः प्रागभावादिविकल्पानवकाशश्च तथा परतः प्रामाण्यनिर्णयावसरे निर्णीतमेव।

॥ उत्तेजके सति प्रतिबन्धककाले कार्योत्पत्त्या तस्याप्रतिबन्धकत्वनिराकरणम् ॥

**यत्पुनरिदं** वदन्ति—प्रतिबन्धरूपमन्त्रादेरपरेण प्रतिबन्धे प्रतिबन्धाभावमन्तरेणापि कार्योदयदर्शनादकारणं प्रतिबन्धाभाव इति। **तत्रापि** अयं समाधिरभिधातव्यः। विगलितनिखिलनिजप्रतिबन्धो मन्त्रादिर्दहनादेः प्रतिबन्धोऽभिमतः। स च मन्त्रान्तररूपप्राथमिक(रूप)प्रतिबन्धसमसमयं नास्त्येवेति कथमव्यभिचारिणः प्रतिबन्धाभावस्य कारणता पराकरणमर्हतीति।

# न, तत्रापि केवलव्यतिरेक्यनुमानादव्यतिरेकात् ।

॥ शक्तिसाधकमनुमानं तन्निरासश्च ॥

**यदपी**दमनुमानमामनन्त्येके – विवादपदं अजनकदशातो[1] जनकदशायामतिशयशालि जनकत्वात् यदेवं[तदेवं] यथा कुण्ठदशाविसदृशतीक्ष्णधारतया [छिदिक्रिया] जनकः कुठार इति। तदपि प्रधिबन्धाभावेनैव सिद्धसाधनात् नातिरिक्तां शक्तिमाक्षिपति । यदि पुनः स्वसमवेततादृशातिशयशालित्वं साध्यं, तथापि साध्यविकलो दृष्टान्तः सूक्ष्मधारायाः....[कुठारासमवेतत्वात् ] (वत्) । सा हि स्वावयवेष्वेव समवेता न कुठार इति । तथापि परस्परसंयोगसापेक्षतया पटजनकास्तन्तवो भवन्तु दृष्टान्ता इति चेन्न । शक्तेरपि जनकत्वेन तादृशशक्त्यन्तरापत्तावनवस्थाप्रसङ्गस्य प्रतिकूलतर्कस्य स्फुटत्वात् । अनुकूलतर्काभावाच्च हेतोः प्रतिबन्धासिद्धेः अनैकान्तिककालातीतयोरन्यतरत्र सम्भावितान्तर्भावत्वात् ।

॥ अभावस्यान्वयव्यतिरेकाभ्यां कारणत्वनिरूपणम् ॥

किञ्चाभावस्याप्यन्वयव्यतिरेकाभ्यां अध्यवसितं कारणत्वम् । नच तस्य यथोक्तसाध्यवत्त्वं तत्र कस्यचित्समवायासम्भवात् इत्यनैकान्तिकः । समर्थयिष्यते च भावादर्थान्तरमभावतत्त्वम् । एतेन भावरूपातिशयशालीत्यपि साध्योपादाने दूषणमुदितं वेदितव्यम् । तस्माद्दहनादिकारकाणामेव परस्परं शक्तिभावो वेदितव्य इत्येषा दिक् ।

॥ शक्त्यङ्गीकारेऽपि अर्थापत्तेः न प्रमाणान्तरता केवलव्यतिरेक्यन्तर्भावात् ॥

तदेतस्मिन्नपि सिद्धान्ते निश्शेषप्रतिबन्धशून्या शक्तिरतीन्द्रिया सती कार्यार्थापत्तिप्रवेदनीयेत्यभिप्रायेणाप्रतिबन्धशक्तिपदोपादानमिति स्थितम् । नैवमप्यर्थापत्तेर्मानान्तरता, केवलव्यतिरेक्यनुमानान्तर्भावादित्याह – **न, तत्रापि केवलव्यतिरेक्यनुमानादव्यतिरेकादिति** । तत्र तयोर्मुख्यकारणत्वाप्रतिबद्धशक्त्योरपि, प्रवर्तमानार्थापत्तेः केवलव्यतिरेक्यनुमानादभेदादित्यर्थः । यत्र साध्यविशेषेण साधनस्यान्वयप्रसिद्ध्यभावेऽपि विपर्यये बाधकप्रमाणवशादेव व्याप्यव्यापकभावसिद्धिः तत्र व्यतिरेक्यनुमानमित्यनुमानप्रस्ताव एवोपपादितम् । प्रकृते च तत्प्रयोजकमविशिष्टं—

1. जनकदशतो—मा.

**केवलव्यतिरेकी अर्थापत्तिरिति संज्ञाभेदमात्रम्। अन्वयाभावान्नैतदनुमानमिति चेत्, न, केवलान्वयिनो व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसङ्गात्। अपि च, प्रत्यक्षादिभेदानां केनचिद्वैधर्म्येण भेदात् प्रमाणान्तरत्वप्रसङ्गः। तस्मादविनाभावबलेनार्थप्रतिपादकत्वादर्थापत्तिरनुमानम्।**

**अल्पसंख्याविषयत्वे बहुत्वसंख्याविषयस्य सर्वत्रोपलम्भत्वान्नानुमानात् संभवो भिद्यत इति।**

---

यदि खल्वप्रतिबन्धशक्तिस्सर्वथैव न दहनादिर्भवेत् तदा दाहादिकार्यमेव न कुर्यात्। कार्योत्पादप्रतिबन्धयोः परस्परप्रत्यनीकत्वात्। एकेनापि मन्त्रादिना प्रतिबन्धे कार्योत्पादादर्शनेन विरोधाधिगमात्। कारणवैकल्येऽप्येवमुन्नेयम्।

॥ शक्तौ न्यायप्रयोगः ॥

प्रयोगोऽप्यत्रैवं द्रष्टव्यः—पावकादिः समग्रसहकारिसंपन्नः, समस्तप्रतिबन्धविधुरशक्तिर्वा, क्रियमाणकार्यत्वात्; यदुक्तसाध्यं न भवति, न तदुक्तसाधनं यथोभयाभिमतविपरीतावस्थं कारणम्। नचायमुक्तसाधनः न भवति तस्मादुक्तसाध्य इति। ततो नाग्निविप्रतिपत्तिर्नार्थ इत्याह—**केवलव्यतिरेकी अर्थापत्तिरिति संज्ञाभेदमात्रमिति।**

शङ्कते—**अन्वयाभावान्नेदमनुमानमिति चेदिति।** निराकरोति—**न, केवलान्वयिनो व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसङ्गादिति।** प्रतिपादितं खलु प्रामाण्यं प्रागेव केवलान्वयिनोऽपीति भावः। दूषणान्तरमपि समुच्चिनोति—**अपि च प्रत्यक्षादिभेदानां [1]केनचिद्वैधर्म्येण भेदात् प्रमाणान्तरत्वप्रसङ्ग इति।** उपसंहरति—**तस्मादविनाभावबलेनार्थप्रतिपादकत्वादर्थापत्तिरनुमानमिति।**

॥ संभवस्य प्रमाणान्तरत्वपूर्वपक्षः तत्खण्डनं च ॥

**केचिदाहुः**—सहस्रे शतं संभवतीति प्रतिपत्तेः सम्भवो नाम प्रमाणान्तरमस्तीति तान्प्रत्याह—**अल्पसङ्ख्याविषये सति बहुत्वसङ्ख्याविषयस्य सर्व-**

---

1. किञ्चिद्वैधर्म्यात्—मा।

**अभावस्य त्रिष्वपि यथासंभवमन्तर्भावः। तथाहि, कौरवाद्यभावप्रतिपत्तिरागमात्। आत्मादिषु रूपाद्यभावप्रतिपत्तिरनुमानात्। भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षात्, इन्द्रियव्यापारभावभावित्वात्। अन्यत्र तद्भावभावित्वं पर्यवसितमिति चेन्न। रूपादिष्विव बाधकाभावात्।**

---

त्रोपलब्धत्वान्नानुमानात् सम्भवो भिद्यत इति। स्वल्पसमाहाररूपं हि प्रभूतं, स्वल्पं विना न भवतीति अविनाभावबलादेव सहस्रे शतप्रतिपत्तिः। तस्मात् कथमनुमानफलं न भवेदित्यर्थः। प्रयोक्तव्यं त्वेवं—सहस्रं स्वान्तर्गतशतं सहस्रत्वात्, पूर्वोपलब्धसहस्रवदिति।

॥ अभावस्य उक्तप्रमाणेष्वन्तर्भावनिरूपणम् ॥

संप्रत्यभावमन्तर्भावयति—**अभावस्य त्रिष्वपि यथासम्भवमन्तर्भावः। तथा हि—कौरवाद्यभावप्रतिपत्तिरागमात्।** तेषां सद्भावप्रतिपत्तिवदभावप्रतिपत्तेरप्यागमभावाभावानुविधानदर्शनादिति शेषः। **आत्मादिषु रूपाद्यभावप्रतिपत्तिरनुमानात्।** मूर्तिर्हि रूपादिव्यापिका कुम्भादावधिगता। सा चात्मादौ व्यावर्तमाना स्वव्याप्यरूपादिकमुपादाय व्यावर्तत इति व्यापकानुपलब्ध्या रूपाद्यभावसिद्धिरात्मादावित्यर्थः। **भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षाद् इन्द्रियव्यापारभावभावित्वात्।** रूपादिप्रतिपत्तिवदिति शेषः।

॥ तद्भावभावित्वस्यान्यथासिद्धत्वपरिहारः ॥

शङ्कते—**अन्यत्र तद्भावभावित्वं पर्यवसितमिति चेदिति।** अस्यार्थः—धर्मिग्रहणप्रतियोगिस्मरणयोग्यानुपलम्भेभ्यो भवत्यभावसंवेदनं मानसं; तत्र भूतलादिधर्मिग्रहण एवेन्द्रियान्वयव्यतिरेकावन्यथासिद्धावित्यर्थः। निराकरोति—**न, रूपादिष्विव बाधकाभावादिति।** अयं भावः—भूभागवर्तित्वे रूपादेरभावस्य चाविशिष्टे रूपाद्यपेक्षया धर्मिग्रहणद्वारेणेन्द्रियस्यान्यथासिद्धिर्न वर्ण्यते। वर्ण्यते पुनरभावापेक्षयेत्यत्र विशेषहेतुर्वाच्यः।

॥ अभावग्रहणे इन्द्रियस्य अन्वयव्यतिरेकौ न स्त इति शङ्कासमाधानम् ॥

स्यादेतत्। धर्मिग्रहणेऽपि इन्द्रियान्तरेण निमीलितनेत्रस्य रूपप्रतिपत्त्यभावात् व्याप्रियमाणनेत्रस्य च तत्प्रतिपत्तेः, साक्षादेव च रूपप्रतिपत्तौ चक्षुर्व्यापारः स्वीक्रियते।

**संबन्धाभावो बाधक इति चेन्न, स्वपरपक्षयोरसिद्धत्वात्। स्वपक्षे तावद्रूपादिष्विवापरोक्षानुभवकार्यानुमेयो योग्यताख्यः संबन्धः सम्भवति परपक्षेऽपि संयुक्तविशेषणभावादिरिति।**

---

घटाद्यभावप्रतिपत्तौ तु धर्मिग्रहणादि(ति)यथोक्तकारणसाकल्ये सति नेन्द्रियविशेषव्यापारवैकल्यात्कार्यवैकल्यं दृष्टमित्येष विशेष इति। मैवम्। त्वगिन्द्रियोपनीते घटे स्मर्यमाणे च घटरूपे रूपाभावप्रतिपत्त्यभावादाप्तवचननिश्चिते भूभागे स्मर्यमाणघटस्याभाव[ा]प्रतिपत्तेर्व्याप्रियमाणे चक्षुष्यभावप्रतिपत्तेश्चक्षुषः कारण(ा)भावस्याभावप्रतिपत्तावपि साक्षादाश्रयणीयत्वात्।

स्यान्मतम्। योग्यतापादनेनोपक्षीणं चक्षुर्योग्यानुपलम्भस्याभावज्ञानकारणत्वादिति।

॥ अनुपलम्भे योग्यताविचारः ॥

ननु कैषा योग्यता नाम? तदन्यधीहेतुसाकल्यमिति[1] चेत्। हन्तैवं परिपूर्णानि(राकरणाद्येव) [कारणान्येव] साकल्यं; तथा सति किं कुत्रोपक्षीणं भवेत्। **अथापि** स्यात् परस्परप्रत्यासत्तिः कारणानां साकल्यमभिधीयते। तत्र चोपक्षीणं चक्षुरिति। तदप्यसत्। तथा सति रूपज्ञानेऽपि चक्षुषः कारणभावाभावप्रसङ्गात, तत्रापि कारणसाकल्य एवोपक्षीणत्वात्। किञ्च यथा योग्यभावानुपलम्भादभावप्रमितिरुच्यते तथैव योग्याभावानुपलम्भात् तत्प्रतियोगिभावप्रतीतिः किं नोच्येत? योग्यतापादनार्थमवश्याश्रयणीयेन चक्षुषैव कार्योपपत्तौ नाभावानुपलम्भस्यावर्जनीयसन्निधेः कारणत्वमाश्रीयत इति चेत्; तर्हि भावानुपलम्भेऽप्यमुमेव न्यायमनुसन्धत्स्व। नहि तत्राप्यनुपलम्भमन्तरेणेन्द्रियस्य तत्कारणभावे बाधकमस्ति। येन तत्राप्यवर्जनीयसन्निधिरनुपलम्भो न भवेत्। तदिदमुक्तं—**रूपादिष्विव बाधकाभावादिति।**

॥ अभावेन्द्रिययोः सम्बन्धाभावनिराकरणम् ॥

शङ्कते—**सम्बन्धाभावो बाधक इति चेत्** नहि संयोगादिरिन्द्रियेण अभावसम्बन्धः सम्भवीत्यर्थः। परिहरति —**न, स्वपरपक्षयोः असिद्धत्वादिति।** स्वोक्तं विवृणोति—**स्वपक्षे तावत्** मीमांसकस्य **रूपादिष्विवापरोक्षानुभव-**

---

1. प्रतियोग्यन्येत्यर्थः

**संयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेत्, न, विशिष्टप्रत्ययवशेन तत्सिद्धेरिति।**

---

**कार्यानुमेयो योग्यताख्यः सम्बन्धः सम्भवति। परपक्षेऽपि संयुक्तविशेषणभावादिरितीति।** परपक्षे नैयायिकपक्ष इत्यर्थः। मीमांसकस्तु यद्यपि प्रतीतिसिद्धाभावस्यापरोक्षत्वमपलपति। तथापि प्राचीनया नीत्या साक्षादेवान्वयव्यतिरेकाभ्यामभावानुभवस्येन्द्रियजन्यत्वे स्वीकरणीये, तदन्यथानुपपत्त्यैव रूपादिसमानन्यायतया योग्यताख्यः सम्बन्धः सिद्ध्यतीत्युपपादनीयम्। न्यायमते पुनः अभावमात्रभूतलयोर्विशेषणविशेष्यभावो यथा सम्भव(मि)ति, तथोपपादितं प्रत्यक्षप्रस्तावे।

॥ संबन्धोपपादनपुरस्सरं अभावज्ञानस्येन्द्रियजन्यत्वोपसंहारः ॥

तत्रैव काञ्चिदनुपपत्तिमाशङ्कते — **संयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेदिति।** दण्डी देवदत्तः, शुक्लो घट इत्यादौ संयोगसमवायव्याप्तो विशेषणविशेष्यभावस्तदभावे न भवेदित्यर्थः। परिहरति— **न, विशिष्टप्रत्ययवशेन तत्सिद्धेरिति।** यथा खलु गोमानित्यादौ विशेषणविशेष्यभावः संयोगसमवायव्यतिरेकेणापि भवन्नानुपपन्नः तथाऽत्रापि भविष्यति। तत्र स्वस्वामिभावादिमूलसम्बन्धोऽस्तीति चेत्; कल्प्यतां तर्ह्यत्रापि कार्यदर्शनादेव कश्चित्सन्निधिरभावभूतलयोः। तथा च प्रतिपादितं प्रत्यक्षपरिच्छेद इति नात्र विपञ्च्यते। तदेवं भूभागादौ घटाद्यभावप्रतिपत्तिरिन्द्रियजन्या तद्भावभावित्वात् रूपादिप्रतिपत्तिवदिति स्थितम्।

॥ स्थलविशेषे अभावस्य प्रमाणत्वावश्यकत्वमतम् ॥

यदप्याचक्षते देशविशेषं प्रत्यक्षतोऽनुभूय देशान्तरं चलितः पुमानपूर्वपदार्थं पश्यति। "तत्रायमासीत् नो वा" इत्यपरेण पृष्टः "तदेव नासीत्" इति प्रतिपद्यते। तत्राभावस्य प्रमाणान्तरगम्यत्वमवश्याश्रयणीयम् इन्द्रियव्यवधानात्, लिङ्गाद्यसम्भवाच्च। तत्र यद्यपि प्रत्यक्षानुपलब्धिः उपलम्भनिवृत्ता, योग्यतापि व्यवधानविनिवारिता, तथापि स्मर्तव्ये स्मरणानुपपत्तिरेव तदभावं गमयतीति न काचिदनुपपत्तिरिति।

॥ उक्तमतनिराकरणम् ॥

तदपि न सारम्। प्रागेव हि प्रदेशविशेषे गृह्यमाणे परिकलितः एत(देको)-[देशो]पलम्भयोग्यसकलपदा(र्थो)[र्था]भावोऽपि। पश्चात्तत्प्रतियोगिदर्शनसमनन्तरं स्मरण-

मेव तत्र स्फुटतरमाविर्भवति। कथं पूर्वमेवाभावानुभवोऽभूत्, अज्ञाते इति ज्ञायते? योग्यत्वात् तदेकाधिकरणरूपादिवत्। समर्थिता च तस्येन्द्रिययोग्यता। तथा सति विनापि प्रतियोगिवेदनं परिमाणादिवदभावस्यापि स्वरूपानुभवो नानुपपन्नः। प्रतियोग्यवच्छेदं विनानुभूतस्य कथं तदवच्छेदेन पश्चादनुस्मरणमिति चेत्, वर्तमानभावेनानुभूतस्य कालान्तरे पूर्वमसावासीदिति स्मरणवन्नानुपपत्तिः। संप्रत्यनेन मनसा वर्तमानकालप्रतियोगितया पूर्वरूपता तत्रावसीयत इति चेत्। प्रकृतेऽपि तर्हि प्रतियोगिविशेषावच्छेदस्तथैवावसीयताम्। नचैवमप्युपपत्तौ प्रमाणान्तराङ्गीकारगौरवं युक्तम्।

॥ प्रतियोगिसमीप एव तदभावानुभव इति पक्षान्तरम् ॥

यद्वा बहिरिन्द्रियेणैव प्रतियोगिसंवेदनसमसमयमभावस्य तदवच्छिन्नत्वमनुभूयतां यथाऽवोचदाचार्यः। अथवा पश्चादेवाभावस्य तत्सम्बन्धित्वं गृह्णाति। नच तदभावस्य तदानीमसन्निहितत्वेनाप्रत्यक्षत्वं; प्रतियोगिसमीपेऽपि तदभावस्य सत्त्वात् गोत्वादिवद्भेदाभावाच्च। ततश्च यथा गोत्वं पूर्वं पिण्डान्तरविशिष्टमेव दृष्ट्वा पश्चात् पिण्डान्तरे तद्विशिष्टं दृष्ट्वा प्रथमपिण्डेऽपि तद्विशिष्टत्वेनानुस्मरति तत्सारूप्यं तत्राहमद्राक्षमिति, तथा प्रतियोग्यवच्छेदेन तत्समीपस्थं तदभावं गृहीत्वान्यत्रान्यदोपलब्धमपि तदवच्छेदेनैवानुस्मरति अयं पदार्थस्तत्र नासीदिति। यत्र पुनः प्रतियोगिसंवेदनसमकालमतिक्रान्त एवाभावः परामृश्यते नायमिहासीदिति तत्र प्रतियोग्यवच्छिन्नतया तस्य बहिरिन्द्रियसंवेदनीयतासम्भवात् पूर्वोक्त एव मार्गोऽनुसर्तव्यः।

॥ अधिकरणग्रहणसमयेऽभावनिर्विकल्पकोपपादनम् ॥

यत्पुनरधिकरणमात्रग्रहणसमसमयमभावमनुभवामीत्यभिमानो नास्तीति, तदपि प्रथमगोपिण्डप्रत्ययसमकालं गोत्वावभासवदभावावभासस्य निर्विकल्पकत्वादेव नानुपपन्नम्। तद्वदेव च निर्विकल्पकानुभूतेऽपि सविकल्पिका स्मृतिः नानुपपत्तिमतीति। तस्मात्सर्वमवदातम्।

॥ भावातिरिक्ताभावानङ्गीकर्तृमतखण्डनम् ॥

ये पुनर्भावातिरेकिणमभावमनङ्गीकुर्वाणाः तद्गोचरप्रमाणपरीक्षणमनवसरदुस्थमाचक्षते, त इदं पर्यनुयोज्याः। किमिह भूतले कलशादिर्नास्तीति व्यवहारस्या(ना)-

लम्बनमिति। न भूतलं तत्संवेदनं वा, कलशादिकरम्बितेऽपि भूभागे संविदिते तथाविध-व्यवहारप्रसक्तेः।

एतेन दृश्ये प्रतियोगिनीति विशेषणेऽपि दत्तमुत्तरं वेदितव्यम्। न खलु कलशादिशबलिते भूतले दृश्यमाने न दृश्यः कलशादिरिति शक्यमाश्रयितुम्। प्रतियोगिजिज्ञासापि व्यवहारहेतुः; [साच](नच) गृह्यमाणे तस्मिन्नास्तीति चेत्। मैवम्। अत्यन्तप्रिये वस्तुनि पुनः पुनः गृह्यमाणेऽपि जिज्ञासादर्शनात्। नच वचनीयं प्रतियोगिस्मरणमपि [तथा] (तच्च)व्यवहारकारणं; गृह्यमाणे तु प्रतियोगिनि सहकारिविरहाद्व्यवहारहानिरिति। गृह्यमाणस्यैव कलशादेस्तदनन्तरप्रदेशे शून्यताव्यवहार-विलोपप्रसक्तेः।

॥ केवलभूतलस्याभावव्यवहारकारणत्वेऽभावसिद्धिरित्युपपादनम् ॥

स्यादेतत्। दृश्ये च प्रतियोगिनि भूतलमात्रस्य वित्तिरभावव्यवहारकारणं; तन्मात्रधीस्तु न प्रतियोगिशबले सम्भवतीति नातिप्रसङ्ग इति। मैवम्। मात्रार्थानिरूपणात्। कैवल्यं मात्रार्थ इति चेत्। ननु च भोः किं भूतलमेव कैवल्यं किं वा तदतिरेकि। पूर्वस्मिंस्तदवस्थ एवातिप्रसङ्ग इति। उत्तरस्मिन्नभावाभ्युपगमो दुर्वारः कैवल्यस्यैवाभावपर्यायत्वात्। तदाहुरत्र भवन्तो **मण्डनमिश्राः**—

केवलो विषयो नेष्टो रूपामिश्रेऽपि तद्गतः।
विशिष्टस्य च नास्त्यन्यदन्याभावाद्विशेषणम्॥ इति।

॥ धर्मिधीमात्रस्य अभावव्यवहारहेतुतामतम् ॥

**यद्प्यामनन्ति** यादृशी धर्मिधीरभाववादिनामभावप्रतीतिहेतुः तादृश्येव दृश्ये प्रतियोगिनि अभावव्यवहारहेतुरस्तु। सा (वा) च न संसृष्टे, भावाभावयोरेकाधारता-प्रतीतिप्रसक्तेः। नाप्यभावविशिष्टे, तथा सति अभावप्रमितावभावप्रमितिरित्यात्माश्रयप्रसक्तेः। तस्माद्भावाभावसंसर्गवतो भूतलादन्यादृशमेव भूतलमालम्बमाना धर्मिधीरित्यवश्याश्रयणीयम्। सैवास्मन्मतेऽपि अभावव्यवहारं प्रवर्तयिष्यति, तद्गोचर-भूतलस्वरूपमेव कैवल्यमिति न काचिदनुपपत्तिरिति।

॥ उक्तमतखण्डनम् ॥

**तदिद**मसारमतिभिरसारसारमेव जल्पितम्। वयं खलु भूतलस्वरूपसंवि(त्तेरे)-[त्तिमे]वाभावावभासहेतुमाचक्ष्महे। नच तत्संसृष्टेऽपि तत्सम्भवादतिप्रसक्तिः, भूतल-

**अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यमागमेऽन्तर्भूतम् । यथा— इह वटे यक्षः प्रतिवसतीति । प्रयत्नजन्या शरीरतदवयवक्रिया चेष्टा । सा**

---

संवित्तिवदभावेन्द्रियसन्निकर्ष(:)स्या(च्च)भावग्रहणसामग्रीमध्यवर्तित्वात्कलशादिमिश्रिते च मेदिनीभागे तदभावासम्भवादेव तदिन्द्रियसन्निकर्षस्यानाशङ्कनीयत्वात् ।

॥ भूभागमात्रस्य अभावव्यवहारहेतुताशङ्का ॥

अथाभाव एव कीदृशि भूभागे सम्बध्यते । न तावत्कलशमिश्रिते, विरोधात् । नापि तदभावविशेषिते, आत्माश्रयात् । भूभागमात्रे सम्बध्यत इति वाच्यम् । तथा च तादृशभूभागवेदनादेव कलशाभावव्यवहारो भविष्यति किमन्तर्गडुनाऽभावेनेति ।

॥ उक्तशङ्कानिराकरणम् ॥

नेदमपि हृदयङ्गमम् । नीलिमधवळिमादेरप्यनयैव नीत्या निराकरणप्रसक्तेः । नीलं मेदिनीतलमित्यादौ विशेषण[भावेन] नीलिमादेरपि भासनान्नेति चेत्, हन्तैवं कलशशून्यमवनितलं, अवनितले कलशो न भवति इति विशेषणविशेष्यभावेनाभावस्याप्यधिकस्य भासनात् कथमयमपि शक्यापह्नवः स्यात् । अथ कलशशून्यमवनितलमित्यादिर्व्यपदेश एव केवलं, नैतादृशं संवेदनमस्तीति मन्वीथाः, तर्हि, नीलं मेदिनीतलमित्यादिव्यपदेश एव न विशिष्टं वेदनमिति वदन्तं कथमपाकुर्वीथाः । विशिष्टव्यपदेशादेव तथाभूतवेदनस्यापि सिद्धिरिति चेत्—

प्रकृतेऽपि तथा तर्हि पर्यालोच्य [प्रयत्नतः] ।
परितोषं भज भ्रातरिति सर्वं समञ्जसम् ॥ १ ॥

॥ ऐतिह्यस्योक्तप्रमाणेष्वन्तर्भावनिरूपणम् ॥

संप्रति स्वरूपानुवादपूर्वकमैतिह्यमन्तर्भावयति -- **अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यमिति ।** इति हेति निपातसमुदायः पारम्पर्ये वर्तते । प्रत्ययश्चायं स्वार्थिकः ऐतिह्यमिति । तत् **आगमेऽन्तर्भूतं, यथेह वटे यक्षः प्रतिवसतीति ।** एतच्च यद्यवितथमैतिह्यं तदैवं द्रष्टव्यम् । वितथस्य पुनरागमाभासत्वं वेदितव्यम् ।

चेष्टास्वरूपमन्तर्भावनिरूपणायोपवर्णयति—**प्रयत्नजनिता शरीरतदवयवक्रिया चेष्टेति ।** तामन्तर्भावयति—**सा नाट्यशास्त्रादिसमयबलेन पुरुषाभि-**

**नाट्यशास्त्रादिसमयबलेन पुरुषाभिप्रायविशेषमर्थविशेषं च गमयन्ती नागमाद्भिद्यते, लिप्यक्षरादर्थप्रतिपत्तिवदिति]। तदेवं व्यवस्थितमेतत् त्रीण्येव प्रमाणानीति।**

**किंपुनरेभिः प्रमाणैः प्रमातव्यमिति। उच्यते, प्रमेयम्। किंलक्षणम्?**

---

**प्रायविशेषमर्थविशेषं च गमयन्ती नागमाद्भिद्यत** इति। अत्रोदाहरणव्याजेन लिप्यक्षरस्यागमान्तर्भावमाह—**लिप्यक्षरादर्थप्रतिपत्तिवदिति**। लिपिभिः स्मारितान्यक्षराणि लिप्यक्षराणि।

लिपिमेतादृशीं दृष्ट्वा स्मर्तव्यो वर्ण ईदृशः।
इति सङ्केतमाहात्म्याद्वर्णानुस्मरणं भवेत्॥ १॥

वर्णेषु स्मर्यमाणेषु सङ्केतसहकारिषु।
जायमानार्थसंवित्तिरागमादेव जायते॥ २॥

॥ सिद्धदर्शनस्य प्रमाणान्तरत्वनिराकरणम्॥

**यदप्येके** मन्यन्ते—सिद्धदर्शनं नाम प्रमाणान्तरमस्तीति। तदप्यसत्। तस्य प्रत्यक्ष एवान्तर्भावात्। तथा हि—अञ्जनपादलेप एव खड्गगुलिकादिभिः सिद्धानां निष्पन्नातिशयानां यत्सूक्ष्मव्यवहितविप्रकृष्टार्थेषु सम्यगपरोक्षानुभवसाधनं तत्सिद्धदर्शनमभिधीयते। तच्च प्रत्यक्षलक्षणेन सङ्गृहीतमेव। ग्रहसञ्चारादिना तु यत् प्राणिनां फलविशेषप्रतिपादनं, तदनुमानमेव, ग्रहसंचाराविनाभावबलेन प्रवृत्तत्वादिति सर्वमनवद्यम्। प्रकृतमुपसंहरति—**तदेवं व्यवस्थितमेतत् त्रीण्येव प्रमाणानीति।**

॥ प्रमाणप्रयोजनकथनम्॥

कश्चिदिह जिज्ञासमानः पृच्छति—**किं पुनरेभिः प्रमाणैः प्रमातव्यमिति**। प्रमाणं खलु हेयोपादेयतदुपायरूपप्रमेयविशेषप्रतिपादनद्वारेणापवर्गहेतुरिष्यते तत्र केचित्प्रधानादिकमामनन्ति। अपरे नैरात्म्यादिकम्। अतो विप्रतिपत्तेः सन्देहे सति कथं निर्णय इत्यर्थः। परिहरति—**उच्यते, प्रमेयमिति।**

**यद्विषयं ज्ञानमन्यज्ज्ञानानुपयोगित्वेनैव निःश्रेयसाङ्गं भवति तत्प्रमेयम्। तदेव तत्त्वतो ज्ञातव्यम्, सर्वदा भावयितव्यं च। न कीटसङ्ख्यादि तज्ज्ञानस्यानुपयोगित्वात्।**

**तच्चतुर्विधम्—हेयं, तस्य निवर्तकं, हानमात्यन्तिकं, तस्योपाय इति।**

**तत्र हेयं दुःखमनागतं एकविंशतिप्रकारं—शरीरं, षडिन्द्रियाणि,**

---

[1]दण्डकसूत्रनिर्दिष्टं प्रमेयं तदेवापवर्गोपयोगितया यथोदितप्रमाणकलापेन परिच्छेत्तव्यं, प्रधानादि तु प्रमाणगोचर एव न भवतीति निर्णेष्यते। अतस्तस्यापवर्गोपयोगितया प्रमेयत्वमनाशङ्कनीयमेव। यत्तर्हि दण्डकसूत्रनिर्दिष्टं प्रमेयं तदेव किं लक्षणमित्याह—**किंलक्षणमिति?** किं लक्षणमस्येति विग्रहः। कथं पुनरयं प्रश्नो यावता प्रमाविषयं प्रमेयमिति तल्लक्षणमुदितमेवेति? नानुपपत्तिः, विशेषविषयत्वात्प्रश्नस्य। यद्धि प्रमाविषयं प्रमेयमिति लक्षणं तत्प्रमेयमात्रविषयम्। दण्डकसूत्रे पुनरपवर्गोपयोगिनः प्रमेयविशेषस्य निर्देशात्तस्यैवासाधारणं लक्षणमिदं पृच्छ्यत इति न काचिदनुपपत्तिः।

॥ प्रमेयलक्षणकथनम् ॥

उत्तरमाह—**यद्विषयं ज्ञानमन्यज्ज्ञानानुपयोगित्वेनैव निःश्रेयसाङ्गं भवति तत्प्रमेयमिति।** कुतः पुनरिह प्रमाणविषयमात्रं नोपादीयत इत्यत आह—**तदेव** पूर्वोक्तं **तत्त्वतो ज्ञातव्यं, सर्वदा भावयितव्यम् च। नच कीटसङ्ख्यादि, तज्ज्ञानस्यानुपयोगात्।** तस्माद्यथोदितमात्मादिरूपमपवर्गोपयोगिप्रमेयपदेनेह विवक्षितमित्यर्थः। तत्पुनः कतिविधमित्यत आह—**तच्चतुर्विधं—हेयं, तस्य निवर्तकं, हानमात्यन्तिकं, तस्योपाय इति।** यद्यपि चात्मादि द्वादशविधं प्रमेयमुपदिष्टं सूत्रकृता तथापि तस्य सर्वस्यापि चतसृषु विधासु यथासम्भवमन्तर्भावाद्धेयादिरूपेण च संक्षेपतः चतुर्धा भाव्यमानस्य निःश्रेयसोपयोगित्वाच्चतुर्विधमिह प्रमेयमुपदिष्टमिति मन्तव्यम्।

॥ हेयनिरूपणम् ॥

तत्र हेयं व्याचष्टे—**तत्र हेयं दुःखमनागतमेकविंशतिप्रकारमिति।** तत्र हेयादिषु मध्य इत्यर्थः। अनागतमेव दुःखं हेयमिति कुतः? प्रहीणस्य

---

1. आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्(1-1-9) इति दण्डकसूत्रं बोध्यम्।

प्रहीणत्वात्, वर्तमानस्याप्युपभुज्यमानस्याशक्यहानत्वादिति वदामः। तस्यैकविंशतिप्रकारत्वं प्रपञ्चयति—**शरीरं षडिन्द्रियाणीति** बाह्येन्द्रियाणि पञ्च प्रतिपादितानि प्रत्यक्षावसरे। षष्ठं तु मनो युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति।

॥ मनसः सद्भावे अनुमानप्रयोगः ॥

प्रयोगश्चात्रैवं द्रष्टव्यः। आत्मेन्द्रियार्थादयः क्रमवत्सहकारिसापेक्षाः सत्यपि समुदाये क्रमवत्कार्योत्पादकत्वात्। यथा हस्तापेक्षया चित्रोत्पादकं वर्णा(दि) [दी]ति। नच हेतोरसिद्धिः। यदा तावद्व्यापकत्वादपर्यायं (अशेषेन्द्रियसम्बन्धं सुखिनं च) रङ्गगतस्य सर्वाण्यपीन्द्रियाणि स्वार्थसम्बद्धानि संभवन्ति। तथा सत्यपि न गन्धादिवेदनानि युगपदुत्पद्यन्ते व्यासङ्गव्यवहार(ा)दर्शनात्। भवत्वेवं तथापि जिज्ञासाक्रमेण ज्ञानक्रमोपपत्तेः किं मनसेति चेत्। मैवम्। जिज्ञासाया ज्ञानोत्पत्तावकारणत्वात्। सामग्रीसमवधान एव तदुपयोगात्। अपरथा कलशजिज्ञासया विष्फारितलोचनः कण्टकादिकमजिज्ञासितमपि न प्रतीयात्। एतेन विषयान्तरजिज्ञासा(या)पि विषयान्तरविज्ञानोत्पादिकां सामग्रीं प्रतिबध्नातीति परास्तम्।

तस्माज्जिज्ञासापि जिज्ञासितार्थग्राहिणीन्द्रिये सहकार्यन्तरं सन्निधापयन्ती युगपदनेकज्ञानानुत्पत्तावुपयोगिनीति वक्तव्यम्। तथा सति मनसः सिद्धिर्दुर्वारा।

॥ अदृष्टेन मनसः अन्यथासिद्धिशङ्का तत्समाधानं च ॥

स्यादेतत्। अदृष्टवशादेव वेदनक्रमोऽस्तु व्यासङ्गकाले। यत्र त्वदृष्टमपर्यायमनेकेन्द्रियार्थगोचरविज्ञानजननानुकूलं तत्र युगपदनेकवेदनोत्पत्तिर्भविष्यति। यथाहुः—

कान्तकान्तवदनप्रतिबिम्बभग्नबालसहकारसुगन्धौ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः॥ १ ॥

इति।

मैवम्। अदृष्टस्यापि सामग्रीसमवधानद्वारेणैवानुभवोत्पत्तावुपयोगात्। अपरथा सादरविसारितविमललोचनैः त्रिलोकमध्यमासीनोऽपि करितुरगादिः कदाचिन्न प्रतीयेत।

॥ ज्ञानानामयौगपद्यं मनसः एकदा नानेन्द्रियासम्बन्धश्च ॥

तत्सिद्धमेतत्—

यस्य क्रमसम्बन्धाद्रङ्गस्थे पुंसि वर्तिनाम् ।
क्रमवती ज्ञानोत्पत्तिः अन्तःकरणं तदेष्टव्यम् ॥ १ ॥

अन्यथा सति कारणपौष्कल्ये कार्यक्षेपानुपपत्तिरित्यर्थः । यत्रापि युगपदनेकेन्द्रियार्थानुभावाभिमानः तत्रापि व्यासङ्गसमसमयसंविदितसंवेदनक्रमानुरोधेन क्रम एवानुमातव्यः ।

यौगपद्याभिमानस्तु नैरन्तर्येण जायते ।
पद्मपत्रशतच्छेदयौगपद्याभिमानवत् ॥ १ ॥

तदेवं कार्यक्रमानुरोधात् सहकारिरूपमन्तःकरणमनुमीयमानं अविभुत्वेनैवानुमातव्यम् । वैभवे तु तस्यापर्यायमशेषेन्द्रियसम्बन्धद्वारकवेदनोत्पादनस्य युगपदापत्तेः । यदि तु वैभवेऽपि मनसः करणस्वाभाव्यात् क्रियाक्रमश्चक्षुष इव युगपदभिसंबन्धे रूपादौ, तथापि रूपादिवदेव भिन्नेन्द्रियार्थेष्वपि युगपदभिसम्बन्धेषु नानेन्द्रियद्वारकमेकमेव वेदनं किं न भवेत्? न भवत्येवेति च प्रतिपादितम् ।

॥ मनसोऽणुत्वस्य धर्मिग्राहकप्रमाणसिद्धस्य स्थिरत्वोपपादनम् ॥

तस्माद्धर्मिग्रहणप्रमाणमाहात्म्यनिर्णीतमविभुत्वमपाकर्तुं न शक्यते केनचिन्मनसः। येन खलु विज्ञानासमवायिकारणसंयोगाश्रयत्वान्नित्यादिक्षेत्रज्ञादिदृष्टान्तादृष्टान्तेन मनसो विभुत्वहेत्व[न्तरमिष्यते] सर्वेषामप्यमीषां धर्मिग्राहकप्रमाणविरोधैकप्रहारभग्नत्वात्सिद्धमसामर्थ्यमित्यर्थः ।

॥ विभुत्वाविभुत्वसाधारणधर्मिग्राहकमानान्तरकथनम् ॥

**स्यादेतत्।** प्रमाणान्तरमेव धर्मिग्राहकं प्रमाणं भविष्यति यद्विभुत्वाविभुत्वसाधारणम् । तद्यथा—सुखादय इन्द्रियपरिच्छेद्याः प्रत्यक्षसंवेद्यत्वात् रूपादिवत् । (तत्र) बहिरिन्द्रियोपरमेऽपि सुखादिसंवित्तेस्तदतिरिक्तमिन्द्रियं सिध्यत् मनो भविष्यति । स्मृत्यनुमानागमसंशयादिज्ञानानामपीन्द्रियपूर्वकत्वं साध्यं ज्ञानत्वात्,

**षड्विषयाः, षड्बुद्धयः सुखं दुःखं चेति । तत्र शरीरम् दुःखायतनत्वा- दुःखम्, इन्द्रियाणि विषया बुद्धयश्च, तत्साधनभावात्, सुखं दुःखानुष- ङ्गाद्दुःखम् । दुखं तु बाधनापीडनासन्तापात्मकं मुख्यत एवेति ।**

---

चाक्षुषज्ञानवत् । इच्छादीनां चा(क्षुषजत्वं)[क्षजत्वं] साध्यमात्मविशेषगुणत्वात् रूपादिवेदनवत् । परिशेषस्तु पूर्ववत् । नचामीषामपि धर्मिग्राहकाणामस्ति विभु- त्वेन सह विरोध इति ।

॥ कथितप्रमाणखण्डनम् ॥

नैतत्सारम् । यस्मात्सुखादिप्रत्यक्षादिना साध्यमानमपि अविभुत्वादिनैव मनः सिद्ध्यति । विभुत्वे युगपत् ज्ञानोत्पत्तिप्रसङ्गरूपतर्कानुगृहीतस्य सर्वस्यापि धर्मिसाधकस्याविभुत्वपर्यवसायित्वात् । नच विभुत्वगोचरा हेतवो विपक्षबाधकोपपन्नाः । तथा च ते सन्दिग्धानैकान्ताः कथं साध्यं साधयितुमीशते । तदेवं धर्मिग्राह- कप्रमाणादेव तर्कादपाकृताशेषप्रतिपक्षात् प्रसिद्ध्यदन्तःकरणं परमाणुरूपमेव पर्यव- स्यति । इतरथा तदारम्भकावयवपरम्परापरिकल्पनगौरवप्रसङ्गात् । अणुत एव कार्योत्पत्तौ आरम्भप्रयोजनाभावाच्च । तस्माद्धर्मिग्राहकप्रमाणमेव सत्तर्कनिराकृत- निश्शेषप्रतिपक्षमणुरूपमन्तःकरणमावेदयतीत्यलं प्रसक्तानुप्रसक्त्या ।

॥ एकविंशतिदुःखविवरणम् ॥

प्राक्तनमनुसरामः । **षड्विषया इति** । घ्राणादीनां गन्धादयः पञ्च विषयाः प्रसिद्धाः मनसः कामादिरिति । **षड्बुद्धयः** ताश्च षडिन्द्रियार्थविषयाः । **सुखं दुःखं चेति** । पूर्वोक्तेषु यस्य यथा दुःखत्वं तस्य तथा प्रतिपादयति—**तत्र** तेषु **शरीरं दुःखायतनत्वाद्दुःखमिति** । स्वावच्छिन्नात्मप्रदेशे दुःखजनकत्वं तदायतनत्वम् । **इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात्** । दुःख- साधनत्वाद् दुःखशब्देनोच्यन्त इति । **सुखं दुःखानुषङ्गात्** दुःखमिति सम्बन्धः । कोऽयमनुषङ्गो नाम? अविनाभाव एव । तथा हि सुखं भोक्तुकामेनावश्यं दुखमपि भोक्तव्यम् । दुःखं च जहता सुखमप्यवश्यं हातव्यम् । विवेकहानानुपपत्तेः । तथा च दुःखसाधनत्वमन्तरेणापि सुखस्य दुःखानुषङ्गादेव दुःखत्वमुपदर्श्यते । तत्राऽऽसक्तिप्रसक्तिप्रतिषेधार्थं विषयात्पृथग्ग्रहणम् । **दुःखं तु पीडनाबाधना-**

**तस्य निर्वर्तकमसाधारणकारणमविद्यातृष्णे, धर्माधर्माविति च। सम्यगध्यात्मविद्भिः प्रदर्शितार्थविपरीतज्ञानमविद्या सह संस्कारेण। पुनर्भवप्रार्थना तृष्णा।**

---

**सन्तापात्मकं मुख्यत एवेति।** बाधना, पीडना, सन्ताप, इत्येते पर्याया यस्य तदात्मकं तद्रूपं तद्दुखं मुख्यत एव मुख्यतयैव दुःखपदवेदनीयमित्यर्थः। अत एव दुःखस्य मानसत्वेऽपि विषयात्पृथग्ग्रहणं, विषयस्य दुःखसाधनत्वेनामुख्यदुःखत्वात् एतस्य च मुख्यत्वादिति।

॥ हेयनिर्वर्तकनिरूपणम् ॥

तदेवं हेयं व्याख्याय तस्य निर्वर्तकमुपदर्शयति—**तस्य निर्वर्तकमसाधारणकारणमविद्यातृष्णे, धर्माधर्माविति।** यथाक्रममविद्यादीन् व्याचष्टे—**सम्यगध्यात्मविद्भिः प्रदर्शितार्थविपरीतज्ञानमविद्या सह संस्कारेणेति।** आत्मानमधिकृत्य यद्वर्तते शरीराद्यपवर्गपर्यन्तं तत् अध्यात्मं सम्यगध्यात्मं विदन्तीति सम्यगध्यात्मविदः, तैः प्रदर्शितोऽर्थः।

अस्थिस्थूणं मांसयुतं मांसशोणितकर्दमम्।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥ १॥

जराशोकसमाविष्टं रोगायतनमातुरम्।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत्॥ २॥ इत्यादि॥

एतस्यार्थस्य यद्विपरीतरूपपरिज्ञानं साऽविद्या। तथा च रागान्धानां वेदनम्—

अमृतस्येव कुण्डानि सुखानामिव राशयः।
रतेरिव निधानानि योषितः केन निर्मिताः॥

इत्येवमात्मादावपवर्गपर्यन्ते मिथ्याज्ञानमूहनीयम्। तदेतत् संस्कारेण सहाविद्येति गीयते।

॥ तृष्णानिरूपणम् ॥

**पुनर्भवप्रार्थना तृष्णेति।** पुनर्भवो जन्मान्तरं, तस्य प्रार्थना ममेदं भूयादित्यादिग्रहः तृष्णा। पुनर्भवग्रहणं चोपलक्षणार्थं सांसारिकपदार्थसार्थस्य प्रार्थना-

**सुखदुःखयोरसाधारणहेतू धर्माधर्माविति। हानं दुःखविच्छेदः आत्यन्तिकमिति। न कदाचित् कथंचिद्दुःखसंबन्ध इत्यर्थः।**

---

गोचरस्य। तेन सर्वापि तत्प्रार्थना तृष्णा विवक्षिता। सा च प्रवृत्तिद्वारेण दुःखसाधनम्।

॥ मोहस्य दुःखसाधनत्वोपपादनम् ॥

नन्वेवं सति मूढोऽपि वैतृष्ण्यादप्रवर्तमानो न दुःखमधिगच्छतीति कथं मोहस्य दुःखसाधनत्वमिति चेन्न। असत्यामपि तृष्णायामप्रवर्तमानेऽपि अविदुषि व्यालादिदुःखस्य दुष्परिहरत्वात्। यथा तु व्यालादिकं विद्वान् परिहरिष्यति, तथा यादृच्छिकेष्वप्यवश्यकरणीयेषु कर्मसु हिंसादिपरिहारेण विद्वान् प्रवर्तते। तथा च तन्निबन्धनमनागतमसौ दुःखं न प्राप्नुयात्। मूढस्तु यथा तथा प्रवर्तमानः प्राप्नुयादेवानागतमनन्तं दुःखमिति मोहस्यास्त्येवासाधारणं दुःखसाधनत्वम्। मोहाभावे च तृष्णाद्यनुत्पत्तेः सर्वं दुःखनिदानं मोह उच्यते। तथा चाह—तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेरिति (4-1-6) इति। सुखदुःखयोरसाधारणौ हेतू धर्माधर्माविति तयोरप्यसाधारणमेवास्ति दुःखसाधनत्वम्। अविद्यातृष्णयोरभावेऽप्यशनिपातादेरदृष्टनिमित्तत्वात्।

॥ धर्मस्यापि दुःखहेतुता ॥

अथैवमप्यधर्मो दुःखहेतुरस्तु न धर्मस्तस्य सुखासाधारणकारणत्वात्। मैवम्। सुखस्यापि सांसारिकस्य विषानुषक्तमधुन इव विषभक्षे दुःखानुषङ्गतो दुःखपक्षे निक्षेपात्। यस्तु सांसारिकसुखानुद्देशेनानुष्ठीयमानैः परमेश्वरभक्तियोगाङ्गादिसाधनैरुत्पादितो धर्मः, स तत्त्वज्ञानसमः सन्तोषसुखमुत्पादयन्निःश्रेयसहेतुरेव; न कथंचिदपि दुःखहेतुरिति मन्तव्यम्।

॥ आत्यन्तिकदुःखविच्छेदः मोक्ष एव ॥

**हानं दुःखविच्छेदः आत्यन्तिकमिति। न कदाचित् कथंचित् दुःखसम्बन्ध इत्यर्थः।** तादृशं च दुःखहानमपवर्ग एव सम्भवति। न खलु ब्रह्मलोकादिगामिनामपि तादृशदुःखहानं संभवति। पुनरावृत्तिश्रवणात्, परसम्पदुत्कर्षो-

**तस्योपायस्तत्त्वज्ञानमात्मविषयम्। तथा चोक्तम्—आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति।**

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः॥**
**मत्वा च सततं ध्येय एते दर्शनहेतवः॥**

**इति। तरति शोकमात्मविदिति च। स द्विविधः, परश्चापरश्चेति। तथा चोक्तं, द्वे ब्रह्मणी वेदितव्ये, परश्चापरश्चेत्यादि। तत्रैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान्महेश्वरः सर्वज्ञः सकलजगद्विधाता। स कथं ज्ञातव्यः, अनुमानादागमाच्च।**

---

पतापाद्यनुषङ्गाच्च। अपवर्गप्राप्तस्य त्वपुनरावृत्तिश्रुतेः अविद्यादेरत्यन्तमुच्छेदे चाकस्मिककार्यानुदयादात्यन्तिकमेव दुःखहानं नानुपपन्नम्।

॥ तत्त्वज्ञानस्य मोक्षहेतुत्वनिरूपणम् ॥

**तस्या**त्यन्तिकदुःखहानाय **उपायस्तत्त्वज्ञानमात्मविषयम्।** प्राधान्याच्चेहात्मविषयग्रहणम्। तदुपलक्षितसकलशरीरादिद्वादशविधप्रमेयतत्त्वज्ञानमिह विवक्षितं द्रष्टव्यम्। **आत्मा** (पुनरादरेण)[**वा अरे**] **द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति।**

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।**
**मत्वा च सततं ध्येय एते दर्शनहेतवः॥**

**तरति शोकमात्मविदिति च।** [यथा च] युक्त्यापादितं तत्त्वज्ञानमपवर्गसाधनमिति सङ्गच्छेत, तथाऽग्रे दर्शयिष्यामः।

॥ आत्मभेदनिरूपणम् ॥

स पुनरात्मा कतिविधो यो ज्ञातव्य इत्यत आह—**स द्विविधः परश्चापरश्च** उभावपि एतौ मुमुक्षुणा ज्ञातव्यौ। **तथा चोक्तम्—द्वे ब्रह्मणी वेदितव्ये परश्चापरश्चेति।** तत्र परस्यात्मनः स्वरूपमाह—**तत्र** तयोर्मध्ये **परो** नाम **ऐश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टो भगवान् महेश्वरः सर्वजगद्विधातेति।** परः पृच्छति—**स कथं ज्ञातव्य इति।** परिहरति—**अनुमानादागमाच्चेति।**

**तथाहि—विवादाध्यासितमुपलब्धिमत्कारणकं, अभूत्वा भावित्वात्, वस्त्रादिवदिति।**

---

॥ ईश्वरसाधकानुमाननिरूपणम् ॥

तत्रानुमानं तावदाह—**विवादाध्यासितमुपलब्धिमत्कारणकं अभूत्वाभावित्वाद्वस्त्रादिवदिति।** विवादस्यानेकरूपत्वेऽपि साध्यविशेषोपादानात् तद्विषय एव विवादो लभ्यते। यद्यपि चोपलब्धिपदं साधारणं, तथापि प्रकृतोपयोगित्वेनोपादानाद्युपलब्धिरेवावसीयते। तथा च तस्योपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञनिर्मितमित्ययमेव साध्यार्थः सम्पद्यते। नचैवं सत्यस्मदादिभिरेव सिद्धसाधनता शङ्कनीया। मलयमकरालयशरीरादेरस्मदाद्यशक्यनिर्माणत्वात् परमाणुप्रभृतिविचित्रकारणपरम्परापरिज्ञानासम्भवाच्च।

॥ ईश्वरानुमाने जीवानामेव कारणत्वसिद्ध्या सिद्धसाधनतापरिहारः ॥

**ततश्चैतदपास्तम्**—यदाहुः उपलब्धिमत्कारणत्वे परम्परया साध्ये भवत्येव सिद्धसाधनता। कर्मनिर्माणद्वारेण कर्मिणामेव कारणतोपपत्तेः। साक्षात्तु तत्कारणत्वं न शक्यमेव साधयितुं; शरीरादिव्यापारव्यवधानेन साध्यविकलत्वाद् दृष्टान्तस्येति। **यथा** खलु तन्तुतुरीवेमादिसाधनस्वीकारादारभ्य आवसानसम्भवात् कुविन्दस्याविच्छिन्नतत्तदुपादानादिविषयवेदनादिप्रबन्धः पटोत्पादे निदानभावमनुभवति, तथा भगवतोऽपि विवक्षितमिति कथं सिद्धसाधनतावकाशः? कथं वा साध्यवैकल्यदुष्टो दृष्टान्तः? इति।

॥ मेरुमन्दरादौ कार्यत्वोपपादनम् ॥

**यः** पुनराह—मेरुमन्दरादावभूत्वाभावित्वमसिद्धमिति, स सावयवत्वादिना प्रतिबोधनीयः। तथा हि—विवादाध्यासितानि अभूत्वा भावीनि सावयवत्वात् वसनवत्। महत्त्वे परमाणुव्यतिरेके वा सति स्पर्शवत्त्वात् मूर्तत्वात् कम्पवत्त्वाद्वा, स एव दृष्टान्तः। कम्पवत्त्वं नासिद्धं भूभूधरादिकम्पस्य कदाचन सर्वप्राणिपरिकलितत्वात्। गुणानामपि कार्यगुणत्वात् वसनरूपादिवदभूत्वाभावित्वमनुमातव्यम्। तस्मान्नासिद्धमिदं साधनम्। न च विरुद्धं सपक्षान्वयात्।

॥ विरुद्धत्वशङ्कापरिहारौ ॥

स्यान्मतं---माभूदिदं यथाश्रुतसाध्यविपरीतसाधनं सविरुद्धं, तथाप्यभिप्रेता-[र्थ]विशेषविपरीतविशेषसाधनाद्विरुद्धमेवेति। मैवम्। विपर्यये व्याप्त्यभावात्। न खलूपलम्भाधारपूर्वकत्वमिव शरीरपूर्वकत्वमपि व्यापकमभूत्वाभावित्वस्येति शक्यं वदितुं, तरुतृणादावभूत्वाभावित्वस्यासत्यपि शरीरे दर्शनात्। तत्र हि शरीरं योग्यानुपलम्भपराकृतमिति भवन्तोऽपि संप्रतिपद्यन्ते। नचाव्यापकं शरीरं साधयितुमलमिदं साधनमित्येतावता व्यापकमपि बोधाधारपूर्वकत्वं नाधिगमयतीति शक्यं वदितुम्। न वै कृतकत्वमव्यापकमनुष्णत्वमनले नालं साधयितुमिति व्यापकमपि विनाशित्वं नाधिगमयेत्।

॥ ईशस्यानित्यासर्वविषयज्ञानादिसिद्ध्याऽर्थान्तरशङ्कापाकरणम् ॥

मा तर्हि भूदव्यापकस्य शरीरस्य सिद्धिः। अनित्यासर्वविषयबुद्ध्यादिप्रसङ्गो दुर्निवारः अव्यभिचारोपलम्भादिति चेत्। मैवम्। न वै व्यभिचारानुपलम्भमात्रमापातादनुमित्यङ्गं, किं तर्ह्यव्यभिचारप्रमितिः। नच सा प्रकृते समस्ति। तत्कारणशरीराद्यभावेन कार्यबोधादिनिवृत्तावपि भूरुहादावभूत्वा भवनस्य स्पष्टदृष्टत्वात्। यदि व्यभिचारनि(मितः)[यमः] समस्ति, कुतस्तर्हि मीमांसकोऽपि तथाविधबोधाद्याधारपूर्वकतां भूरुहादेर्नाङ्गीकुर्यात्। अङ्गीकुर्वतस्त्वपसिद्धान्तो दुर्निवारः। न च शरीरादिव्यापकव्यावृत्या बुद्ध्यादिमात्रमेव व्यावर्तत इति वाच्यम्। अन्तरेणापि शरीरादिकमनादिनिधनस्य बोधादेरवतिष्ठमानस्याविरोधित्वात्। कार्यस्य तु बुद्ध्यादेः कारणाभावादसम्भव इति भेदः। बोधादेस्तु नित्यत्वं न यद्यपि दृष्टं, तथापि सम्भावनास्पदं तावत्। आधारभेदेनानित्यानामपि गुणानां नित्यत्वोपलम्भात्, पाथः परमाणुरूपवत्। परमेश्वरवेदनादेरनादिनिधनत्वाविरोधात् तावतापि पराभिहितव्याप्तिभङ्गात्। न खलु प्रतिपक्षनिश्चयवत् सम्भावनायामपि व्याप्तिः शक्यनिश्चया। यस्मादाह "यावच्चाव्यतिरेकित्वं"[1] इत्यादि।

॥ अनुमानस्याभिप्रेतार्थविपरीतप्रसङ्गेन भङ्गे प्रसिद्धानुमानभङ्गापत्तिः ॥

किञ्चैवमभिप्रेतविशेषविपरीतप्रसङ्गादनुमानभङ्गे धूमादपि धूमध्वजानुमानं भज्येत। तदपि हि व्याप्तिसमसमयमनधिगतमेव कमपि विशेषमादाय पर्यवस्यत्तद्विपरीतप्रसङ्गेनेन

1. शतांशेनापि शङ्क्यते। विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्। (न्या. कु.)

शक्यमपाकर्तुम् । यदि मतमनुमानैकसमधिगम्ये वस्तुनि विशेषविरोधाभ्युपगमान्न धूमानुमानभङ्गप्रसङ्ग इति । नैवम् । इन्द्रियादेरप्यनुमानैकगोचरस्यासिद्धिप्रसक्तेः । तदागमोऽपि प्रवर्तत इति चेत् । तुल्या तर्हि त्रिभुवननिर्माणप्रवीणे परमेश्वरेऽपि आगमप्रवृत्तिः । तथा च वक्ष्यते ।

॥ अर्थापत्त्या इन्द्रियादिसाधननिराकरणम् ॥

योऽप्यर्थापत्तिगोचरमिन्द्रियादिकमभ्युपगच्छन्न[नु]मानैकसमधिगमनीयं वस्तु नाभ्युपगच्छति ; सोऽपि प्रागेव पराकृतः । प्रतिपादितः खल्वर्थापत्तेरप्यनुमानेऽन्तर्भावः । किं चैवंवादी कथमर्थापत्तिगोचरमेव त्रिभुवनविधातारमपि नाङ्गीकुर्यात् । न खल्वस्मदादिविलक्षणमतीन्द्रियार्थदर्शनादिशालिनं पुरुषधौरेयमन्तरेणास्मदाद्यचिन्त्यरचनारूपस्य मेदिनीमेरुमन्दरादेरुत्पत्तिरुपपत्तिमती ।

तस्मादभूत्वाभावित्वमविरुद्धमिति स्थितम् ।
अनेकान्तकलङ्कोऽपि नावकाशमिहार्हति ॥ १ ॥

॥ ईश्वरानुमाने व्यभिचारशङ्का निश्चयद्वारा संशयद्वारा वा न सम्भवतीति प्रतिपादनम् ॥

स हि भवन् द्वेधा भवेत्—निश्चयद्वारा, संशयद्वारा च । प्रथमस्यासंभव एवात्र । न खलु बोधाधाराधीननिर्माणविरहिणः केचिदभूत्वाभाविनो निश्चिताः, यतस्तस्यावकाशः स्यात् । तरुतृणादयोऽपि हि कर्तृविरहविनिश्चयविधुरतया पक्षकुक्षावेव विनिक्षिप्ताः । तदिदं कालातीतोद्धारे विस्तरिष्यते । नापि द्वितीयः कल्पः कल्पते ; तस्याप्युपाधेरनुपलम्भात् प्रतिपक्षबाधकप्रसङ्गालङ्कृतत्वाच्च । तथाहि— न तावदिह शरीरव्यापारप्रभाव्यत्वमुपाधिः, शारीर एव व्यापारे तदभावात् । परशरीरनिवेशिविषशकलदष्टदण्डादिप्रेरणादेर्धीमदभिध्यानमात्रसाध्यस्य बहुलमुपलम्भात् । शरीरजन्यत्वमुपाधिरिति चेत् । नैवम् । असति सामान्यव्यभिचारे पक्षासम्भविविशेषणप्रक्षेपेण प्रकृतहेतोरुपाधिभावव्यवस्थापने सर्वानुमानोच्छेदप्रसङ्गात् ।

॥ कार्यविशेषत्वं शरीरिकर्तृकत्वव्याप्तमिति शङ्कायाः साधनसामान्ये साध्यसामान्यव्याप्तिः साधनविशेषे साध्यविशेषव्याप्त्या न निराकरणीयेति समाधिः ॥

**स्यादेतत्** । प्रासादादिविविधमनुजाधीननिर्माणकार्यनिकुरुम्बे स कश्चिदस्त्येव जातिभेदो यद्वशात्तादृशेष्वेव शरीरिकर्तृकत्वमनुमीयते । न पुनर्मलयमन्द-

रादौ। तथा च तदधीनमेव व्याप्तिमुपजीवेदभूत्वाभावित्वमपि। नेदमपि मनोहरम्। न खलु विशेषप्रयुक्तां व्याप्तिमुपजीव्य सामान्यमप्रयोजकम्। किं तर्हि? साधनसामान्ये साध्यसामान्यमधिकृत्य प्रवर्तमाने तद्विशेषः साध्यविशेषेण व्याप्यत इत्येतावत्। तथा चाङ्कुराद्बीजानुमानं, धान्याङ्कुरात्तु धान्यानुमानं, कलमाङ्कुरात्तु कलमबीजानुमानमिति यथा व्यवस्थितं, तथेहापि कार्यमात्रात्कर्तृमात्रानुमानं तद्विशेषात्तु शरीरिरूपविशेषानुमानं प्रासादादौ। तत्राप्यवान्तरजातिभेदादम्बरादौ कुविन्दाद्यनुमानमिति व्यवस्था युक्ता। न पुनर्विशेषे सति सामान्यमकिंचित्करम् अपरथा तस्यापि विशेषस्य तदवान्तविशेषापेक्षायां अकिञ्चित्करत्वापत्तेः।

॥ विशेषकार्यकारणभावे सत्यपि सामान्यस्य आवश्यकता ॥

ननु धान्यादिभेदं विहायाप्यङ्कुरो बीजे दृश्यते। प्रकृते तु नोन्नीतावान्तरजातिभेदं विहाय विदिता कार्यस्य कर्तर्यनुप्रवृत्तिरिति भेदः। सत्यं, तथापि कार्यविशेषः कारणविशेषेण व्याप्यते, न पुनः कार्यकारणयोरविनाभावमपाकर्तुमुत्सहत इत्येतावतैव तदुदाहरणम्। अवश्याश्रयणीयं चैतत्। अपरथा परमाणुतद्व[र्ति](र्जि)रूपाद्यनुमानमपि भज्येत; यस्मादणुद्रव्यारभ्यं द्रव्यं, नित्यरूपादिनिष्पादनीयं च रूपादि न क्वाप्युपलब्धं; तथापि सामान्यव्याप्तिमेव पुरस्कृत्य तत्सिद्धौ सिद्ध्यत्वीश्वरोऽपि समानन्यायत्वात्।

॥ ईश्वरानुमाने उपाधिविशेषशङ्का तन्निराकरणं च ॥

तथापि अस्मदादिशक्यज्ञानोपादानत्वमुपाधिरिति चेन्न। यथाकथञ्चित्प्रकृतेऽप्युपादानस्यास्मदादिशक्यज्ञानत्वात्[1]। प्रत्यक्षतः शक्यज्ञानत्वं विवक्षितमिति चेन्न। शरीरमहीरुहादेरुपादानभूतकरचरणशाखादेरस्मदादिप्रत्यक्षोपलभ्यत्वेऽपि भवद्भिरकर्तृकत्वस्वीकारात्[2] व्यभिचारिणश्चानुपाधित्वात्।

॥ शक्यज्ञानोपकरणत्वोपाधेः निराकरणम् ॥

एतेन शक्यज्ञानोपकरणत्वमपास्तम्। अरण्यभूरुहोत्पादे सत्वक्त्वाद्युपकरणस्य पिशितलोचनैरपि निरीक्ष्यमाणत्वात्। धीमतश्च निर्मातुः तत्रानङ्गीकारात्[3]।

---

1. तथाच साधनव्यापकत्वात् नोपाधित्वमिति भावः।
2. साध्यव्याप्यत्वे सति साध्यव्यापकत्वे सति साधनाव्यापक उपाधिरिति मतेनेदम्।
3. तथा च साध्यव्याप्यत्वभङ्गः।

तथापि विपक्षे किं बाधकमिति चेत् तदुच्यते। यदि प्रमाणावसितकारणभावमपि बुद्धिमन्तं विना कार्यमुपजायेत तद्वैकदेशाभावेऽपि सामग्रीविरहात् आकस्मिकं कार्यं स्यात्। तथा च नित्यं सत्त्वमसत्त्वं वेत्यादिदोषानुषङ्गः।

॥ कार्यमात्रस्य बुद्धिमत्कर्तृकत्वे अरण्यस्थवृक्षादौ व्यभिचारशङ्का तत्परिहारश्च ॥

स्यादेतत् कार्यमात्रस्य बुद्धिमत्कारणत्वमध्यवसातुमशक्यं तदभावेऽपि अटवीविटपिनामुत्पत्तिदर्शनात्। नच कर्तुरदृश्यताङ्गीकरणेनेदं समाधातव्यं; यतः प्रत्यक्षानुपलम्भगम्यो हि कार्यकारणभावः, न चादृश्ये प्रत्यक्षं प्रक्रमत इति कथं तन्निश्चयः? नच दृश्यादृश्यविशेषणमनपेक्ष्य प्रेक्षावन्मात्रस्य कारणभावविनिश्चय इति साम्प्रतम्। दृश्यैकस्वभावनियतं हि प्रत्यक्षं न दृश्यादृश्यसाधारण्येन प्रवर्तते धूमाग्निवत्कम्पमारुतवच्च। यथा हि (नि)स्वप्रवृत्तियोग्यं[1]ज्वलद्भासुराकारेण प्रवर्तमानाध्यक्षकृता व्याप्तिस्सप्तार्चिषि न जाठरानलसाधारणरूपपर्यवसायिनी। अन्यथा तार्णादिभेद इवाभिमतेऽपि रूपे सन्दिहानो न तत्साध्यार्थक्रियालोका[दि]ग्रहणे प्रवर्तेत प्रतिबन्धवैकल्यात्। यद्वा असति जाठरत्व इत्यामृशतः प्रवृत्तिः स्यात्। यथा च पल्लवोल्लसने समीरणेन व्याप्तिरध्यक्षकृता स्पृश्यरूपपुरस्कारात् न स्तिमितमारुतसाधारणरूपपर्यवसायिनी। अन्यथा सोऽपि किसलयकम्पेन मातरिश्वानमनुमाय [अ]स्पृश्यप्रभञ्जनानुरूपप्रवृत्तिनिवृत्ती निश्चयेनाचरेत्। तथा पुरुषेऽपि प्रत्यक्षकृता व्याप्तिगृहीतिरदृश्यरूपपरिहारेणैवेति तदवस्थमेव सन्दिग्धविपक्षव्यावृत्तिकत्वमिति।

॥ दृष्टान्तवैषम्येणोक्तपक्षखण्डनम् ॥

तदिदमसारमसारमतिभिरुपर्युपरि जल्पितं दृष्टान्तवैषम्यात्। तथापीदमत्र सम्प्रधार्यम्। जठरानलस्तिमितानिलयोर्धूमकम्पकारणभावविरोधविनिश्चये सति साधारणोपाधिप्रवृत्तव्याप्तिबोधस्य विषयसंकोचो विधीयते, यद्वा दृश्यादृश्यसाधारणोपाधौ व्याप्तिबोध एव न प्रवृत्त इति। यदि प्रथमः प्रकृते तर्हि प्रयत्नवता व्याप्तिरखण्डितैव, तद्वदिह विरोधानवधारणात्। द्वितीये देशकालविप्रकर्षाददृश्यमपि वह्निमन्तर्भाव्य सर्वोपसंहारिणी व्याप्तिमतिर्न जायेत। को हि देशादिविप्रकृष्टस्वभावविप्रकृष्टयोर्विशेषः प्रत्यक्षानुत्पत्तौ? येन प्रत्यक्षानुपलम्भनिबन्धना(द)व्याप्तिबुद्धिः साधारणोपाधिप्रवृत्ताप्येकमन्तर्भावयति न परम्।

---

1. मा—योग्यं चलम्भासुरेत्यादि।

॥ देशकालविप्रकृष्टानां जात्यैव दर्शनयोग्यतापक्षः तन्निराकरणं च ॥

यदपि, देशकालविप्रकृष्टमपि न दृश्यं तथापि दर्शनयोग्यं जात्यैवेति स्वभावविप्रकृष्टस्यैव प्रत्यक्षेण परिहारः सर्वान्यवर्जने हि स्वलक्षणैकपर्यवसानात् व्याप्तिरेव न स्यादिति। तत्रेदमभिधीयते। देशकालविप्रकृष्टेऽपि का दर्शनयोग्यता विवक्षिता? स्वरूपयोग्यतैवेति चेत्। तत्किमिदानीं परात्मापि प्रत्यक्षदर्शनस्य स्वरूपत एवायोग्यः, पुण्यापुण्यवत्। तथा सति स्वयमपि न परः स्वात्मानं पश्येत्। तस्माद्भोज[1]कादृष्टोपग्रहनियमितसहकारिसम्भवासम्भवाभ्यां स्वपरात्मनोर्दर्शनादर्शने न पुनरदृष्टवदेव स्वभावविप्रकर्षादिति युक्तमुत्पश्यामः। सहकारियोग्यताविरहस्तु तुल्य एव देशादिविप्रकृष्टेऽपि।

॥ अत्रैव तात्त्विकं समाधानम् ॥

वस्तुतस्तु न स्वरूपयोग्यतापि तन्त्रं व्याप्त्यन्तर्भावस्य। किं तर्हि? अनुभूयमानव्यक्तिभिरनुपलब्धव्यभिचारैकोपाधिपरिग्रहः, तदभावे स्वरूपयोग्यस्यापि रासभादेः व्यापकत्वा(द)नध्यवसायात्। तत्सद्भावे च तदध्यवसाय(।)नियमात्। यत्पुनरसति जाठरत्व इति, अनामृशत एवादृष्टव्यभिचारस्यापि ज्वलद्भासुरपावकाधीनार्थक्रियैकाग्रबुद्धेः प्रवृत्तिदर्शनं तदपि जाठरविशेषस्याप्रत्यक्षदर्शने तादृशपरामर्शासम्भवादिति बोद्धव्यम्।

॥ प्रत्यक्षकृतकारणत्वनिश्चयस्य दृश्यमात्रपर्यवसायित्वानुमानं तत्खण्डनं च ॥

एवं च यदुक्तं—यो यः प्रत्यक्षकृतः कारणत्वनिश्चयः नासौ दृश्यादृश्यरूपपर्यवसायी, यथा नो जठरजातवेदाः साधारणरूपं परिहरन्। प्रत्यक्षकृतश्चासौ बुद्धिमतीति व्यापकविरुद्धोपलब्धिः। प्रत्यक्षकृतत्वं हि दृश्यविषयत्वेन व्याप्तमदृश्ये तस्याप्रवृत्तेः। तद्विरुद्धं दृश्यादृश्यविषयत्वं तेन व्याप्तेः [न] दृश्यादृश्यपर्यवसायित्वमिति। त[त्र] अदृश्यशब्देन साक्षात्कारिवेदनं प्रत्ययोग्यस्वरूपतैव यदि विवक्षिता, तदा सिद्धसाधनं परमात्मनोऽपि पर(म)ात्मत्वाविशेषात् पर(म)ात्मनश्च साक्षात्कारयोग्यस्वरूपतया उपपादितत्वात्। सन्दिग्धविपक्षव्यावृत्तिकश्च हेतुः साधारणोपाधिप्रवृत्ता व्याप्तिबुद्धिर्देशादिविप्रकृष्टमन्तर्भावयति न स्वभावविप्रकृष्टमित्यत्र नियमकाभावस्य विवक्षि-

---

1. यद्धि मनः यच्छरीरं यानीन्द्रियाणि यस्यादृष्टेनाकृष्टानि तानि तस्यैवेति नियमः।

तत्वान्निरूपितत्वात्। सहकारिविरहापेक्षया त्वदृश्यत्वं भवतोऽप्यभिमतमेव व्यवहित-वह्निपर्यवसानस्य स्वीकारात्।

॥ अदृश्यत्वं परप्रत्यक्षवेद्यत्वमिति परिष्कारे दोषाविष्करणम् ॥

यदि तु—परप्रत्यक्षवेद्यत्वमदृश्यत्वं विवक्षितम्।

परशरीरेऽपि चेतनानुमानं न स्यात्। चेतनमात्रस्य दृश्यतासम्भमात्। चेष्टमानशरीरविकल्पेनाध्यवसीयमानत्वं [तस्य दृश्य]त्वमिति चेत् परमात्मनोऽपि तर्हि प्रचलपलाशादिविकल्पाध्यवसीयमानतैव दृश्यता किं नेष्यते? तत्र परं तादृशा लिङ्गेनानु-मीयत इति चेत्। चेष्टमानशरीरेणापि तर्हि चेतनानुमानमेव भवेद्विशेषाभावात्। किञ्च व्याप्तिग्राहकस्य मानसप्रत्यक्षस्य समर्थितमेव सर्वविषयत्वमिति तदपेक्षत्वात् दृश्य एवे-श्वरो भविष्यति।

॥ कार्यं धीमत्कर्तृकमित्येव व्याप्तिः न दृश्यादिविशेषणस्य व्यापके निवेश इति पक्षः ॥

**यत्पुनरेत**दभिहितम् यदि दृश्यादृश्यं विशेषणमवधूय धीमन्मात्रेण व्याप्तिर्वि-वक्षिता। एवं च यदा बुद्धिमदभावे कुम्भस्य कार्यस्याभावमुपदर्शयेत् व्यतिरेक-प्रतिपादनाय, तदा दृश्यादृश्यविशेषणरहितचेतनमात्रस्याभावः केन प्रमाणेन सिद्धः? दृश्यानुपलब्धेः दृश्यस्यैव प्रतिषेधेऽधिकारात्, अन्यथा तृणादिना व्यभिचारस्या-शक्यपरिहारत्वात्। नच दृश्यपुरुषविषयैवानुपलब्धिः धीमन्मात्रस्य व्यतिरेकबोध-साधनीभवितुमर्हति प्रत्यर्थिकविषयभेदस्य व्यक्तत्वात्। अन्यथा तृणादिजन्मन्यपि दृश्यपुरुषविषये नानुपलब्धिस्तद्व्यभिचारस्थिरीकरणकारणं स्यात्। 'नहि लाभे प्रवेशः, च्छेदे निःसरण'मिति न्यायात्। तस्मात् दृश्यविशेषणापोढपक्षे व्याप्तिग्रहणकाले व्यतिरेकग्रहणोपायापायादव्याप्तेः पुनरपि विपक्षव्याप्तिसन्देह इति।

॥ अस्य पक्षस्याभ्युपगमः ॥

**तदपि** न ह्यवद्यम्। य एव हि विशेषाः प्रातिस्विकेन रूपेणान्वयव्यति-रेकनिश्चयविषयास्त एव साधारणरूपपुरस्कारेणान्वयव्यतिरेकपात्रीभवन्ति अदृश्य-स्यान्वयतिरेकसन्देहेऽपि तज्जातीयमात्रस्य हेतुफलभावमात्रमुपसंहरन्ति कलशकुलाल-वत्। अन्यथा देशविशेषवासिनः चित्रभानोरन्वयासिद्धौ कथं कथा हेतुश्च विनिश्चय(?)

नचाङ्कुरादौ व्यभिचारावधारणप्रसङ्गः। सम्भावितप्रयोजकविशेषनिवृत्तिनिश्चयेनैव हेतोर्व्यभिचारात्। अनुपयुक्तविशेषव्यभिचारकस्तु अनुपयुक्तान्वयवदकिंचित्कर एवेति।

॥ कार्यस्य पुरुविशेषेणान्वयग्रहणात् शरीरिणः अङ्कुरादौ सिद्धिप्रसङ्गः ॥

यदप्युदीरितं—अन्वयोऽपि हि कार्यमात्रस्य कारणमात्रेण गृह्यतामुतस्वित् पुरुषविशेषेण कारणेनेति सन्देह एव। अथ दृष्ट एवायं विशेषः कथं परिहर्तुं शक्यो धूमे दहनवत्; यद्येवं दृश्यशरीररूपो विशेषः कथं परिहर्तुं शक्यश्चित्रभानोर्भासुराकारवत्। स तर्हि विशेष एव कार्येण व्यभिचार्यताम् इति चेत्; व्यभिचार्यताम्। कार्ये कारणवत्। यथा परिदृष्टविशेषनिष्ठ एवान्वयो भवेत् घटवत् सौधादावपि दृष्टत्वादिति किं नः च्छिन्नमिति।

तदप्यसत्। उन्नीतन्यायेन कार्यमात्रस्य कारणमात्रवत्पुरुषविशेषेणाप्यन्वयस्याविशेषात् उभयपरिग्रहोपपत्तेः। कार्येऽपि परिदृष्टविशेषनिष्ठ इति तु तदा स्यात् यदा विशेषसामान्ययोरन्वयव्यतिरेकोऽपवर्गभेदान्निरूप्येत। विशेषश्च सामान्ये नोपाधिरिति निरूपितं प्रागेव। तस्माद्विशेषस्य विशेषवत् सामान्यमपि सामान्यव्याप्यमेवेति युक्तम्।

॥ पर्वतादौ तादृशकर्तृसद्भावो नोपलभ्यत इति शङ्का कर्तृसामान्यानुमानात् तन्निराकरणं च ॥

एतेनैतदपास्तम्। यदुक्तमस्ति च कार्यत्वमुर्वीधरादौ न तु दर्शनातिक्रान्ते कर्तर्यन्वयव्यतिरेकेण स्पृशति [प्रमाणम्] तादृक्चेतनकृतेतरत्वाभ्यां च राश्यन्तराभावात् गन्धादिवदसाधारणानैकान्त एवेति। कार्यमात्रस्य कर्तृमात्रेणान्वयस्य समर्थितत्वात्।

॥ कार्येण कर्त्रनुमाने कर्तृविशेषस्यैव कार्ये विशेषेणानुमानं युक्तं तथैव पटादौ दर्शनादिति मतम् ॥

यदप्युदितं—यथैव हि कार्यविशेषस्य धूमस्यावान्तरजातिमन्तर्भाव्य व्याप्तिग्रहणं नतु तद्विजातीयस्पर्शः तथा बुद्धिमताप्यस्तु वस्त्रादेः, यथाऽत्यन्तविसदृशीरपि जातीरन्तर्भाव्य चेतनेन व्याप्तिं जिघृक्षसि, तथा वह्निनापि गृह्णीयादिन्द्रियप्रत्यक्षस्य व्यापार उभयत्रापि कथं भिन्नां वृत्तिमाश्रयेत्। व्यभिचारदर्शनादर्शनकृतोऽसौ विभाग इति

चेत्। नहि, अव्यभिचारदर्शनस्य सर्वविषयत्वे धूमादपि वह्नेर[न]नुमानप्रसङ्गात्। नियतविषयत्वे तु कार्यकारणभावग्राहकस्यापि प्रत्यक्षस्य नियतविषयत्वसिद्धेः। तस्माद्यदेव शास्त्रसङ्केतादिनिरपेक्षशुद्धवस्तुस्वरूपालोचनज्ञानजनितविकल्पविषयं जातियुगळं यद्वशात् पशवोऽपि (विपाशा)[पिपासा]दिप्रशमन(साध)साधनान्यवधार्य तत्र प्रवर्तन्ते तदेव हेतुफलभावेऽधिक्रियते। नतु कार्यमात्रे।

॥ एतन्मतसाधकन्यायप्रयोगः ॥

प्रयोगस्तु—यद्यत्कार्यकारणभावप्रत्यक्षग्राहिप्रत्यक्षं तद्विशिष्टजातिप्रतिनियतव्यापारं यथाऽग्निधूमयोः तथा चेदं बुद्धिमता कार्यस्य व्याप्तिसाधनमिति स्वभावहेतुः। नचास्यान्यत्र व्यापारशङ्कयानेकान्तः कारणानुपलब्धिबाधितत्वात्। कारणभेदो हि कार्यभेदस्य कारणम्। नचास्य कारणभेदोऽस्ति विषयेन्द्रियालोकादिलक्षणसामग्रीप्रभवत्वादिति। दृष्टान्ते साध्यशून्यताशङ्कायां च यत्प्रत्यक्षं तद्विशिष्टजात्यैव [कार्यकारणभाव]ग्राहि प्रत्यक्षं च व्याप्तिग्राहीति स्वभावत एवानैकान्तपरिहारः। बुद्धिमत्कार्ययोरपि व्याप्तिग्राहिणि धर्मिण्ययमेव प्रयोगः। अथवोभयत्रापि यत्सम्बन्धग्राहि प्रत्यक्षं तद्विशिष्टजात्यैव यथा वाच्यवाचकयोः। सम्बन्धग्राहि च प्रत्यक्षं कार्यकारणयोरिति पूर्ववदिति।

उक्तमतं खण्डयित्वा औपाधिकविकल्पगोचरयोरपि स्वाभाविकविकल्पगोचररूपवत् अन्वयव्यतिरेकनिश्चयात् व्याप्तिनिश्चयः इति सिद्धान्तः ॥

नैदतपि साधु सञ्चक्षते। तथा हि—अस्तु नाम स्वाभाविकविकल्पगोचरीभूतयोरेव रूपयोः कार्यकारणभावनिश्चयगोचरत्वं नैसर्गिकम्। औपाधिकविकल्पगोचरयोस्तु रूपयोः जिज्ञासाक्रमेण समुपजाते सत्य(पि) [वि]प्लुतान्वयव्यतिरेकनिश्चये हेतुफलभावविकल्पालम्बनत्वं भविष्यति, को दोषः? नचैवं सति दहनात्प्राण्य[श्य]द्रव्यमात्रस्य प्रदीपाच्च नीलद्रव्यमात्रस्य निष्पत्त्यवगमः सम्भवी। एवं शत(सू)शोऽत्र व्यभिचारोपलम्भस्य व्यक्तत्वम्। अन्यथा तत्रापि तदुत्पत्त्यवगमो दुर्निवार एव। नापि व्यभिचारगोचरप्रत्यक्षस्यानियतविषयत्वप्रसङ्गः निसर्गतो विषयगोचराव्यभिचारवेदनस्य बाधकस्य सम्भवात् धूमविपरीतं कार्यमनलं विना जायत इत्येव व्यभिचारनिश्चयः सम्भवी। एवं च कारणभेदस्य जिज्ञासादिक्रमेणोपजायमानेषु विवक्षितप्रत्यक्षेषु सम्भवाद्यथोदितप्रयोगगतानां हेतूनां सन्दिग्धविपक्षव्यावृत्तिकत्वम्।

॥ किञ्च प्रमेयत्वाद्यपेक्षया बुद्धिमत्कार्यत्वाभ्युपगमात् सिद्धसाधानापत्तिः ॥

किञ्चेदं सकलमपि सिद्धसाधनं प्रमेयत्वाभिधेयत्वसत्त्वापेक्षया विशिष्टबुद्धिमत्कार्यत्वादिजात्यालम्बनत्वस्याभ्युपगतत्वात्। एवञ्चैतदनवकाशं यदाचक्षते—

सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत्।
सन्निवेशादि तद्युक्ते तस्मात्तदनुमीयते॥ १ ॥

इत्यादि।

॥ कार्यस्य धीमत्कर्तृपूर्वकत्वसिद्धौ तस्याकस्मिकत्वनिवारणम् ॥

तदेवं कार्यमात्रस्य धीमद्धेतुकतास्थितौ।
तदभावे भवत्कार्यं भवेदाकस्मिकं स्फुटम्॥ १ ॥

विपक्षबाधकेनैवं व्यभिचारनिवारणात्।
सन्दिग्धव्यतिरेकित्वमपि नेति व्यवस्थितम्॥ २ ॥

नाप्यनध्यवसितं प्रकृतसाधनं, प्रकृते सङ्गतत्वात्।

॥ कार्यत्वस्य हेतोः बाधितत्वशङ्का तन्निवारणं च ॥

भवतु तर्हि कालात्ययापदिष्टमभूत्वाभावित्वं, वृक्षादौ पक्षीकृते प्रत्यक्षबाधितत्वात् कर्तुरिति चेन्न। प्रत्यक्षयोग्यस्य पराकर्तुः प्रत्यक्षेण बाधनानुपपत्तेः शरीरमेव हि तत्र प्रत्यक्षयोग्यं [तेन] बाधनीयम्। नच तद्बाधनेऽपि तदतिरेकिणो बोधाद्याधारस्य कर्तुर्बाधो भवति। शरीरस्य तद्व्यापकस्यानुपलब्धेः कर्तुरभावविनिश्चय इति चेन्न। व्यापकानुपलम्भस्यानुमानतायां सत्प्रतिपक्षतैव स्यात् नतु बाधः, तस्य प्राबल्यानिरूपणात्। प्रतिपक्षत्वमपि निरसिष्यते। आगमस्त्वनुगुण एवेति वक्ष्यते। ततो न तेनापि बाधः।

॥ उक्तानुमाने सत्प्रतिपक्षशङ्कानिवारणम् ॥

नच सत्प्रतिपक्षत्वमाशङ्कनीयम्। विवादाध्यासितमकर्तृकं शरीराजन्यत्वादाकाशादिवदित्यादौ सोपाधित्वेन शङ्कितव्यभिचारात् आकाशादेरकर्तृकत्वस्याजन्यत्वोपाधिकत्वात्। अत एव तद्व्यापकरहितत्वादिति हेतोरसिद्धत्वं वेदितव्यम्।

शरीरस्य कर्तृव्यापक[त्व]स्य असिद्धेः हेतुमात्रव्यावृत्तिप्रयुक्तत्वान्नभसि सकर्तृकत्वव्यावृत्तेः। न च यद्व्यावृत्तिप्रयुक्त्या यस्य व्यावृत्तिरशक्यनिश्चया तत्तस्य व्यापकमिति शक्यनिश्चयम्।

॥ स्रष्टुः प्रयोजनविरहात् क्षित्यादिकमकर्तृकमिति पूर्वपक्षनिरासः ॥

एतेन कर्तृव्यापकप्रयोजनवैधुर्यादकर्तृकमम्बरादिवत्क्षित्यादीति निरस्तम्। अहेतुकत्वस्योपाधेः सम्भवात्। प्रयोजननिवृत्त्या कर्तृव्यावृत्तेः अम्बरादावपि सिद्धेः। व्यभिचरति च प्रयोजननिवृत्तिरकर्तृकत्वमपि, विदुषोऽप्रयोजकतृणखण्डनादिव्यसनोपलम्भात्। अन्यथा न कुर्वीत वृथा चेष्टामिति निषेधस्याप्यनर्थकत्वात्। असिद्धा च प्रयोजनव्यावृत्तिः क्षित्यादौ। यो यमर्थमधिकृत्य प्रवर्तते स तस्य प्रयोजनम्। प्राणिनां च भोगापवर्गावधिकृत्य जगद्बिम्बं विरचयतस्तदेव प्रयोजनं भविष्यति। को दोषः? नच सुखप्राप्तिर्दुःखपरिहारो वा स्वीयं प्रयोजनमिति शक्यं नियन्तुं, तयोः परस्परव्यभिचारिणोरपि पुरुषोद्देश्यत्वेन प्रयोजन (व) दपरस्यापि तथाभावेन प्रयोजनत्वे विरोधानुपलब्धेः। नच प्रयोजनमुद्दिश्य प्रवर्तमानस्यानाप्तकामत्वं दोष इति वाच्यम्। यस्मादभिप्रेतप्रयोजना(सिद्धि)[द्भाव]मनाप्तकामत्वदूषणम्। भगवांस्तु यद्यथाभिप्रैति तत्तथा तस्य सिध्यत्येवेति कथमस्यानाप्तकामत्वदोषोपपत्तिः। तस्मात्सप्रयोजनकत्वेऽपि जगत्सर्गस्य विरोधाभावात् न प्रयोजनव्यावृत्त्यापि प्रकृते कर्तृव्यावृत्तिरिति सिद्धम्।

॥ अशरीरत्वेन ईश्वरस्याकर्तृत्वानुमाननिरासः ॥

यत्तु नेश्वरः कर्ता अशरीरत्वान्मुक्तात्मवदित्यादि(क)[त]स्य धर्म्यसिद्धावाश्रयासिद्धेः, तत्सिद्धौ च तद्ग्राहकप्रमाणविरोधात् अनुदय एवेति वेदितव्यम्।

॥ क्षित्यादिकं नेश्वरकर्तृकं प्रमेयत्वादित्यनुमाननिरासः ॥

यदप्याचक्षते—क्षित्यादिकमीश्वरकर्तृकं न भवति, प्रमेयत्वाददस्मदादिनिर्मितेतरत्वाद्वा गगनवदित्यादि तत्रापि प्रमेयत्वास्मदादिनिर्मितेतरेतरत्वादेरीश्वरकर्तृकत्वेन विरोधासिद्धेः सन्दिग्धानैकान्तिकत्वं सन्दिग्धबाधितविषयत्वं वा वेदितव्यम्। विस्पष्टं चोपाधिरेतादृशेष्वकार्यत्वमित्युदितम्। सर्वत्र चेश्वरप्रतिषेधहेतौ बलवता कार्यानुमानेनैव बाधितविषयत्वं विज्ञेयम्। बलवत्त्वं च तस्य विपक्षविरोधेन व्याप्तेः समर्थितत्वात्।

**सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वात्। ततः सामान्यसिद्धौ परिशेषात्कार्यविशेषाच्च कर्तृविशेषसिद्धिः, चित्रादि कार्यविशेषात्तत्कर्तृविशेषसिद्धिवत्।**

---

तदेतत्सर्वमभिप्रेत्याह—**सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वादिति।**

स्यादेतत्। क्षित्यादेरभूत्वाभावित्वादुपलब्धिमत्कारणत्वसिद्धावपि कथमस्मदादिविलक्षणः कर्ता सिद्ध्यतीत्यत आह—**ततस्सामान्यसिद्धौ परिशेषात् कर्तृविशेषसिद्धिरि**त्यन्वयः। परिशेषस्तु केवलव्यतिरेक्येव [इति] समर्थितं तत्प्रस्तावे। तथा चाभिहितं **श्रीन्यायभूषणे** "कथं तर्हीश्वरत्वादिविशेषसिद्धिः व्यतिरेकबलेनेत्यादि।"

॥ जीवेन सिद्धसाधननिवारणम् ॥

कथं पुनरस्मदादिकर्तृप्रतिषेधो येन कार्यविशेषस्येश्वरपूर्वकत्वादृष्टावपि परिशेषात्तत्सिद्धिरित्यत आह—**कार्यविशेषादिति।** तदेव दृष्टान्तेन प्रतिपादयति—**चित्रादिकार्यविशेषात्तत्कर्तृविशेषसिद्धिवदिति।** यथा खलु परिदृष्टचित्रकारकरविरचितविचित्रचित्रेभ्यो विलक्षणं चित्रमुपलभ्य परिदृष्टकर्तृविलक्षणमेव नैपुणभेदभागिनं चित्रकर्तारमनुमिन्वन्ति। तथा शरीरिविरचितवस्त्रादिविलक्षणं मलयमकरालयादिकमुपलभ्य तन्निर्माणनिपुणनित्यसर्वविषयवेदनभागिनमशरीरमनुमिमीमहे। न खल्वपरिमेयानियतदिग्देशपरिवर्तीन्द्रियगोचरातीन्द्रियस्थावरजङ्गमादि कार्याणामपर्यायमेव निर्माणमसति सार्वज्ञ्ये सम्भवति। नच सर्वविषयमपि माहेश्वरं वेदनं देहाद्युत्पादनीयमिति शङ्कनीयम्। देहाद्युत्पत्तेः पूर्वमीश्वरस्याचेतनत्वे तत्कालीनकार्यकलापनिर्माणायेश्वरान्तरप्रसक्तेः। तथा सति पूर्वपूर्वतरादिकार्यनिर्मातृनानाविधालौकिकपुरुषपरिकल्पनाद्वरमलौकिकबुद्धिनित्यत्वकल्पनम्।

॥ ईश्वरज्ञाने नित्यत्वसर्वविषयत्वादिसिद्धिप्रकारः तस्याशरीरत्वोपपत्तिश्च ॥

अत एव शरीरेन्द्रियनित्यत्वपरिकल्पनमपि परास्तावकाशं, गौरवात्। अत एवास्मदादिनिर्मेयवसनादिविषयमपि तद्वेदनमभ्युपेयम्। अन्यथा तस्याप्यनिष्पत्तेः। कुविन्दादेरदृष्टाद्यधिष्ठाननैपुणविरहेण कर्त्रन्तरस्यापि तद्वेदितुरवश्याश्रयणीयत्वात्।

उर्वीपर्वतादिनिर्मात्रैव तस्याप्युपपत्तौ कर्त्रन्तरकल्पनस्यानवकाशात्। तस्मात् क्षित्यादि[कर्ता एक एव] नित्यसर्वविषयवेदनादिमान् लाघवतर्कसहायादभूत्वाभावित्वादवसीयते। तथा **चाचार्योऽपि**—स एव हेतुः प्रतिपक्षप्रतिषेधप्रमाणैः उपस्कृतः सर्वज्ञत्वादिविषयत्वेन व्यवतिष्ठमानः केवलव्यतिरेकी भवतीति वर्णयामास।

॥ नित्यसर्वज्ञेश्वरे न्यायप्रयोगः ॥

तथा च प्रयोगस्तथा च क्षित्यादिकं नित्यसर्वविषयवेदनेच्छाप्रयत्नाधारहेतुकं विपक्षे बाधकोपपत्तौ सत्यामभूत्वाभावित्वात्। यदुक्तसाध्यं न भवति न तदुक्तसाधनं, यथा गगनम्। यद्वा सर्वं कार्यं सर्ववित्कर्तृकं कादाचित्कत्वात् व्यतिरेकमुखेन स एव दृष्टान्तः।

॥ तत्रैव न्यायप्रयोगान्तरम् ॥

यद्वा भुवनस्य निर्माता नित्यसर्वविषयबुद्धिमान्, तन्निर्मातृत्वात् वैधर्म्येण कुलालो दृष्टान्तः। यदि मतं भगवाननित्यासर्वविषयबुद्धिमान् बुद्धिमत्त्वादस्मदादिवदिति प्रतिपक्षोऽप्यस्तीति। मैवम्। धर्मिग्राहकप्रमाणविरोधात्। अन्यथाऽऽश्रयासिद्धेः विज्ञाननित्यत्वमात्रेऽपि व्यतिरेकी भवति, नित्यज्ञानाश्रयो भगवान् निरतिशयकर्तृत्वात् व्यतिरेकमुखेनास्मदादिर्दृष्टान्तः। यथा चाप्रसिद्धविशेषणत्वं न दूषणं व्यतिरेकिणि, तथोपपादितं तत्प्रस्तावे। विपक्षे बाधकमुक्तम्।

॥ ईश्वरस्य नित्यदुःखाङ्गीकारप्रसक्तिनिवारणम् अनित्यज्ञानसिद्धिनिवारणं च ॥

अत एव तदनाशङ्कनीयं निरतिशयकर्तृत्वादेव नित्यदुःखाद्याश्रयत्वमपि प्रसक्तमिति। न खलु विपक्षादर्शनमात्रेणाव्यभिचारसिद्धिरिष्टा। किं तर्हि? विपर्ययबाधकेन। नच [तदस्ति]। नित्यदुःखाद्यभावेऽपि नित्यत्वं व्याख्यातम्। नच वचनीयं माहेश्वरं विज्ञानादि अनित्यं ज्ञानादित्वात् अस्मदादिज्ञानादिवदिति। नित्यज्ञानाश्रयत्वनिरतिशयतत्कर्तृत्वयोः प्रतिबन्धसाधकेनैव बाधितत्वात्। एतस्य च विपर्ययबाधकवैधुर्येण प्रतिबन्धासिद्धेः। अत एव विभुविशेषगुणत्वादेरप्रामाण्यं द्रष्टव्यम्।

॥ कार्यत्वानुमाने पक्षधर्मताबलात् ईश्वरे सर्वज्ञत्वाद्यशेषधर्मसिद्धिरिति मतम् ॥

**अपरे** पुनरादिममेवान्वयव्यतिरेक्यनुमानं पक्षधर्मताबलात् सर्वज्ञत्वाद्यशेषविषयमपीति मन्यन्ते। द्वे खलु साधनस्य स्वरूपे, व्याप्तिः पक्षधर्मता चेति। तत्र

व्याप्तिबलात्साध्यसामान्यप्रसिद्धौ भवन्त्यां पक्षधर्मताबलादनधिगतोऽपि विशेषः प्रसिध्यतीति सर्वानुमानसाधारणोऽयं वृत्तान्तः। सत्यं, तथापि व्याप्तिग्रहणसमसमयोपलब्धसमानाकारमेव विशेषं पक्षविपरिवर्तिनमनधिगतंमधिगमयति[1] पक्षधर्मता, न पुनः पावके पञ्चवर्णशिखाकलापादिकमपि। तत्कथमिहापि सर्वज्ञतादेरत्यन्तापूर्वस्याक्षेप इति चेत् अवधार्यतामिह राद्धान्तरहस्यं **नैयायिकानां**—यत्र व्याप्त्यवसायसमसमयसमधिगतसमानरूपमेव विशेषमुपादाय [साध्यं पर्यवस्यति तत्र तादृशमेव साध्यम्]। यत्र तु तावता न पर्यवस्यति सामान्यं तत्रापूर्वमपि विशेषं अनधिगतमाक्षिपति पक्षधर्मता। अन्यथा साध्यसामान्यस्यैवापर्यवसाने सति तदनुमानस्याप्रामाण्यप्रसङ्गात्। तत्रापि यथा यथा साधनमनुगृह्णाति तर्कस्तथा तथा प्रकृतसाधनादेव विशेषप्रतिलम्भः।

॥ कर्तुरेकत्वोपपत्तिः ॥

ततश्चैतदपास्तम्। कार्य(ा)कर्तृमानेऽपि[2] कथं एक एव नानाकार्यकर्तेति शक्यं निश्चेतुमिति। कर्तृनानात्वे प्रमाणाभावात्। एककल्पनया विना द्वितीयकल्पनानुपपत्तेः। एकेनाप्यनुपपत्तिपरिक्षयाल्लाघवतर्कसहायात्प्रकृतसाधनादेव कर्तुरेकत्वमपि लभ्यत इति। अत एव सल्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भाव इति **काश्यपीयं** (1-2-17) सूत्रमुपपन्नार्थम्।

एवं च सति निरवकाशमेव केवलव्यतिरेक्यनुमानम् अन्वयिन एवाष्टद्रव्यव्यतिरेकादेरपि सिद्धिसम्भवादिति पक्षममुं प्रतिक्षिपन् **किरणावल्यामुदयनः** प्राह।

॥ आकाङ्क्षानुपपत्तिभ्यां विशेषावगमः नतु पक्षधर्मताबलादिति तत्खण्डनम् ॥

तदसत्। आकाङ्क्षानुपपत्तिभ्यां विशेषव्यवस्थापनात्। शब्दो हि यावतान्वयिनमुपैति तावन्तमर्थमनासाद्य प्रतीतेरपर्यवसानम्। आकाङ्क्षाभावोऽ[3]वधिरन्वयिनः शाब्दप्रतीतौ पर्यवसितायां क्वचिद्विशेषमार्गान्तरबोधो[बा][4]नुपपत्ति[तः] तावती च सीमा व्यतिरेकिणः। तदत्र नगादिद्व्यणुकपर्यन्तपक्षीकरणे तत्कारणपरमाण्वादि-

---

1. मा-अपि गमयति
2. कार्येण कर्त्रनुमानेऽपि
3. न—भावोः मा
4. —बाधा-मा

**एको रुद्रो न द्वितीयाय तस्थे, य इमान्लोकानीशत ईशिनीभिः इति ।**

---

विषयज्ञानं यदि न स्यात् कः शब्दार्थो नगसागरादि [स]कर्तृकमिति ; परिदृष्टकारकसामर्थ्यप्रयोक्तुः कर्तृशब्दवाच्यत्वात् । एवं सर्गादिकार्यपक्षीकरणे । तत्काले च यदि शरीराद्यपेक्षं ज्ञानं, कोऽर्थः शरीरादिकार्यं बुद्धिमत्कर्तृकमिति ? सर्गसन्निहितो हि शरीरेन्द्रियविषयग्रामविरहोपलक्षितः कालः सर्गादिरित्युच्यते । तस्माद्विशेषप्रतीत्यपर्यवसानादिह न पक्षधर्मतासहायात्कार्यत्वादेर्नित्यसर्वज्ञकर्तृसिद्धिः ।

इच्छादयः क्वचिदाश्रिताः कार्यत्वाद्गुण(व)त्वाद्वेत्यत्र त्वष्टद्रव्यातिरिक्तपारतन्त्र्यमप्रतीत्य शब्दार्थो न प्रतीयत इति नास्ति। नह्याश्रयादिशब्दाः क्षित्याद्यतिरिक्तार्थाः क्षित्यादिविरुद्धार्था वा, येन तत्प्रतिनियमेनेच्छादिपदार्थानामन्वये प्रमाणान्तरबाधपर्यालोचना, [न]त्वनुपपत्तिरित्यन्यदेतत् । तदेवमनवद्या तावदनुमानादीश्वरसिद्धिः ।

॥ ईश्वरसद्भावे आगमप्रदर्शनम् ॥

आगममप्याह—

**एको रुद्रो न द्वितीयाय तस्थे**
**य इमान् लोकानीशत ईशनीभिः ।**

**इत्यागमाच्चेति ।** अत्र ह्येक एव भगवानशेषजगदीश्वरो निश्चीयते । तथा 'विश्वतश्चक्षुः' इति मन्त्रः[1] उदाहर्तव्यः । इह विश्वतश्चक्षुरिति सर्वज्ञत्वं समर्थितम् । चक्षुःपदेन साक्षात्कारिवेदनस्योपचरितत्वात् । 'विश्वतो मुखः' इति सर्ववक्तृत्वं, मुखेन वाचामुपचारात् । 'विश्वतो बाहु'रिति सर्वसहकारित्वं बाहुपदस्य सहायमात्रपरत्वात् । 'विश्वतस्पा'दिति विभुत्वं, पदा प्राप्त्युपचारात् । 'बाहुभ्या'मिति धर्माधर्मयोः प्रधानतया कारणत्वमभिधीयते । तौ हि लोकयात्रां बाहू इव वहत इति । परमाणवश्च पतन्ति गच्छन्तीति पतत्रव्यपदेशभागिनः । संधमति सञ्जनयन्निति व्यवधानेन समः सम्बन्धो वेदितव्यः । तथा च परमाणुभिर्द्यावाभूमी सञ्ज-

---

1. इह विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः—इति श्रुतिरुदाहृता ।

नयन् समुत्पादयन्, धर्माधर्माभ्यां परमाणून् संधमति संयोजयतीत्यर्थः। इह च द्यावेत्यूर्ध्वसप्तलोकोपलक्षणम्। भूमीत्यधस्तात्। एक इतीश्वरभेदापाकरणम्। तथा च "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इत्याद्युदाहर्तव्यम्। स्मरन्ति च महर्षयः—

प्रशासितारं सर्वेषामणीयांसमणोरपि।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्॥ १॥ इत्यादि।

॥ वेदस्य भूतार्थे प्रामाण्यव्यवस्थापनम्॥

न च भूतार्थे प्रामाण्यमेव नास्त्यागमस्येति साम्प्रतम्। स्वर्गादि[पद]मुपादाय परमेश्वरेऽपि शक्यवचनत्वात्प्रामाण्यस्य। विधिशेषतयैव तत्र प्रामाण्यं न स्वरूपपरतयेति चेत्। भवतु तर्ह्युपासनाविधिपरत्वेनैव परमेश्वरेऽपि प्रामाण्यमिति समानम्। कुतश्च कार्यपरत्वेनैव सर्वशब्दानां प्रामाण्यम्? व्यवहारतः कार्यान्वितस्वार्थ सर्वशब्दानां सङ्गतिग्रहणादिति चेत्। तदेतत्समयमात्रम्। यद्यपि व्यवहार एव व्युत्पत्तावादिमार्गः तथापि योग्येतरान्वितमित्येव पदसामर्थ्यप्रयोजकं भविष्यति। तावतैव प्रयोगप्रत्ययोपपत्तौ न कार्यस्यापि समस्तपदसामर्थ्यप्रयोजकतायां प्रमाणमस्ति। येनापि हि कार्यान्वयाभिधायित्वं शब्दानामभ्युपगम्यते, तेनाप्यभ्युपगम्यत एव तावदर्थान्तरान्विताभिधायित्वम्। तावता च कार्यान्विताभिधानस्याप्युपपत्तेः न शक्या कार्यस्यापि सकलपदसामर्थ्यप्र(तियोगि)[योजक]ता कल्पयितुं, गौरवात्।

॥ व्युत्पत्तिकाले पदानां कार्यान्वितार्थबोधकत्वात्सर्वत्र तथेति शङ्का॥

स्यान्मतम्। व्युत्पत्तिदशायां सर्वत्र कार्यान्वय[ा]व्यभिचारात् संव्यवहारेषु तदन्विताभिधायिता न शक्या हातुमिति। हन्त! भावार्थकार्यान्वयस्यैव लोके सर्वत्राव्यभिचारात् तदन्वितस्वार्थबोधकता पदानां नियता प्रसज्येत। तथा च वेदे भावार्थातिरेकिनियोगापरपर्यायकार्यान्वितार्थधीजनकता हता बत तपस्विनी पदानामिति प्रसज्येत।

॥ अन्यान्वितस्वार्थबोधकत्वं पदानामिति सिद्धान्तेऽपि आनन्त्यापादनम्॥

**यदपीदम्**—अन्यान्वितसामर्थ्यमङ्गीकुर्वतामन्यपदार्थानन्त्येन तदन्वितानामप्यानन्त्यात् बहुविषयता पदसामर्थ्यस्यापद्यत इति। तत्राप्येतदेव वाच्यम्।

**संसारफलोपभोक्ताऽनन्तोऽपरः ।**

---

कार्यान्वितगोचरपदसामर्थ्याङ्गीकरणेऽपि कार्याणां भावार्थतद्व्यतिरेकिणामानन्त्यात् मा भूद्बहुविषयं सामर्थ्यमिति भावार्थकार्यान्वितविषयमेव तदाश्रीयेतेति । नच सङ्गत्यधिगम(सम)समये भावार्थातिरेकिणः कार्यस्याशक्याधिगमतया तद्व्यवच्छेदाय भावार्थेन प्रयोजकं विशिनष्टीति युक्तम्, तदतिरेकिणीनामपि द्रव्यगुणव्यक्तीनां कार्याणामुपलम्भात् । नो खल्वपूर्वस्यापि ताभ्यो विशेषः कार्यतायां विचारं सहते । यदि पुनः प्रयोजकगतगौरवपरिहाराय भावार्थमनादृत्य कार्यान्वितमात्रं प्रयोजकमाश्रीयेत । आश्रीयतां तर्ह्यन्यान्वितमेव प्रयोजकं ततोऽपि लघीयः । केवलव्यतिरेकाभावश्च भावार्थकार्ययोः तुल्य एव ।

॥ कार्यवाचिपदे कार्यान्वयाभावात् नियमद्वयाङ्गीकारगौरवम् ॥

किंच—कार्यस्य कार्यान्तराभावादन्यान्विते स्वरूपे, स्वरूपे वा सामर्थ्यमितरेषां तु कार्यान्विते सामर्थ्यमिति प्रयोजकद्वयाङ्गीकारगौरवप्रसङ्गादपि योग्येतरान्विते सामर्थ्यमित्येकमेव प्रयोजकमुपादेयम् । एवं च लोके भूतार्थपरः पदसमभिव्याहारः सर्वोऽपि लाक्षणिक इत्यपाकृतम् । प्रयोगोऽप्यत्र भवति—विवादपदानि, पदानि न कार्यान्वित(स्या)[स्वार्थ](।)नियतसामर्थ्यानि, पदत्वात् कार्यपदवदिति । विपक्षे बाधकमुदितम् ।

तस्माद्व्युत्पत्तिसाम्येन प्रामाण्यं सिद्धकार्ययोः ।
समानमेव शब्दानामिति न्यायविदो विदुः ॥ १ ॥

॥ जीवात्मनिरूपणम् ॥

तदेवं परमात्मा निरूपितः । सम्प्रत्यपरमात्मानं यथाभिप्रेतप्रमाणेनोपपादयितुमुपदर्शयति—**संसारफलोपभोक्ताऽनन्तोऽपर इति** । धर्माधर्मवशीकृतस्य नानादेहेषु संसरणमुपादानापरिहारात्मकः संसारः । तस्य फलं[1] स्वाश्रयसुखदुःखप्रध्वंसः । तस्योपभोक्ता साक्षात्कर्ता यः सोऽपर आत्मेत्यभिधीयते । स चानन्तः । तस्य च कालतस्तत्रानन्त्यमविनाशित्वं, देशतो विभुत्वं, सङ्ख्यातश्चेयत्ताविरह, इति । तस्य

---

1. बहुव्रीहिरयम्

**स खलु बुद्ध्यादिकार्याणामाश्रयभूतोऽनुमातव्यः। नहि कार्यमनाधारं किञ्चिदुपलभ्यत इति।**

---

सद्भावे तावत्प्रमाणमाह—**स खलु बुद्ध्यादिकार्याणामाश्रयभूतोऽनुमातव्य इति।** बुद्धेरादयो बुद्ध्यादय इच्छाप्रभृतयः। तथा च सूत्रं—इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मलिङ्गमिति। वैशेषिकपाठापेक्षया पुनः बुद्धिरादिर्येषामिति योजनीयम्। तत्रानुमानबीजं व्याप्तिमाह—**नहि कार्यमनाधारं किञ्चिदुपलभ्यत इति।** तदेवं प्रयोगमार्गमधिरोहति—बुद्ध्यादयः क्वचित्समवेताः कार्यत्वात् घटवदिति। नच बुद्धेः कार्यत्वमसिद्धमिति शङ्कनीयम्। तद्भावभावित्वेनेन्द्रियादिकार्यत्वस्य विनिश्चितत्वात्। नच वचनीयं विषयावच्छेद एवेन्द्रियादिद्वारको भवति; वित्तिः पुनरभिन्नैव कालत्रयेऽपि तस्याऽऽजानतोऽभि[न्नै]वावभासते।

॥ बुद्धेरुत्पत्तिविनाशनिरूपणम् ॥

साक्षात्कारादिधर्माणामुदयव्ययोग्यता।
न वित्तेरिति चेन्नैवं कल्पना हि गरीयसी ॥ १ ॥

तथा हि तेषु धर्मेषु जननव्ययभागिषु।
पुनस्तेष्वेकशब्दादिप्रवृत्तिर्जातितो भवेत् ॥ २ ॥

तथा च बुद्धिस्तद्धर्मा उदयव्यययोगिनः।
तेषु जातिरनेकेति वृथा व्यसनसन्ततिः ॥ ३ ॥

वित्तिव्यक्तय एवामूर्नानाजातिविमिश्रिताः।
उदयव्यययोगिन्य इति लघ्वी प्रकल्पना ॥ ४ ॥

अन्तःकरणवृत्तीनामापरोक्ष्यादिभेदतः।
भिन्नेव भासते वित्तिरभिन्नापीति चेन्मतम् ॥ ५ ॥

नानुभूत्यनुमानाभ्यामन्तःकरणवृत्तयः।
भासन्ते संविदो भिन्ना, येनैषा कल्पना भवेत् ॥ ६ ॥

अन्तःकरणवृत्तीनां कल्पनं च मुधा यथा।
तथा निरूपितं पूर्वं स्वसंवित्तिनिराकृतौ ॥ ७ ॥

**नचेन्द्रियाणामाश्रयत्वमुपहतेन्द्रियविषयस्मरणायोगात्, अन्यानुभूतेऽर्थेऽन्यस्य स्मरणादर्शनात्। अत एव शरीरस्य बाल्यकौमारादिभेदभिन्नत्वादस्मरणम्।**

---

द्रष्टुर्दृष्टेर्विलोपस्तु नास्तीति श्रुतिराञ्जसी।
निःश्रेयसोपयोगिन्यां नित्यसंविदि सेत्स्यति॥ ८॥

निःश्रेयसाधिकारे हि नित्यमानन्दवेदनम्।
आत्माधारमनुत्पाद्यं शास्त्रेण स्थापयिष्यते॥ ९॥

तस्मात्कार्यैव संवित्तिः संसारान्तरवर्तिनी।
मानासिद्धिरतो नास्ति हेतोरित्यतिमङ्गलम्॥ १०॥

॥ बुद्धेः आत्माश्रितत्वकथनम्॥

स्यादेतत्। बुद्ध्यादेः साश्रयत्वेऽपि भवत्विन्द्रियाश्रयत्वं, कृतमतिरिक्तेनात्मनेत्यत आह—**नचेन्द्रियाणामाश्रयत्वं** युक्तम्। कस्मात्? **उपहतेन्द्रियस्य विषयस्मरणायोगादिति।** यदा हि चक्षूरूपमुपलभ्य विनष्टं, तदा तस्योपहतेन्द्रियस्य विषये स्मृतिः न भवेत्। तत्र हेतुमाह—**अन्यानुभूते[र्थे]ऽन्यस्य स्मरणादर्शनात्।** अन्यथाऽतिप्रसङ्गादिति शेषः। भवतु तर्हि शरीरमेवानुभवस्मरणयोः क्रमेणाश्रय इत्यत आह—**अत एव शरीरस्यापि बाल्यकौमारादिभेदभिन्नत्वादस्मरणमिति।** अत एवेति, अन्यानुभूतेऽन्यस्मरणायोगादेवेत्यर्थः।

॥ परिमाणभेदात् बालयुववृद्धादिशरीरभेदः॥

कथं पुनर्बालादिशरीराणां भेदो निश्चीयते। भवति हि प्रत्यभिज्ञा तदेवेदं शरीरमिति। सत्यं, विरुद्धपरिमाणाधिकरणत्वेन भेदसिद्धौ प्रदीपादाविव प्रत्यभिज्ञा भ्रान्ता भविष्यति। तथा च प्रयोगः— विवादाध्यासिते परिमाणे भिन्नाधिकरणे हीनाधिकपरिमाणत्वात् घटशरावपरिमाणवत्। एकाधिकरणत्वे तु सहोपलम्भप्रसङ्गात्। प्राचीनपरिमाणं नष्टमिति सहोपलम्भो न भवेदिति चेत्; हन्तैवमाश्रयविनाशोऽप्यवश्याश्रयणीयः। तदेककारणत्वात्परिमाणविनाशस्य। विवादपदं परिमाणमाश्रयविनाशादेव

विनश्यति, विनाशिपरिमाणत्वात्, मुद्गरादिहतघटपरिमाणवदिति। विपर्यये तु कार्यकारणभावग्राहकप्रमाणभङ्गप्रसङ्गो बाधक इति वेदितव्यम्।

॥ मनसः ज्ञानाद्यनधिकरणत्वनिरूपणम् ॥

यदि मतं माभूद्देहेन्द्रियसमवायिता बुद्ध्यादेः। मनसस्तु सर्वावस्थानुयायिनः क्रमेणानुभवस्मरणाद्यधिकरणत्वोपपत्तेः तदाश्रया एव बुद्ध्यादयः सन्त्विति। नैवम्। मनसोऽपि करणत्वात् (व्याप्या)[वास्या]दिवत्तदाश्रयत्वानुपपत्तेः। करणत्वं च तस्य धर्मिग्राहकप्रमाणसिद्धम्। नच कर्तृकरणयोः एकतासिद्धिः। एकत्र स्वातन्त्र्यपारतन्त्र्यविरोधात्। किञ्च मनसोऽणुत्वं प्रसाधितं प्रसाधयिष्यते च बोद्धुर्विभुत्वमिति विवेकसिद्धिः। यदि तु मनस एव विभुत्वमास्थाय विज्ञानाद्याश्रयत्वमिष्यते, तथापि विज्ञानोत्पादक्रमनियमेन यथा निरूपितमन्तःकरणमाश्रयणीयमिति, नाम्नि विप्रतिपत्तिः नार्थे। तस्माच्छरीरेन्द्रियाणां प्रसक्तानां प्रतिषेधे सत्यन्यत्र प्रसङ्गाभावाद्य एतेभ्यो व्यतिरिक्त आश्रयो बुद्ध्यादेः सेत्स्यति स एवात्मेति गीयते।

॥ अतिरिक्तात्मसद्भावेऽनुमानप्रयोगः ॥

तथा च प्रयोगः—बुद्ध्यादयः शरीराद्यतिरिक्ताश्रयाः तत्रानुपपद्यमानवृत्तित्वे सति कार्यत्वात् यदेवं न भवति न तदेवं यथा रूपादि।

॥ शरीरमेवात्मेति चार्वाकमतानुवादः ॥

**नास्तिकः** पुनरनुमानप्रामाण्यमनङ्गीकुर्वाणः प्रागेव प्रतिबोधित इति न प्रस्मर्तव्यः। किंचानुमानचिन्तया? प्रत्यक्षमेव प्रत्यभिज्ञासंज्ञापदं देहातिरेकिणमहङ्कारास्पदमात्मानमावेदयति। तथा चावोच**दाचार्यवाचस्पतिः**—"स्वप्ने दिव्यं शरीरभेदमास्थाय तदुचितान् भोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन् नाहं देवो मनुष्य एवेति देवशरीरे(ऽपि) बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते। अपि च योगव्याघ्रः शरीरभेदेऽपि आत्मानमभिन्नमनुभवतीति नाहङ्कारालम्बनं देहः। अत एव नेन्द्रियाण्यप्यस्यालम्बनम्। इन्द्रियभेदेऽपि योऽहमद्राक्षं स एवैतर्हि स्पृशामीत्यहमालम्बनस्य प्रत्यभिज्ञानात् इति (भा. 1-1-1)।

**एतेन पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्यकारणभावात् स्मरणमपास्तम् । अन्यत्वावञ्चनात्(विशेषात्) इति ।**

**कार्पासे रक्ततावत्स्यादिति चेन्न, साधनदूषणसम्भवात् ।**

---

॥ बुद्धिधारानुवृत्त्या प्रत्यभिज्ञानमिति सौगतमतम् ॥

सौगताः पुनः परिलूनपुनर्जातकेशप्रत्यभिज्ञानादनतिशयभाजमाश्वासकरीमिमां प्रत्यभिज्ञां अभिहन्यमानामनुभवमन्यं च सिद्धावपश्यन्तः कायचित्तक्षणपरम्परामात्रमगृहीतविवेकमहंकारास्पदमाचक्षमाणाश्शरीरभेदेऽपि कथंचिद्बुद्धिधारानुवृत्तिनिबन्धनं प्रत्यभिज्ञानमभिदधति ।

॥ सुगतमतदूषणम् ॥

तेषामसति स्थिरवस्तुनि स्मृतिप्रत्यभिज्ञानफलोपभोगाः कथं व्यवतिष्ठन्ताम्? सर्वथापि व्यवस्थापकविरहे तिस अनुभवितरि कर्तरि वैकस्मिन् विनष्टे समयान्तरसम्भविस्मरणादिकं सन्तानान्तरेऽपि कथं भवेदिति । परम्परयापि कार्यकारणभावो नियामक इति चेन्न । शिष्याचार्यधियोरपि तथाभावसम्भवेन तस्यानियामकत्वात् । तदिदमाह— **एतेन** अन्यानुभूतेऽन्यस्मरणायोगादिति न्यायेन, **पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्यकारणभावात् स्मरणमपास्तम् । अन्यत्वावञ्चनादिति ।** इदमुक्तं भवति— बुद्ध्यन्तरे खल्वनुभवितरि बुद्ध्यन्तरस्य स्मृतिजनकत्वाभावे ततोऽन्यत्वं साधनमभिप्रेतं सन्तानान्तरे तथा [दर्शनात् । अ]न्यत्वरूपं साधनं कार्यकारणभाववचनेनापि न वञ्चितं न दूषितं भवतीति । स्मरणग्रहणं तु समानन्यायतया प्रत्यभिज्ञानफलोपभोगयोरप्युपलक्षणमिति मन्तव्यम् ।

॥ कार्पासबीजे लाक्षारसावसेकात् पुष्पेषु रक्ततोत्पत्तिदृष्टान्तस्यान्यथोपपत्तिः ॥

परमतमाशङ्कते — **कर्पासे रक्ततावत् स्यादिति चेदिति ।** यथा खलु लाक्षारसावसेकाहितसंस्कारकार्पासबीजप्रभावितायामेवाङ्कुरादिसन्ततौ तदाकारकार्पासप्रसूनादिप्रसवस्तथा यस्यामेव सन्ततावाधत्ते वासनामनुभवादिस्तत्रैव स्मरणादिप्रसवो न सन्ताना(दिरि)[न्तर इ]त्यर्थः । परिहरति— **न साधनदूषण[संभवात्]** (र्थः) । किमनेनोपन्यासेन स्वपक्षे किञ्चन साधनमभिहितं भवति? उतास्मदभिप्रेतस्य साधनस्य किञ्चन दूषणमभिहितमिति (विज्ञायाने)[न विज्ञायते, नै]कत्रापि इदं वचनं पर्यवसितं

## अन्वयाभावान्न साधनं, असिद्धत्वाद्यनुद्भावनाच्च न दूषणम् ।

पश्याम इति तदेव स्पष्टयति—**अन्वयाद्यभावात् न साधनमसिद्धत्वाद्यनुद्भावनाच्च न दूषणमिति ।** अस्यार्थः । अन्यानुभूतेऽन्यस्य स्मरणप्रसवः कार्यकारणभावात्कार्पासे रक्ततावदित्येवमन्यथा वा ? कस्यचित्साधनस्यान्वयस्तावन्न सम्भवति। नापि यत्र न स्मृत्यादिस्तत्र (न) कार्यकारणभावव्यतिरेक इति प्रकृतवचसा प्रतिपादितो भवति। न च पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धीनां स्मृतिर्न सम्भव(ती)ति ततोऽन्यत्वात्सन्तानान्तरबुद्धिवदित्यस्य हेतोः कश्चिदसिद्धत्वाद्यन्यतमो दोषः प्रतिपादितो भवतीति । तस्माद्युक्तं साधनदूषणासम्भवादिति ।

॥ सन्ताने फलदायकत्वं संस्काराणामिति ज्ञानश्रीमिश्रमतम् ॥

यत्पुनरिह **ज्ञानश्रीमिश्रेण** साधनमुन्नीतं—यो यः संस्कारः क्वचित्सन्तान आहितः स तत्रैव फलदानयोग्यः नान्यत्र । यथा कार्पाससन्ताने बीजावस्थायां रागद्रव्ययोगजनितः पुष्पावस्थायां फलावस्थायां वा रागफलमुन्मील(यति)[यितुं] योग्यः (न्यो)[ना]न्यसन्ताने । (संस्तार) [सन्तान] श्चायं दानादिकर्मजनितश्चित्तसन्तान, इति स्वभावहेतुरेव समुदायसाध्यापेक्षया। संस्कारमात्रानुसम्बन्धिनी हि तत्सन्ताने फलदानयोग्यता अन्यसन्ताने सर्वदा तदयोग्यता चेति निमित्तानपेक्षणात् । एकैकसाध्यत्वे तु प्रथमे स्वभावहेतुः । द्वितीये तु विरुद्धव्याप्तोपलब्धिः स्वाधारादन्यसन्ताने फलदानविरुद्धेन स्वाधारसन्तान एव फलदानेन व्याप्तस्य संस्कारस्योपलब्धिः ।

॥ संस्कारस्य निमित्तान्तरापेक्षत्वे दोषः ॥

अत्र यदि संस्कारेऽपि सति सन्ताने फलदानयोग्यता निमित्तान्तरमपेक्षेत प्रयत्नेन संस्कारघटनमनर्थकं स्यात् । अन्यसन्तानेऽपि फलदानसामर्थ्यं च। द्वितीये च प्रयत्नवैयर्थ्यम् । नचामलक्यां क्षीरावसेकेन सर्वामलकी मधुरफला । तस्मात् स्वाधारसन्तान एव फलदानेन व्याप्तिः संस्कारस्येति नानेकान्तः । "संस्कारश्च कर्मकृतो विशेषश्चेतस" इत्याग(वद्ध)[मसिद्ध]मभ्युपगम्यैव चोद्यवत्साधनमपीति नासिद्धिः। स्वपक्षे भावान्न विरोधो (व्या)[ना]प्यसिद्धिः । अथवा यो यः सन्तानः स स्वाधिकरण एव संस्कारे फलदानयोग्यो यथा कार्पाससन्तानः, सन्तानश्चायं चित्तसन्तान इति पूर्ववत् । स्मृत्यादिफलापेक्षयाप्ययमेव न्यायः ।

॥ सन्तानद्वारकव्यवस्थायामतिप्रसङ्गशङ्का तत्समाधानं च ॥

यदि सन्तानद्वारेणेयं व्यवस्था तदा विद्यायोनिसम्बन्धप्रसिद्धेऽपि सन्ताने प्रसङ्गः, ततो गुरुणानुभूतादौ शिष्यस्य स्मृत्यादि स्यात्। एवं पितुरनुभवादौ पुत्रस्य भवेत्। नैतादृशः सन्तानोऽत्र विवक्षितः। कीदृशस्तु विवक्षितः? उपादानोपादेयभूत-हेतुपरम्परारूपः। किं पुनरुपादानोपादेयलक्षणं? एकाधारनियमः। असति विचाल-कारणेऽविचालनेऽपि तद्योग्यतानियमः। अथ(या)[वा] अभ्रान्तसम्मतैका[कारा]वसा ये प्रकृतिविक्रिये। ततो हेतुफलस्योपादानोपादेयलक्षणं हेतुफलसन्ततौ। इदमुपादानं इदमुपादेयं इति प्रत्यभिज्ञाप्रत्ययेन लक्षितं वेदितव्यम्।

॥ तन्मतेन उपादानोपादेयलक्षणम् ॥

सभागोत्पत्तौ तु प्रकृतिरुपादानस्य, विकृतिरुपादेयस्य लक्षणम्। स्वभाव एव, प्रकृतिविकृतित्वं वा लक्षणमिति। भावप्रधानो वायं निर्देशः। काष्ठयूपवत् काष्ठाङ्गारवच्च अनेकोत्पत्तावपि विभिन्ना एव भागा उपादानं धूमभस्मादीनामङ्गाराणां वा बुद्धावपेतपुरुषप्रज्ञप्तिरेकावसायः। अस्ति च विषयोपरागं विविच्य चैतन्य-मात्रमामृशत एकपुरुषाभिमतायां सन्ततौ सैवेयं बुद्धिरित्यवसायः, नेतरत्र, अशेषस्व-रूपाननुकारात्। अनुकारसम्भवेऽपि स्तम्भान्तरवदेकावसायो भ्रान्त इति न पितापुत्रादावुपादानादिव्यवस्थेति।

॥ ज्ञानश्रीमिश्रमतखण्डनम् ॥

तदेतदसमञ्जसम्। प्रथमसाधने तावद्धेतोरसिद्धत्वात् संस्कारासिद्धेः। कर्मादि-जनितो हि चेतसो विशेषः संस्कारोऽभिमतः। स चेत् दृश्यो दृश्यानुपलम्भनिरस्त एव। नो खलु तदा तत्सत्ता भवति। [नच] तयोर्नीलबोधप्रवाहयोरल्पीयांसमपि विशेष-मुपलभामहे। नायं दृश्यो विशेष इति चेत् न, दृश्यवेदनातादात्म्ये दृश्यो नेत्यनुप-पत्तेः। अतादात्म्यस्यानङ्गीकारनिरस्तत्वात्। स्थिरात्मपक्षेऽपि च यथानुभवं कार्य-स्योपपत्तौ वेदनेष्वदृश्यविशेषकल्पकाभावाच्च। क्षणभङ्गभङ्गस्य च करिष्यमाणत्वेन परिशेषा(द)[द्य]सिद्धेः। एतेन दृश्यतादात्म्याददृष्टोऽपि विशेषः कार्यदर्शनात् प्राक् न तथा विकल्पितः, कार्यदर्शनात्तु तथा विनिश्चीयत इति निरस्तम्। कार्यस्यान्यथा(नु)-[प्यु]पपन्नस्य तादृग्विशेषनिश्चायकत्वानुपपत्तेः। असम्भवनिश्चयोऽपि; दृष्ट इत्यङ्गी-कर्तुमशक्यत्वात्, निश्चयैकनिवेदनीयत्वाद्दर्शनस्य।

॥ संस्कारस्य बौद्धोक्तस्य निराकरणम् ॥

एवं च यदुक्तं—"संस्कारश्च कर्मकृतो विशेषश्चेतस" इत्यागमसिद्धमभ्युपगम्यैव चोद्यवत्साधनमपीति नासिद्धिरिति तदप्यपास्तम्। अप्रमाणकत्वेन तादृशविशेषस्यास्माभिरनभ्युपगतत्वात्। तथा चाचार्योऽपि—"न अस्थिरत्वेन वास्यत्वाश्रयत्वानुपपत्तेः स्थिरं हि वासकेन वास्यमानं दृष्टसम्बन्धं च, यथा पुष्पादिना वस्त्रादिकं" एवं ब्रुवाणः पराभिमतमपि वासनासंस्कारपर्यायविशेषं नाभ्युपगच्छ(न्)तीति व्यक्तम्।

तस्माद्धेतोरसिद्धत्वं प्रयोगे प्रथमे स्थितम्।
विचाररमणीयत्वमन्तिमेऽपि न भासते ॥ १ ॥

तथा हि—यद्येकाधारतानियमोऽसति विचालकारणेऽविचालनेऽपि तद्योग्यतानियम इत्येतदुपादानोपादेयलक्षणं तर्हि हेतोरसिद्धिरपरिहार्या। क्षणिकपक्षेऽपि भिन्नसमयसम्भविना क्षणा[न्तरेण] वास्तवैकाधिकरणयोग्यत्वासम्भवात्। आधारस्यापि क्षणभङ्गादेकत्वानुपपत्तौ काल्पनिकस्य तदेकत्वस्यातिप्रसङ्गित्वात्। रूपरसादेरपि परस्परं समानदेशताभिमानात्।

॥ प्रकृतिविकारलक्षणस्य बौद्धोक्तस्य निरासः ॥

यदपीदमभिप्रेतमभिहितं अभ्रान्तसम्मतैका[कारा]वसाये प्रकृतिविक्रिये ततो हेतुफलस्योपादानोपादेयलक्षणमित्यादि, तत्रापि तदवस्थैव हेत्वसिद्धिः, साक्षात्कारपरोक्षत्वादिभागिनीषु स्वभावभिन्नासु वित्तिषु तादृगेकाकारावसायानुपपत्तेः। उपपत्तौ वा यथोक्तरूपाविशेषादेव शिष्याचार्यधियोरपि तथाभावोपपत्तेः उपादानोपादेयव्यवहारप्रसङ्गात्।

॥ एकशरीरावच्छेदः एकावसाये प्रयोजक इत्यस्यापि निरासः ॥

एकशरीराच्छेदोऽपि प्रयोजकः एकावसायोत्पत्ताविति चेत्। मैवम्। जन्मभेदभाविज्ञानेषु व्याप्त्यनुपपत्तेः। एतेन प्रकृतिविकारभावः प्रत्युक्तः।

तदेवमनवद्यत्वं साधनद्वितयेऽपि न।
यतस्तत्सम्यगेवोक्तं साधनासम्भवादिति ॥ १ ॥

॥ अस्मदुक्तखण्डनानुमाने बौद्धोक्तदूषणानुवादः तत्खण्डनं च ॥

यदपि न पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धीनां स्मृतिर्भवति ततोऽन्यत्वात् सन्तानान्तरबुद्धिवदिति साधनमनुभाष्य तद्दूषणसम्भवमुपपादयितुमनसा विकल्पितम्—तत्रोत्तरबुद्धीनां धर्मिणामुत्तरबुद्धिसम्बन्धो निषिध्यते उत स्मृतिरूपत्वमेव तासां वार्यते अथ स्मृत्या फलवत्यस्ता न भवन्तीति प्रतिपाद्यत इति। **तत्र** तृतीय एव विकल्पः स्वीक्रियते। तथा च विकल्पद्वयोक्तं दूषणं न परिहरणीयमस्माभिः। तृतीये तु विकल्पे यदुत्तरबुद्धिग्रहणं न तदितरव्युदासार्थम्। किं तर्हि? विवादपदतया पक्षनिर्देशमात्रम्। तत्रानुभवस्यापि विवादपदता(या) यद्यप्यस्ति, तथापि तदसङ्ग्रहो न दोषाय। नहि विवादसम्भवमात्रेण सकृदेव सर्वत्र साध्यं साधनीयमिति नियतिरस्ति। किं तर्हि? यावति प्रकृतहेतोः साध्यसाधनसामर्थ्यं तावति तत्प्रवर्तते। तेनापि नैरात्म्यवादव्युदासमात्रमभिप्रेतम्। सिद्धे त्वात्मनि 'यज्जातीयो यतः सिद्धः स तस्मादेव' इति न्यायेनानुभवानन्तरभाविन्यपि स्मृतिः आत्माधीनेति सेत्स्यति। ततश्च **यदुक्तं**—तदयमनुभवस्य स्मृतिजनकत्वं न स्वीकर्तुं शक्नोति प्रियत्वात्। नापि परिहर्तुं हेतोः पक्षैकदेशासिद्धेरिति। **तदपाकृतम्**। प्रकृतहेतोः साक्षात्साधनासामर्थ्येऽपि परम्परया विवक्षितार्थोपयोगस्य वर्णितत्वात्। परिहरणपक्षस्य निर्दोषत्वात्।

॥ सिद्धान्त्युक्तानुमाने व्याप्तिसिद्धिर्न भवतीति शङ्का ॥

अथ कथमेवमपि व्याप्तिसिद्धिः? यदि ह्युत्तरबुद्धेः स्मृतिजनकत्वप्राप्तावनुभवाद[न्य]त्वहानिरुपपादयितुं शक्या, तदा तद[न्य]त्वस्य स्मृतिजनकत्वनिषेधेन सम्भवेद्व्याप्तिविनिश्चितिः। न चैवमेषा शक्योपपादयितुं, यस्मादनुभवादन्यत्वहानादनुभवत्वमेव भवेत्। तच्च स्मृतिजनकत्वे प्रसजदनुभवस्य स्मरणहेतुत्वमनपनी(येन)[यैव] विश्राम्यति। प्रतिबन्धसिद्धौ हि प्रसङ्गसङ्गतिरिति।

॥ उक्तशङ्कापरिहारः ॥

सत्यमेवमेतत्। किंतु सविशेषणमिह साध्यं विवक्षितं हेतुश्च। तथा हि—पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धयः सहकारिभेदं विना स्मृतिजनिका न भवन्ति ततोऽन्यत्वाद्यविशेषात् अजनकादविशिष्टत्वात्, सन्तानान्तरबुद्धिवदिति प्रयोगार्थः सामर्थ्यलभ्यः। तथा हि—नोत्तरबुद्धीनां स्मृतिजनकत्वमेव तावन्निषेध्यं सम्भवति; सदृशादि-

बुद्धीनामुत्तरासामात्मा(पा)न्तरेऽपि तज्जनकत्वेष्टेः। अत एव ततोऽन्यत्वमात्रं हेतुरित्यपि न विवक्षा सम्भविनी, संस्कारादेस्ततोऽन्यस्य स्मृतिहेतुभावस्वीकारात्। तस्माद्यथाविशेषितमेव साध्यं हेतुश्चाभिप्रेयत इति युक्तम्। भवति वै ग्रन्थेषु सामर्थ्यलब्धमपि किमपि किमपि व्याख्यातव्यम्। कथमन्यथा "यस्मिन्नेव हि" इत्यादि श्लोकं[1] साधनपरं समर्थयमानेन भवता पक्षधर्मस्तु प्रस्तावात् बोद्धव्यमित्युदितम्। तस्मात् नैष ग्रन्थेषु दोष इत्येव स्वीकरणीयं तावत्।

॥ अत्र हेत्वसिद्धिपरिहारः ॥

अथैवमपि हेत्वसिद्धिरेव दोषो भविष्यति। संस्कारविशेषसम्भवेनान्यत्वेऽपि अविशेषासिद्धेरिति। मैवम्। तादृशविशेषस्य प्रागेव दृश्यानुपलम्भेन निरस्तत्वात्। सति चैवं व्याप्तिरपि सुलभैव। न ह्यस्ति सम्भवः सन्तानान्तरबुद्धिभ्यो न विशेषस्तदसम्भवि च कार्यं जायत इति। तथा सति ताभ्योऽपि तदुत्पादप्रसङ्गस्य दुर्निवारत्वात्। तस्मात्सहकारिभेदं विना सन्तानान्तरबुद्धिभ्योऽविशेषमनन्तरबुद्धीनामापाद्य ततोऽन्यत्वाविशेषात् सन्तानान्तरबुद्धिवदेव तत्सन्तानभाविनीनामपि बुद्धीनामपि स्मृतिजनकत्वाभावप्रसञ्जने न कोऽपि दोषः सम्भवी।

॥ सहकारिविशेषाभ्युपगमे आत्मसिद्धिः ॥

भवतु तर्हि सहकारिविशेषादेव स्मृत्यादिनियम इति चेत्। तमेव हन्त! सहकारिणमात्मानमभिदध्महे। अवश्याश्रयणीयश्चायं प्रत्यक्षतोऽपि प्रतिभासात्। भवति वै प्राणभृन्मात्रस्याहमिति प्रतिभासः। स च विकल्पोऽपि न तावन्निर्मूलः। नापि वासनामूलमात्रत्वादवस्तु[कः] नीलादिविकल्पसमानयोगक्षेमत्वात्। नापि लिङ्गशब्दमूलः तद(पि)प्रतिपत्तावपि भावात्। तस्मात्परिशेषात् प्रत्यक्षपृष्ठभावी सवस्तुकश्चायमाश्रयणीयः। नचास्य बाह्येन्द्रियनिवृत्तिमात्रादप्रत्यक्षमूलत्वं, संवेदनविकल्पेऽपि तथाभावप्रसङ्गात्। संवेदनविकल्पे स्वसंवेदनं मूलमिति चेत् प्रकृतेऽपि तर्हि मानसं मूलमस्तु।

---

1. यस्मिन्नेव हि सन्ताने अहिता कर्मवासना।
   फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥ इति परेषां श्लोकः।

॥ अहंप्रत्ययस्य शरीरादौ समारोपरूपत्वोपपत्तिः ॥

वस्तुतस्तु संवेदनमपि न स्वसंवेदनम् । अपि तर्हि मानसप्रत्यक्षप्रवेदनीयमिति समर्थितं प्रत्यक्षपरिच्छेदे । भवत्वेवं तथापि शरीरादिगोचर एवायमिति चेन्न । शरीरबुद्धितत्समुदायगोचरत्वे परशरीरादावपि प्रसक्तेः । भवतु स्वसम्बन्धी शरीरादिरस्य गोचर इति चेत्; कः पुनरत्र स्वशब्दार्थो विवक्षितः ? अनन्यत्वं तदर्थः । तथा च यदा तेनैव तदनुभूयते तदा ज्ञातुः ज्ञेयादनन्यत्वादहमिति स्यात् । घटकण्टकादयः पुनरन्येनैवानुभूयन्ते सर्वदेति, न जात्वहंकारास्पदीभावमाचरन्तीति अनन्यथासिद्धमित्यवश्याश्रयणीयम् । तथा सति समारोपरूप एवायं शरीरादावित्यनिच्छताऽपि स्वच्छमतिना त्वयाऽऽश्रयणीयम् । ततः प्रत्येतुरन्यत्वात्तस्य च जडस्य त्वन्मतेऽपि घटादिवत्स्वपरप्रकाशनसामर्थ्यविरहात् ।

॥ अहंप्रत्यक्षस्य बुद्धिविषयत्वनिराकरणम् ॥

तथापि बुद्धिरेव वास्तवमालम्बनमस्त्वहङ्कारविकल्पस्येति चेत् । मैवम् । अहं गच्छामीतिवत् अहं जानामीत्यत्र क्रियात्वेन भासमानभेदेनाहमास्पदस्य कर्तुः प्रतिभासनात् । नीलादिवेदनीयवत् वेदितापि वित्तेराकारः तया विच्छिन्न एव वेद्यत इति चेत्; हन्त ! वर्धामहे वयं, [न] यूयं, वेदनीयेन वेदितुरेकयोगक्षेमत्वात् । तस्य च वेदनाद्भेदेन निवेदितत्वात् ।

॥ स्वोपादानस्य भिन्नस्य अहमास्पदत्वनिरासः ॥

तथापि स्वोपादानमेव भिन्नमहमास्पदमिति चेत्—मैवम् । तद्वेदने, तदाकारस्यापि संवेदनापत्तेः । आकारव्यतिरेकेणाकारिणो वेदनानवकल्पनात् । अथैवमपि प्रवृत्तिसन्तानातिरेकी वेदनसन्तानो भवत्वहमास्पदं यत्र सतामालयसन्तानव्यवहार इति चेत्, सिद्धस्तर्हि प्रवृत्तिविज्ञानादपरः प्रतिपत्ता । स च न विज्ञानात्मकः जानातेः सकर्मकतया कर्मणा व्याप्तस्य तन्निवृत्तौ निवृत्तेः, (ग) अहमाकारस्य च तन्निरपेक्षस्याहं सुखीत्यवभासात् । स तु सन्तन्यमानरूपः, किंवैक एवेति चिन्ता परिशिष्यते । तत्रापि क्षणभङ्गनियमभङ्गे सति भावानां लघुतर्कसाहाय्यादनुभवानुसाराच्चोत्तर एव पक्षो यौक्तिको भविष्यति ।

**नच कार्पासेऽपि निरन्वयविनाशोत्पादे रक्ततोत्पद्यते कार्पासान्तरवत् ।**

---

॥ न्यायभूषणोपरि बौद्धोक्तशङ्का ॥

यत्पुनरनेनाभिहितं — तस्माद्यदि चोद्यचुञ्चुतायां भरस्तदैवं ब्रूयाः — अनुभवमात्रात्कर्ममात्राद्वा स्मरणभोगादिजन्म चेत् भिन्नसन्तानेऽपि जन्मप्रसङ्गः । न चाभिमतेऽपि यद्वेदनं(ा)[अ]विशिष्टसामर्थ्यासामर्थ्यं, तत्तेन विशिष्टाविशिष्टफलं, यथा बीजोष्मजलज्वलनपवनादिसामग्रीद्वयम् । अविशिष्टसामर्थ्यासामर्थ्यं च सन्तानद्वयमनुभवादावपीति स्वभावः ।

॥ तत्समाधानम् ॥

अत्र चासिद्धिः यस्मिन्नेव हीत्यादिना दर्शिता ; कर्मवासनेत्यादिना कार्पासे रक्तत्वा(त्)[दि]संस्कारविशेषस्य व्यक्तमुक्तत्वात् । यथा प्रथमप्रथितमस्माभिः एवमनुभवात् स्मृतिरिति समानन्यायमिति । तत्रापि हेत्वसिद्धिस्तावदुन्नीतया नीत्या निरस्तैव ।

वस्तुतस्तु यदाचार्यप्रयोगे विवक्षितं तदेवास्य प्रक्रियामाश्रित्य भाषान्तरेण भाषितमिति नाधिकमुत्प्रेक्षितं किञ्चित् । अनुचितभाषणं त्वतिरिच्यते, यदि चोद्यचुञ्चुतायां भर इति ।

अभिप्रायमविज्ञाय तत्र तत्रापभाषणम् ।
कुर्वाणो महतामेष कथं श्रद्धेयतां व्रजेत् ॥ १ ॥

तस्मात्सुष्ठूक्तं साधनदूषणासम्भवादिति ।

॥ कार्पासदृष्टान्तविघटनम् ॥

साम्प्रतं कार्पासदृष्टान्तोऽपि यथा भिक्षुभिर्विवक्षितः तथा नास्माभिरिष्यत इत्याह—**नच कार्पासेऽपि निरन्वयविनाशोत्पादे रक्ततोत्पद्यते कार्पासान्तरवदिति ।** विनाशश्चोत्पादश्च विनाशोत्पादौ, निरन्वयौ विनाशोत्पादौ यस्येति विग्रहः । एतदुक्तं भवति — निरन्वयविनाशोत्पादे कार्पासे स्वीक्रियमाणे लाक्षारसावसिक्तस्य बीजस्याङ्कुरपत्रादिप्रवा(ह)[हे] सर्वथाप्यनुगमाभावात् , अङ्कुरादेश्च तद-

**एतेनैव क्षणिकत्वमपि निरस्तम् ।**

न्वयात्, अस्य सन्तानान्तरभाविभ्यो विशेषाभावात्, आन्तरालिकजातेरप्येकस्याः तत्त्वतोऽनुवृत्त्यसम्भवात्, अलीकरूपायाश्चानुपयोगित्वात् कथमेकत्रैव सन्ताने परिपाटलप्रसूनादिप्रसवः सम्भवेत् । (स्मृते)[स्वमते] पुनः बीजादावापरमाण्वन्तभग्नेऽपि यावकपरमाणुसहकारिषु बीजपरमाणुषु तत्सम्बद्धेषु चापरापरपार्थिवपरमाणुष्वाप्रसू[न] प्रसवमान्तरालिकावयविपरम्परारम्भकेषु पूर्वपूर्वरूपादिध्वंससहकारिपरम्परापरिप्रापितपाटलप्रसूनेषु (रूपेषु प्रसूनाद्यारम्भेऽपि) स्वाश्रीयमाणेषु तैरेव तादृशैरारब्धे कुसुमादिसरे रागगुणसन्ततिः न तु सन्तानान्तर इति सम्भविनी व्यवस्थेति ।

॥ वस्तुतः क्षणभङ्गनिराकरणेन बौद्धमतनिरासः सुकर इति स्वाभिप्रायः ॥

वस्तुतः पुनरिह नातीवाभिनिवेष्टव्यम् । क्षणभङ्गभङ्ग (इ)[ए]व तु यत्नो विधातव्यः; अन्यथा क्षणभङ्गिनि बीजादौ प्रमाणोपनीते ततः स्वभावातिशयपरम्परापरिपाकपरिप्रापितमेव परिपाटलप्रसूनादि व्यवस्थामवलम्बिष्यतीति । स्मरणादिव्यवस्था पुनः क्षणभङ्गाङ्गीकारेऽपि सहकारिभेदमुपादायैव विश्राम्यति । अन्यथा पारम्पर्येणानुभवादिनिदानभव[त्व]स्य शिष्याचार्यवेदनप्रवाहयोरविशेषा(दि)दविशिष्टफलोन्मीलनप्रसङ्गात् । कार्पाससन्तानयोस्तु नैककारणतेति भेदः । तत्राप्येकबीजजनिताङ्कुरादिसन्तानद्वये कुसुमादिसाम्यात् दृश्यत एव[1] ।

॥ सहकारिणोऽपि क्षणिकत्वशङ्कया ग्रन्थावतरणम् ॥

**स्यादेतत्**—सहकारिभेदव्यवस्थयैव वर्णितमार्गेण स्मरणादिप्रसवो नियतसंवेदनसन्ताने भवतु, तथापि क्षणिक एवैष सहकारी सन्तन्यमानस्वरूपो भविष्यति । स्थिरात्मपरिकल्पनं तु निर्मूलमेवेत्यत आह—**एतेनैव क्षणिकत्वमपि निरस्तमिति ।**

॥ क्षणभङ्गनिरासकयुक्तिप्रदर्शनम् ॥

**अयमभिसन्धिः**—स्वयमनुभूतस्यैव स्मृत्यादिनियमः पूर्वं निरूपितः । प्रतिपत्तुः क्षणविध्वंससम्भवे न सम्भवितुमलं कार्यकारणभावमात्रस्य पूर्ववदनियामकत्वात् ।

1. एककारणतेति शेषः

**प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यते। प्रदीपादिष्विव भ्रान्तमिति चेन्न। एकतावाध्यत्वेन भ्रान्तत्वे सर्वत्र भ्रान्तत्वकल्पनायामतिप्रसङ्गात्।**

---

वासनापरिपाकस्य च गुर्वालयशिष्यप्रवृत्तिवेदनप्रवाहयोः अनुभवितृक्षणकारणाधीनतायाः पारम्पर्येणासति विशेषे विशेषानुपपत्तेः। अवान्तरवैजात्यस्यापि पूर्ववत् सत्यासत्यविकल्पासहत्वात्। व्यवस्थितसहकार्यन्तरस्य च दृश्यस्य दृश्यानुपलम्भनिरस्तत्वात्। अदृश्यस्यापि क्षणभङ्गिनः समानदूषणत्वात्। स्थिरैकस्वीकारेणोपपत्तौ च बहुकल्पने गौरवात्। तस्य तु स्थिरताश्रयणे 'प्रथमस्य तथाभावे प्रद्वेषः किं निबन्धनः' इत्यादिन्यायादनुभवसिद्धस्यैवाहमःपदस्य[1] तदुपपत्तेः[2] अक्षणिक एवायमात्मेति।

अथैवं योज्यते—यदाहुः सर्वे भावाः क्षणिका इति। तदेतदन्यानुभूतेऽन्यस्य स्मरणायोगादिति न्यायेन निरस्तम्। यथोक्तन्यायादात्मनः स्थिरत्वासिद्धौ नियमस्य निरस्तत्वादिति।

इहैव युक्त्यन्तरं समुच्चिनोति—**प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यत इति**। शङ्कते—**प्रदीपादिष्विव भ्रान्तमिति चेदिति**। परिहरति—**न, एकत्र बाध्यत्वेन भ्रान्तत्वे सर्वत्र भ्रान्तत्वकल्पनायामतिप्रसङ्गादिति**। नीलादिवेदनस्याप्येवं विभ्रमत्वमेवं सत्यशक्यनिवारणमित्यर्थः।

॥ प्रत्यभिज्ञाप्रामाण्ये संशयनिरासः ॥

स्यादेतत्—बाधानुपलम्भे यदि नामाप्रामाण्यव्यवहारोऽशक्यसाधनः तथापि कथं प्रामाण्यनिश्चयः? प्रत्यभिज्ञायाः केशकुशकदळीकाण्डादिषु परिलूनपुनर्जातेषु व्यभिचारवेदनस्य विचिकित्साकारणस्यैव दृष्टत्वात्। हन्तैवं नीलवेदनस्यापि कथं प्रामाण्यनिश्चयः स्यात्? अर्थक्रियानिश्चयादिति चेन्न। तत्राप्यनाश्वासस्य समानत्वात्। यदि मतं—परतो निरस्तविभ्रमाशङ्केष्वभ्यासविशेषासादितपटिमसु प्रत्यक्ष-

---

1. अहंपदार्थस्य
2. स्थिरतोपपत्तेः

चेतस्सु परिस्फुरन्तो भावा निर्विचिकित्सा एव अन्यथा तदर्थक्रियायामपि न कश्चिदाश्वास इति सदितरव्यवहारविरहप्रसङ्गात् निरीहं जगज्जायेतेति । नन्वेष एव न्यायः स्फटिकादिस्थिरभावेऽपि किं नाश्रयिष्यते । नाश्रीयते क्षणिकत्वसाधनेन स्पष्टबाधत्वादिति चेन्नैवम् ।

न्यायाचार्यनिरस्तः प्राच्यः क्षणभङ्गभङ्गितामार्गः ।
नूतनसौगतगदितां नीतिमिदानीं निराकुर्मः ॥ १ ॥

॥ नवीनसौगतानां पदार्थक्षणिकेष्वसाधनप्रक्रिया ॥

तेषामेषा प्रक्रिया—यत्सत् तत्क्षणिकं यथा जलधरः सन्तश्च विवादाध्यासिता इति । सत्त्वं चार्थक्रियाकारित्वं विवक्षितं तच्च प्रमाणसिद्धं भावानाम् । तथापि सपक्षीकृते जलभृति क्षणिकत्वावधारणं कथमिति चेत् । उच्यते । यद्विरुद्धधर्मभाक् तन्नाना यथा पावकपयसी । विरुद्धधर्मभाक् च विप्रतिपन्नो भावः । नायमसिद्धः सामर्थ्यासामर्थ्ययोः प्रसङ्गे तद्विपर्ययप्रवेदिकर्तृत्वात् । तथा हि—जलधरस्य जलधारणक्रियासमर्थस्तावदेकदा स्वभावोऽशक्यपरिहारः । क्षणान्तरे च द्वितीयादौ तत्क्रियायाः कृतत्वात्पुनः कर्तुमशक्यत्वात् तज्जातीयामन्यजातीयां वा कुर्यात्, न कुर्याद्वा कामपि क्रियामिति पक्षः । ए (तं)[वं] तत्क्रियाकरणत्वात्(काः) प्रागपि वक्तव्यम् । तत्र यदि तत्करणसमर्थस्वभावोऽम्भोधरस्तत्क्षणवत्क्षणान्तरेऽपि कथं कदाचित् क्रियाविच्छेदः ? क्षणान्तर— निर्वर्तनीय..............[विजातीय] क्रियासमर्थस्वभावत्वे वा क्षणान्तरवत्तत्रापि क्षणे सजातीयेतरक्रियाप्रसवप्रसङ्गः । क्षणान्तरेऽपि हि तत्सामर्थ्यसम्भवाज्जननं तच्चान्यदाप्यक्षीणम् असामर्थ्ये वा समीहितसमयेऽप्यकरणप्रसङ्गः सदैकस्वभावत्वात् सदैक[स्वभाव]भ्रंशे च प्रतिक्षणं क्षयः सिद्धो जलधरस्य ।

॥ क्षणिकत्वपर्यवसाय्यनुमानप्रयोगः ॥

प्रयोगः— यद्यदा जननसमर्थं तदा तत्करोत्येव, यथान्त्या कारणसामग्री स्वकार्यम् । य एव वा जलधरस्तदवस्थायां वारिधारणकृषीवलविलोचनोत्सवादिकार्यं वारिवितरणे काले । तत्क्रियाशक्तश्चायमुभयदशायामुभयकार्यमर्जयितुमिति स्वभावहेतुः प्रसङ्गः । जननमन्तरेण सामर्थ्यव्यवस्थायां सर्वस्य सर्वत्र शक्तिव्यवहारप्रसङ्गः । निश्चितश्चायं प्रतिपन्नो व्यवहारः ।

नचास्य जननादन्यन्निमित्तमुपलभ्यते। ततो जननं विना भावे विपक्षे नियमवत्वलक्षणव्यापकवियोगेनात्मसत्तया वियुज्यमानो जनन एव विश्राम्यतीति समर्थ-व्यवहारगोचरत्वमात्रानुबन्धिजनकत्वं सिद्धमिति व्याप्तिसिद्धिः।

॥ क्षणिकत्वसाधकान्वय्यनुमानम् ॥

एवं यद्यदा यत्करणसमर्थं तत्तदा तत्करणं करोत्येव यथान्त्या कारणसामग्री स्वकार्यम्। शक्तश्चायं सकलक्रियातिक्रमकालेऽपीति। अन्यदा सर्वदाऽकरणपक्षे योज्यम्। असमर्थस्वभावत्वे तु यद्यत्राशक्तं (ए) [न] तत्तत्करोति यथा शाल्यङ्कुरं कोद्रवः। अशक्तश्चायमुदवाहनः करणक्षणवत्क्षणान्तरेऽपि इति व्यापकविरुद्धोपलब्धिः न कदाचित्कुर्यादिति हेत्वर्थः।

॥ क्षणिकत्वे व्यतिरेक्यनुमानम् ॥

विपर्ययप्रयोगश्च—यद्यन्न करोति तत्तत्र असमर्थं यथा शाल्यङ्कुरमकुर्वन् कोद्रवः शाल्यङ्कुरे। न करोति च प्रथमक्षणसाध्यां क्रियां [द्वितीयादिक्षणे] द्वितीयादिक्षणसाध्यां वा प्रथमक्षण इति व्यापकानुपलब्धिः जलधरस्य तत्तक्रियासु (समर्थः) समर्थस्वभावतया प्रतिक्षणं भेदमुपपादयतीति। एवं सर्वथाऽक(ा)रणापेक्षया—यद्यन्न करोति न तत्तत्र समर्थं यथा शाल्यङ्कुरमकुर्वन् कोद्रवः, न करोति चाकरण-काले करणकालकार्यां क्रियामिति। सामर्थ्यापेक्षया—यद्यत्करोति न तत्तत्राशक्तम् अन्त्यसामग्रीवत्, करोति चायं तोयधरोऽम्भोधारणमिति विरुद्धव्याप्तोपलब्धिरसमर्थक्षणा-द्भिनत्ति करणसमर्थम्। यथा हि जननेन व्याप्यते समर्थस्थितियोग्यता, तथा जननसत्त-यापि। तदसामर्थ्यं विरुद्धम्। यत्सामर्थ्यं तेन व्याप्यं करणमुपलभ्यमानमसामर्थ्यं कदर्थयतीति समर्थासमर्थस्वभावतया स्वभावभेदः सिद्धस्तोयदस्येति।

॥ उक्तान्वयिव्यतिरेक्यनुमानखण्डनम् ॥

**अत्राभिधीयते**—किमिह सामर्थ्यं नाम जननं जननयोग्यता वा? यद्वशात् प्रसङ्गादिप्रवृत्तिः। प्रथमे साध्याविशिष्टं(त्वं) सामर्थ्यरूपं प्रसङ्गसाधनम्। चरमेऽपि योग्यता नाम किं सहकारिसाकल्यम्? किंवा जीमूतस्य निजा जीमूतता? या स्वरूपयो-ग्यतेति गीयते। यद्वा तदवान्तरजातिभेदः सहकारिविरहाधीनो वा कार्यविरहः? सह-

कारिसाकल्यपक्षे हेत्वसिद्धिरनिवार्या। न खलु वर्तमानक्रिया(कार)काले सकलक्रियातिक्रमकाले वा कालान्तरभाविकार्योचितं सहकारिनिकरमभ्युपगच्छामः।

जीमूतत्वपक्षेऽपि स्पष्टः प्रतिबन्धाभावः। जीमूतस्याजनयतोऽपि प्रमाणगोचरत्वात्। जातिभेदाभिप्राये तु न केवलं हेत्वसिद्धिः। दृष्टान्तस्यापि साधनहीनता। तस्य सामग्रीमध्यमध्यासीनैरप्यस्मदादिभिरनभ्युपगमात्। नवै प्रमाणमन्तरेणासावभ्युपगममर्हति। न खल्वध्यक्षेणासावनुभूयते। तथाऽध्यवसायानुत्पत्तेः। नानुमानेनापि, लिङ्गाभावात्।

॥ स्थैर्यपक्षे करणाकरणव्यवस्थोपपादनम् ॥

कथं पुनर्वैलक्षण्यमन्तरेण करणाकरणव्यवस्थितिः? समाने जीमूतत्व इति चेत्; न वयं वैलक्षण्यमपजानीमहे। किं [तु] पुनरेतत्[1] जातिभेदस्वरूपं, न तु सहकारिसम्पत्त्यसम्पत्तिरूपमिति निर्णयप्रवणं प्रमाणमिह न जानीमः।

॥ प्रागपि भावस्य कार्यजनकत्वशङ्का ॥

स्यादेतत्। सहकारिमध्यमध्यासीनोऽयं अविलम्बकारी भावः प्रागपि यद्यासीत्तर्हि प्रसह्य कुर्वाणो गीर्वाणशापसहस्रेणापि न वारयितुं शक्यत इति सिद्धं स्वरूपत एव वैलक्षण्यमिति।

॥ तत्परिहारः ॥

तदसत्। अविलम्बकारिस्वभावतायाः भावस्य मानानुपलम्भात्। कार्यमेवान्यथानुपपद्यमानमत्र प्रमाणं [अ]विलम्बकारिस्वरूपानुपगतौ कार्यप्रसवा सङ्गतेरिति चेन्नैवं; सर्वदैव कार्याप्रसवेऽ(पि)[वि]लम्बकार्यताया एव व्याहतिप्रसङ्गात्। इदमेव हि तस्य विलम्बकारित्वं यदेष सहकारिसम्पत्तिपर्यन्तं न करोतीति। तत्र का(र्य)[रण]जन्मना कारणसामर्थ्यमेव विज्ञायते। कारणानि पुनरनुभवानुसारेण विलम्बकारीण्येव सम्भूय कार्यमकारिषुः, यद्वा त्वरितकारित्वस्वरूपाण्येव तानीति न कार्यजन्मना शक्यं निर्णेतुम्। सहकारिविरहाधीनकार्यविरहकल्पेऽपि विरुद्धो हेतुर्भवेत्। नह्यस्ति सम्भवः सहकार्यभावाधीनकार्यविरहं कार्य..........समर्थव्यवहारगोचरत्वं हेतुस्ततो

1. वैलक्षण्यं

न साध्याविशिष्टत्वादिदोषः कारणत्वसम........................व्यवहारयोश्च वृक्षत्वशिंशपात्वयोरिव व्यावृत्तिभेदानुचितं साध्यसाधनभाव इति चेन्न, एवमप्यनैकान्तिकत्वात्। भवति हि बीजमप्यजनयदपि अङ्कुरं तदपेक्षया समर्थव्यवहारगोचरो लोकस्य। न तत्र समर्थव्यवहारो मुख्यस्तस्य जननाधीनत्वात्, अपरथा नियामकासम्भवेनानियमप्रसक्तेरिति चेत्।

॥ कार्यजननं सहकारियुक्तधर्मिणः स्वभाव एवेति सिद्धान्तकथनम् ॥

तर्हीदमुच्यतां किं तज्जननं यदनुपचरितसमर्थव्यवहारनिदानम्। यद्यक्षेपकारित्वं तर्हि असिद्धिरेव तस्मिन्नुत्पत्त्यनन्तरं कार्यकारित्वपर्या(य)[स]प्रमाणाभावात्। नियमस्तु सहकारिसाकल्ये सत्येव जननं, [1]जननमेवेत्येवंस्वभावतया(वि)[पि] घटत एव। भवताप्ययं भावस्वभावः स्वीकरणीय एव; यतः क्षणिको भावः कुर्वन् [तत्स्वभावः] सहकारिसहित एव विधत्ते कार्यमिति नियतस्वभावः; नान्यथा सहकारिणां सहकारिता सम्भविनी। तथा चान्वयनियमवत् व्यतिरेकनियमोऽप्यवश्याश्रयणीयः स्यात्। अन्वयव्यतिरेकयोरन्योन्यनान्तरीयकत्वस्य सौगतैः स्वीकारात्। ततश्च सहकारिषु सत्सु करोति तैर्विना न करोतीत्येवंस्वभाव एवोभयसिद्धः समर्थव्यवहारं प्रवर्तयेत्। किमुत्पत्त्यनन्तरकारीत्यादिपर्यायेणाक्षेपकारित्वेन।

॥ सहकारिभिः कारणस्य किं क्रियते इति शङ्का ॥

एवं चैतदनवकाशम्। यदाचक्षते किमस्य समर्थस्य भावस्य सहकारिभिः करणीयम्? स्वयमसमर्थस्तु सामर्थ्यमर्थयमानः सहकारिणोऽपेक्षत इति युक्तम्। अनुपकारिणः पुनः अपेक्ष्यन्त इति व्याहतम्। उपकाराभ्युपगमेऽप्यनेकप्रकारानवस्थितिरपरिहार्या।

॥ सहकारिणा उपकारे करणीये उपकारान्तरापत्तौ अनवस्था ॥

तथा हि—उपकारे करणीयेऽप्युपकारान्तरापेक्षायां उपकारपरम्परापत्तिरित्येका [ऽनवस्थितिः।] अन्तरेणाप्युपकारान्तरमुपकारसिद्धौ कार्यस्यैव तथोत्पत्तेरुपपत्तेः उपकारेणाप्युपकर्तव्यमिति पक्षे पुनस्तत्परम्परापत्तिरित्यपरा। अन्यथा तस्या अप्यनुपकारिणोऽपेक्षणीयताव्याहतिरेव स्यात्। क्रियमाणश्चोपकारो यद्युपकरणीयान्न

---

1. सहकारिसाकल्ये जननमेवेत्यर्थः।

भिद्येत कारणमेव सहकारिभिः कृतमित्यापद्येत। भिन्नोपकारोत्पादे तु न किंचिद्धर्मिण इति स्यात्। नवै पदार्थान्तरस्योत्पत्तौ ध्वंसे वा ततोऽर्थान्तरस्य स्वरूपवैलक्षण्यं सम्भवत्यतिप्रसङ्गात्।

यदि पुनस्तेनापि तस्य किंचिदुपकरणीयमित्युच्येत, तदाप्यायातैवानवस्था। नच वचनीयं कार्यमेवानेकाधीनस्वभावतया यावत्सहकारिसम्पत्ति, विलम्बमानं सापेक्षमुच्यत इति। कार्यस्यास्वतन्त्रत्वात्। (न)[1][स] हि समर्थस्वभावकारणाधीनतया तेन प्रसह्य जन्यमानः कुतः सहकारिश्रद्धया विलम्बेत। तस्य हि स्वातन्त्र्याभ्युपगमे सहकारिसामस्त्येऽपि कदाचिन्न जायेत कदाचित्तु तदन्तरेणापि जायेतेति दुर्निवारः प्रसङ्ग इति।

॥ बौद्धकृताक्षेपपरिहारः ॥

सर्वोऽप्ययं क्षुद्रोपद्रवः प्रागुक्तन्यायपराकृत एव। तथा हि—सहकारिषु सत्सु करोति, तैर्विना न करोतीत्येष एव स्वभावः यदा समर्थपदवेदनीयः स्वीक्रियते, तदा कथं सामर्थ्येनैव सहकारिसन्निधानात् प्राक् प्रसह्य कार्यस्य जननमापाद्येत। न खल्वेवमापाद्यमानमापादकमेव सामर्थ्यं व्याहन्यात्।

॥ सहकारिभिः सहकरणं स्वभाव इति पक्षदूषणम् ॥

**स्यादेतत्**—सहकारिभिः सहोपकरोतीत्येवंस्वभावो भाव इत्यभ्युगमेऽपि न जात्वसौ सहकारिसम्पत्तिं जह्यात्। किं तर्हि प्रपलायमानानपि पाशैर्बध्वाऽऽकृष्यापि कार्यं कुर्यात्। नह्यन्यथास्य तैः सहकार्यकारणस्वभावत्वं सम्भवेदिति।

॥ उक्तातिप्रसङ्गस्य बौद्धमतेऽप्यापादनम् ॥

तदेतदात्मनो बिल्वमात्राणीत्यस्य न्यायस्य विषयीभूतमीक्षते। तथा हि—सौगतेऽपि नये सहकारिभिः सहैव करोतीत्यन्वयनियमवत् तैर्विना न करोतीति व्यतिरेकनियमोऽप्यवश्याश्रयणीयः। तयोरन्योन्यनान्तरीयकत्वस्वीकारादि(कं)[ति] तत्र व्यतिरेकनियमे स्वकारणबललब्धसन्निधीनपि सहकारिणोऽपि निवार्य न कुर्यादेव तैर्विना न करोतीत्ययमेव खल्वस्य स्वभाव इति। अथ तैस्सह करोतीत्ययमेवास्य स्वभावोऽ

1. कार्यरूपः पदार्थः

भ्युपेयेत तथापि दुष्परिहरो विरोधः स्यात्। नद्य(न्य)[स्ति] सम्भवः तैस्सह (न) करोति। नच तैर्विना न करोतीति। यदि मतं[1] स्वप्रत्ययाधीनसन्निधयः सहकारिणः नैष तेषामानयनविसर्जनयो(रि)[री]ष्टे इति। यदि सहकारिणो न भवेयुर्नैष कार्यं कुर्यादिति यद्युपबन्धमात्रेणाभिधीयते; वस्तुतस्तु सहकारिभिर्विना समर्थो भाव एव न भवतीति। हन्तैवमस्मन्मतेऽपि भविष्यति। तथा हि—स्वप्रत्ययाधीनसन्निधीनां सहकारिणामानयनविसर्जनाभ्यां अयं प्रभुरेव भावः। तथापि यदि सहकारिणो भवेयुर्विदध्यादेव कार्यमिति यद्युपबन्धमात्रेणाभिधीयते, न पुनर्भावकाले स(त्ये)[न्त्ये]व सहकारिण इति नियतिरिति।

॥ सहकारिभिः सह करोति इति स्वभावः समयान्तरे स्याच्चेत्कार्यं कुर्यादिति शङ्का ॥

नन्वेवमपि तैस्सह करोतीति योऽस्य स्वभावः स समयान्तरेऽपि समस्ति नास्ति वा? यद्याद्यः समयान्तरेऽपि तदेव कार्यं कुर्यात्। द्वितीये त्वनिवार्यः क्षणभङ्ग इति।

॥ उक्तशङ्कापरिहारः ॥

मैवं वादीः। भवतो हि मते तैः सह स्वकार्यं कुर्वाणस्य भावस्य यस्तैर्विना न करोतीति स्वभावःसकरणकालेऽप्यस्ति न वा? यद्यस्ति कथं कुर्यात्? विरोधादेव। न चेदस्ति तथापि व्यतिरेक[ा]सम्भवादन्वयोऽपि न सम्भवतीति [कार्यकरण]-स्वभावविलोप एव प्रसजेत्। अथ समस्त्येव तादृक्स्वभावो भावः तैर्विना भावमात्रं नास्तीति। नन्वेवमस्मन्मतेऽपि समयान्तरे भावस्वरूपं भवत्येव, सहकारिसाहित्यमात्रं पुनर्न भवतीति किमत्रावद्यं पश्यसि। कि(मत्र)[ञ्च] तदुन्नीतया नीत्या सहकार्यन्वयव्यतिरेकोपलक्षितं वस्तुनो निजं रूपमेव [स्व]रूपसामर्थ्यमिति गीयते [2]सहकारिसामर्थ्यमिति तत्र सहकारिसामर्थ्यसम्पत्तौ कुर्वदित्यभिधीयते, तदभावे तु स्वरूपसामर्थ्यापेक्षया समर्थमित्युच्यते न कुर्वदिति।

तस्मादाभ्यां निजागन्तुकाभ्यां स्वरूपसहकारिसामर्थ्याभ्यां अतिरिक्तमुत्पत्त्यनन्तरकारित्वादिपर्यायमक्षेपकारित्वं नाम सामर्थ्यमप्रमाणकमिति तदधीनसमर्थव्यवहारगोचरत्वमप्यसिद्धमेव।

---

1. कार्यं प्रत्ययते गच्छतीति प्रत्ययः कारणम्
2. सहकारिसाकल्यं च इति शेषः।

॥ भावः अविलम्बकारिस्वभावः विलम्बकारिस्वभावो वेति विकल्प्य दूषणम् ॥

नन्वेवमप्यविलम्बकारिस्वभावो भावः किं वा विलम्बकारिस्वभाव इति प्रश्ने किमुत्तरमभिधानीयं भवता ? न तावत् प्रथमकल्पस्वीकारेणोत्तरं सौगतानामेव समीहितसिद्धेः । द्वितीये तु विलम्बकारिस्वभावत्वात् न कदाचिदपि कार्यं जनयेदिति ।

॥ दूषणपरिहारः ॥

तदिदमविनीतोत्त्रासनमात्रम् । तथा हि—

अविलम्बः किमुत्पत्तिमपेक्ष्यैष विवक्षितः ।
अथ सन्निधिमात्रं वाप्यपेक्ष्य सहकारिणाम् ॥ १ ॥

विलम्बोऽपि कथं यावत्सहकारिसमागमः ।
कार्यस्याकरणं, किं वा सर्वथा कारणच्युतिः ॥ २ ॥

तत्रादिमे तुरीये च प्रमाणानवलोकनात् ।
अङ्गीकृतिः प्रमाणेन पक्षयोरवशिष्टयोः[1] ॥ ३ ॥

सहकारिषु सत्स्वेव जीमूतो वर्षकारणम् ।
नान्यदेति सम (स्तं)[नं] नस्सर्वेषां वस्तुवर्तनम् ॥ ४ ॥

तस्माद् द्वितीयपक्षश्चेत् हेतोरक्षेपकारिता ।
तृतीयपक्षस्वीकारे क्षेपकारीति [2]निर्णयः ॥ ५ ॥

सर्वथापि तु शाक्योक्ता भावस्याक्षेपकारिता ।
प्रमाणशून्येति कथं प्रसङ्गादि प्रवर्तयेत् ॥ ६ ॥

॥ असामर्थ्यपक्षे प्रसङ्गनिराकरणम् ॥

यः पुनरयमसामर्थ्यपक्षेऽयं प्रसङ्गः—यद्यत्राशक्तं न तत्करोतीत्यादि, तत्राप्यशक्तपदार्थं विकल्प्य पूर्वदूषणानि योजनीयानि । तथाहि—तत्रापि यद्यकुर्वन्न-

1. द्वितीयतृतीयपक्षयोरित्यर्थः । 2. हेतुरिति शेषः ।

अशक्त इत्युच्यते, साध्याविशिष्टो हेतुः। यदि तु सहकारिसाकल्यरहितः, तदा हेत्वसिद्धिः। नह्यकरणक्षणवत्क्षणान्तरेऽपि तस्य सहकारिवैकल्यमभ्युपगच्छामो (या)[येन] पराभ्युपग(तायां)[तां]अशक्तिमुपादायाकरणप्रसङ्गः प्रवर्तेत। यदा पुनः प्रातिस्विकजीमूतत्वादिजातिविरहित्वमशक्तत्वं विवक्षितं, तदप्यसिद्धिरेव करणकालेऽपि तस्यापरावृत्तेः। तदवान्तरजातिविरहश्चेदशक्तिः विवक्षिता, न तया शक्यमकरणं प्रसञ्जयितुं तामन्तरेणापि सहकारिलाभमात्रेण व्यवस्थापनात्। ततश्च वैजात्यविरहः सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिक एव।

॥ सहकारिविरहाधीनकार्यविरहाभावपक्षस्य दूषणम् ॥

सहकारिविरहाधीनकार्यविरहाभावस्तु[1] विरुद्ध एव। स खलु सहकारिसद्भावप्रयुक्तः कार्यसद्भावसम्बन्ध एव। स च कथं नामाकरणं न विरुध्यात्। समर्थव्यवहारगोचरत्वविरहः पुनरसिद्ध एव विवक्षितक्षणे तदङ्गीकारात्। अक्षेपकारिताधीनसमर्थव्यवहारगोचरताहानिर्विवक्षितेति चेत्; न तयाप्यकरणं शक्यप्रसञ्जनम्। सहकारिसम्पत्तिमात्रेण करणस्य निरूपितत्वात्। तस्मादयमपि विपक्षव्यावृत्त्यनिश्चयादनैकान्तिक एवेति।

॥ विपर्ययप्रयोगेषु अशक्तत्वस्य निर्वचनानर्हता ॥

विपर्ययप्रयोगेष्वपि योऽयं [अ]सामर्थ्यापेक्षया [2]विपर्य[यः]? तत्राकरणेनापाद्यमानमशक्तत्वं अकुर्वद्रूपता चेत् साध्यसाधनयोरविशेषः। सहकारिवैकल्यं चेत्सिद्धसाध्यता। नचैवं सति समर्थासमर्थस्वभावतया धर्मिभेदसिद्धिः। सहकारिसाकल्यवैकल्ययोः धर्मयोः क्रमभावितया क्रमेण समर्थासमर्थव्यवहारगोचरभावस्यैकस्मिन्नविरोधात्। नच धर्मयोः क्रमभावेऽपि धर्मिणो भेदः, तस्य ताभ्यामन्यत्वात्। धर्मधर्मिभेदस्य च सामान्यादिस्थले निवेदितत्वात्।

॥ अशक्तत्वं प्रातिस्विकजातियोगश्चेत् प्रत्यक्षविरोधः ॥

प्रातिस्विकजातिवियोगश्चेत्साध्यः, प्रत्यक्षविरोधो जीमूत(त्व)देरनेकक्षणानुयायिन एकस्यैव दर्शनात्। अक्षेपकारितारूपावान्तरवैजात्याभावस्तदधीनसमर्थ-

---

1. अशक्तत्वपदार्थ इति शेषः।
2. यद्यन्न करोति तत्तत्र शक्तमिति विपर्ययः।

व्यवहारगोचरत्वाभावो वा साध्यश्चेत् सिद्धसाध्यता। नचैवमपि धर्मिभेदसिद्धिः अकरणक्षणवत् करणक्षणेऽपि तयोरसिद्धेः। त(था)[दा] च विरुद्धधर्माध्यासाभावात् समर्थव्यवहारगोचरत्वाभावमात्रं[1] तु न शक्यसाधनं, प्रत्यक्षत एवाकुर्वत्यपि तथा व्यवहारदर्शनात्।

॥ यद्यत् करोति इति व्याप्तेरपि भङ्गः॥

योऽप्ययं विपर्ययः यद्यत् करोति न तत्तत्राशक्तमित्यादिः, तत्राप्यशक्तत्वाभावश्शक्तत्वं साध्यम्। तच्च यदि कुर्वद्रूपत्वं तत्र, साध्याविशेषः साधनस्य। सहकारिसम्पत्तिश्चेत्सिद्धसाध्यता पूर्ववदेव धर्मिभेदानुपपत्तिश्च। जीमूतत्वादिप्रातिस्विकजातियोगश्चेत् तथापि सिद्धसाध्यतैव। नचैवमपि धर्मिभेदः सिध्येत् जीमूतत्वस्यैकस्यैव कुर्वदकुर्वद्रूपगामित्वेन विरोधाभावात्। एतेन समर्थव्यवहारगोचरत्वं साध्यमिति निरस्तम्। तस्यापि कुर्वदकुर्वद्रूपसाधारणत्वात्। अक्षेपकारित्वरूपवैजात्यं तदधीनसमर्थव्यवहारगोचरता वा साध्या चेत् साध्यशून्यं निदर्शनं, सामग्रीमध्यवर्तिष्वपि तदसिद्धेः। तस्मात्प्रसङ्गतद्विपर्ययाणां यथोदितानां प्रामाण्यानुपपत्तेर्न समर्थासमर्थस्वभावतया विरोधाद्भेदसिद्धिः जलधरे।

॥ भावस्य समर्थासमर्थोभयस्वभावत्वेऽप्यविरोधः॥

भवतु वा समर्थासमर्थस्वभावो भावः भवदभिप्रेतया नीत्या, तथापि कालभेदापेक्षया विरोधाभावादसिद्धः विरुद्धधर्माध्यासः।

॥ क्षणिकवादिनोऽप्यविरोधस्याङ्गीकरणीयता॥

क्षणिकवादिनोप्येवमवश्याश्रयणीय एवाविरोधः। तथा(पि)[हि]—क्षणिकोऽपि भावो यस्यां कालकलायां यामर्थक्रियां कुरुते स ततोऽन्यस्यामपि तामेव कर्तुं समर्थः स्यात्, असमर्थो वा? समर्थश्चेत् कदाचित्तां जनयेदेव। न चेत् स तत्र समर्थोऽसमर्थश्चेति कथं न विरोधः? कालान्तरे तस्यासत्त्वात् अकरणं नत्वसामर्थ्यादिति चेत्; ननु भोः समर्थस्य किं [2]तत्र सत्तया? समर्थो न हि [3]तत्र सत्तया तत्र कार्यं करोति, किन्तु सामर्थ्येन

1. मात्रपदेन अशेषकारित्वाभावाधीनसमर्थव्यवहारगोचरत्वाभावव्यवच्छेदः।
2. कालान्तरे।
3. तत्रद्वयं कालपरामर्शि।

अन्यथा[1] देशान्तरेऽपि जनयेत्। भवतु तर्हि असामर्थ्यादेवाजननमिति चेत् हन्त तस्यामेवार्थक्रियायां तदेव वस्तु समर्थमसमर्थं चेति कथं न विरोधः। तत्र कालभेदाददोष इत्यवश्यं वाच्यं भवतापि। तदिदमस्माभिः स्थिरेऽप्यभिधीयमानं किं न भवता श्रद्धीयते? किञ्चासत्वमधिकं भावस्वभावं नास्ति (यन्मतैकं)[मन्मते। किञ्च—]

तस्यै(का)[व] सदसद्रूपमविरोधपदं कथम्।
कालभेदाददोषश्चेच्छक्ताशक्ते तथा न किम्॥ १॥

स्वभावप्रच्यवाभावाच्छक्तस्याशक्तता कथम्।
सद्रूपस्याप्यसद्रूपं कथमित्यपि वै समम्॥ २॥

तत्र स्वभावव्यत्यासो नास्ति कश्चन वस्तुनः।
स्वकारणबलात्किंतु स्वभावः कोऽपि तस्य सः॥ ३॥

यः सन्निति स्वकालादावन्योपाधावसन्निति।
व्यवहारोपहारी स्यादिति चेत्तुल्यमुत्तरम्॥ ४॥

असमर्थं समर्थं च कालभेदाद्यदुच्यते।
तस्यामेव क्रियायां स स्वभावः कोऽपि वस्तुनः॥ ५॥

स्वकारणबलायात इत्युक्तेऽपि न दूषणम्।
तस्माद्देशविभेदेन शक्यशक्तिस्थितिर्यथा॥ ६॥

तथा कालप्रभेदेनाप्येकस्येयं स्थितिर्भवेत्।
विरुद्धधर्मसंसर्गो वर्णनीयस्ततोऽन्यथा॥ ७॥

नचेह प्रकारान्तरमस्तीति विरुद्धधर्माध्यासासिद्धौ जलधरे प्रतिक्षणं भेदासिद्धिरिति कथं तत्र [सत्व]हेतोः[1] क्षणभङ्गरूपसाध्यप्रतिबन्धसिद्धिरिति स्थितम्।

---

1. सत्तया कार्यजनने
2. मोहहेतोः - मा[3]।

॥ क्रमाक्रमाभ्यामर्थक्रियानुपयोगिभावस्य अर्थक्रियाऽसामर्थ्यापादनम् तद्दूषणं च ॥

यदपि व्यतिरेकप्रक्रियामधिकृत्य विपक्षे बाधकं प्रमाणं व्यापकानुपलम्भमभिदधति – यथा यत्क्रमाक्रमवत्यामर्थक्रियायां नोपयुज्यते तन्नार्थक्रियासमर्थं, यथा गगनारविन्दम् ; नोपयुज्यते च स्थिरो भावः क्रमाक्रमधर्मिणीति तत्रापि हेत्वसिद्धावभिहितायां किमुत्तरमभिधातव्यं सौगतैः ।

॥ अक्षणिकेन कार्यकरणमिति सौगतप्रत्यवस्थानम् ॥

स्यादेषा मनीषा—क्रमकरणं नामैकस्मिन् कृतेऽपरकरणं ; तदक्षणिके सति न संगच्छते । तस्य सर्वत्र स्वकार्ये पूर्वापरकाल्योरेकरूपत्वेन सामर्थ्यात् । समर्थस्य क्षेपायोगात् । प्रयोगस्तु—यदा यत्करणसमर्थं तत्तदा तत्करोत्येव, यथा कुम्भकारः घटकरणकाले । घटसमर्थश्चायमक्षणिकत्वे सति तदानीमेव शरचापादिकरण इति विपर्ययः पूर्ववदुन्नेतव्यः ।

एवं [अ]क्रमकरणं सकृत्करणं एकस्य बहूनां वा, तदप्यक्षणिकस्य न सम्भवेत् । तस्य सर्वस्मिन् स्वकार्ये परापरकाल्योरेकरूप(ता)[त्वा]त्[1], अन्यस्य प्रयोग एव पराकृतत्वात् । [2]किन्तु धर्मिहेतुदृष्टान्तप्रसिद्धौ प्रमाणं चेदस्ति, तेषां वस्तुतापत्तिः । न चेत्प्रमाणमाश्रयस्वरूपासिद्धीहेतोः । उदाहरणस्य चाश्रयहीनतादूषणमनिवारणीयम् । नचोचितं वक्तुं(:) काल्पनिकरूपसम्पत्त्यैव भवत्यनुमानप्रवृत्ति(स्थि)[रि]ति । तथा सति तस्याः सर्वत्र सुलभत्वेन हेतुहेत्वाभासविभागस्य विलोपप्रसक्तेः ।

॥ पक्षादिषु काल्पनिकी रूपसम्पत्तिरिति शङ्का ॥

यदि मतं—पक्षसपक्षविपक्षेषु केवलं कल्पनाकल्पशाखिषु काल्पनिक्येव हेतोरूपसम्पत्तिः । प्रमाणोपनीतेषु प्रामाणिक्येव वचनीयेति विशेषः । तथा च य(था)[दा] धरणिधरे धूमध्वजसंस(र्गः)[र्गं] प्रमेयत्वादिना कश्चन साधयितुमिच्छति तदा वह्निसंसर्गविरहिणो व्योमतामरसादेः कल्पनया यद्यपि प्रमेयव्यावृ(त्तिं)[त्तिः] तथापि प्रामाणिकात् सलिलराशेः प्रामाणिक्येव व्यावृत्तिराश्रयणीया । नचैषा सम्भविनीति भवेदस्य हेत्वाभासत्वं, एवमन्यत्रापीति नातिप्रसक्तिरिति ।

---

1. इतीति पूरणीयम् ।
2. पूर्वानुक्तमनिवार्यं किन्त्विति दूषणमाह ।

॥ उक्तकाल्पनिकत्वदूषणम् ॥

**तदेतदसङ्गतम्।** काल्पनिकेषु काल्पनिकी रूपसम्पत्तिरितिवद्व्यभिचारादिसम्पत्तेरपि तथैवापत्तेः। तथा सति निरग्नावपि व्योमतामरसे धूमवत्ता कल्पितेति कथमेषापि धूमध्वजे हेतुभावं भजेत्? व्यभिचारित्वात्। वस्तुस्वभावस्य हेतोर्वास्तवरूपसम्पन्नस्य कल्पनाकल्पशाखिभिर्दूषणैः किं भविष्यतीति चेत्। तर्हि वास्तव्यां रूपसम्पत्तावसत्यां किमसद्रूपसम्पत्त्या फलिष्यतीति किमायुष्मन्नपर्यालोचय(न्)[सि]। (अ) क्रमाक्रमविरहादेरवस्तुनोऽवस्तुधर्मता न विरोधिनीति न तत्राश्रयासिद्ध्यादिदूषणं, धूमः पुनर्वस्तुत्वादवस्तुनि कथं वर्तेत विरोधादिति न व्यभिचार इति चेत्; किमियं विरोधाविरोधव्यवस्थाविकल्पनाकल्पशाखिनी किं वा प्रमाणारोहिणीति विचारे पूर्वस्मिन् कल्पे विपरीतव्यवस्था भवेत् कल्पनाया निरङ्कुशत्वात्। उत्तरस्मिंस्तु विरोधाविरोधयोः प्रामाणिकत्वे प्रतियोगिनोरपि द्वयोः प्रामाणिकत्वमित्यवस्तुनो वस्तुतापत्तिरनिवार्या। तस्मात्काल्पनिकी रूपविपत्तिर्न दूषणमिति चेत्संपत्तिरपि रूपाणां काल्पनिकी नोपयोगिनी।

॥ पुनः बौद्धशङ्का ॥

यत्पुनरिदमभ्यधायि—

धर्मस्य कस्यचिन्मानसिद्धा........<br>
तथाविधव्यवहृतिः किमिवास्ति नो वा।<br>
क्वाप्यस्ति चेत्कथमियन्ति न दूषणानि<br>
नास्तीति चेत्स्ववचनप्रतिरोधसिद्धिः॥ इति।

॥ तद्दूषणम् ॥

किमिह स्ववचनविरोधापादनद्वारेण प्रकृते धर्म्यादौ प्रमाणं प्रदर्श्यते? किंवा व्यवहृतिनिरसनं, व्यवहारस्यापि निरास एव अभिप्रेतः? किंवा प्रमाणमन्तरेणापि स्वीकरणीयो भवत्यवश्यमवस्तुनि व्यवहार इति गले पादं निधायाप्यापाद्यते? न तावदाद्यः कल्पेत।

प्रत्यक्षमनुमानं वा नहि शक्य(ा)प्रदर्शनम्।<br>
अवस्तुनि विरोधानां शतशोऽप्यभिधानतः॥ १॥

शक्यत्वे वा कथं साक्षात्प्रमाणं नाभिधीयते ।
प्रस्तुतोन्मत्तकेलिः किं प्रस्तुतानुपयोगिनी ॥ २ ॥

द्वितीये न विसंवादः प्रमाणे फलवर्तिनाम् ।
मानशून्ये कथं नाम व्यवहारो विपश्चिताम् ॥ ३ ॥

कथमेवं विदित्वापि व्यवहारनिषेधनम् ।
असति क्रियते रूपं मूकता नाश्रिता तदा ॥ ४ ॥

उच्यते, मानशून्येऽपि स्ववाक्यव्याहृति(र्य)[र्वृ]था ।
माभूदिति विना मानं व्यवहारस्त्वयेष्यते ॥ ५ ॥

तथा प्रमाणचिन्तायां माप्रापन्मानवर्जितः ।
व्यवहार इतीष्टैव व्याहृतिर्वचसो मम ॥ ६ ॥

समानदूषणत्वं तु विभाव्यं भवता यदि ।
अयुक्ताचरणं नाम क्रियते नतरां मया ॥ ७ ॥

तृतीये तु प्रमाणेन विनाऽवश्याभ्युपेयता ।
अवस्तुव्यवहारस्य नृपत्वे तस्य शा(ष्टं)[स]नात् ॥ ८ ॥

दृढं निरूढ इत्येव व्यवहारोऽभ्युपेयताम् ।
इत्येतदपि नो युक्तं निर्मानस्यादृढत्वतः ॥ ९ ॥

एवं वादव्यवस्थायां उत्तरप्रक्रियोदिता ।
जल्पादिविषये त्वेषां विदुषां प्रक्रिया मता ॥ १० ॥

प्रमाणप्रश्नमात्रेण न्यायवादिनि तिष्ठति ।
प्रमाणेनोत्तरं वक्तुं शाक्यैस्तावन्न शक्यते ॥ ११ ॥

अमानमूलं वदतां स्ववाचैव पराजयः ।
पक्षादिप्रविभागेऽस्मिन् अस्माभिः परिकल्पिते ॥ १२ ॥

नास्ति प्रमाणमित्येव वाचा भङ्गस्य साधनात् ।
न किंचिदुत्तरं ब्रूते यदि शाक्यस्तथापि सः ॥ १३ ॥

निगृह्यतामप्रतिभानिग्रहस्थानसम्भवः ।
तदेवमन्वयद्वारा व्यतिरेकमुखेन वा ।
व्याप्त्यसिद्धेरहेतुत्वं सत्त्वस्य क्षणभञ्जने ॥ १४ ॥

॥ अवश्यंभाविनाशत्वात्कृतकानां क्षणिकत्वमिति पुनः शङ्का ॥

यदप्याचक्षते—

अवश्यंभाविनाशत्वात्कृतकानां क्षणं क्षयः ।
सिद्ध्येद्यत्र नियतं तस्य तत्रानपेक्षणात् ॥

तथा हि—यद्येषां ध्रुवभावि न तत्र तेषां परापेक्षा यथा संविदः स्वपरप्रकाशने । ध्रुवभावी च कृतकानां विनाश इति, साधनं विनाशस्य हेत्वन्तराधीनत्वं प्रतिक्षिपन् क्षणभङ्गमाक्षिपति । ये पुनर्हेत्वन्तरसापेक्षा न ते ध्रुवभाविनो भवितुमर्हन्ति यथा वाससि रागादयः । परापेक्षत्वे हि परेषां हेतूनां प्रतिबन्धवैकल्ययोः सम्भवात् कथं तदधीनसन्निधेरवश्यंभाव इति कृतकेऽपि कश्चिन्न विनश्येत् । स्वहेतोः पुनर्विनश्वरस्वभावा भवन्तो भवनानन्तरमेव भवन्तीति सिद्धः क्षणभङ्ग इति ।

॥ उक्तानुमानदूषणम् ॥

नेदमपि रमणीयम् । अवश्यंभाविनामपि परापेक्षादर्शनेन हेतोर्व्यभिचारात् । दृश्यते हि दीपादेः स्वसन्तानोच्छित्तिर्घटादेरसभागक्षणोत्पत्तिश्चन्द्रादेरुदितस्यास्तमय इत्येवमादिकं निमित्तविशेषापेक्षं कालविलम्बेनावश्यं भवतीति (क्रम एव) ।

एतदप्यनवकाशम्, यदुक्तं परापेक्षत्वे परेषां प्रतिबन्धवैकल्ययोरपि सम्भवात् तदधीनसन्निधेर्विनाशस्यावश्यंभावो न सम्भवतीति । विभागकपालमालादिसमानयोगक्षेमत्वात् ।

॥ नाशस्य परानपेक्षत्वे निमित्तविशेषेणोपलम्भस्यानुपपत्तिः ॥

(किं)[कथं] च परानपेक्षत्वे विनाशस्य देशकालप्रतिनियमेनोपलम्भः सम्भवी ? कथं वा कारणान्वयव्यतिरेकानुविधानसाधनप्रत्यक्षानुपलम्भपौरुषमपाकर्तुं शक्यम् ? न च

भावातिरेकिविनाशस्वरूपमेव [न] दृश्यते तदियं निराश्रयैवाशापरम्परेति वचनीयं प्रतिप्राणिप्रसिद्धप्रतिभासविरोधात् । तथा—

नष्टं सम्प्रति नास्ति वस्त्रमिति धीराबालगोपाङ्गना-
लोके लोचनशालिनामवयवे विश्लेषिते जायते ।
विश्लिष्टावयवान्मति(भुवाथो)[श्च भवता] नालं समालम्बितुं
वस्त्रात्प्रागपि तद्द्वयस्य भवतो नाशत्ववै(मुच्यत:) [धुर्यत:] ॥ १ ॥

श्लेषध्वंसविशेषगोचरमिदं पश्याम (इति चेत्) [धीश्चेत्] भवे-
द्वस्त्रध्वंसतपस्विनापि मतिमन् कस्तेपराधः कृतः ।
तन्मात्रादुपपत्तिरित्यपि वचः शक्यं न नो भासते
यन्नान्यस्य विनाश एव भवतो भावान्तरस्य क्षयः ॥ २ ॥

तन्मात्रात् तन्तुश्लेषवि(शे)[श्ले]षमात्रादेव वासोऽपि नष्टमित्यनुपपन्नं; न खलु अन्यनाश एव ततोऽन्यस्य नाशो भवितुमीष्टे । प्रसाधितं चावयविनो वस्त्वन्तरत्वम् । यदि चावयवविश्लेषगोचरो वावयविविनाशबुद्धिः तर्हि द्व्यणुकविश्लेषस्यातीन्द्रियत्वादैन्द्रियकस्यापि त्र्यणुकस्य भङ्गो न लोचनगोचरतामाचरेत् । भवति च पुरोदेशवासिनि त्रसरेणाववविनाशिनि यद् दृष्टं तन्नष्टं नास्तीति च मतिर्लौकिकानाम् ।

॥ अभावस्य पदार्थान्तरत्वं नास्तीति मतनिराकरणम् ॥

यत्तु केवलधर्म्यालम्बनव्यवहारभावमात्रमिदं, न पुनरभावो नाम कश्चिद्भासत इति **भूषण**स्तदपि प्रागेव निरस्तम् । तथापि विकल्पविलसित एवायं तुच्छो नरविषाणादिवदिति चेत्, मैवम् । नीलधवलादिवदविसंवादाविशेषात् । तद्वदेव तर्हीदङ्कारास्पदतया भासेत नान्यथा नयनगोचरतोचितेति चेन्न । पदार्थवैचित्र्यात्, 'नाशो जातो वसनस्य', 'नष्टमिह वसनं' इत्येवमेव नाशो भासतां वसनादेर्नयनगोचरोऽपि । किमिदानीं परस्परवैलक्षण्यादेव वस्तुनि स्वरूपमवजह(ा)ति? हन्तैवं शून्यतैव विश्वस्य भवेत् । तस्मात्कारणान्वयव्यतिरेकानुविधा(यि)[यी] कालान्तरसम्बन्धितया भासमानः प्रत्यक्षतो भाववदभावोऽपि नापलापमर्हति । केवलं बहुलाधिकारात्कर्तरि घञं व्युत्पाद्य नश्वरस्वभावो भाव एव नाश इत्यभिधीयमानेऽपि नास्माकं क्षतिः ।

॥ नाशस्यातिरिक्तपदार्थत्वाभ्युगमावश्यकता ॥

नशनं नाश इति तु प्रसज्यप्रतिषेधरूपोऽप्यपरः कालभेदेन भासमानः पदार्थः परमार्थ एव स्वीकरणीयः। नान्यथा क्षणमात्रभावी भावो न पश्चादिति भवतापि शक्यं व्यवहर्तुम्। भावाभावतादात्म्ये हि भाव एव दण्डायमानः कालान्तरेऽपीति कथं भावाभावव्यवहारविभागो भवेत्। तस्मात्सुष्ठूक्तं सूरिभिः—

विधिरात्मा स्वभावस्य निषेधस्तु ततः परम्।
सोऽपि चात्मेति कं प्रेक्षेच्छृण्वन्नपि न लज्जते ॥ १ ॥ इति।

॥ भावानां नश्वरस्वभावत्वे नाशहेतुवैयर्थ्यम् ॥

**यत्तु** वदन्ति —स्वहेतोरेव विनश्वरस्वभावश्चेत् भावो जायते किमपरैर्विनाशहेतुभिः वैयर्थ्यात् तद्विपरीतश्चेत्ततो जायते, तथापि किं विनाशहेतुभिः असामर्थ्यात्। नहि स्वभावाद्भावो वियोजयितुं शक्यत इति। **तत्रापि** विनश्वर इति विनाशस्वरूप इति चेदर्थः तदपास्तमेव, अतिरिक्तनाशप्रतिपादनात्। विनाशकर्तेति चेदर्थः, तर्ह्यस्तु नामैवं; किन्तु यदि सहकारिणः स्युरित्युपबध्नीमः। त(था)[दा] नास्माकमभिमतसिद्धिव्याहतिः। यच्च सहकारिषु वक्तव्यं तदुक्तमेव सर्वमिति सहकारिभिर्भिन्ननाशोत्पादनेन न किंचिदव(श्य)[द्य]म्।

॥ नाशस्यानन्तत्वम् ॥

सच भावाद्भेदेन भवन्न विनाशो (न) नश्यति। भावावच्छिन्नत्वात्कृतकानां नाशिताव्याप्तेः। इतरथा सर्वत्र कार्योन्मज्जनप्रसङ्गात्। अपुनरावृत्तिश्रुतेः व्याकोपापत्तेः।

॥ नाशस्य नाशप्रतिपादकपुराणवचनस्य उपपत्तिप्रदर्शनम् ॥

यत्पुनरिदं वसिष्ठादीनां शरीरं भस्मीभूतं पुनर्महेश्वरप्रसादादुपजातमिति यथाश्रुतं पुराणादिप्रामाण्यानुसरणेन ध्वंसस्यापि विनाशे विरोधो नास्तीत्युपपादितं तत् **भूषण** एव निपुणैर्निरीक्षणीयम्। न पुनरिह विपञ्च्यते संग्रहाधिकारादिति।

तदेवमनुमानेन क्षणभङ्गो न सिद्ध्यति।
न चाध्यक्षं क्षमं तत्र तथा निश्चयहानितः ॥ १ ॥

॥ क्षणभङ्गे प्रत्यक्षस्य मानतानिरासः ॥

न खलु प्रत्यक्षमेव भावानां क्षणभङ्गमवगाहत इति शक्यं वदितुं तदनुरूपनिश्चयानुत्पत्तेः[1] । निश्चयानुगतस्यैव प्रत्यक्षस्य प्रामाण्यात् । अपरथाऽतिप्रसङ्गात् । यत्पुनरत्रोक्तं—यदा प्रमाणान्तरप्रसिद्धमध्यक्षस्य क्षणमात्रस्थितिग्रहणमाश्रित्य व्यवहारमात्रसाधनमनुमानं पृथग्जनविकल्पनिर्विशेषं तत्पौरुषमेव दीपयदुत्पद्यते, तदा प्रत्यक्षतः क्षणभङ्गसिद्धिरिति मुख्यमाख्यायते । **तदयमर्थः**— क्षणिकत्वमध्यक्षधिया(धियातं) [ऽऽयातं] पुनः व्यवहार(मे)[ए]वातः[2] सम्यग्ग्रहणसाधनेन प्रसाध्यते । (तद्व्यवहार एव ।)

क्षणभङ्गेऽन्यदा सिद्धे प्रत्यक्षेण ग्रहस्थिति(म्)[:] ।
प्रत्यक्षग्रहणादद्य क्षणभङ्गव्यवस्थितिः ॥

यन्निर्भाति यथा तथा तदखिलं गङ्गाम्बुगौरं यथा
नो चेन्न प्रतिवस्तु शक्तिनियमः सङ्कीर्णभावे भवेत् ।
संस्कारः प्रतिभाति चेन्द्रियमितिष्वेकस्थितिस्थायिनः
स्यादेकक्षणवीक्षणादितरथा दृष्टिस्त्रिकाली कला ॥ इति ।

॥ क्षणिकत्वस्य प्रत्यक्षसिद्धत्वदूषणम् ॥

**तदपि** यथाकथंचिदुत्फुल्लमालपितम् । तथा हि—तृतीयपादोपसंगृ(ह)[ही]तस्तावद्धेतुरसिद्धः प्रत्यक्षस्य क्षणावच्छिन्नवस्तुग्रहणं, प्राचीनपरिग्रहस्य प्रथमपरिच्छेदे निवेदितत्वात् । [3][अथ तु क्षण]मात्रस्थायिवस्तु साक्षात्क्रियत इत्यभिप्रेतं तत्कथमसिद्धे क्षणभङ्गे सिध्येत् । अथ विवक्षितक्षणेनायोग(।)व्यवच्छिन्नं वस्तुवृत्त्या वस्तु विवक्षितं, तथाप्यवभासः स्वरूपेणैव । तच्च रूपं तथैवेत्यस्माकमपि सम्प्रतिपन्नमिति सिद्धसाध्यता । न खलु नीलमनीलं वदामो वयमपि । योऽप्यसिद्धिपरिहारार्थश्चतुर्थः पादः तत्रापीतरथेति, यदि क्षणपरिकराभावान्न प्रतिभासेरन्निन्द्रियमितिष्विति चेद्विवक्षिता । त्रिकाली कला दृष्टिः कथं भवेत् । कोष्ठशुद्ध्या वस्तुस्वरूपनिष्ठत्वे नै-

---

1. सौगतमते निर्विकल्पकस्यैव प्रमाणत्वात् तस्य च सविकल्पकैकोन्नेयत्वात् ।
2. अनुमानादित्यर्थः ।
3. अक्षंतुद्व्यक्ष-मा ।

**तत्सिद्धमेतच्छरीरादिव्यतिरिक्त आत्मा नित्यो व्यापक इति। नित्यत्वं कुत इति चेत्, भावत्वे सति अनादित्वात् गगनवदिति। तदेव कथम्? जातमात्रे जन्मान्तरानुभवसूचकस्मरणलिङ्गस्य हर्षभयशोक-[1]स्तन्याभिलाषादेरुपलम्भात्।**

---

एवमात्मप्रसङ्गेन क्षणभङ्गनिराकृतिः।
विहिता बहिरर्थेऽपि प्रत्यभिज्ञानभानतः॥ १॥

उपसंहरति—**तत्सिद्धमेतत् शरीरादिव्यतिरिक्त आत्मेति।** तस्यैव विशेषान्तरमाह—**नित्यो व्यापक इति।** शङ्कते—**नित्यत्वं कुत इति चेदिति।** परिहरति—**भावत्वे सत्यनादित्वाद्गगनवदिति।** परः पृच्छति—**तदेव कथमिति।** परिहरति—**जातमात्रे जन्मान्तरानुभवसूचकस्मरणलिङ्गस्य हर्षभयशोकस्तन्याभिलाषादेरुपलम्भात्।** जन्मान्तरे योऽनुभवस्तस्य सूचकमनुमापकं यत् स्मरणं तस्य लिङ्गतयोक्तम्। हर्षश्च भयश्च शोकश्च स्तन्ये स्तनजे पयस्यभिलाषश्चेति द्वन्द्वः। ते चादयो यस्य प्रज्ञारागादिप्रकर्षस्य लिङ्गस्य तस्य जातमात्रे जन्तौ दर्शनात्।

एतदुक्तं भवति—जा[तमात्रो] जन्तुरस्मिन् जन्मनि पूर्वाननुभूतेषु वस्तुषु स्थितेषु कम्पितरुदिताद्यनुमेयान् हर्षभयशोकान् प्रतिपद्यते। नच तेषां सुखसाधनभावानुमानमन्तरेण ते भवितुमर्हन्ति। नच तदनुमानं व्याप्तिस्मरणमन्तरेण सम्भवति। नच स्मरणं पूर्वानुभवमन्तरेण। नच पूर्वानुभवस्तथा (विधो जात)[विधे जाते] इति जन्मान्तरीयस्तदनुभवोऽनुमातव्यः।

॥ बालस्य जन्मान्तरवत्त्वे अनुमानम् ॥

तदयं प्रयोगः—बाल्याद्यवस्था हर्षादिमदात्मवती स्मितादिमदात्मवत्त्वात्। तथा हर्षादिमदात्मवत्वेन सुखदुःखसाधनत्वानुमानवदात्मवती (ततो)[तथा व्याप्ति]स्मृतिमदात्मवती, संस्कारवदात्मवती, त[थाऽ]नुभववदात्मवतीत्यादियोज्यं सर्वत्र। युवावस्था

---

1. मोहशून्याभिला—मा.

दृष्टान्तः। एवं तत्र तत्र जन्मन्यनुमानपरम्परा वेदितव्या। तथैव जातमात्रस्य वत्सादेः स्तन्याभिलाषः तदन्वयतः प्रवृत्त्या प्रतीयते। यूनश्चान्नपानाद्यभिलाषः। स च सुखसाधनत्वानुमानादेव सम्भवति। तच्च व्याप्तिस्मरणात्तदपि संस्कारात्सोऽपि पूर्वानुभवात्। सोऽपि पूर्वदेहसम्बन्धादिति पूर्ववदनुमानपारम्पर्येणानादित्वसिद्धिः। सर्वत्र विपर्यये बाधकं स्यात् अकारणकार्यप्रसङ्ग इति वेदितव्यम्।

॥ करभादेः कण्टकप्रीत्या पूर्वमपि करभशरीरत्वशङ्का तत्समाधानं च ॥

नन्वेवं सति करभादेः कण्टकादिषु प्रवर्तमानस्य प्राचीनेऽपि भवे करभादिभाव एवानुमेयः। कथमन्यथा कण्टकादावभिलाषनियमः स्यादिति। **नैतदेवम्।** विचित्रकर्माशयवशेन विविधजातिषु क्रमेण जन्मसम्भवेनातिव्यवधानेनोत्पन्नस्यापि करभादियोनिप्रभवाभ्याससंस्कारस्य सम्प्रति करभादियोनिप्रा[पका]धर्मविशेषादेव समुद्बोधसम्भवात्। विपरीतसंस्काराणां प्रतिबन्धसम्भवाच्च नियतगोचरप्रवृत्त्युपपत्तेः।

॥ अदृष्टादेव विवक्षितकार्यसिद्धेः संस्कारो न कल्प्यतामिति शङ्का तत्परिहारश्च ॥

नन्वेवं सति करभादिजातिप्रापककर्मण(देव)[एव] विवक्षितकार्यसिद्धेः किं चिरतरसंस्कारानुवृत्तिकल्पनेनेति। **मैवम्।** दृष्टकारणोपसंहारेणैवा(पि) दृष्टकारणभावव्यवस्थापनात्। पूर्वाभ्यासस्य च संस्काराधीनप्रणाड्या स्मरणहेतुभावेन नियतविषयप्रवृत्तिहेतुत्वमस्मदादावन्वयव्यतिरेकसिद्धमिति जातमात्रेऽपि कार्यतस्तदनुमानं नानुपपन्नम्।

॥ कर्मणोऽपि जन्मान्तरसिद्धिः तत्रैव युक्त्यन्तरं च ॥

किं च कर्मण एव कारणत्वाभ्युपगमेऽप्यनादित्वमात्मनः सिद्ध्यति। कर्मणोऽपि वि(पक्ष)[वक्षित]कार्यजनकस्य जन्मान्तरमन्तरेणानुपपत्तेः, तज्जन्मनोऽपि समानन्यायतया कर्मान्तरपूर्वकत्वानुमानात्। किं चाविशिष्टमातापितृजन्यानामप्यनेकेषां मध्ये केषांचिदेव प्रज्ञारागादिप्रकर्ष उपलभ्यमानः प्राग्भवीयाभ्यासनिबन्धनसंस्कारपाटवमदृष्टभेदं चानुमापयतीत्येतया द्वारा सिद्धमनादित्वम्। ततश्चानादित्वात् विनाशित्वहेत्वभावाच्च नित्य आत्मेति सिद्धम्।

**धर्मादेराश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयान्तरे वाय्वादौ क्रियाकर्तृत्वात्, अणिमाद्युपेतस्य योगिनो युगपदसङ्ख्यातशरीराधिष्ठातृत्वाच्च व्यापकत्वसिद्धिः। तथा चोक्तम्—**

---

॥ आत्मनः नित्यत्वेन अनणुत्वेन च विभुत्वसाधनम् ॥

नित्यत्वे परमाणुत्वविरहिद्रव्यभावेन विभुत्वमनुमातव्यमात्मनो गगनादिवत्। परमाणुत्वविरहः कथमिति चेत्? अस्मदादीन्द्रियग्राह्यगुणाधिकरणत्वात्, अस्मदादीन्द्रियग्राह्यत्वाच्च, घटादिवत्। विपर्यये परमाणुवत्, तद्गुणवच्च आत्मनः [परमाणुत्वेऽ]तीन्द्रियत्वप्रसङ्गः। प्रत्यक्षवेदनोत्पत्तौ द्रव्ये तत्समवायिनो, गुणेषु तदेकार्थसमवायिनश्च महत्वस्य सर्वत्रान्वयव्यतिरेकाभ्यां कारणभावाभ्युपगमात्। यदि पुनरणुपरिमाणानधिकरणत्वेऽप्यात्मा विभुर्न स्यात्, नित्योऽपि न स्यान्मध्यमपरिमाणत्वेन घटादिवदनित्यताप्रसङ्गस्य दुर्निवारत्वात्।

॥ आत्मनो विभुत्वेऽनुमानान्तरम् ॥

किञ्च म(ह)च्छरीरं मुक्त्वाऽन्यानि मूर्तद्रव्याणि सर्वाणि मदात्मना संयुक्तानि, मूर्तत्वान्मच्छरीरवत्। किमत्र विपर्यये बाधकमिति चेत् नानादिग्देशगामिनि दहनपवनादौ परम्परयापि स्वोपकारापकारिणि पदार्थसार्थे तादर्थ्येन क्रियानुत्पत्तिप्रसङ्गः तदुत्पादस्य स्वादृष्टाधीनत्वेनैव सम्भवात्। अदृष्टस्य च स्वाश्रयसंयोगमन्तरेण तत्कारणत्वानुपपत्तेः। न खल्वसंसृष्टं कारकं भवति; अप्राप्तेभ्यः कार्योत्पत्तेरनुपलम्भात्। नचाश्रयसंयुक्तसंयोगपरम्परया कार्योत्पत्तिः। गुरुत्वादेर्गुणस्य स्वाश्रयसंयोगवशेनैवाश्रयान्तरे करतलादौ क्रियाहेतुत्वात्। प्रकृतेऽपि दृष्टानुसारत एव कल्पनाप्रवृत्तेः। अन्यथा चातिप्रसङ्गात्। एतदेवाभिप्रेत्याह—**धर्मादेराश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयान्तरे वाय्वादौ क्रियाकर्तृत्वाद्व्यापकत्वसिद्धिरिति।**

॥ अत्रैव स्वतन्त्रप्रयोगान्तरम् ॥

यद्वा स्वतन्त्र एवात्र प्रयोग उन्नेतव्यः। धर्मादिकमाश्रयसंयोगापेक्षमेवाश्रयान्तरे क्रियाजनकं गुणत्वात् गुरुत्ववदिति। यथा निरूपितकार्यकारणव्यतिरेकेण कार्योत्पत्तिस्वीकारे सत्यतिप्रसङ्गो बाधक उन्नेयः।

**आत्मनो वै शरीराणि बहूनि मनुजेश्वर ।**
**प्राप्य योगबलं कुर्यात्तैश्च सर्वां महीं चरेत् ।**
**भुञ्जीत विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ।**
**संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥ इति ।**

---

॥ कायव्यूहसम्भवादपि आत्मनो विभुत्वम् ॥

तत्रैवोपपत्त्यन्तरमाह—**अणिमाद्युपेतस्य योगिनो युगपदसङ्ख्यात-शरीराधिष्ठातृत्वाच्चेति ।** तत्रैव प्रमाणमाह—**तथा चोक्तं** पुराणादिषु—

**आत्मनो वै शरीराणि बहूनि मनुजेश्वर ।**
**प्राप्य योगबलं कुर्यात् तैश्च सर्वां महीं चरेत् ॥**
**भुञ्जीत विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।**
**संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव[1] ॥ इति ।**

**यत्पुन**रणुपरिमाणाङ्गुष्ठपरिमाणादिप्रतिपादकं शास्त्रं तत्परममहत्वप्रतिपादक-शास्त्रान्तरविरोधादुन्नीतन्यायविरोधाच्च तादृगुपाध्यवच्छेदाद्यभिप्रायेण भक्त्या व्याख्यात-व्यम् ।

॥ आत्मनः शरीरपरिमाणत्वसाधकं दिगम्बरानुमानम् ॥

यदपीदं **आशाम्बर**[2]प्रणीतमनुमानं आत्मनः शरीरपरिमाणतासाधनम्—आत्मा शरीरपरिमाणः, तत्रैव सर्वत्रोपलभ्यमानकार्यत्वात् यद्यत्रैवोपलभ्यमानगुणकं तत्तत्परिमाणं यथा गृहान्तर्गतदीपप्रभेति ।

॥ दिगम्बरानुमानखण्डनम् ॥

**तदपि** प्रागुक्तन्यायनीत्या शरीराद्बहिरपि संयोगगुणस्यानुमा(नं तू)[ने नो]-पलब्धेर्हेत्वसिद्ध्या निरसनीयम् । यदि तत्रैवोपलभ्यमानविशेषगुणत्वादिति हेतुः तथापि मशकशरीरं विहाय महेभशरीरं प्रविष्टस्य महेभशरीरं वा विहाय मशक-

---

1. Ms. सूर्यस्तेजोगणानिव । म. भा. १२.३००.२७-२८
2. दिगम्बरो जैन इत्यर्थः ।

शरीरं वा विशतस्तत्रैवोपलभ्यमानविशेषगुणत्वमेकैकशरीरापेक्षमसिद्धमेव। तथैकस्मिन्नपि जन्मनि[1]।

॥ द्रव्यरूपेण शरीराभेदात् प्रत्यभिज्ञोपपत्तिशङ्कापरिहारौ ॥

तत्र पर्यायरूपेण प्रतिशरीरं भेदेऽपि द्रव्यरूपेण द्रव्यस्यानु(पपत्तेः)[वृत्तेः] प्रत्यभिज्ञानाद्युपपत्तिः कटकमकुटादौ हाटकस्येवेति। **तदिदमसङ्गतम्**। तथा हि— द्रव्यपर्याययोस्तादात्म्ये सति तदेव वस्तुपर्यायरूपेण परावर्तते द्रव्यरूपेणानुवर्तत इति कल्पना (न) सम्भविनी। नतु द्रव्यपर्याययोस्तादात्म्यसम्भवः कुसुमसूत्रवदनुवृत्तिव्यावृत्तिभ्यां आत्यन्तिकभेदोपपत्तेः।

॥ सामानाधिकरण्यात् भेदाभेदसिद्धिशङ्का ॥

सामानाधिकरण्यानुरोधादभेदोऽप्याश्रणीयः, तस्यात्यन्तभेदे कुम्भस्तम्भयोरदर्शनात् अभेदमात्रेऽपि कुम्भः कुम्भ इत्यदर्शनात्, भेदाभेदस्वीकार एव, सुख्यहं, सुवर्णं कुण्डलमित्यादिसामानाधिकरण्यसम्भवादिति चेत्।

॥ भेदाभेदखण्डनम् ॥

नैवम्। भेदाभेदयोर्विधिप्रतिषेध(तय)ात्मकत्वेनैकोपाधावसम्भवात्, कुम्भतदभाववत्। सामानाधिकरण्यं तु समवायरूपसम्बन्धवशादपि नानुपपन्नम्। दृश्यते च सम्बन्धभेदस्य सामानाधिकरण्ये निमित्तत्वं—यथैष दण्डी देवदत्तः, यथा वा वह्निरित्ययःपिण्डे। तत्र युतसिद्धयोः संश्लेषः। प्रकृते त्वयुतसिद्धयोरिति। भवत्वेतावदान्तरालिकं वैषम्यं, नतु विरुद्धस्वभावयोः भेदाभेदयोरेकत्र निवेशः सम्भवी। यदि पुनरभेदो नाम भेदाविरुद्ध एवोभयदत्तपादः कश्चिद्धर्म इष्यते, तथापि संज्ञान्तरेणायं समवाय एवाश्रितः स्यात्। एकत्वमभेद इति चेन्नैवं, भेदाभावातिरेकिण्येकत्वे प्रमाणाभावात्।

॥ द्रव्यपर्याययोस्तादात्म्ये दोषकथनम् ॥

किञ्च द्रव्यपर्याययोस्तादात्म्ये पर्यायविनाशे द्रव्यस्यापि विनाशः स्यात्, द्रव्यनित्यतायां वा पर्यायनित्यता स्यात्। तथा—

---

1. शरीरभेदान् तत्रैवोपलभ्यमानविशेषगुणत्वमसिद्धमित्यर्थः।

पर्यायाणामनेकत्वात् द्रव्याणामप्यनेकता ।
एकत्वाद् द्रव्यभागस्य पर्यायेष्वेकता भवेत् ॥ १ ॥

भेदाद्व्यवस्थितिश्चेत्स्यात् अव्यवस्थाऽप्यभेदतः ।
किं न स्यात्सर्ववस्तूनां इष्यते सर्वरूपता ॥ २ ॥

अनेकान्तस्य संसिद्धेरित्येतदपि नोचितम् ॥

॥ जैनाभिमतस्य अनेकान्तवादस्य विवरणम् ॥

न खल्वनेकान्ते प्रमाणमस्ति । यदि मतम्—प्रत्यक्षमनुमानं च प्रमाणम् । तथा हि—प्रत्यक्षेण कुम्भादेः स्वदेशादौ सत्त्वमन्यदेशादावसत्त्वं, मृदादिरूपेण नित्यत्वं कलशादिरूपेण चानित्यत्वं, तथा स्वशब्दाभिधेयत्वं [परशब्दानभिधेयत्वं], स्वकार्ये कारणत्वं कार्यान्तरे चाकारणत्वमित्यादि प्रत्यक्षसमधिगम्यम् । अनुमानं च सर्वं वस्त्वनेकान्तात्मकं प्रमेयत्वात् । यद्यत्प्रमेयं तत्तदनेकान्तात्मकं यथा सामान्यविशेषौ, यथा वा हेरम्बनरसिंहौ, यथा वा चित्ररूपमिति ।

॥ अनेकान्तवादनिरासः ॥

तदेतदसमञ्जसम् । तथा हि—प्रत्यक्षं तावद्यथोदितरूपमस्मदभिप्रेतमेव पुष्णाति । वयमपि हि स्वदेशादौ सत्त्वं, परदेशादौ चासत्त्वमभ्युपगच्छामः । स्वदेशादावेव सत्त्वमसत्त्वं च साधयत्प्रमाणं न[ः] प्रतिकूलम् । नच तथा प्रत्यक्षम् । **यत्तु** घटादेर्घटादिरूपतया विनाशित्वमुदितं **तत्रापि** सम्प्रतिपत्तिः । **यदपि** मृद्रूपतया नित्यत्वं गदितं **तदपि** न सारं, यतो नाम मृत्त्वं सामान्यं, नच तस्य नित्यत्वे कलशादेर्नित्यता सम्भविनी । सामान्यविशेषयोरनुवृत्तिव्यावृत्तिभ्यां अर्थान्तरत्वात् । अनर्थान्तरत्वे तु विशेषरूपस्यापि विशेषान्तरे भवेदनुवृत्तिः अननुवृत्तिरेव वा सामान्यरूपस्यापि । नचैवं केनापि प्रमाणेन दृष्टम् । सामानाधिकरण्यमपि सामान्यविशेषयोः समवाय[मूल]मेव संभवतीति न [सामानाधिकरण्या]दप्यभेदसिद्धिः । कथंचित्संभवन्त्यपि तत्सिद्धिर्भ्रान्तैव भवेत् । अतिसंश्लेषस्य भ्रान्तिहेतोः सद्भावात् दहनायःपिण्डयोरिव । व्यावृत्त्यनुवृत्तिलक्षणविरुद्धधर्मिसंसर्गितयापि भेदस्य निश्चितत्वात् । यच्च स्वशब्दाभिधेयत्वमन्यशब्दानभिधेयत्वं, स्वकार्ये कारणत्वं परकार्ये चाकारणत्वं, इत्यादि तत्रापि सम्प्रतिपत्तिरेव ।

॥ अनेकान्तवादे अनुमानखण्डनम् ॥

यदपीदमनुमानं गदितं—प्रमेयत्वादिति, तदपि प्रतिवस्तु व्यवस्थितरूपग्राहिणा प्रत्यक्षेण बाध्यमानं न प्रामाण्यमासादयति। किञ्चेदं भवान् प्रष्टव्यः—किमनेकान्तात्मकत्वं भावानां ऐकान्तिकमनैकान्तिकं वा इति भवति। प्रथमे तेनैव प्रमेयत्वमनैकान्तिकम्। द्वितीये तु तस्यानैकान्तिकत्वं न तावत् प्रकृतादेव हेतोः सिद्ध्यति, प्रकृतहेतुप्रवृत्तेः, प्राग्धर्मिण एवासिद्धेः, सिद्धौ वा हेतोः [वैयर्थ्यात्]। (तथा)[यदि] चानेकान्तस्यानैकान्तिकत्वं हेत्वन्तरात्सिद्ध्यति तर्हि तस्याप्यनैकान्तिकत्वस्य यावदनैकान्तिकत्वं न सिध्येत्, तावत् द्वयोरपि पूर्वोक्तयोर्हेत्वोः सन्दिग्धविपक्षवृत्तित्वं, तत्रापि हेत्वन्तरादनैकान्तिकत्वसिद्धावनवस्था स्यात्। तथा सत्युत्तरोत्तर[ा]सिद्धौ पूर्वपूर्वहेत्वव्यभिचारासिद्धेः न कल्पशतेनापि विवक्षितार्थसिद्धिः स्यात्।

॥ अनेकान्ते भक्ष्याभक्ष्याद्यव्यवस्थाप्रसङ्गः ॥

किञ्च भवत्तीर्थकरस्य सर्वज्ञताद्युत्कर्षः [[1]स्वविनेयादे]रपकर्षः, शाल्योदनादिभोज्यत्वं सारमेयमांसादेरभोज्यत्वमित्यादिकमैकान्तिकम्। अन्यथापि वा, पूर्वत्र यथोदितैरेव पदार्थैः प्रकृतहेतुरनेकान्तः। उत्तरत्र, जिनो निन्दनीयः। सारमेयादे[र्मांसभक्षणेन कुत्स]नीयः शाल्योदनोऽपि हेयः, सारमेयमांसमप्यदनीयमित्यादि प्रसज्येत।

॥ सामान्यविशेषवदिति दृष्टान्तविघटनम् ॥

यः पुनरयं दृष्टान्तः सामान्यविशेषवदिति, तत्र सामान्यं सामान्यमेव, विशेषोऽपि विशेष एव, न तयोरन्योन्यात्मतेति समर्थितत्वात्साध्यवैकल्यमेव। तथा हेरम्बनरसिंहयोरपि साध्यवैकल्यान्न दृष्टान्तता। तथा हि—हेरम्बः [नरावयवैः गजा]वयवसहितैर्जनितः कश्चिदवयवी। नरसिंहोऽपि तदवयवैः सिंहावयवैश्च सम्भूय सम्पादितः कोऽप्यवयवी। तयोर्नरत्वादिनानाजात्यधिकरणत्वं भवतु मा वा, सर्वथाप्येकस्यानेकत्वं नाभ्युपगम्यत इति कथं दृष्टान्तभावः। चित्ररूपेऽपि नानाजातिसमवाय एवेष्यते, नतु नानात्मकतेति कथमुदाहरणमिति।

---

1. स्वानुमेयादेः—मा.

॥ अनेकान्ताभ्युपगमे जगतः मूकतापत्तिः ॥

किंच सर्वत्र सर्वप्रकाराणामनैकान्तिकत्वाभ्युपगमे प्रवृत्तिनिवृत्तिविरहात् मूकं जगज्जायेत। तथा हि—नाभिमतसाधनमित्येव किमप्यवधार्य कोऽपि प्रवर्तेत, यतस्तन्न तथैव। किं तद्धनभिमतसाधनमपि। नाप्यनभिमतसाधनमित्येव ततो निवर्तेत, यतस्तन्न तथैव, किन्तु अभिमतसाधनमपि। प्रवृत्तिनिवृत्त्योर्विधिः प्रतिषेधो वा अशक्यः सहैव सम्भावयितुमपीति कष्टां दशां बतावेशितः श्रमणकदुर्बुद्धिना लोकः। तदुक्तम्—

नैकान्तः सर्वभूतानां यदि सर्वविधाऽऽगतः।
अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र ही जगत्[1] ॥ इति ॥

॥ आत्मादेः सुखादिभ्योऽत्यन्तभेदोपपत्तिः ॥

तदेवमनेकान्तपक्षानुपपत्तेर्द्रव्यपर्याययोरपि नित्यानित्ययोरौत्पत्तिक[भेदः] समाश्रयणीयः। ततश्चात्मादिः सुखादेः पर्यायादनित्यादत्यन्तमेव भिन्नस्सन्नेकान्तनित्यवत्स्वीकरणीयः। तस्य च नित्यैकस्वभावत्वेऽपि सहकारिक्रमानुरोधात् सुखदुःखादिसंसर्गः क्रमेण नानुपपन्नः। समर्थितं चैतत्सुगतमतपरीक्षायमिति सर्वं समञ्जसम्।

॥ साङ्ख्यपक्षोपपादनम्, तत्र जगतः सुखाद्यात्मकत्वम् ॥

**साङ्ख्याचार्याः** संचक्षते—सुखादिधर्मा पुरुषो नाश्रयणीयः। प्रधानतादात्म्यप्रसङ्गात्। यत्तु सुखदुःखमोहैरन्वितं तत्समस्तमपि प्रधानकार्यतया तदात्मकम्। इदं च सत्कार्यवादसिद्धौ शक्यं साधयितुमिति प्रथमं सत्कार्यमवतारयति। यदवोचदा**चार्यवाचस्पतिः**। सुखदुःखमोहवच्छब्दाद्यात्मकत्वं हि जगत्कारणस्य प्रधानत्वं सत्त्वरजस्तमस्स्वभावत्वं च। येषां तु **कणभक्षाक्षचरणादीनां** सत एव कारणादसतो जन्म, तेषां सदसतोरेकत्वानुपपत्तेः न कार्यात्मकं कारणमिति न प्रधानसिद्धिः। अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्यं प्रतिजानीत इति।

---

1. यदि सर्वया विधया अनेकान्तः आगतः प्राप्तः इत्यर्थः। हीति जुगुप्सायाम्।

॥ सत्कार्यवादे उपपत्तयः ॥

तत्रेमानि साधनानि—

असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात्साधनभावाच्च सत्कार्यम् ॥ १ ॥ इति ।

॥ प्रधानसिद्ध्यर्थाः हेतवः ॥

तदेवं सत्कार्यवादे स्थिते तदुपजीवनेन प्रधानसिद्ध्यर्थान् हेतूनाहुः—

भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १ ॥ इति ।

॥ सत्कार्यवादखण्डनम् ॥

**तदेतदसमीक्षिताभिधानम्** । तथा हि—यत्तावत्कारणव्यापारात्प्रागपि सत्कार्यमित्यत्र साधनं असदकरणादिति ; तत्तावद्व्यधिकरणासिद्धम् । अथ क्रियमाणत्वादिति हेतोर्व्यतिरेकप्रतिबन्धप्रदर्शनमेतत् । यदसत्तन्न शक्यकरणं यथा नरविषाणमिति, तदसत्, प्राक्सतोऽपि पुरुषस्याशक्यकरणत्वेन क्रियमाणत्वहेतोर्विपक्षादिव सपक्षादपि व्यावृत्तस्य साधारणत्वात् । प्रागुत्पत्तेः सदिति प्रतिज्ञाते पुरुषस्य नास्ति सपक्षत्वं तस्योत्पत्त्यसम्भवादिति चेत् ; का पुनः इयमुत्पत्तिः ? न तावदभूत्वाभवनमङ्गीकृतम् । अभिव्यक्तिमात्रं चेत् ; कस्तर्ह्यभिव्यक्तेः पूर्वक्षणमभिव्यङ्ग्यस्य च वसनादेः स(त्यं)[त्वं] नाङ्गीकुर्यात् यं प्रत्येतत्सिद्धसाधनं न भवेत् । कथं वाऽस्मिन् पक्षे सपक्षः पुरुषो न भवेत्, तस्यापि समाधिप्रभवादिव्यङ्ग्ययाथार्थ्यस्य स्वाभिव्यक्तेः पूर्वं सत्त्वात् । नचैवमन्वयप्रतिबन्धादपि प्रकृतसाधनप्रवृत्तिः, सिद्धसाधनत्वस्य सर्वथाप्यनतिक्रमात् ।

॥ उपादानग्रहणहेतुभङ्गः ॥

यदप्युपादानग्रहणादिति, तस्य यद्युपादानानि तेषां ग्रहणात् कार्येण, उपादानैः कार्यस्य सम्बन्धादिति **वाचस्पतिमतेन** व्याख्यानमाश्रीयते । तदा कारणसम्बन्ध-

मात्रस्य स्वोत्पत्तेः पूर्वं सत्वसिद्धौ न प्रतिबन्धस्थानमस्ति। अभिव्यक्तेः पूर्वं सत्वं साध्यं; तथा सति क्षीरतण्डुलादौ सम्भवति प्रतिबन्ध इति चेत् तदवस्थं सिद्धसाधनत्वम्। यदि पुनः कार्येण संबद्धं कारणं कार्यस्य जनकं वाच्यम्। नचासति सम्बन्धः सम्भवति। तस्मादुत्पत्तेः पूर्वं सदेव कार्यमित्यनुकूलतर्कमात्रमिदमभिहितं सत्कार्यवादस्य। तथाप्यनुग्राह्यप्रमाणानिरूपणात् किमत्र तर्कमात्रं करिष्यति। ततश्चासम्बन्धमेव कारणं (न) जनकम्।

॥ सर्वसम्भवाभावानुमानस्य शक्तस्य शक्यकरणादित्यस्य च निरासः ॥

यद्यत्र **सर्वसम्भवाभावादिति** हेतुः असम्बन्धस्य[1] जन्यत्वे विशेषाभावात् सर्वं सर्वस्मात्सम्भवेत्। नैतदस्तीति वाच्यम्। तथाप्यसारतैव। कारणसामर्थ्यानुसारेण नियमसम्भवात्। मैवं, **शक्तस्य शक्यकरणात्**। सा खलु शक्तिः शक्यविशेषसम्बन्धा नियमसिद्धये वाच्या। न चासता सम्बन्ध इति सत्कार्यं सेत्स्यतीति चेन्न। अभिप्रायापरिज्ञानात्। न खलु शक्तिर्नाम काचित्संयोगवदुभयदत्तपदा नियामिकाऽस्माभिरुच्यते, येन यथोक्तार्थः सिध्येत्। किं तर्हि? कारणानामेव स्वभावः सहकारिणश्च तथा तथा नियच्छन्ति कार्यम्। तेष्वेव शक्तिपदमपि प्रवर्तेत इत्येतावदेव वदामः। स्वभावपर्यनुयोगे तु तन्तुष्वेव परात्मता न सर्वत्रेत्यत्रापि को नियन्ता। तस्माद्वस्तुस्वभावादित्येव सुदूरमपि परिधाव्य स्थातव्यमिति समं समाधानम्।

॥ उपादानग्रहणादेः अन्यथाव्याख्यातृजरत्कापिलमतम् ॥

येऽपि **जरत्कापिला** उपादानग्रहणादिकमित्थं व्याचक्षते—यदि तन्त्वादिषु पटादिकार्यं नास्ति, तर्हि पटार्थिभिः तन्त्वादय एव नियमेन नोपादीयेरन्। दृश्यते च नियमेनोपादानं, यदि चासन्नेव पटस्तन्तुभ्यो भवति, सर्वमपि ततो भवेत् अविशेषात्। शक्तस्य च कर्तृत्वं सर्वैरिष्यते। शक्तिं च न कार्यादव्यक्तरूपादन्यां पश्यामः। शक्यं च क्रियते। नचासतः शक्यत्वं युक्तमिति।

॥ तन्मतनिरासः ॥

तेऽपि प्राचीनयैव नीत्या निरस्ताः। उपादाननियमस्यान्वयव्यतिरेकावसितपूर्वभावनियततज्जातीयस्वभावत्वेनैवोपपत्तेः। सर्वसम्भवाभावस्यापि स्वभावनियमा-

1. न विद्यते संबन्धो यस्य, तस्येत्यर्थः।

देवोपपादितत्वात् । शक्तेश्च स्वरूपसहकारिरूपता(वन्नि)[या नि]रूपितत्वात्, तादृक्ष-शक्त्यनुविधाननियतत्वमात्रेणैव शक्यव्यपदेशस्याप्युपपत्तौ प्राक्कार्यसत्वानुपयोगात् ।

॥ कारणभावात् सत्कार्यमिति पक्षनिरासः ॥

**यदप्युच्यते**—कारणभावादिति, तत्रापि यदि कारणात्मता कार्यस्येति विवक्षितं, तदा स्पष्टैव हेत्वसिद्धिः, कार्यकारणयोर्वसनसूत्रयोरवयवरचनास्वरूपसंस्थानादि-भेदेन भेदस्य प्रत्यक्षसिद्धत्वात् । प्रधानात्मत्वेन सर्वकार्याणामतीन्द्रियत्वप्रसङ्गाच्च ।

॥ कार्यकारणाभेदसाधकानुमानानां कालात्ययापदिष्टता ॥

एवं च यानि कार्यकारणयोरभेदसाधनानि—न पटस्तन्तुभ्यो भिद्यते, तन्तु-धर्मत्वात्, तदुपादेयत्वात्, तैस्संयोगाप्राप्तिभावात्, तद्गतगुरुत्वातिरेकिगुरुत्वशून्य-त्वात् । व्यतिरेकमुखेन तूदाहरणं—यद्यतो भिद्यते तत्तस्य धर्मो न भवति, यथा गौरश्वस्येत्यादि यथायोगं द्रष्टव्यमिति ; तानि सर्वाण्यपि कालात्ययापदिष्टानि ; भेदस्यापुनरुक्तशब्दोल्लेखिनः प्रत्यक्षत एव सिद्धत्वात् । गुरुत्वानतिरेकस्तु असिद्ध एव । तुलादीयमानखण्डपिण्डनिविष्टमक्षिकादेरिव सतोऽपि तदतिरेकस्या-लक्षणीयत्वसम्भवात् ।

॥ कार्यकारणभेदानुमानानि ॥

किञ्च तन्तकारणकः [पट :] तन्तवस्त्वंशुकारणकास्ततो विभिन्नकारणक-त्वाद्विभिन्नत्वं शशकुशवत्, विभिन्नपरिमाणसम्बन्धित्वाच्च वा नरवारणवत्, कार्य-कारणत्वाच्च कलशकुलालवदित्यादीनि भेदसाधनानि द्रष्टव्यानि । विपर्यये तु स्वात्मनि क्रियाविरोधात्, कार्यकारणभावाभावप्रसङ्गः । विरुद्धधर्माध्यासव[त्त्वेऽपि] (व)[प]टाभेदे च विश्ववैरूप्याभावप्रसङ्गो बाधक उन्नेयः । कथंचिद्भेदाद्द्वयस्थितिः कार्यकारणभावादेरिति चेत् । नैवम् । दिगम्बरमतनिरासेनैवास्य पक्षस्य निषिद्धत्वात् । तस्मात् सुष्ठूक्तं कारणात्मत्वं असिद्धं कार्यस्येति ।

॥ करणभावादितिहेतोः अन्यथाव्याख्यातृमतनिरासः ॥

ये तु कारणभावादिहेतुं व्याचक्षते—यद्यस्य कारणं तत्ततो भवति, नचासति कार्ये अस्येदं कारणमित्युपपद्यते, सम्बन्धस्य द्विष्ठत्वात् । तस्मात् सदेव कार्यमिति ।

तेऽपि व्यपदेशमात्रशरणाः केवलमर्थतत्त्वं न पश्यन्तीत्यनुकम्पनीयाः। अस्येदमिति व्यपदेशमात्रेण न कश्चिदुभयदत्तपादः सम्बन्धः सिद्ध्यति, परस्पराधीननिरूपणत्वमात्रेणापि पुरुषस्य भोग्यं प्रधानमितिवदुपपत्तेः। अपरथा पुरुषस्य तन्मतेऽप्यसङ्गत्वव्याघातात्।

॥ सत्कार्यवादस्य प्रत्यक्षेण बाधोपपादनम् ॥

यदि पुनः प्रागपि कारणसङ्गतं कार्यमासीत्कुतस्तर्हि विसारितविमललोचनैर्जिज्ञासितमपि न साक्षात्कृतं वसनादिकमिति वचनीयम्। अनभिव्यक्तत्वादिति चेत्, नन्वनुपलम्भ एवानभिव्यक्तिः कथं तस्यैवानुपपत्तौ गदितायां तेनैव समाधीयते। यदि तु साक्षात्कारकरणक्षमस्य रूपस्य पूर्वमभावोऽनभिव्यक्तिः, तर्हि तदेव रूपमसदुत्पद्यत इति अनिच्छताप्यङ्गीकरणीयम्। अपरथा पश्चादप्यनुपलम्भप्रसङ्गात्। कुविन्दादिव्यापारोऽपि प्रथमं पटस्य साक्षात्कारनिमित्तं चक्षुरादिवत्। (ताव)[तदभावा]त्प्रागनुपलम्भ इति चेन्मैवम्। तद्व्यापारस्यापि तत्र सदातनत्वात्। भवत्वेवं, तथापि प्राग[न]भिव्यक्तेः सम्प्रत्यभिव्यज्यमानो भावमभिव्यनक्तीति चेत्, नन्वियमभिव्यक्तिरपि प्रागेवसती चेत्कथं न प्रागेव भावोपलम्भो भूतः? किमर्थानि वा कारकाणि व्याप्रियन्ते? प्रागसती चेत्, कथं तस्या अपि कारणम्। अभिव्यक्तेरभिव्य(क्तिरा)[क्त्या]श्रयणे च भवेदनवस्थानमिति दुरुत्तरे व्यसने बतायं तपस्वी साङ्ख्यः पतितः।

॥ तार्किकाभिमतोत्पत्तेरपि सत्वासत्वविकल्पात् अनवस्थापादनम् ॥

स्यादेतत्—उत्पत्तिरपि वसनस्य प्राक्सती चेत्, किं कारणव्यापारेण? प्रागसती चेत्तस्या अपि (आप)[उत्प]त्त्यन्तरापत्तावनवस्थापत्तिरिति उक्तानवस्थापरिहारः।

तदिदं साङ्ख्यपशोर्मम पीडाजनितवैक्लव्यस्य नन्दनमात्रम्। न वै भावादतिरिक्तामुत्पत्तिं कारणव्यापारगोचरभूतामङ्गीकुर्मो, येनायमर्थवानुपालम्भः। पटादिरूपमेव तु कुविन्दादिव्यापारगोचरं यथानुभवं वर्णयामः। क्रियागोचर एव कारकव्यापारो नान्यथा कारकतैवेति चेत् न, सारमेतत्। अनुभवानुसारिण्यामर्थव्यवस्थितौ कारकव्यपदेशस्य क्वचित्कल्पनासमारोपितया क्रियया क्वचिदवान्तरव्यापारेण चोपपत्तेः।

|| पटो जायत इति व्यपदेशोपपत्तिः ||

एतेन पटो जायत इति व्यपदेशो व्याख्यातः। सन्ति वै बहुल-[म]भेदेऽपि भेदसमारोपेण भेदव्यपदेशभिदा— यथा भवतामेव 'पुरुषस्य चैतन्यं', 'पुरुषो भुङ्क्ते', 'मणिः अयपिण्डमाकर्षति' इत्यादयः।[1] तस्मात्सर्वथा कारक-व्यापारवैयर्थ्यात् प्रागनुपलम्भानुपपत्तेश्चासदेव कारकव्यापारात्पूर्वं सर्वं कार्यमिति सिद्धम्।

|| प्रधानसाधनानुमाने दृष्टान्ते साध्यवैकल्यदोषः ||

एवं स्थिते यत्प्रधानसिद्धये साधनमुदितं—विवादाध्यासिता भेदा अव्यक्त-कारणवन्तः, परिमाणात्, अव्यापित्वात्[2] घटादिवदिति; तत्र साध्यविकलो दृष्टान्तः। यस्मात् घटादयोऽपि स्वाव्यक्तावस्थाकारणका नेति सिद्ध एव सत्कार्य-वादनिरासः।

|| भेदानामेकोपादानकत्वानुमाननिरासः ||

ये पुनरेकोपादानपूर्वका भेदाः परिमितत्वान्नियतसङ्ख्यत्वात् अङ्कुरादिवदिति वदन्ति, तेषामपि साध्यविकल एव दृष्टान्त; नह्यङ्कुरादीनामप्येकोपादानपूर्वकत्वं सिद्धं, स्वन्यूनपरिमाणैरनेकैरवयवैः क्रमेणाङ्कुर(व)[प]र्णनालादीनां पटवदारम्भ-स्वीकारात्। अनैकान्ति(कत्वं)[कं] च परिमितत्वं सत्त्वरजस्तमसां मूलभूतानां इत्थं परिमितत्वेऽप्येकोपादानजन्यत्वाभावात्। अस्मद्दृष्ट्या(दिं)[पि] चतुर्विधपरमाण्वादि-भिर्व्यभिचारात्।

|| समन्वयहेतुनिरासः ||

योऽप्ययं समन्वयादिति हेतुः, तत्रापि यद्ययमर्थो विवक्षितः—विवादा-ध्यासिता भेदाः सुखदुःखमोहाद्यात्मक(स्य)ाव्यक्तप्रकृतिकाः तद्रूपसमन्वितत्वात्। यानि यद्रूपसमन्वितानि तानि तत्स्वभावा(न्यत्व)[व्यक्ता]प्रकृतिकानि यथा [मृद्धेम]-समनुगताः घटमुकुटादयो मृद्धेमपिण्डाव्यक्तप्रकृतिका इति, तर्ह्यत्रापि साध्यवैकल्यं तदवस्थम्।

---

1. कारकव्यापारात्पूर्वं कार्यसत्त्वे इति शेषः।
2. परिमाणादित्यस्य व्याख्यानं अव्यापित्वादिति।

एवमेकोपादानत्वे(ऽपि) साध्ये सर्वहेतुषु साध्यवैकल्यं द्रष्टव्यम् । किञ्चानैकान्तिकमन्वितत्वं पुरुषेषु तेषां सत्त्वचेतत्वाद्यन्वितत्वेऽपि तदात्मकोपादानशून्यत्वात्, असिद्धं च सुखदुःखमोहसमन्वितत्वं विवादाध्यासितानां भावानाम् । न खल्वनात्मपदार्थानां सुखदुःखमोहसमन्वयो मात्रयापि प्रमीयते ।

॥ भावानां सुखदुःखमोहान्वये प्रसिद्धदृष्टान्तोपन्यासः ॥

यत्पुनरत्र वदन्ति — यौवनकुलशीलसम्पन्ना नारी स्वामिनं सुखाकरोति । तत्कस्य हेतोः ? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात् । सैव सपत्नीं दुःखाकरोति, तां प्रति तस्या दुःखस्वरूपसनुद्भवात् । एवं पुरुषान्तरं तामविन्दन्तं सैव मोहयति । तं प्रति तस्या मोहरूपसमुद्भवात् । अनया च सर्वे भावा व्याख्याता इति ।

॥ उक्तदृष्टान्तविघटनम् ॥

तदिदमसारं—निमित्तनैमित्तिकभावस्यात्यन्तवैजात्येऽपि कलशकुलालादावुपलम्भात् । (यत्को)[तत्रो]परक्तत्वे सति तत्र तदाकारप्रतिभासहेतुत्वमप्येतदात्मनो दृश्यते ; यथा धूमस्य[1] दहनप्रतिभासहेतुत्वम् । तेन मुखप्रतिभासहेतोर्मुखस्य मुखात्मत्ववत् सुखादिप्रतिभासहेतोस्तदात्मकत्वमि(त्यु)[त्ययु]क्तम् ।

**यदपि** साधनं शब्दादयः सुखादिस्वभावाः प्रसादादिजनकत्वात्सुखादिवदिति, **तदपि** कालात्ययापदिष्टम् । (तर्हि भावोऽ)स्पष्टभेदोपलम्भात्, सुखादिस्वभावत्वे शब्दादेरन्तःकरण[सुसं]वेद्यत्वेन बधिराद्यभावप्रसङ्गाच्च ।

॥ शक्तितः प्रवृत्त्यनुमाननिरासः ॥

**यदपि** शक्तितः प्रवृत्तेरिति । तत्रापि यदि शक्तिं कार्यस्य सूक्ष्मावस्थां अभिप्रेत्य प्रयुज्यते—विवादाध्यासितं सूक्ष्मावस्थापूर्वकं आविर्भावित्वात् पटादिवदिति, तत्रापि सत्कार्यवादनिरासात् तदवस्थं दृष्टान्ते साध्यवैकल्यम् । हेतुश्च विरुद्धः साध्यविपरीताकारेष्वेव कटकमकुटादिषु च वर्तमानत्वात् ।

---

1. वह्निव्याप्तिरूपोपरागः धूमेऽपि ।

॥ कारणकार्यविभागस्यापि निरासः ॥

यत्पुनरिदं कारणकार्यविभागादित्यादि, तत्रापि यदि विवादाध्यासिता भेदाः कुतश्चित्स्वाव्यक्ताद्व्यक्ताकारेण विभज्यन्ते पुनस्तत्रैव चाव्यक्तानि भवन्ति। विश्वरूपत्वान्नानारूपत्वात्। कूर्मशरीरे सत्येवाङ्गादीनि ततो व्यक्ताकारेण विभज्यन्ते। तत्रैव पुनर्निविशमानानि अव्यक्तीभवन्तीति विवक्षितं, तर्हि नानारूपैः पुरुषैर्व्यभिचारः सत्त्वादिभिश्च मौलिकैः[1]। कार्यत्वे सति इति विशेषणाददोष इति चेत् मैवं, अभिव्यक्तस्वरूपगुणपुरुषयोरपि सम्भवात्[2]। अस्मदभिप्रेतस्य कार्यत्वस्य भवतामसिद्धेः।

॥ प्रधानसाधकहेतुद्वयोपन्यासः तत्खण्डनं च ॥

येऽप्येवमिह साधनद्वयमुन्नीय प्रयुञ्जते — विवादाध्यासितमेकोपादानसम्पाद्यं उपकार्योपकारकभावेनावस्थितत्वात्। एकशाखासम्पादित(ा सं)[पल्लवादि]वत्। तथा शरीरादिकमेकोपादानजनितं नानारूपत्वात्। एकस्मात् क्षीरादुपजायमान-दधितक्रादिवदिति। तन्मतेऽपि प्रथमं तावदनैकान्तिको हेतुः परस्परमुपकार्योपकारक-रूपैर्मौलिकैरेव सत्वादिभिः। द्वितीयोऽप्यनैकान्तिकः तैरेव। तस्मान्नानुमानात् प्रधानसिद्धिः।

॥ आगमात् प्रधानसाधननिरासः। तत्र श्वेताश्वतरश्रुतेरन्यपरता ॥

नाप्यागमात्। तथा हि—"अजामेकां" (श्वे. ४. ५) इत्यादिवाक्यं तावत् प्रमाणान्तरसंवादिपरमाणुष्वेव (परमाणु)[प्रमाण]भावं भजते। परमाणुसंहतिरूपा हि (जनं) [अजा] प्रकृतिर्लोहितादिरूपयोगिनी। न जायते इत्यजा। सरूपं च कार्यजातं जङ्गमस्थावराद्यनन्तभेदं जनयति। संहत्यपेक्षयैव चैकवचनम्। कथमन्यथा त्रिगुणत्वात्प्रधानमप्येकम्? वास्तवं तु तादात्म्यं भिन्नानां निरस्तमेव। स्त्रीलिङ्ग-निर्देशोऽपि समवायिकारणपर्यायां प्रकृतिमपेक्ष्य समञ्जस एव।

॥ महतः परमव्यक्तमिति काठकश्रुतेः अन्यपरता ॥

**यदपि काठके**—"महतः परमव्यक्तं" (का. १-३-१०) इत्यादिवाक्यं तत्राप्यव्यक्तशब्देन प्रकरणपरिशेषाभ्यां शरीरमभिधीयते। तथाहि—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।

---

1. मूलप्रकृतिसम्बन्धिभिः। 2. कार्यत्वविशेषितहेतोः सम्भवादित्यर्थः।

इत्यादिना प्राचीनवचनेन रथित्वादिरूपेण परिकल्पितानामेवात्मादीनां "इन्द्रियेभ्यः परा ह्यर्था" इत्यस्मिन्नपि वचस्यभिधीयमानत्वात्। बुद्ध्यादीनां च स्ववाचकपदैरेव गदितत्वात्। अव्यक्तपदेन तेषामन्यतमाभिधानानुपपत्तौ रथत्वेन परिकल्पितस्य शरीरस्यैवात्र शब्दान्तरेणानभिहितस्याव्यक्तपदेनाभिधानमाञ्जसमिति पश्यामः। तदुक्तं **भगवता बादरायणेन**—"आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च।" (ब्र. सू. १-४-१) इति।

॥ तत्र बादरायणसूत्रसम्मतिः ॥

स्यादेतत्—व्यक्तत्वाच्छरीरस्याव्यक्तपदेन कथमुपादानमित्याशङ्क्य तेनैव भगवता "सूक्ष्मं तु तदर्हत्वात्" (ब्र. सू. १-४-२) इति सूत्रयता कारणात्मना सूक्ष्मं शरीरमव्यक्तपदार्हत्वात्तथाभिधीयत इति प्रतिपादितम्। तत्कथं नैयायिकमते समञ्जसं स्यादिति। नैषानुपपत्तिः। आतिवाहिकशरीराभिप्रायेण वा, परम्परया परमाणुरूपसूक्ष्मकारणसम्बन्धेन लक्षणया स्थूलशरीरस्यापि वान्यायनयेऽप्यव्यक्तशब्देनाभिधाने विरोधाभावात्। महच्छब्दोऽप्यस्मिन् वचसि आत्मसामानाधिकरण्यात्तत्रैव महत्वगुणयोगेन वर्तमानो न साङ्ख्याभिमते महत्तत्वे सङ्गच्छते।

॥ महच्छब्देन हिरण्यगर्भबुद्ध्यभिधानम् ॥

यद्वा "मनो महान् मतिः ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः" इत्यादिवचनानुरोधेन हैरण्यगर्भीं बुद्धिमभिधत्त इति योजनीयम्। तस्या अपि साधारणेन बुद्धिपदेनोपात्तायाः प्राधान्यादिह बुद्धिपदेन पृथगभिधाने विरोधाभावात्। तथान्यत्रापि सृष्ट्यादिप्रक्रमेषु हैरण्यगर्भीं बुद्धिमधिकृत्य महच्छब्दो योजनीयः। सा खलु महेश्वरसहकारिरूपायाः प्रकृतेरादौ सर्गानुकूलतया निष्पद्यत इत्यपि सङ्गच्छते। ततश्चाहमिति विकल्पाकारस्या(शङ्का)प्युत्पत्तिरविरोधिनी। तेनाहङ्कारोऽपि साङ्ख्यपरिकल्पितो न प्रमाणवान्।

॥ महदहङ्कारनिरासः ॥

नच पराभिमतयोर्महदहङ्कारयोरागमातिरेकि प्रमाणं सम्भवति। ततश्चैतदनवकाशम्। यदाहुः—इन्द्रियमनोऽहङ्कारप्रणाडिकया महदाख्यस्यान्तःकरणस्य सात्त्विकीं

**तदेवमपरमात्मतत्त्वज्ञानं परलोकिसद्भावेन परलोक[1]प्रवृत्त्युपयोगित्वादधर्मक्षयहेतुत्वाच्च निःश्रेयसाङ्गमिति[2] ।**

---

वृत्तिमुपसंक्रान्तं नीलादि तत्र प्रतिबिंबितया चितिशक्त्या चेत्यत[3] इति । अहङ्कारादुत्पत्तिमिन्द्रियाणां वदन्त्यपि वाक्यानि हिरण्यगर्भस्याहमभिमानपूर्वतयाऽस्मदादीन्द्रियसंसर्गपराणि योजयितव्यानि । एतेन शब्दादितन्मात्राणां अहंकारादुत्पत्तिर्व्याख्याता ।

॥ शब्दादिभ्यो भूतविशेषोत्पत्तिकथनस्य स्वमते अभिप्रायप्रदर्शनम् ॥

यत्तु शब्दादिभ्यो भूतानामुत्पत्तिवचनं, तत्र भूतशब्देन भूतविशेषगुणाः शब्दादय एव लक्षणीयाः । ततश्च सूक्ष्माच्छब्दात् शब्दान्तराणि रूपादिभ्योऽपि सूक्ष्मेभ्यो रूपाद्यन्तराणि कार्यवर्तीनि जायन्त इति योजनीयम् । तस्मात् (प्राधान्यरूपवत्)[प्रधानस्वरूपवत्]ततो महदादिसर्गक्रमोऽपि न प्रमाणवान् । तथा च **कपिल**मुनिप्रपञ्चितप्रक्रियायाः सर्वस्या अपि प्रमाणविरहित्वात् सुखाद्यन्वितत्वेऽपि पुंसः प्रधानरूपतापत्तिरित्येतन्निष्प्रमाणकमेव । यथा च प्रधानात्मन एव सुखाद्यन्वये पुंसः तदतिरेकिणो न सिद्धिः तथोपपादितं **श्रीन्यायभूषणे ।** तत्तु तत्रैव स्पष्टमिति नेह प्रपञ्च्यते सङ्ग्रहप्रक्रमादिति सर्वं निर्मलम् ।

॥ अपरमात्मस्वरूपपरिज्ञानस्य मोक्षोपयोगः ॥

स्यादेतत् । यथोक्तात्मस्वरूपपरिज्ञानेन किं प्रयोजनं येनास्मिन्नेव भारो विहित इत्यत आह—**तदेवमपरमात्मतत्त्वज्ञानं परलोकिसद्भावेन परलोकप्रवृत्त्युपयोगित्वात् अधर्मक्षयहेतुत्वाच्च निःश्रेयसाङ्गमिति ।** परलोकग्रहणं पुनरपवर्गस्याप्युपलक्षणार्थम् । न खलु स्वर्गापवर्गफलयोगयोग्यं यथोदितमात्मतत्त्वमविज्ञाय तदर्था प्रवृत्तिरुपपत्तिमती । न केवलमेवंविधप्रवृत्त्युपयोगितयैव सप्रयोजनमपरमात्मपरिज्ञानम् । किं तर्हि ? अधर्मक्षयहेतुतयापि निःश्रेयसाङ्गमिति । तथा च **श्रुतिः**—"तरति शोकमात्मवित्" (छा. ७-१-१) इति । **स्मृतिरपि**—ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन । (भ. गी. ४-३७) इत्यादिरुदाहर्तव्या ।

---

1. सम्भवेन पारलौकिक 2. Ms. साधनमिति 3. विषयीक्रियत इत्यर्थः ।

## परमात्मज्ञानं च तदुपासनाङ्गत्वेनापवर्गसाधनम् ।

तदेवं [अ]परमात्मज्ञानस्य निःश्रेयसाङ्गतामुपपाद्य परमात्मज्ञानस्यापि तदुपयोगमाह—**परमात्मज्ञानं च तदुपासनाङ्गत्वेनापवर्गसाधनमिति ।**

॥ भेदज्ञानं मिथ्याज्ञानं इति जीवब्रह्मणोरैक्यमिति च वदतो वेदान्तिनः मतम् ॥

केचिदाहुः—परापरभेदेनेदं आत्मज्ञानं न निःश्रेयससाधनं, मिथ्याज्ञानत्वात् । तथा हि सर्वोऽपि भेदः परास्त एव श्रुत्या । तत्र जीवेश्वरभेदापवादिनी तावदभेदश्रुतिरुपलभ्यते 'तत्त्वमसि', 'अहं ब्रह्मास्मि', 'एष त आत्मा अन्तर्याम्यमृतः' इत्यादिः, जीवभेदापवादिन्यपि 'एको देवस्सर्वभूतेषु गूढः' (श्वे)इत्यादिः । **स्मृतिरपि**—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १ ॥

इति । सर्वभेदापवादिन्योऽपि सन्त्येव श्रुतयः । 'एकमेवाद्वितीयम्' (छा. ६-१) 'नेह नानास्ति किंचन' (कठोप) इत्याद्या इति ।

॥ वेदान्तिमतखण्डनम् ॥

तदिदमपर्यालोचितागमतात्पर्याणामभिधानम् । सन्ति हि प्रमाणान्तरसंवादिनो भेदवादा अप्यागमेषु । तैरपबाधितार्थानामभेदवादानां कथमिव यथाश्रुतार्थपरता शक्या वर्णयितुम् । तत्र जीवेश्वरभेदप्रतिपादकास्तावदागमा दृश्यन्ते । तद्यथा—"द्वा सुपर्णा सयुजा सखाया" इति । तथा—"द्वे ब्रह्मणी वेदितव्ये परं चापरं च" । तथा—

तमीश्वराणां परमं महेश्वरं
तं दैवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्तात्
विदाम देवं भुवनेशमीड्यम् ॥ १ ॥

**स्मृतावप्युक्तम्**—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १ ॥

इत्येवमादौ। भवति चास्मिन्नर्थे प्रमाणान्तरमविसंवादिपरमेश्वरस्वरूपसमर्पकं कार्यानुमानम्। तद्धि सर्वज्ञत्वादिगुणं जीवातिरेकिणमेव भुवननिर्मातारमुपादाय पर्यवस्यतीति प्रतिपादितम्। तथा प्रत्यक्षमपि परमेश्वरस्वरूपविपरीतमसर्वज्ञत्वादिधर्मकमहङ्कारास्पदमपरात्मानमावेदयदत्रैवानुकूलमाचरति। प्रमाणान्तरगोचरत्वादेव न भेदतात्पर्यमागमानामिति चेत् न तरामभेदेऽपि तदपबाधिते।

किञ्च प्रमाणान्तरसंवादिन्येवार्थे युक्तमागमस्य तात्पर्यं का[री]र्यादिवत्। अन्यथा तत्प्रामाण्यमपि दत्तजलाञ्जलि प्रसज्येत। प्रमाणसंप्लवोऽपि प्रतिपादित एव।

तस्मान्मानान्तरैकार्थवाक्यबाधितगोचराः।
अभेदवादाः प्रामाण्यं न लभन्ते यथाश्रुताः॥ १॥

॥ तत्त्वमस्यादिवाक्यानां स्वमतेऽभिप्रायः॥

का तर्हि तत्त्वमसीत्यादिवचसां गतिः ?

नित्यज्ञानादिसाम्येन परस्मादुपचर्यते।
संसारिणो भिदाभावस्तथोपासनसिद्धये॥ १॥

ज्ञानानन्दगुणौ नित्यावात्म(स्थिति हि) [स्थाविति] वक्ष्यते।
मोक्षाधिकारे तत्साम्यात्तद्भाव उपचर्यताम्॥ २॥

या पुनरियं क्षेत्रज्ञभेदापवादिनी श्रुतिरुदाहृता 'एको देव' इत्यादिः सापि एक एव देवः सर्वेषु भूतेषु गूढ इति सर्वशरीरेषु अन्तर्यामितया परमेश्वरस्यैवावस्थानमाह। नतु जीवभेदं बाधते।

॥ एक एव हि भूतात्मेति स्मृत्यभिप्रायः॥

एतेन "एक एव हि भूतात्मा" इति स्मृतिर्व्याख्याता। नन्वत्र जलचन्द्रदृष्टान्तावष्टम्भेन प्रतिभूतं प्रतिभासमानपुरुषभेदापाकरणपरता स्पष्टोपलभ्यते इति चेत्, सत्यं; तथापीश्वरस्यैव कदाचित्स्वेच्छया नानाशरीराणि निर्माय चेष्टमानस्य नानात्वभ्रममपनेतुमियं स्मृतिरस्तु। जीवभेदनिरासे हि प्रत्यक्षादिविरोधः स्यात्। तथाहि—परशरीरसमवायिनीं चेष्टामुपलभ्य तदनुकूलप्रयत्नभाजं तदधि-

ष्ठातारमनुमाय ततः परोक्षादपरोक्षप्रय[त्नं](तं) आत्मानं प्रत्यक्षत एव भिन्नं प्रतिपद्यते । स्थाणोरिव स्मरणविपरिवर्तिनः पुरोवर्तिनि तद्विपरीतपाण्यादियोगिनं पुरुषम् ।

॥ एकस्मिन्नात्मनि औपाधिकभेदप्रतिभासनिरासः ॥

नन्वयमेकस्मिन्नेव नानाशरीरव्यापिनि पुंसि भवत्यौपाधिको भेदप्रतिभासः । तदसत् । तथा सति पादे मे वेदना, शिरसि मे सुखमितिवत् चैत्रशरीरे मे दुःखमिति प्रतिसन्धानप्रसक्तेः । यत्पुनरत्राह—[यत्र "शिरसि मे सुखं, पादे मे वेदना" इति प्रतिसन्धानं,] तत्रापि न प्रदेशः प्रदेशान्तरवेदनामनुसन्दधाति, तथेहापि न जीवो जीवान्तरवेदनामनुसन्दधातीति समानमिति । तदसत् । स्वरूपानुसन्धानस्य अनिवारणीयत्वे चरणतलसंलग्नकण्टकोद्धारणाय पाणितलव्यापारवच्चैत्रगात्रनिबन्धनवेदनापरिहरणाय मैत्रगात्रव्यापारस्यापि कदाचन प्रसङ्गात् । शरीरभेदादप्रतिसन्धानमिति चेन्न । बालकौमारादिशरीरेष्वप्रतिसन्धिप्रसङ्गात् । प्रसाधितश्च तत्र शरीरभेदः । तथा(हि)[पि]सन्तानभेदादप्रतिसन्धानमिति चेत् । जातिस्मरयोगिनोऽपि देहभेदेष्व[न]नुसन्धानप्रसक्तेः ।

॥ अन्तःकरणभेदस्याननुसन्धानप्रयोजकत्वपरिहारः ॥

एतेनान्तःकरणभेदादप्रतिसन्धिरिति परास्तम् । योगिनो नानादेहेष्वन्तःकरणभेदेऽपि प्रतिसन्धानस्य विविधागमप्रसिद्धत्वात् । तत्र चान्तःकरणान्यपि भिन्नान्येव । यथाह भगवान् **पतञ्जलिः**—"निर्माणचित्तान्यस्मितामात्रात्" इति । नचान्तःकरणभेदमन्तरेण शरीरभेदेषु भोगसम्भवः । तथा चान्तःकरणानामेव प्रतिशरीरमसङ्कीर्णानां कर्तृभोक्तृभावः । पुंसस्तु नान्यस्मिन् कर्तृत्वादिकमिति न वाच्यम् । तथा सत्येकस्य योगिनो नानादेहेषु प्रयत्नसुखादिप्रतिपा(दित)[दक]पुराणादिप्रामाण्यविरोधात् ।

॥ वेदान्तिमतस्य कर्ताशास्त्रार्थवत्त्वादिति ब्रह्मसूत्रविरोधः ॥

किञ्चास्मिन् मते 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र. सू. २-३-३३) इति पुरुषस्य कर्तृताप्रतिपादकमधिकरणं विरुद्ध्येत । भवतु तर्ह्यन्तःकरणोपाधिकमेवात्मन्यपि

कर्तृत्वादिकमिति चेत्; प्राप्तस्तर्हि पुंस एवैकस्मिन्निव देहान्तरेष्वपि प्रयत्नसुखाद्यनुसन्धिः। न चान्तःकरणानां मनोतिरिक्तत्वं प्रामाणिकम्। मनसश्च प्रयत्नसुखाद्याश्रयत्वं प्रतिषिद्धम्। तथा सति कथं तदुपाधिकः पुंसि प्रयत्नसुखाद्युपलम्भः। तस्मादात्मन्येव निरुपाधिकाः सुखादयः। स चेदेकः सर्वशरीरेषु प्रसक्त एव तस्यैकस्मिन्निव देहे देहान्तरेष्वपि प्रतिसन्धिः। नच नानाजन्मभाविष्विव देहेषु संस्कारभ्रंशादेरप्रतिसन्धानं; तदैव तदसम्भवात्। अपरथा मैत्रवच्चैत्रस्यापि तदैवाप्रतिसन्धानापत्तेः। अविद्याभेदनिबन्धनाज्जीवभेदादप्रतिसन्धिरिति चेत्, न दण्डायमानाऽविद्या सम्भविनीत्युदितमनिर्वाच्यविचारावसरे। मिथ्याज्ञानरूपा त्वविद्या विनाशिनीति तदुपाधित्वे जीवानां विनाशो दुर्वारः स्यात्। ततश्चैक्यपक्षविक्षिप्ताः सर्वे दोषाः प्रादुःष्युः। नानोपाधियोगिनोऽपि स्वरूपस्यैकत्वादकृ(त्यत्वाद्या)ताभ्यागमादिदोषप्रसङ्गपरिहार इति चेत्। हन्तैवमेकशरीरवच्छरीरान्तरेष्वपि तदेकत्वादेव प्रतिसन्धानप्रसङ्ग इति किं न पश्यसि।

॥ अविद्योपाधिकजीवभेदादननुसन्धानवादिब्रह्मतत्त्वसमीक्षानिरासः ॥

एतेनैतदपास्तम् यदवोचदाचार्यबृहस्पतिः[1] **ब्रह्मतत्त्वसमीक्षायां** अविद्योपधानावच्छिन्नजीवभेदाभेदनिबन्धना त्वनुसन्धानाननुसन्धानव्यवस्थोपपत्स्यत इति। तस्मादौपाधिकभेदवादिपक्षे प्रतिसन्धानप्रसङ्गात्; परशरीराधिष्ठातुरनुमानात्पारमार्थिक एव भेदः स्वात्मनः प्रत्यक्षपरिच्छेद्य इति स्थितम्।

॥ परशरीरे आत्मानुमानस्यापि स्वभिन्नात्मसाधकत्वमेव ॥

किञ्चानुमानमपि परशरीराधिष्ठतृगोचरं स्वात्मनो भिन्नमेव तदधिष्ठातारं गोचरयति। न वै परायतनस्वामिन्येवं अनुमानमुदेतुमलं-यथा मम शरीरे मदीयप्रयत्नपूर्विका चेष्टा तथा परशरीरेऽपि मत्प्रयत्ननिबन्धनैवेति; प्रत्यक्षविरोधात्। प्रत्यक्षेण हि समवयत्प्रयत्न उपलभ्यते। नच परशरीरचेष्टानुगुणः प्रयत्नः स्वात्मनि पुरुषाणां प्रत्यक्षो भवति। तत्र यथा स्वात्मनि निष्प्रयत्नेऽपि प्रचलपल्लवादिदर्शनात्तदनुगुणप्रयत्नवाननुमीयमानः परमात्मा स्वात्मनो भिन्न एव; तथा परात्मापि परशरीरव्यापारानुकूलप्रयत्नशालीति युक्तं पश्यामः।

---

1. वाचस्पतिः।

॥ सर्वशरीराणां प्रतिवाद्यात्मना आत्मवत्त्वानुमाननिरासः ॥

ततश्चैतदनवकाशम् । यत्प्रयुञ्जते—विवादपदानि शरीराणि प्रतिवाद्यात्मनैवाधिष्ठितानि; जीवच्छरीरत्वात् प्रतिवादिशरीरवदिति । यथोक्तनीत्या प्रतिवादिन एव प्रत्यक्षानुमानाभ्यां बाधितविषयत्वात् । साध्यविकलश्च दृष्टान्तः प्रतिवादिशरीरस्य परमेश्वरेणाप्यधिष्ठितत्वात् । तस्यास्मदादिकार्येष्वपि कर्तृताश्रयणात् । प्रतिवाद्यात्मन एव भोगायतनानीति साध्यार्थ इति चेत् तथापि वदनविकसनाद्यनुमितसुखभेदभाजः शरीरान्तरवर्तिनो भोक्तुः स्वात्मनः सुखविरहिणः प्रत्यक्षतो भेदाधिगमात् । स्वात्मनश्च सुखविरहिणः परावृत्ततयैव परात्मनः सुखिनोऽनुमीयमानत्वेन प्रत्यक्षानुमानाभ्यां बाधितविषयत्वात्तदवस्थमेव हेतोः कालात्ययापदिष्टत्वम् । तस्मात्प्रत्यक्षादिविरोधादापाततो जीवभेदापाकरणपरतया भासमाना अपि श्रुतिस्मृतयः कथञ्चिदन्यपरा एव व्याकरणीयाः । पुरुषभेदप्रतिपादिका पुनः—

अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ।

इत्यादिर्यथाश्रुतार्थपरैव वर्णनीया ।

॥ एकमेवाद्वितीयमित्यादिश्रुतेः स्वमतेऽभिप्रायः ॥

यदपीदं वचनम्—एकमेवाद्वितीयं, नेह नानास्ति किञ्चनेत्यादि । तदपि परमेश्वरभेदापाकरणपरं वर्णनीयम् । एक एवायं परमात्मा, नानेके परमात्मानः सन्तीति । सर्वभेदनिरासपरत्वे तु स्तम्भकुम्भादिभेदावगाहिना प्रत्यक्षेण विरोधः स्यात् । नच प्रत्यक्षविरोधेऽप्यागमस्यैव प्रामाण्यं इति साम्प्रतम्; परमात्मप्रणीतानामपि मञ्चाः क्रोशन्तीत्यादिवचसां प्रमाणान्तरमनुसृत्य भाक्तप्रत्ययाश्रयणात् । भवतु पुरुषाधीनविरचनानां वचसां मानान्तराधीनवृत्तीनां तद्विरोधादन्यपरत्वम् । वेदः पुनरपौरुषेयस्तत्र न लोकवच्छब्दवृत्तमिति चेत्—तदसत् । वेदस्यापि पौरुषेयतया प्रमाणान्तरमूलतया प्रतिपादनात् ।

॥ प्रत्यक्षविरोधे आगमस्यैव बाधः ॥

ननु लोकवचसामपि नायं सर्पो रज्जुरेष इत्यादिकानां प्रत्यक्षविरोधेऽपि प्रामाण्यं कथं दृश्यते । नैषाप्यनुपपत्तिः काचित् । अनभ्यासदशापन्नतया

शङ्कितविभ्रमभावेषु बोधेषु साक्षात्कारधारिष्वपि प्रचुरतराभ्यासपरिनिश्चितप्रमाणभावपरमाप्तवचोभिर्बाध्यताया निश्चयोपपत्तेः। स्तम्भकुम्भादिगोचरस्तु भेदप्रतिभासः प्रचुरतराभ्यासदशापन्नतया सकललोकनिर्विशङ्कः कथमागमशतेनापि शक्यः पराकर्तुम्। नचैतादृशस्थले परभावितामात्रं[1] (अ)प्राचीनबाध उपयुज्यते। न खलु दृढतरविनिश्चितप्रमाणभावमेकचन्द्रवेदनं प्राचीनं पराचीनेन वचनशतेनापि नानाचन्द्रवादिना शक्यापबाधनम्।

॥ शरीरात्मभ्रमस्य वैदिकवचनबाध्यत्वशङ्कानिरासः ॥

कथं तर्हि शरीरात्मभ्रमः सर्वलोकनिर्विशङ्कः[2] वैदिकेन वचनेन बाध्यत इति चेन्न। तत्र प्रत्यभिज्ञासंज्ञेन प्रत्यक्षेणापि बाधस्योपपादितत्वात् तत्सम्पादनयोरेवागमानुमानयोरपि शरीरातिरेकिणि पुंसि प्रामाण्यप्रस्थापनात्। प्रकृते तु निःसंवादान्यद्वैतवचांसि निर्विचिकित्सप्रमाणभावं प्रत्यक्षादि न मात्रयापि बाधितुमीशत इति विशेषः।

॥ प्रत्यक्षस्य भेदाग्राहित्ववादिमण्डनमतेन पूर्वपक्षः ॥

**स्यादेतदेवं** यदि प्रत्यक्षेण भेदः प्रमीयते, तदेव तु दुःसम्पादमिति त्रय्यन्तदन्तिनः। तस्य विधिमात्रव्यापारत्वात्। तदुक्तम्—

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते॥ इति। (ब्र.सि.२-१)

तथाहि—प्रत्यक्षेऽपि त्रयः कल्पाः कल्पिताः। वस्तुस्वरूपविधिर्वस्त्वन्तरव्यवच्छेदः उभयं वेति। उभयस्मिन्नपि त्रैविध्यं यौगपद्यं व्यवच्छेदपूर्वको विधिः विधिपूर्वको व्यवच्छेद इति। तत्र वस्त्वन्तरव्यवच्छेदे उभयस्मिन् वा भेदः प्रत्यक्षगोचर इति भवति विरोधः। स्वरूपविधिमात्रे तु कस्यचिद्व्यवच्छेदेन शून्ये न भेदः प्रमाणार्थः। नहि विधिव्यवच्छेदादृते भेदसिद्धिः। विधिमात्रव्यापारं च प्रत्यक्षम्। अतो न विरोधः। कथमिति चेदुच्यते—

---

1. पश्चिमभावित्वमात्रम्।
2. कोऽपि—मा. अधिकम्

लब्धरूपे क्वचित्किंचित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य सम्भवः ॥ (ब्र. सि. २.२)

न तद्व्यवच्छेदमात्रं प्रत्यक्षव्यापारः न युगपदुभयं, न व्यवच्छेदपूर्वकं विधानं ; यतः सिद्धे विषये सिद्धरूपमेव निषिध्यते 'नेदमिह', 'नायमयं' इति सिद्धे भूतले सिद्धो घटो गवि वाऽश्वः । न प्रतिषेध्यात् प्रतिषेधविषयाच्च विना प्रतिषेधोऽवकल्पते । तस्मात्प्राग्विधानमेषितव्यम् । भवतु तर्हि विधिपूर्वको व्यवच्छेदः । तत्राह—

क्रमस्संगच्छते युक्त्या नैकविज्ञानकर्मणोः ।
न सन्निहितजं तच्च तदन्यामर्शि जायते ॥ (ब्र. सि. २.३)

न खल्वेकप्रमाणज्ञानव्यापारौ सन्तौ विधिव्यवच्छेदौ क्रमवन्तौ युज्येते, क्षणिकत्वात् । बुद्धेश्च जन्ममात्रव्यापारवत्त्वात् । अपि च सन्निहितार्थावलम्बनं प्रत्यक्षं सन्निहितमर्थमवमद्योतयितुमिच्छति । नचानवभासमानं व्यवच्छेत्तुमिच्छति । तथा चासन्निहितप्रतियोगी व्यवच्छेदः प्रत्यक्षाधीनो न भवेदिति ।

॥ मण्डनमतनिरासः ॥

**तदेतदसमञ्जसम् ।** तथा हि—अक्षव्यापारसमनन्तरभाविनी व्यावृत्तिप्रतीतिरखिललोकाविसंवादिनी साक्षात्कारिणी च कथमपाकर्तुं शक्या । तत्र पक्षान्तराणि भवन्तु मा वा भूवन् । विधिव्यवच्छेदयौगपद्ये तु न विरोधकलां कामप्याकलयामः । तथा हि—अङ्गुल्योरपर्यायमेव परस्परव्यावृत्तिः प्रतिभासते । यद्यपि वस्तुविधिव्यतिरेकेण व्यवच्छेदो न प्रतिभाति, तथापि यथा व्यक्तियोग्यतान्तर्भूतयोग्यतैव जातिरिति व्यक्त्या सममेकज्ञानगोचरभावमेवाचरति, न पुनः प्राथमिकीं वराकीं व्यक्तिप्रतीतिमपेक्षते ; तथेहापि वस्तुयोग्यतान्तर्भूतैवाभावयोग्यतेति वस्तुना सहाभाव एकस्यां संविदि भासतां किं प्राचीनया वस्तुप्रतीत्याश्रिततया ।

॥ सन्निहिते असन्निहितव्यवच्छेदस्य प्रतियोगिज्ञानं विनापि सम्भवः ॥

नन्वेवमपि कथमसन्निहितप्रतियोगी सन्निहितव्यवच्छेदः? प्रत्यक्षस्य सन्निहितमात्रे प्रवृत्तेरिति । नात्रापि काचिदनुपपत्तिः । एकबुद्धौ प्रतियोगिप्रतिभासं

विनाप्यभावप्रतिभासस्य प्रमाणान्तर्भावावसरे समर्थितत्वात् । प्रतियोगिस्मरणापेक्षया पुनस्तस्मादयं व्यावृत्तिः सविकल्पिका संवित्तिर्भविष्यति । तत एव त्रैलोक्याग्रहणे ततोऽन्यो घटः कथं प्रतीयत इति प्रत्यूढम् । सविकल्पकप्रत्यक्षं (नि)[सन्नि]हित-विशेषणावच्छेदेनापि भवत्येव यथा स एवायं देवदत्त इति प्रत्यभिज्ञानं तद्देशकालाव-च्छेदेन ध्यानवितानावच्छेदेन च ।

॥ विधिव्यवच्छेदयोः यौगपद्यस्वीकारः ॥

यत्तु 'विधानमेव नैकस्य', 'न भेदो वस्तुनो रूपं' (ब्र. सि. २-४, ५) इत्यादि विपञ्चितं, तत्राप्यनु(ज्ञै)[ज्ञै]व, वर्तमानभेदविधिव्यवच्छेदयौगपद्यस्य प्रत्यक्षप्रतिपादनात् । परस्पराभावपर्यायस्य च भावस्वभावातिरेकिणो भेदस्य स्वीकारात् । तर्हि भेदभेदिनोरपि भेदान्तराभ्युपगमात् अनवस्थेति चेत् । भवतु मूलक्षयाभावात् । पूर्वपूर्वव्यावृत्तिग्रहण एवोपक्षीणशक्तेः व्यावृत्तं वस्तु न सिद्ध्येदिति चेत्, नैतत्, न खलु व्यावृत्ततया प्रतीता व्यावृत्तिः वस्तुविशेषणं येनैष दोषः स्यात् । किंतु स्वरूपेणैवेति न दोषः कश्चित् ।

॥ अन्योन्याश्रयात् भेदज्ञानमेव न सम्भवतीति शङ्का ॥

यदप्युदितम्—

अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनम् ।
नास्मिन्नायमयं नासौ इति भेदाद्विना न धीः ॥ १ ॥ (ब्र.सि. २-१०)

इति । इह किलेदमुच्यते । नायमस्मिन्, अयमसौ न भवतीति ज्ञानं प्रत्यक्षं वा प्रमाणान्तरं वा भवत्वभावपर्यायम् । सर्वथापि विषयनिषेध्ययोरसंकीर्णयोर्ग्रहणा-देवान्योन्याभावज्ञानं भवति । सङ्कीर्णग्रहणे हि वस्तुमात्रत्वेन व्यवच्छेद्य(वि)[व्यव]-च्छेदविषयविभागाभावात् न निषेधः सम्भवेत् । अर्थमात्रे अविभागे विषयत्वेना-पेक्षिते न निषेध्यम्, निषेध्यत्वेनापेक्षिते न विषयविशेष इति । भवतु तर्ह्यसङ्कीर्ण-ग्रहणादन्योन्याभावग्रहणमिति चेत्, प्राप्तं परस्पराश्रयत्वम् असंकीर्णग्रहणादभावग्रहणं, ततश्चासंकीर्णग्रहणमिति । यस्मादभाव एवासङ्कर इति ।

॥ प्रकारान्तरेण इतरेतराश्रयत्वप्रतिपादनम् ॥

केचिदेतदेवेतरेतराश्रयत्वं भङ्ग्यन्तरेण प्रतिपादयन्ति । तथा हि—घटा-द्धर्मिणो भेदेनाप्रतिपन्नस्य प्रतियोगित्वमुत भेदेन प्रतिपन्नस्य? प्राचीनपक्षे घटस्य

स्वतोऽपि भेदः प्रतीयेत। पराचीने तु घटात्पटस्य भेदसिद्धौ पटाद् घटस्य भेदः सिद्ध्येत्। तत्सिद्धौ च ततः पटस्येति स्पष्टं परस्पराश्रयत्वमिति।

॥ भेदप्रतीत्युपपत्त्या तत्खण्डनम् ॥

**तदेतदपि** समस्तं प्रागुक्तयैव नीत्या परास्तम्। तथाहि—एकस्यामेव निर्विकल्पिकायां संविदि स्वस्वभेदिनोश्च सन्निहितयोर्युगपदवभासे सति तत्रैकमवधिं कृत्वा इदमस्माद्भिन्नमिति विशेषणविशेष्यभावेन सविकल्पकसंविदुत्पत्तिरविरोधिनी। सविकल्पिकायामेव च संविद्ययं नियमः। पूर्वं भेदस्य भेदिनोश्च प्रतीत्या भवितव्यं इति यस्मात्। अन्यथेदमस्माद्भिन्नमिति ध्यानवितानविच्छेदेन विशेषणविशेष्यभावप्रतीतिर्न सम्भविनी। निर्विकल्पिका तु संवित्तिः स्वरूपेणैव गोचरयतीति किं तत्र प्राचीनप्रतियोग्यादिविशेषणप्रतीत्या। विप्रकृष्टव्यवच्छेदेऽपि गतिरुक्तैव।

॥ अन्योन्याभावप्रतीतौ प्रकारान्तरम् ॥

केचित्तु घटं पटं च पटतया विदित्वा तयोरन्योन्याभावः प्रतीयतां, किमनयोः प्रागसङ्करप्रतीत्या। नचैवं सत्येकस्मिन् व्यावृत्तिप्रतीतिप्रसक्तिः। प्रत्यक्षस्य विषयनान्तरीयकस्य तत्र व्यावृत्तिरूपविषयाभावादित्याचक्षते। भवतु नामायमपि पन्थाः, परस्पराश्रयप्रसक्तिस्तु सर्वथा नास्त्येवेति स्थितम्।

॥ एकरूपेण सदिति प्रतीयमानेषु भेदप्रतीतिसम्भवः ॥

यदप्यभिहितम्—'मीयमानैकरूपेषु न निषेधोऽवकाशवान्' इति। तत्रापि यदि मीयमानमेकं सदिति रूपं येष्विति विवक्षितं, तर्हि सदित्येकसामान्यरूपयोगिष्वपि विशेषेषु परस्परात्मताप्रतिषेधे को दोषः? सद्रूपादेकस्मादभेदेन प्रतिभासमानानां कथमन्योन्यव्यावृत्तिप्रतीतिस्तात्त्विकीति चेन्न। सामान्यतद्वतोर्भेदस्यैव समर्थितत्वात् सामानाधिकरण्यस्यापि समवायास्पदत्वेन निवेदितत्वात्। न च वचनीयं सदाकाराद्भेदे विशेषाणां शशविषाणवदसत्त्वप्रसङ्ग इति। विवक्षितविशेषाणां सदाकारपर्यायसत्तासम्बन्धितयैव सत्पदवेदनीयत्वात्। शशविषाणस्य तु तदभावेनैव वैषम्यात्। कथं तर्हि सामान्यादीनां सत्ताविरहिणः शशविषाणाद्वैषम्यम्? सत्तैकार्थसम्बन्धितया, प्रमाणविषयभावाद्वा भविष्यति। तस्मादनुगतव्यावृत्तरूपतया कुसुमसूत्रवत्सत्तासामान्यस्य तद्व्यक्तीनां च भेदे व्यवस्थिते यथा सत्तासामा-

न्यस्यैकत्वं प्रत्यक्षसिद्धत्वात् तथा परस्परव्यवच्छेदोऽपि विशेषाणामाश्रयणीयः तुल्यप्रमाणकत्वात् ।

॥ सत्तैव तत्त्वमिति सिद्धान्तखण्डनम् ॥

**ततश्च** यत्प्रमेयविकल्पेन सर्वानुयायिनी सत्तैव तत्त्वमिति स्थापितं तदप्युन्नीतया नीत्या **निरस्तं,** सामान्यविशेषयोः परस्परविलक्षणयोर्वस्तुताव्यवस्थापनात् ।

॥ निर्विकल्पस्य वस्तुमात्रविषयता न भेदविषयतेति पक्षखण्डनम् ॥

यत्तूक्तम्—

आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना ।
अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् ॥ (ब्र. सि. २-२७)

तत्प्रत्यक्षप्रस्ताव एवाविकल्पकप्रत्यक्षस्य सामान्यविशेषरूपवस्तुद्वयविषयत्वसमर्थनेन निरस्तम् ।

॥ भेदप्रपञ्चो मिथ्यैव भासते इति सिद्धान्तः ॥

यत्पुनरयं भेदप्रपञ्चो मिथ्यैव भासत इत्यत्र साधनद्वयमुदितम्—

दर्पणादौ मुखस्येव भेदोऽभेदावलम्बनम् ।
भेदावलम्बनोऽभेदो न तथा तदभावतः ॥
प्रत्येकमनुविद्धत्वादभेदेन मृषा मतः ।
भेदादर्थतरङ्गाणां भेदाद्भेदः कलावतः ॥ इति (ब्र. सि. २.३०-३१)

॥ भेदस्वरूपविकल्पेन तन्निरासः ॥

तत्राभेदमुपादाय भेदस्यात्यन्तासत एव प्रतिभासः साध्यते ? किं वाऽनिर्वाच्यस्य ? किं वान्यत्र सतः ? प्रथमद्वितीययोर्दृष्टान्तद्वयमपि साध्यविकलम् । अन्यथाख्यातेः समर्थितत्वात् । तृतीयेऽप्यपसिद्धान्तः स्यात् । मिथ्याभूतस्याभेदमुपादाय प्रतिभासः साधारण्येन साध्यत इति चेन्न । मिथ्यार्थ[ा]परिज्ञानात् । बाध्यता मिथ्यार्थ इति चेत् कः पुनरयं बाधो विवक्षितः ? यद्यसतः स(ता)[दाऽ]सत्त्वबोधनं, संसर्गमात्रासत्त्वबोधनं वा ? तर्हि तादृग्बाधागोचरभावे भेदस्यासत्त्वमन्यथाख्यातिगोचरभावो

वा साध्य इत्यपसिद्धान्तप्रसक्तिः । विज्ञानविनिवर्त्यत्वं बाध्यत्वमिति चेत् । तत्साधनेऽपि तदवस्थमेव साध्यवैकल्यं दृष्टान्तस्य ।

॥ दृश्यत्वेन प्रपञ्चमिथ्यात्वसाधने आत्मनि अनैकान्तिकता ॥

दृश्यत्वेनापि मिथ्यात्वसाधनमुक्तयैव नीत्या निरस्तम् । तस्य त्वनैकान्तिकत्वमात्मनेति विशेषः । स्यादेतत्, स्वयंप्रकाशत्वादात्मनो नास्ति दृश्यत्वमिति । न, प्रमाणानुपपत्तेः । अथ "अत्रायं पुरुषः स्वयंज्योतिः" इत्यागमः प्रमाणम्; न अन्यार्थत्वात् । तथा हि—कण्टकादिवत् परेणैव प्रतिपत्त्रा न प्रकाशनीय आत्मा । किं तर्हि? स्वयमेव स्वात्मनो ज्योतिःप्रकाशकः । स्वयमेव स्वात्मानं जानातीत्यर्थः । इतरथा इदमेव वाक्यं न शब्दोऽर्थप्रत्यायक इति व्याहन्येत । तथा हि – यदी-(दि)दं वाक्यमात्मानं स्वप्रकाशं बोधयति, कथं तर्हि तस्य प्रमाणान्तरप्रमेयता न भवेत्? अथ न प्रकाशयति तथापि कथमेतेनात्मन स्वप्रकाशता सिद्ध्येत्? स्वसंवेदनसम्वेदनात्मत्वादात्मनः स्वप्रकाशतेति चेन्न । संवेदनस्यापि स्वसंवेदनताया निरस्तत्वात् । आत्मनश्च संवेदनादतिरेकस्य निवेदितत्वात् ।

॥ आत्मनः अहंप्रत्ययवेद्यत्वेन दृश्यत्वमिति ॥

तस्मादहं सुखीत्येवमात्मनः प्रतिभासनात् ।
अहंप्रत्ययवेद्योऽयमभ्युपेयो मनीषिभिः ॥ १ ॥

एकस्य कर्मकर्तृत्वं यद्यप्य(त्रच)[न्यत्र] नेष्यते ।
तथाप्यत्रैव दृष्टत्वान्न विरोधपदं भवेत् ॥ २ ॥

योऽपि ग्राहकरूपेण सिद्धिं सर्वासु वित्तिषु ।
ब्रुवाणः कर्मभावेन नेमं प्रत्यक्षमिच्छति ॥ ३ ॥

कर्मत्वं किमभिप्रेतं तच्च यन्नात्मनीष्यते ।
पराश्रयक्रियाजन्यफलभाजनतेति चेत् ॥ ४ ॥

अस्माभिरिदमेवेष्टं कर्मत्वं नेदमात्मनः[1] ।
तस्य स्वाधारविज्ञप्तिव्यवहार्यत्वदर्शनात् ॥ ५ ॥

---

1. इदं कर्मत्वं नात्मन इत्यर्थः ।

**स चोपासनविधिः क्लेशकर्मक्षयसमाधिलाभार्थमनुष्ठानम् । तथा चोक्तम्—तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः क्लेशतनूकरणार्थः समाधिभावनार्थश्चेति ।**

---

यत्र ज्ञाने तु यद्भाति तत्तत्कर्मेति लक्षणात् ।
आत्मा विज्ञानकर्मेति गीयते न्यायवादिभिः ॥ ६ ॥

॥ आत्मनः प्रमेयत्वेऽनात्मत्वप्रसक्तिनिरासः ॥

यस्त्वात्मनः प्रमेयत्वादनात्मत्वं प्रसञ्जयेत् ।
घटस्याप्यघटात्मत्वं स कस्मान्न प्रसञ्जयेत् ॥ १ ॥

तत्राध्यक्षविरोधश्चेत् समानः प्रकृतेऽपि सः ।
प्रत्यक्षगोचरीभावो यस्मादात्मनि वर्णितः ॥ २ ॥

तस्माज्जात्युत्तरत्वेन नैवंप्रायाणि सूरिभिः ।
प्रयोज्यानि सभामध्यमध्यासीनैः कथंचन ॥ ३ ॥

तस्मान्मानससम्भूतमहमित्यात्मगोचरम् ।
प्रत्यक्षमभ्युपेतव्यं युक्तिमार्गानुगामिना ॥ ४ ॥

तदेवं स्थितं तावत् दृश्यत्वहेतुरनैकान्तिक इति । ततश्च भेदप्रत्ययस्य प्रत्यक्षादिमूलत्वात् बाधकाभावाच्चाद्वैतश्रुतीनामपि प्रत्यक्षादिविरोधेन कथमप्यन्यपरत्वेन व्याख्येयत्वाद्युक्तमुक्त जीवातिरेकिणः परमेश्वरस्य विज्ञानं **तदुपासनाङ्गत्वेनापवर्गसाधनमिति ।**

॥ परमेश्वरोपासनप्रकारः ॥

कः पुनरस्योपासनाप्रकार इत्यत आह—**स चोपासनविधिः क्लेशकर्मक्षयसमाधिलाभार्थमनुष्ठानमिति ।** क्लेशा रागद्वेषमोहाः कर्माणि मोक्षप्रतिबन्धीनि, तेषां क्षयः, स च समाधेश्चित्तैकाग्रयस्य लाभश्चार्थः प्रयोजनं यस्य तदनुष्ठानमुपासनाविधिरुपासनस्य प्रकार इत्यर्थः । यथा चैतदनुष्ठानं तथा भगवता **पतञ्जलिना** प्रतिपादितमित्याह—**तथा चोक्तम्—तपःस्वाध्यायेश्वरप्रणिधानानि क्रिया-**

**तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःखसहिष्णुत्वं तपः ।**

---

**योगः क्लेशतनूकरणार्थः समाधिभावनार्थश्चेति ।** यद्यपि पतञ्जलिसूत्रे 'समाधिभावनार्थः क्लेशतनूकरणार्थ'श्चेति पाठः, तथापीहार्थक्रममाश्रित्य विपर्ययेण पठितमिति वेदितव्यम् । क्रियैव योगसाधनत्वाद्योग इति योजना । क्लेशानां तनूकरणं मन्दीकरणं समाधेर्भावनं उत्पादनं तस्मा इदं तदर्थमिति ।

॥ तपःप्रभृतीनां वर्णनम् ॥

तपःप्रभृतीनि यथाक्रमं व्याचष्टे — **तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःखसहिष्णुत्वं तप** इति । बाह्यनिमित्तनिरपेक्षं शारीरं मानसं च दुःखमाध्यात्मिकम् । आत्मानमधिकृत्याध्यात्मं, तत्र भवमाध्यात्मिकम् । मानुषपश्वादीनि भूतान्यधिकृत्योत्पन्नमाधिभौतिकं ; दैवेन प्रयुक्तं शीतातपाद्यं निमित्तमधिकृत्योत्पन्नमाधिदैविकम् । तदिदं त्रिविधमपि दुःखं केनचिन्नियमेन सहमानस्य धर्माधर्मयोः सञ्चयापचयौ भवतस्ततो धर्मसञ्चयाद्योगश्रद्धादिः । अधर्मापचयाच्च तन्मूलोन्मादादिनिवृत्तिः । आदिग्रहणेन व्याधिस्त्यानसंशयप्रमादालस्यादीनामवरोधः । तपसश्च धर्माधर्मसञ्चयापचयसाधनत्वं **मनुना**ऽभिहितम्—

तपोमूलमिदं सर्वं दैवमानुषकं सुखम् ।
तपोमध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः ॥ (म. स्मृ. ११-२३४)

महापातकिनश्चैव शेषाश्चाकार्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ (२३९)

यत्किंचिदेनः कुर्वन्ति मनोवाङ्मूर्तिभिर्जनाः ।
तत्सर्वं निर्दहन्त्याशु तपसैव तपोधनाः । ॥ (२४१)

स्वर्गादिसुखमपि यद्यपि त[पसः] सम्भवति, तथापि सम्यग्ज्ञानवैराग्यादिसहकृतं चान्द्रायणादिनियमोपेतं मुमुक्षुणा विधीयमानं चित्तप्रसादादिप्रणाड्या निःश्रेयस एवोपकरोतीति तत्तदागमबलादवसेयम् । प्रसन्नचेतसा तु तपःपरिसमाप्य वक्ष्यमाणानि योगाङ्गान्यनुष्ठातव्यानीति ।

**प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्यायः । परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनमीश्वरप्रणिधानम् ।**

**समासतो रागद्वेषमोहाः क्लेशाः, समाधिप्रत्यनीकत्वेन संसारापत्तिद्वारेण क्लेशहेतुत्वात् ।**

---

॥ प्रणवाद्यभ्यासस्यानन्तरकर्तव्यता ॥

**प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्याय** इति । क्षुद्रफलोऽपीश्वरविषयः क्रूरो मन्त्रो माप्रापदिति प्रशान्तग्रहणम् । परमेश्वरगोचर एव मन्त्रो मुमुक्षुभिरादरेणाभ्यसनीय इति द्योतनायेश्वरग्रहणम् । वस्तुतो योगशास्त्राभ्यासोऽपि स्वाध्याय इत्युपलक्षितो वेदितव्यः । यस्मादुक्तं '**पातञ्ज**(साज)लादेश्च स्वाध्यायोऽभ्यास उच्यते' इति । **परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनं** पर्यालोचनमी**श्वरप्रणिधानमिति ।** अनुचिन्तनग्रहणस्योपलक्षणार्थत्वात् कदाचन स्तुतिजलपुष्पादिभिराराधनं, सर्वकर्मणां [1]परमगुरावर्पणं, तदभिधायकस्य प्रणवस्य जपः, तदर्थभावनं चेश्वरप्राणिधान[मेव] । स चायं क्रियायोगो व्युत्थितचेतसैव योगिना नि(सव)[र्वर्त]नीयः । इतरस्य मुख्ययोगाधिकारित्वात् ।

॥ क्लेशस्वरूपं तन्निवृत्त्युपायश्च ॥

यदुक्तं क्लेशतनूकरणार्थं इति, तत्र क्लेशाः कियन्तो वेत्यत आह— **समासतो रागद्वेषमोहाः क्लेशा** इति । तत्र क्लेशपदप्रवृत्तावुपपत्तिमाह— **समाधिप्रत्यनीकत्वेन संसारापत्तिद्वारेण च क्लेशहेतुत्वादिति** । क्लेशयन्तीति क्लेशा इत्यर्थः । तत्र सक्तिलक्षणो रागोऽसहिष्णुत्वलक्षणो द्वेषो मिथ्याप्रत्ययो मोह इति लक्षणानि वेदितव्यानि । यद्यपि च भगवान् **पतञ्जलि**रविद्यास्मितारागद्वेषाभिनिवेशा इति पञ्चधा क्लेशान् प्रोवाच, तथाप्यस्मिताभिनिवेशयोः [पार्थक्य]मपश्यताऽस्मद्गुरुणा क्लेशा निरूपिताः ।

**पातञ्जले** हि शास्त्रे दृग्दर्शनशक्त्योरेकात्मताऽस्मितेति लक्षणमुदितम् । तत्र पुरुषो दृक्छक्तिर्महदाद्या बुद्धिर्दर्शनशक्तिः तयोः वस्तुतो विविक्तयोरप्येकात्मतेव यापि

---

1. परमगुरुः ईश्वरः

**तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि।**

**तत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धिवृद्धिहेतवो यमाः, अहिंसाब्रह्मचर्यास्तेयादयः। देशकालावस्थापेक्षिणः पुण्यहेतवः क्रियाविशेषा नियमाः, देवताप्रदक्षिणसन्ध्योपासनजपादयः।**

---

भ्रान्त्या प्रतिभाति साऽस्मितेत्यर्थः। एषा च मोह एवान्तर्भवति। प्रधानमहदादिप्रक्रिया च प्राक् परास्तेति को वाऽस्यावकाशः।

॥ अभिनिवेशलक्षणम् ॥

तथा अभिनिवेशलक्षणं "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" (यो. सू. २-९) इत्युदितम्। या खलु जातमात्रस्यापि जन्तोरियमाशीः नित्या भवति मा न भू(यो)वं भूयासमिति सोऽभिनिवेश इत्युच्यते। स (द्या)[चा]नादिमरणदुःखप्रवाहानुभवारूढवासनावशात्स्वरसवाही भवति। यथा चायमत्यन्तमूढस्य दृश्यते तथा विदुषोऽपि विज्ञातवस्तुयाथात्म्यस्या(प्या)[पि] रूढः प्रतीयत इत्यर्थः। एषोऽपि मरणदुःखासहिष्णुत्वलक्षणो द्वेष एव वेदितव्य इति त्रय एव क्लेशा इति स्थितम्।

॥ यमादीनामष्टाङ्गानामुपन्यासः ॥

यथा च क्लेशनिरासादिद्वारा बहिरङ्गस्य क्रियायोगस्योपयोगः तथा यमादीनामप्यन्तरङ्गाणामुपयोगमभिसन्धायाह—**तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति**। कः पुनरयं समाधि(धेरस्योप)योगो नाम? यस्य समाधिः (अ)नि(व)[र्वि]र्तकत्वेनाङ्गं गीयत इति चेत्, समाधिरेवात्यन्तप्रकर्षं गतो योग इत्या**चार्याः**। ततश्च पूर्वः समाधिरुत्तरस्याङ्ग उत्तरशब्दस्य [1]पूर्ववदिति वेदितव्यम्। यमादेरपि पूर्वपूर्वस्य तत्तदुत्तरोत्तरोपयोगेन योगाङ्गतामामनन्ति।

॥ यमादिस्वरूपकथनम् ॥

तत्र यमादीन् क्रमेण व्याचष्टे—**तत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धिवृद्धिहेतवो यमाः, अहिंसाब्रह्मचर्यास्तेयादय इति।**

---

1. पूर्वशब्दवदित्यर्थः।

**योगकर्मविरोधिक्लेशजयार्थं करणबन्ध आसनम्, पद्मकस्वस्तिकादि। कौष्टचस्य वायोर्गतिविच्छेदः प्राणायामः रेचकपूरककुम्भकप्रकारेण शनैः शनैर्जेतव्यो वनगजेन्द्रवत् ।**

---

शुद्धिरधर्महानिः वृद्धिर्धर्मोत्कर्षः । अथवा शुद्धिश्चित्तवैमल्यं वृद्धिर्योगोत्कर्षस्तद्धेतवो ये देशादिभिरनियताः सर्वस्मिन् देशे काले वाऽवस्थायां च सर्वस्यामनुष्ठेया अहिंसादयस्ते यमा इत्यर्थः । सत्या(दि)परिग्रहयोरप्यादिपदादवरोधो वेदितव्यः । यदा पुनः अहिंसादयोऽपि तीर्थे कञ्चनापि न हनिष्यामीत्यादिना नियमेनानुष्ठीयन्ते तदा तेऽपि नियमा एव वेदितव्याः । **देशकालावस्थापेक्षिणः पुण्यहेतवः क्रियाविशेषा नियमाः ।** यथाक्रमं **देवताप्रदक्षिणसन्ध्योपासनजपादय इति ।** जपादयस्तु न व्यवस्थामीक्षन्त इति ज्ञेयम् । पुण्यातिशयहेतुत्वे तु देशाद्यपेक्षित्वमपि विद्यत एव, "अनन्तं शिवसन्निधौ" इत्यादिश्रवणात्। **पातञ्जलास्तु** निवृत्तिलक्षणा यमाः प्रवृत्तिलक्षणा नियमा इत्याहुः ।

॥ योगशास्त्रोक्तयमादीनां लक्षणानि ॥

तथा चाभिहितम्—"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" इति ।

**योगकर्मविरोधिक्लेशजयार्थं करणबन्ध आसनमिति ।** करणानां चरणादीनां बन्धः प्राणायामादिसिद्ध्यर्थः । संयमः आसनं स्थिरं सुखं चोपवेशनमित्यर्थः । तेन योगकर्मविरोधिनः क्लेशा आध्यादयो विमुक्ता भवन्तीति श्रूयते । तच्च **पद्मकस्वस्तिकाद्यनेकप्रकारम् । कौष्टचस्य**[1] **वायोः** श्वासप्रश्वासरूपस्य **गतिविच्छेद**रूपः **प्राणायामः रेचकपूरककुम्भकप्रकारेण शनैः शनैः जेतव्यो वनगजेन्द्रवत् ।** यथा वनगजेन्द्रः सत्प्रयोगेण शनैः शनैः जीयमानो महते भवत्युपकाराय, विपरीतप्रयोगेण तु गृह्यमाणे विपथे प्रवर्तते, तथा वायुरपि सुखप्रयोगेण शनैर्जीयमानः सकलमप्यधर्मरागादिफलं विलापयन्योगाय कल्पते । विपरीतप्रयोगवशादतिक्रम्य गृह्यमाणः पुनर्वातगुल्माद्यनर्थस्य सार्थमेव सम्पादयेदिति ।

---

1. जठरान्तर्गतस्य ।

**समाधिप्रत्यनीकार्थेभ्यः समन्ताच्चेतसो व्यावर्तनं प्रत्याहारः। देशबन्धश्चित्तस्य धारणा। तत्र प्रत्ययैकतानता ध्यानम्। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। एतदेव ध्यानोत्कर्षान्निवाताचलप्रदीपावस्थानवदेकत्रैव चेतसोऽवस्थानं समाधिरभिधीयते।**

**एवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकारदुःखभावनयाऽनभिरतिसंज्ञितं परं वैराग्यं, महेश्वरे च परां भक्तिमाश्रित्य अत्यन्ताभियोगेन सेवितव्यानि।**

---

॥ प्रत्याहारादिलक्षणम् तदावश्यकत्वं च ॥

**समाधिप्रत्यनीकार्थेभ्यः समन्ताच्चेतसो व्यावर्तनं प्रत्याहारः।** प्रत्याहृते चेतसीन्द्रियाण्यपि प्रत्याहृतान्येव भवन्ति तन्मूलत्वादिन्द्रियप्रवृत्तेः। तथा च सुखेन योगप्रवृत्तिरित्यर्थः। **देशबन्धश्चित्तस्य धारणा।** देशो विषयः परमेश्वरादिरूपः मोक्षप्रक्रमात्, तत्र बन्धः प्रयत्नेन (सा)धारणं निश्चलीकरणं चित्तस्य धारणेत्यर्थः। **तत्र प्रत्ययैकतानता ध्यानम्।** तस्मिन्नालम्बने विजातीयप्रत्ययतिरस्कारेण सजातीयप्रवाहकरणं ध्यानमित्यर्थः। **तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।** ध्यानमेव ध्येयाकारमात्रनिष्ठं प्रत्ययात्मकेन स्वरूपेण शून्यमिव व्यवतिष्ठमानं समाधिरभिधीयते। तदेव भाषान्तरेण स्पष्टयति—**ध्यानोत्कर्षान्निवाताचलप्रदीपावस्थानवदेकत्रैव चेतसोऽवस्थानं समाधिरभिधीयत** इति। समाध्यधीनस्तु संस्कारप्रचयः प्रज्ञालोकप्रकर्षरूपकार्यतारतम्यात्तरतमभावेन योगिभिर्वेदितव्यः। स च तथा संवेद्यमानो योगिनः समाश्वासयति।

॥ योगाङ्गानुष्ठानस्यावश्यकता ॥

यथोक्तमेव योगाङ्गानुष्ठानं प्रकारभेदेन नियच्छति—**एवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेषु अनेकप्रकारदुःखभावनया** साधनपारतन्त्र्यपरिक्षयपरसंपदुत्कर्षादिप्रयुक्तविविधदुःखानुभवचिन्तनेन **अनभिरतिसंज्ञितं परं वैराग्यं, महेश्वरे** चानन्यसाधारणगुणदर्शनेन **परां भक्तिमाश्रित्यात्यन्ताभियोगेन**ातितात्पर्येण **सेवितव्यानीति** यथोक्तप्रकारेणैव च सेव्यमानानि योगाङ्गानि परम्परया निरतिशयश्रेयसे कल्पन्त इति सङ्ख्यातमागमवाक्यं प्रमाणयितव्यम्।

**सोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति। तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति। तथा चोक्तम्—**

**यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।**
**तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥**

**इति। तमेव विदित्वाऽतिमृत्युमेतीत्यादि च।**

---

॥ समाधिप्रकर्षफलं शिवसाक्षात्कारः ॥

ततः समाधिप्रकर्षाद**चिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति।** उपमैवौपम्यं, तन्न विद्यते यस्य तदनौपम्यं, स स्वभावो यस्येति। भावनाप्रकर्षाद्वितथोऽपि साक्षात्कारः सम्भवतीत्यवितथं पश्यतीत्यभिहितम्। तदेव स्पष्टयति—**प्रत्यक्षत** इति। **तं दृष्ट्वा निरतिशयं** निःश्रेयसं सौख्यं **श्रेयः प्राप्नोति। तथा चोक्तम्—**

**यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।**
**तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥** (श्वे.)

**"तमेव विदित्वाऽतिमृत्युमेति" इत्यादि। आरणे** "ब्रह्मविदाप्नोति परं" इत्युपक्रम्य "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति" इत्यादिवाक्यमुदाहर्तव्यम्।

॥ तैत्तिरीयश्रुतिस्थब्रह्मपदस्येश्वरपरता ॥

इह खलु सकलजगदुत्पत्त्यादिनिमित्तभूतमीश्वरतत्त्वमेव ब्रह्मपदेनाभिलप्य परमपुरुषार्थ[साधनतया] ज्ञातव्यमुपदिश्यते। ततश्चैतदपास्तं यदात्मत्वाविशेषेऽपि [जीवात्मस्वरूपं ज्ञातव्यमिति]। तस्मात्परमात्मैवादरेणैवोपासनीय इति तस्यैव सर्वोत्पत्तिम(नि)[न्नि]मित्तहेतुत्वात्। तथाभूतस्यैवादरेण विजिज्ञासस्वेति विज्ञातव्यताश्रवणात्। नचैवं सति दिक्कालयोरपि सर्वोत्पत्तिमन्निमित्तत्वाविशेषेण मुमुक्षुभिरुपास्यत्वप्रसङ्ग इति शङ्कनीयम्। पौर्वापर्यपर्यालोचनतश्चेतनस्यैवानन्दादिगुणस्योपास्यत्वप्रतिभासात्। ब्रह्मपदेन च परमात्मवाचिना व्यावर्तितत्वात्।

॥ दिक्कालस्वरूपे मानाभावात् न तयोः सर्वहेतुताप्रसक्तिः ॥

एतच्चाभ्युपगम्याभिहितम् । वस्तुतस्तु वैशेषिकाभिमतयोः [दिक्कालयोः] स्वरूपे [एव न प्र]माणमस्ति । किं पुनस्तयोः सर्वहेतुत्वे ।

॥ वैशेषिकाभिमतकालदिक्स्वरूपसमर्थनम् ॥

ननूक्तमत्र कालः परापरव्यतिकरयौगपद्यचिरक्षिप्रप्रत्ययलिङ्गं, तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तावन्यनिमित्तासम्भवात् । यदत्र निमित्तं स कालः । क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुश्च । सर्वकार्याणां चोत्पत्ति[स्थि]तिविनाशहेतुः । तद्व्यपदेशात् । काललिङ्गाविशेषात् एक एव क्रियाभेदात् मणिवत् पाचकवद्वा नानात्वेनोपचर्यते । गुणवत्त्वादनाश्रितत्वाच्च नित्यद्रव्यम् ।................[प्र. पाद. भा.] तथा दिक्पूर्वापरादिप्रत्ययलिङ्गा मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव । 'एतस्माद् इदं पूर्वेण' 'इदं पश्चिमेन' 'इदं दक्षिणेन" इत्येमवमादयो दश प्रत्यया यतो भवन्ति सा दिगिति । अन्यनिमित्तासम्भवात् । द्रव्यं च दिक्, गुणवत्त्वादनाश्रितत्वाच्च । दिग्लिङ्गाविशेषादेकत्वेऽपि सूर्यसंयोगोपाधिवशात् प्राचीत्यादिभेदेन दशदिश इत्युपचारः । तथा लोकपालपरिग्रहवशात् माहेन्द्रीत्यादिभेदेन दशदिशत्वोपचारः । सर्वकार्योत्पत्त्यादिहेतुत्वं च दिशोऽपि तद्व्यपदेशादिति ।

॥ ईश्वरेणापि कार्यसिद्धेः कालदिशोरनावश्यकता ॥

अत्रोच्यते—

कार्यकारणमात्रं चेत्साध्यते सिद्धसाध्यता ।
ईश्वरेणापि संसिद्धेः परिशेषस्तु दुर्लभः ॥

न खलु [1]भूतात्मनस्तद्गुणादिव्यतिरिक्तनिमित्तत्वं परिशेषतश्शक्यसाधनं तेषामित्यादिवचनेनेति साम्प्रतम्; परमेश्वराधीनतया विवक्षितकार्याणामुत्पत्तावविरोधात् । न च वचनीयं कार्यमात्रसाधारणत्वादीश्वरस्य कथं ततः कार्यविशेषोपपत्तिः । न हि कारणवैलक्षण्यमन्तरेण कार्यवैलक्ष्ण्योपपत्तिरिति । कालादिकल्पनेऽपि तुल्यत्वाद्दोषस्य कालादेरपि सकलकार्यसाधारणतया भवतामभिमत[त्वात्] ।

---

1. कालदिशोः अभूतत्वेति आत्मव्यतिरेकमादाय तथोपचारः ।

॥ कालस्य कार्यविशेषे असाधारणहेतुता इतरत्र साधारणकारणतेतिभावनिराकरणम् ॥

अथैकैकस्य कालादेः कार्यविशेषं प्रत्यसाधारणहेतुत्वं कार्यान्तरेषु तु साधारणकारणत्वं चेष्यते। तदसत्। स्वभावाभेदे तदसम्भवात्। सम्भवे वा किमपराद्धं भगवता परमेश्वरेण येन सकललोककारणभावेन कल्पितस्वभावमपि तमतिलङ्घ्य कालादिरपरः कल्प्यते।

॥ कालस्य सर्वहेतुत्वमप्रामाणिकम् ॥

वस्तुवृत्त्या तु कालादेः सर्वोत्पत्तिनिमित्तता।
प्रमाणस्य न कस्यापि पदवीमुपगच्छति ॥ १ ॥

न च तद्व्यपदेशेन तद्धेतुत्वं प्रसिद्ध्यति।
अहेतुनापि बहुळं व्यपदेशस्य दर्शनात् ॥ २ ॥

नीलोत्पलदलश्यामः पद्मपत्रायतेक्षणः।
नयनानन्दजनकस्सुतस्सौम्यो व्यजायत ॥ ३ ॥

सहकारेषु पुष्यत्सु चेतो देशान्तरं गतः।
परिव्राडेकशिखया कमण्डल्वा च तिष्ठति ॥ ४ ॥

मत्तेभदन्तेन हतः पुरुषो मयि पश्यति।
इत्यादिरनिमित्तेन व्यपदेशो हि दृश्यते ॥ ५ ॥

अथाशेषनिमित्तत्वं कालादेरपहीयताम्।
तथाप्यभिमते कार्ये किं न कारणता भवेत् ॥ ६ ॥

नैवमेकस्वभावे तु कथं कार्यं परस्परम्।
व्यावृत्तरूपं जायेत तुल्यरूपप्रसक्तितः ॥ ७ ॥

न खलु युगपत्प्रत्ययेनैवायुगपत्प्रत्ययः सम्भवति।

एककालकृतं लोके युगपत्कृतमुच्यते।
कालश्चेदेक एवेष्टो युगपत्सर्वमुच्यताम् ॥ ८ ॥

चिरक्षिप्रव्यवस्थापि कालैकत्वे कथं भवेत्।
कृतं हि बहुकालेन चिरेण कृतमुच्यते ॥ ९ ॥

स्वल्पेन कालेन कृतं क्षिप्रं कृतमुदीर्यते।
बहल्पताव्यवस्था तु कालैक्ये घटतां कथम् ॥ १० ॥

वस्तुतः कालभेदस्य सम्भवादुक्तया दिशा ।
विना च कालभेदेन कथं स्याद्भवतां मते ॥ ९ ॥
परापरव्यतिकरः स्थविरे नरि यूनि च ॥ १० ॥

॥ कालिकपरत्वापरत्वव्यवहारयोः विषयप्रदर्शनम् ॥

इह खलु परापरव्यतिकरेण क्षणादिकृतपरत्वाधारे स्थविरे परत्वं (दिक्कृत)-[कालकृता]परत्वाधारे च यून्यपरत्वं विवक्षितम् । सोऽयं कालैकत्वे कथमुपपत्तिमार्गमारोहेत् । यथा खलु वसुन्धरावयवैः सालोकमण्डलाभा(वैः)[सैः] बहुतरैरन्तरितं वस्तु विप्रकृष्टं परमितिव्यवहारगोचरतामाचरति । तैरेव त्वल्पैरन्तरितं सन्निकृष्टमपरमिति चाभिधीयते । तथा बहुतरैः क्षणैरहोभिर्वा यदन्तरितं तद्विप्रकृष्टं परमिति च कालतो व्यवहरणीयम् । तैरेव स्वल्पैर्व्यवहितं सन्निकृष्टमपरमिति चाभिलप्यते । बह्वल्पव्यवस्था पुनरियं गुरुत्वादिवद्भेदापेक्षैवेति । कथं ? कालैकत्वेऽघटनात् औपाधिककालभेद इति च प्राक्समर्थितं पराकृतम् ।

तेनौपाधिकभेदेन नान्यथासिद्धि[1]सम्भवः ।
क्रियैव काल इत्येतदपि वक्तुं न शोभते ॥ १ ॥

क्रियाविशेषणत्वेन भासनाच्चक्षुरादिना ।
यथा विस्फारिताक्षस्य परिमाणैकतामतिः ॥ २ ॥

विभिन्नपरिमाणार्थप्रख्या चार्थेषु जायते ।
तथा विस्फारिताक्षाणामेककाला इमाः क्रियाः ॥ ३ ॥

भिन्नकाला इमाश्चेति मनीषा जायते स्फुटा ।
लैङ्गिकत्वे तु कालादेः सिद्धिरेव सुदुर्लभा ॥ ४ ॥

इत्युक्तमत एष्टव्यं प्रत्यक्षत्वं मनीषिभिः ।
यतो नाल्पतरः कालः क्षण इत्येष गीयते ॥ ५ ॥

यथा यतो नाणुतरः परमाणुः स उच्यते ।

तत्र यथा महत्त्वाणुत्वादयः परिमाणविशेषाः प्रकर्षनिकर्षभाजः परस्परविलक्षणास्तथा कालविशेषा अपि क्षणलवादयः इति किं नेष्यते विशेषाभावात् ।

---

1. सिद्ध—मा ।

॥ कालस्य क्रियाधर्मतया द्रव्यत्वनिरासः ॥

क्रियाधर्मतया चास्य द्रव्यत्वमपि वारितम् ।
आश्रितत्वप्रसि[द्धौ](द्यौ) हि परिमाणेन तुल्यता ॥ १ ॥

अन्यथाऽनाश्रितो वा स्यादन्याश्रितमथापि वा ।
परिमाणाद्यपि भवेदर्थान्तरविशेषणम् ॥ २ ॥

द्रव्यत्वं गुणवत्त्वेन [भवेदि]त्यपभाषितम् ।
न हि सङ्ख्यादिमात्रेण गुणवत्त्वं प्रकल्पते ॥ ३ ॥

तावन्मात्रेण जात्यादेरपि द्रव्यत्वसक्तितः[1] ।
द्रव्यत्वादि दिशोऽप्युक्तन्यायेनैव निराकृतम् ॥ ४ ॥

दिशो हि मूर्तधर्मत्वमध्यक्षेण हि भासते ।
यथा हि दीर्घह्रस्वत्वप्रमा[णे][2] मूर्तिवर्तिता ॥ ५ ॥

तथा पूर्वापरत्वादेर्भाति तद्धर्मता स्फुटा ।
दिशां तु शतधा भेदो वास्तवोऽप्यस्तु का क्षतिः ? ॥ ६ ॥

वास्तवत्वे यथा काश्याः प्रयागः पश्चिमो भवेत् ।
कान्यकुब्जादपि तथा भवेदित्यप्यसाम्प्रतम् ॥ ७ ॥

सन्निकर्षो विप्रकर्ष इत्यादिर्वास्तवो यथा ।
नियतावधिको दृष्टस्तथात्रापि भविष्यति ॥ ८ ॥

सन्निकर्षप्रतिष्ठानात्प्रयागो भासते यथा ।
न तथाऽसन्निकृष्टस्य कान्यकुब्जाद्विभासते ॥ ९ ॥

तस्मान्निमित्तनियमादभिव्यक्तिव्यवस्थितिः ।
वास्तवत्वेऽपि धर्माणां प्राच्यादीनामिति स्थितम् ॥ १० ॥

॥ तस्मात् ईश्वरलक्षणातिव्याप्तिविरहात् न दिक्कालयोरुपास्तिप्रसङ्गः ॥

तस्माद्दिक्कालयोस्सर्वहेतुत्वे मानहानितः ।
उपास्यताप्रसङ्गो न कथंचिदवकाशवान् ॥ १ ॥

---

1. प्रसक्तितः

2. परिमाणे इत्यर्थः

**तस्माच्छिवदर्शनादेव मोक्ष इति ।**

चेतनस्योपा[सनायां][1] प्रयत्नः स्यात्फलप्रदः ।
अचेतनस्तु कालादिः फलदायी कथं भवेत् ॥ २ ॥

प्रकृतमुपसंहरति—**तस्माच्छिवदर्शनादेव मोक्ष** इति । परपरिकल्पितकालादिव्यवच्छेदार्थं अवधारणम् । न च सूत्रोदितद्वादशविधप्र[मेय]व्यवच्छेदार्थम् । तदपि हि सकलं हेयादिभावेन चतुर्धा परिभाव्यमानं मिथ्याज्ञानरागादिविनिवर्तनद्वारेण परम्परया पुरुषमपवर्गमार्गं अवतारयति ।

॥ पदार्थज्ञानेन मोक्षप्राप्तिप्रकारः ॥

तदेवाभिप्रेत्याभिहितं—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां उत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति (न्या. सू. १-१-२)। (स्वयमर्थ) श्रवणमननाभ्यां [2]नितरामवधारितेऽप्यात्मतत्त्वे देहादावनात्मादिरूपे विपर्ययेणात्मादिबुद्धिरनादिनिरूढ़निबिडवासनानुरोधिनी समुपजायमाना साक्षात्कारवती न शक्या तत्त्वसाक्षात्कारमन्तरेण समुच्छेत्तुं द्विचन्द्रादिवेदनवदिति तत्त्वसाक्षात्[काराय] आदरनैरन्तर्यदीर्घकालसेवनीयं ध्यानमाश्रीयते । ततस्तत्त्वसाक्षात्कारपरिपाके मिथ्याज्ञानमपैति । तदपाये तन्मूला दोषा रागा अप्यपयान्ति । कफापाय इव तन्मूला ज्वरादयः तथा तदपाये प्रवृत्तिर्धर्माधर्मरूपा अपैति । कारणशब्दस्योपचारेण कार्ये प्रवृत्तेः । तदपाये [जन्म, जा]यत इति व्युत्पत्त्या देहादिः अपैति । तदपाये दुःखमपैति ततस्तदत्यन्तापायलक्षणोऽपवर्गः । उत्तरोत्तरापाय इति सूत्रपाठापेक्षयोत्तरत्वं वेदितव्यम् । तदनन्तरापाय इत्यत्राव्यवधानेन पूर्वपूर्वपाठापेक्षया तदनन्तरत्वम् ।

॥ अनादिभवसम्पादितधर्माधर्मक्षयोपपत्तिः ॥

भवत्वेवमपि अनागतधर्माधर्म[योः क्षयः] तत्त्ववेदिनाम् । कथं पुनरनादिभवपरम्परापरिप्रापितानामनियतविपाकानामसङ्ख्यातानां अदत्तफलानामसति परिक्षये मोक्षः सम्भवी । नैषाप्यनुपपत्तिः । परमात्मयाथात्म्यसाक्षात्कारपरिपाकादेव वैरा-

1. पास्यमानं—मा 2. निराशमव—मा

**कः पुनरयं मोक्ष इति। एके तावद्वर्णयन्ति। समस्तविशेषगुणोच्छेदे संहारावस्थायामाकाशवदात्मनोऽत्यन्तावस्थानं मोक्ष इति। कस्मात्? सुखदुःखयोरविनाभावित्वात् विवेकहानानुपपत्तेः। नच सुखार्थैव प्रेक्षावतां प्रवृत्तिः। कण्टकादिदुःखपरिहारार्थत्वेनापि प्रवृत्तेरुपलम्भादिति।**

---

ग्न्यादिसहकारिणस्सर्वस्यापवर्गमार्गप्रतिरोधिनः कर्मणोऽ(पि च यस्य)[प्ययस्य] विविधागमप्रसिद्धत्वात्। तथा चामनन्ति—

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥ (मु. २-२-८)

तथान्यत्रापि विद्यां समधिकृत्य श्रूयते "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति (छा. ५-२४-३)। सम्भवति चैवं तत्त्वज्ञानाग्निना कर्मक्षयपक्षे। नानाकायनिर्माणेन कर्मफलान्युपभुञ्जाना एव योगिनः क्षपयन्ति मोक्षप्रतिकूलानि कर्माणीति नाभिनिवेष्टव्यमित्याचार्यमतम्। नाभुक्तं क्षीयते कर्मेत्यादिशास्त्रमकृतप्रायश्चित्ता[तत्त्वज्ञानिविषयम्।] अपरथा शास्त्रान्तरव्याकोपापत्तेरिति विशदमशेषम्।

॥ मोक्षविषये प्रश्नः ॥

अथ वादिविप्रतिपत्तेः सन्दिहानः कोऽपि मोक्षस्वरूपनिरूपणार्थं पृच्छति—**कः पुनरयं मोक्ष** इति।

॥ समस्तविशेषगुणोच्छेदो मोक्ष इति पक्षनिरूपणम् ॥

सिद्धान्ती मतान्तरं तावदनुभाषते दूषयितुम्—**एके तावद्वर्णयन्ति समस्तविशेषगुणोच्छेदे संहारावस्थायामाकाशवदात्मनोऽत्यन्तावस्थानं मोक्ष** इति। कुतः पुनरागमानुसारेण निःश्रेयसे सुखमपि नाश्रीयत इत्यभिसन्धिमानाह—**कस्मादिति। सुखदुःखयोरविनाभावित्वात् विवेकहानानुपपत्तेः।** दुःखं केवलं परित्यज्य सुखस्यैव भोक्तुमशक्यत्वादित्यर्थः। शास्त्रं तु मोक्षे सुखप्रतिपादकं दुःखाभावपरतया योजनीयमुप[वर्णित]वान्। ननु सर्वथा सुखाभावे कथमत्र मुमुक्षवः प्रवर्तेरन्नित्यत आह—**न च सुखार्थैव प्रेक्षावतां प्रवृत्तिः। कण्टकादिदुःखपरिहारार्थत्वेनापि प्रवृत्तेरुपलम्भादिति।** न खलु विषयिणो मोक्षे प्रवृत्तिरुपदिश्यते

**मोहाद्यवस्थात्वान्मूर्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहु-**

**दुःखे सति सुखस्यासम्भवात्कण्टकादिपरिहारोऽपि सुखोपभोगार्थ एवेत्यसमो दृष्टान्तः ।**

---

येन सुखाभावान्न भवेत् तत्र प्रवृत्तिः । किं तर्हि? दुःखत्रया(न)भिहतास्ते तदुच्छेदमात्रमर्थयमानाः प्रवर्तिष्यन्त इत्यर्थः ।

॥ उक्तपक्षदूषणपूर्वकं मोक्षे सुखसद्भाव इति स्वमतनिरूपणम् ॥

तदेतद् दूषयति—**मोहाद्यवस्थात्वात् मूर्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहुरन्य** इति । तथा चाभिहितम्—

दुःखहानाय नो युक्तं सुखदुःखात्मकं परम् ।
न हि कश्चित्पदार्थज्ञो मोहसिद्ध्यै प्रवर्तते ॥ १ ॥

वरं बृन्दावने रम्ये सृगालत्वं वृणोम्यहम् ।
न तु निर्विषयं मोक्षं गौतमो गन्तुमिच्छति ॥ २ ॥ इति ।

यत्पुनः प्रागुदितं कण्टकादिदुःखपरिहारार्थत्वेनापि प्रवृत्तिर्दृष्टेति तद्विघटयति—(सुख)**दुःखे सति** निरवद्यं **सुखोपभोगस्यासम्भवात्कण्टकादिदुःखपरिहारोऽपि सुखोपभोगार्थ एवेत्यसमो दृष्टान्त** इति । अयमभिसन्धिः सर्वे [प्राणिनः] दुःखमपहाय निरवद्यसुखं भोक्तुमभिलषन्ति । ततस्तथाविधोत्तरोत्तरसुखसन्दे[न्दो]हे समीहया परिहरन्ति दुःखमात्रमिति युक्तम् ।

॥ नान्तरीयकतया सुखपरिहारपक्षनिराकरणम् ॥

यत्तु पुनः दुःखपरिहारनान्तरीयकतया सुखपरिहारोऽपि प्रसजेत् इति । तत्र स्वोच्छेदकल्पे भवदभिमते मोक्षे के नाम दुःखपरिहारसम्भवेऽपि प्रवर्तेरन्? समव्ययफलत्वात् । यथा खलु दुःखोच्छेदः पुरुषार्थो मोक्षस्तथा निखिलसुखविरहादपुरुषार्थोऽपीति समव्ययफलत्वमशक्यपरिहारम् । तथा च कथं तत्र प्रवर्तेरन् । तथाहुः—

[1]अस्वन्तानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥ इति ।

तेनैतदपास्तं यदाहुः—विषविषङ्गादिव मधु, मधुरमपि स्वर्गादिसुखमपि सांसारिकविविधदुःखसंभेदादपजहति विवेकिन इति । विषविषक्तस्य हि मधुनः समास्वादने सुखमतिमन्दम् । अनतिशयस्त्वनर्थः समनन्तरभाविमरणेन समीहितसकलसुखविच्छेदलक्षण इति बहुपुरुषार्थप्रत्यनीकमल्पसुखं तत्रापि अपजहति, ततो नास्ति तत्र समव्ययफलत्वम् । यथोक्तलक्षणे पुनर्मोक्षे स्वोच्छेदसदृक्षे सुखदुःखयोरविशेषेण निवृत्तेरप्रवृत्तिरेव प्रेक्षावतामिति विशेषः ।

॥ अतिदुःखेन स्वोच्छेदाय प्रवृत्तिदर्शनात् दुःखनिवृत्तेः पुरुषार्थत्वशङ्का तत्परिहारश्च ॥

स्यादेतत् दृश्यन्त एव तीव्रतरदुःखोच्छेदात्स्वोच्छेदमपि केचित्कामयमानाः । सत्यं तीव्रपापरोगग्रस्ता दुःखमयीमिव मूर्तिमुद्वहन्तः सुखलवमप्यलभमानाः स्वोच्छेदमपि कामयन्ते । न च तत्र समव्ययफलत्वं, दुःखस्यैव प्रचुरतरस्य निवर्तनीयत्वात् । प्रकृते पुनः फलसमानो व्यय इति ।

॥ मोक्षसुखस्य स्वर्गादपि उत्कृष्टता ॥

एतदप्यापातात् अभ्युपगम्याभिहितम् । वस्तुतस्तु विपरीतमेव, संसारिणः खलु स्वर्गादिसुखमल्पदुःखानुविद्धमपि बहुतरं लभमानाः कथमिव मूर्च्छासदृक्षे मोक्षे प्रयतेरन् । नच स्वर्गादावपि दुःखमेव बहुलं, "यन्न दुःखेन संभिन्नम्" इत्याद्यागमानां अत्यन्तमेवानर्थकत्वापत्तेः । अस्मन्मते पुनर्विगलितनिखिलदुःखानुषङ्गविशिष्टतरानन्दरूपमोक्षसमीहया स्वल्पदुःखानुविद्धमपि स्वर्गादिकं परिहरन्ति प्रेक्षावन्त इति युक्तम् ।

॥ सर्वदुःखोच्छित्तिमोक्षवादेऽपि जीवन्मुक्तौ विशेषकथनम् ॥

यदपि मतं जीवन्निर्वाणदशायां[2] योगजादृष्टसामर्थ्येन ऐहिकामुष्मिकसकललोकसकलसुखोद्दिष्टयावदिच्छोपभोग्यसुखप्रवाहोत्पत्तेः सुखोपभोगसमीहाविगमे योगजादृष्टनाशात्परमनिर्वाणस्योत्पत्तौ कुतः समव्ययफलत्वम्? कुतो वा फलादधिको व्यय इति ।

---

1. प्राणान्तानीत्यर्थः ।  2. जीवन्मुक्तिदशायां

**कुतो मुक्तस्य सुखोपभोगसिद्धिरिति चेत्, आगमात्। उक्तं हि—**

॥ तत्र विषयसुखस्य सदोषत्वोपपादनम् ॥

तदपि न सारम्। न खलु समीहितसुख[बृ]न्दोपभोगात् समीहाविलयः सम्भवी। यतस्तदुक्तम्—

न जातु कामः कामानां उपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १ ॥ इति
(म. भा. १-८५-१२)

"भोगाभ्यासमनु विवर्धन्ते कामाः कौशलानि चेन्द्रियाणाम् (यो. भा. १-१५) इति। तस्मादनुभूतपरसुखाभिलाषः प्रवर्तत एव तावत् यावत्तावत्ततोऽपि परतरमानन्दं न पश्यति। तद्दर्शने पुनस्तदभिलाषादितरस्मादुपनतादपि समीहाविनिवृत्तिरिति युक्तम्। तथा च कथं परपरिकल्पिते मोक्षे पुरुषार्थतेति।

॥ मतान्तरमोक्षाणामनुपादेयत्वकथनम् ॥

येऽपि नैरात्म्यवादिनो विज्ञानसन्ततेरत्यन्तविनिवृत्तिं विशुद्धचित्तसन्ततिं वा मुक्तिमामनन्ति। ये वा **कपिलमुनि**मतमनुवर्तमानाः प्रकृतिपुरुषविवेकवेदने सति निरानन्दचिदात्मावस्थानं मोक्षमाचक्षते। तदभिमतेष्वपि मोक्षेषु यथोक्तनीत्यैव प्रवृत्त्यनुपपत्तिः वेदितव्या। यथा चामी पक्षा न सम्भवन्ति तथोपपादितं [तत्र] (न) तत्र प्रस्तावे। प्रलीननिखिलोपाधेर्जीवस्य सन्ततोर्ध्वगतिलक्षणोऽपि मोक्षः पुरुषस्य परममहत्वसमर्थनादेव पराकृतो वेदितव्यः। अक्षयशरीरादिलक्षणस्तु मोक्षः सावयवानामनित्यतानियमेन निरसनीया। तस्मान्निश्शेषदुःखोच्छेदविशिष्टा निरतिशयानन्दसंवेदनावस्था पुरुषस्य मोक्ष इति युक्तम्। दुःखाविनाभावस्तु वैषयिकस्य सुखस्य भविष्यति; नतु [मोक्षसुखस्य।] 'अभयं वै जनक प्राप्तोऽसि' (बृ. ४-२-४) इत्यादिश्रवणात्।

स्यादेतदेवं यदि मुक्तौ निरतिशयसंवेदने प्रमाणमस्ति, तदेव तु कुतः सिद्ध्यतीत्याशङ्कते--**कुतो मुक्तस्य सुखोपभोगसिद्धिरिति चे**दिति। परिहरति—**आगमात्**।

**सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् ।**
**तं वै मोक्षं विजानीयाद्दुष्प्रापमकृतात्मभिः ॥**
**इति । तथा, आनन्दं ब्रह्मणो विद्वान्न बिभेति । आनन्दं ब्रह्मणो रूपम् । तच्च मोक्षेऽभिव्यज्यते । विज्ञानमानन्दं ब्रह्मेति च ।**

---

**सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।**
**तं वै मोक्षं विजानीयाद्दुष्प्रापमकृतात्मभिः ॥** इति ।

**तथा—'आनन्दं ब्रह्मणो विद्वान्', 'आनन्दं ब्रह्मणो रूपम् । तच्च रूपं मोक्षेऽभिव्यज्यते', 'विज्ञानमानन्दं ब्रह्म' इति चेति ।** ये विज्ञानानन्दाभ्यामभेदमेवात्मनो मन्यन्ते ; [तेषां] विज्ञानानन्दयोरेकात्माभेदे परस्परमप्यभेदप्रसक्तौ विज्ञानानन्दपदयोरपर्यायताऽऽपद्येत । तथा च सहप्रयोगो व्यर्थः स्यात् । न चैकात्म्येऽपि व्यवच्छेद्यभेदादर्थवत्ता प्रकृष्टप्रकाशश्चन्द्र इत्यादिवदिति वाच्यम् । निमित्ताभेदे हस्तकरादिपदानामिव व्यवच्छेद्यभेदस्यैवानुपपत्तेः । दृष्टान्ते तु प्रकर्षादि प्रतिनिमित्तं भिन्नमेवेति वैषम्यम् ।

यत्तु भेदो भिन्न इत्यादावपर्यायशब्दयोरप्यैकात्म्यं दृष्टमित्याहुः । तदप्यसत् । भेदस्यापि [भेदे] वस्तु [स]त एव समर्थितत्वात् ।..........दूषणत्वेनोपपादितत्वात् सत्तास(त्त)दित्यादावपि काल्पनिकस्य प्रवृत्तिनिमित्तस्याभ्युपगमात् । प्रकृते तु प्रमाणान्तरेण(।) भेदसिद्धौ मुख्यस्यैव प्रवृत्तिनिमित्तभेदस्योपपत्तेः । अपरथा नीलमुत्पलमित्यादावपि निमित्तभेदविलयप्रसक्तेः । ग[वाश्ववत्] वास्तवस्यैव समर्थितत्वात् ।

॥ वेदान्त्यभिमतमोक्षनिरूपणम् ॥

येऽप्याहुः—विज्ञानत्वादिसामान्यं प्रवृत्तिनिमित्तमुपादाय विज्ञानानन्दसामान्यव्यञ्जिकामेकामेव व्यक्तिं[1] विज्ञानपदमानन्दपदसामानाधिकरण्येन प्रयुक्तं ब्रह्म (यो) लक्षयति । (स) द्रव्यं कुड्यमित्यादिपदवत् तत्र जहल्लक्षणापि सम्भविनी । प्रकृते पुनः लक्ष्यस्य ब्रह्मणो नानात्मकत्वानुपपत्तेः प्रवृत्तिनिमित्तपरित्यागेनाजहल्लक्षणैवेत्येतावानेव विशेष इति च ।

---

1, एकामेव व्यक्तिं ब्रह्मेति योजना ।

॥ तत्खण्डनम् ॥

एतेषामपि पक्षः प्रेक्षावतां चित्तमनुरञ्जयितुं न क्षमते । "तस्य भासा सर्वमिदं विभाति", "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति, "आनन्दं ब्रह्मणो विद्वान्", "आनन्दं ब्रह्मणो रूपम्" इत्यादिवाक्येषु विज्ञानानन्दव्यक्त्यो-र्ब्रह्मणो[ऽति]रेकश्रवणात् । शिलापुत्रकस्य शरीरमितिवद्भेदनिर्देश इति चेन्न । अभेदे बलवत्प्रमाणाभावात् । प्रत्यक्षविरोधस्यैवायुक्तत्वात् । तथा ह्यात्मैव ब्रह्मेति भवन्तो वदन्ति । प्रमाणं चामनन्ति 'तत्त्वमसि', 'अनेन जीवेनात्मना' (छा. ६-३ ; ६-८) इत्यादि । तथा सत्याकीटपतङ्गेभ्य आदेवर्षिभ्यः प्राणभृन्मात्रस्याहंकारास्पदमात्मतत्त्वमवभासमानं विज्ञानानन्दाभ्यां विभिन्नमेव तदाश्रय-त्वेनावभासते, न ज्ञानमेवाहं आनन्द एवाहमिति वा कोऽपि प्रत्येति । किं तर्हि ? विज्ञानी सुखी चाहमिति ।

॥ संसारदशायामानन्दो न प्रकाशत इति पक्षखण्डनम् ॥

यत्पुनः परमानन्दरूपस्यात्मनः तद्रूपमविद्याच्छन्नत्वात् न भासत इत्याहुः । तदसत् । आनन्दाभिन्नस्यात्मनोऽप्यप्रतिभासप्रसक्तेः । एकस्यैव प्रतिभासाप्रति-भासलक्षणविरुद्धधर्मसंसर्गे संप्रतिपन्नदृष्टान्तासम्भवात् । यद्यपि मणिकृपाणदर्पणादौ मुखस्वरूपे भात्यपि तच्छुद्धिः न भाति । भेदिनि भात्यपि भेदो न भासत इत्युदाहरन्ति । तत्सर्वमसङ्गतमेव । सर्वत्र धर्मधर्मिणोर्भेदस्य साधितत्वात् । भेद-भेदिनोर्भेदेऽप्यनवस्थे[ति च दूषण[मपास्तम्] तस्मादात्मनि भासमानेऽपि अभासमान आनन्दस्वभावो न भवत्येव ।

॥ आत्मनः आनन्दरूपत्वसाधकानुमाननिरासः ॥

यदप्याहुः -- परमानन्दस्वभाव आत्मा परप्रेमास्पदत्वात् व्यतिरेकमुखेन घटादिः दृष्टान्त इति । तदपि पावकानुष्णत्वसाधनवत् प्रत्यक्षापहृतविषयत्वाद-युक्तम् । तस्माद्विज्ञानमानन्दं ब्रह्मे[ति गौण]सामानाधिकरण्यं न तु तादात्म्येनेति स्थितम् ।

किं चात्मनो न भिन्नश्चेदानन्दः पुरुषार्थताम् ।
न स्पृशेन्मुक्त्यवस्थायां न हि प्रेम तथाविधे ॥ १ ॥

**मुख्यार्थे बाधकाभावान्नोपचारप्रकल्पना।** किंच, भाराक्रान्तस्य तदपाये वाय्वादिसम्पर्कवशात्सुखोत्पादे सत्येव सुखशब्दप्रयोगः। न दुःखभावे।

---

सुखं मम स्यादित्येवं प्रार्थना ह्यनुभूयते।
प्राणिमात्रे सुखमहं स्यामित्येवं न जात्वपि॥ २॥

किं चापवर्गे ज्ञेयश्चेदानन्दो द्वैतमापतेत्।
ज्ञानं विना(विना)नहि ज्ञेयं ज्ञेयतां गन्तुमर्हति॥ ३॥

स्वयंप्रकाशपक्षस्तु बहुधा विनिवारितः।
न ज्ञायते चेदानन्दो न स्पृशेत्पुरुषार्थताम्॥ ४॥

तस्मादानन्दविज्ञाने परस्परविलक्षणे।
आत्माश्रये च स्वीकार्ये पुरुषार्थत्वलोभ(प)तः॥ ५॥

॥ उक्तानन्दवाक्यानां दुःखाभावविषयत्वशङ्कानिरासः॥

ये तु मन्यन्ते—सर्वोऽप्ययमनवसरदुःस्थो विचारः सर्वस्यापि यथोक्तस्य वाक्यजातस्य दुःखाभावविषयत्वादिति। तान् प्रत्याह—

**मुख्यार्थे बाधकाभावान्नोपचारप्रकल्पना।** इति। अयमभिसन्धिः— न दुःखाभाव एव सुखपदस्य मुख्योऽर्थः। कदाचन विगलितविविधदुःखस्याप्यकस्मादुपनतविपञ्चीस्वरश्रवणमलयानिलोपनीतमल्लिकाकुसुमसौरभोपभोगादिनिदानस्य सुखभेदस्य भावात्मन एव स्वानुभवसिद्धत्वात्।

नच तत्रापि कामस्य दुःखात्मत्वात् तन्निवृत्तिरूपं सुखमिति सांप्रतम्। तत्तदनाशंसितोपनीतविषयोपभोगेषु तदसम्भवात्। चन्दनवनितादिसाधनतारतम्याच्च तरतमभाजः सुखभेदस्यानुभवो न भावरूपतामन्तरेण सुखस्य सम्भविनी। नच तत्तद्विनिवर्तनीयदुःखतारतम्यानुसारेण तदभावरूपेऽपि सुखे समारोपितः तरतमभावो भासत इति साम्प्रतम्। वैपरीत्यस्यैव कदाचन दर्शनात्।

**सुखसंवेदनयोर्नित्यत्वात् मुक्तिसंसारावस्थयोरविशेषप्रसङ्ग इति चेन्न। चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोः विषयविषयिभाव-सम्बन्धप्रत्यनीकस्य [1]दुःखादेः संसारावस्थायां सद्भावात् तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः सम्बन्धः इत्यतो नावि-शेषः।**

---

॥ सुखस्य दुःखाभावातिरेकनिरूपणम् ॥

तथा हि—बहुतरप्रयासपरम्परापरिप्रापितमर्थमवाप्य पुरुषस्तथा न प्रतीतिं [प्रीतिं] बध्नाति, यथा तज्जातीयमेव विना प्रयासादुपनतमर्थमवाप्येति; भवति तत्राधिकतरप्रमोदो रमणीयोऽप्ययमप्रयासलब्ध इति। तस्माद्भावरूपमेव सुखं, स एव च सुखपदस्य मुख्यो विषयः प्रयोगप्रत्ययाभ्यामवसीयते। कथमन्यथा सुखाभावः दुःखपदास्पदमित्यपि ब्रुवाणः पराकरणीयो भवेत्। तदेवं स्थिते सत्यानन्दं ब्रह्मसुखमित्यादिवचनगतानामानन्दादिपदानां कथञ्चन दुःखाभावपरता नासति मुख्यार्थबाधके शक्या समाश्रयितुम्। न चेह बाधकं किमपि पश्याम इति।

॥ आनन्दनित्यत्वे मोक्षसंसाराविशेषप्रसङ्गनिराकरणम् ॥

शङ्कते—**सुखसंवेदनयोः नित्यत्वात् मुक्तिसंसारावस्थयोरविशेष-प्रसङ्ग इति चे**दिति। तस्यार्थः—निःश्रेयसोपयोगिसुखं तावत् नित्यमाश्रय-णीयम्। तथा तत्साक्षात्कारोऽपि। अन्यथा(सत्त्वा)ऽऽनन्दसाक्षात्कारस्यापि मोक्षेऽपि सम्प्रक्षयत्वे स्वर्गवदवद्यतापत्तेः। "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते।" (बृ. ४-३) इत्यादिवाक्यानां वैयर्थ्यप्रसङ्गाच्च। तथा च नित्यस्य वस्तुनोऽनादित्वादनादिना संवेदनेनानादि(ना)सुखं सर्वदा संवेद्येत। ततश्च मुक्तसंसारावस्थयोः परमानन्दा-नुभवाननुभवकृतो विशेषो न भवेदिति। परिहरति—**चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोः विषयविषयिसम्बन्धप्रत्यनीकस्य दुःखादेः संसारावस्थायां सद्भावात्तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः** विषयविषयिसम्बन्ध **इत्यतो नाविशेष इति**। दुःखादेरित्यादिपदेनाधर्मप्रभृतेरवरोधः। कुड्याद्युदा-

---

1. R. ms. adds धर्मारब्ध

**तस्य सम्बन्धस्य कृतकत्वेन कदाचिन्नाशप्रसङ्ग इति चेत् न, प्रध्वंसेनानैकान्तात् । वस्तुत्वे सतीति चेन्न । द्रव्यादिष्वनन्तर्भावेन तदसिद्धत्वात् । अन्तर्भावे वा समवायादिभिः सह तत्संवेदनस्य सम्बन्धो न स्यात् ।**

---

हरणं च वेदनप्रतिबन्धत्वादेव दुःखादेर्न व्यधायकत्वाभिप्रायेण असमानदेशयोस्तदसम्भवात् । दुःखादेश्चामूर्तत्वात् । किं तर्हि "तच्च मोक्षेऽभिव्यज्यत" इति वचनात् दुःखादिसकलसांसारिकधर्मविनिवृत्तौ सुखसंवेदनयोः विषयविषयिभावलक्षणाभिव्यक्तिरापद्यत इति ज्ञायते ।

तेनोपचारादेव दुःखादिर्व्यवधायक इति मन्तव्यम् । व्यवधानाभावो भवत्यभिव्यक्तिहेतुः दुःखाद्यभावोऽपि परमानन्दाभिव्यक्तिहेतुरित्यभिव्यक्तिहेत्वभावप्रतियोगित्वं सादृश्यं उ[पचार]निमित्तमिति यावत् । ततश्च नित्यस्यानन्दस्य मोक्षेऽभिव्यक्तिः, न संसारावस्थायामिति मुक्तिसंसारावस्थयोर्नाविशेषप्रसङ्ग इति सिद्धम् ।

॥ विषयविषयिसम्बन्धस्य कृतकत्वेन विनाशापादनं तत्परिहारश्च ॥

शङ्कते—**तस्य सम्बन्धस्य कृतकत्वेन कदाचिन्नाशप्रसङ्ग इति चेदिति** । परिहरति—**न, प्रध्वंसेनानैकान्तादिति** । पुनः शङ्कते—**वस्तुत्वे सतीति चेदिति** । निराकरोति—**द्रव्यादिष्वनन्तर्भावेन तदसिद्धत्वादिति** । तस्य वस्तुत्वस्यासिद्धत्वादित्यर्थः । एतच्च द्रव्याद्यन्तर्गतमेव वस्त्विति समयाभ्युपगमेन वेदितव्यम् ।

॥ प्रमाणगोचरत्वमेव वस्तुत्वमिति पक्षेऽपि समाधानम् ॥

यदा तु प्रमाणगोचरत्वमेव वस्तुत्वं विवक्षितं तदा [ध्वंसे]नानैकान्तिकत्वं प्रागुदितं तदवस्थमेव । द्रव्याद्यन्तर्भावे विषयविषयिभावस्य को दोष इत्यत आह—**अन्तर्भावे वा समवायादिभिः सह तत्संवेदनस्य सम्बन्धो न स्यादिति ।** आदिपदेन सामान्यान्त्यविशेषाभावानां अवरोधः । इदमुक्तं भवति । विषयविषयिभावसम्बन्धो हि सम्बन्धिद्वयसमाश्रितो वचनीयः । ततश्च समवाया[दौ अ]नन्तसंवेदने

**अदृष्टादिवशात् कर्मकारकं विषयः। तज्जनितज्ञानं विषयीति चेन्न। ईश्वरज्ञानस्य नित्यस्यार्थैः सह सम्बन्धाभावप्रसङ्गादिति ।**

---

चावतिष्ठमानः कथमसौ द्रव्याद्यन्यतमः स्यात् द्रव्यादिषट्कस्यापि समवाया[दाव]-भावसम्भवादित्यर्थः[1] ।

॥ विषयविषयिभावे परमतम् ॥

परमतमाशङ्कते—**अदृष्टवशात् कर्मकारकं विषयः तज्जनितज्ञानं विषयीति चेदिति ।** न हि विषयविषयिभावः उभयदत्तपार्श्व(द)कः सम्बन्धः सम्भवति। किं तर्हि? कर्मकारकस्वरूपं विषयपदवेदनीयं, तज्जनितं ज्ञानं च विषयिपदाभिलप्यम् । तयोरेव च स्वरूपं परस्पराधीननिरूपणं विषयविषयिभाव इत्युच्यते वाच्यवाचकभाववत् । तत्र षट्पदार्थान्तर्गतिरपि सम्भवेदित्यर्थः ।

॥ तत्खण्डनम् ॥

परिहरति —**ईश्वरज्ञानस्य नित्यस्यार्थैः सह सम्बन्धाभावप्रसङ्गादिति।** न हि तस्यार्थः कर्मकारकम्, नापि तज्जन्यम्, ततः तत्र विषयविषयिभावो न सम्भवेदित्यर्थः। कथं पुनर्विषयविषयिभावाख्यसम्बन्धस्य स्वीकारे भूतानागताभ्यां तत्संवेदनस्य तत्सम्भवः स्यात् । [नहि तत्र कारक]सम्बन्धः सम्भवतीति चेन्न; वर्तमानविषयेषु वेदनेषु प्रसिद्धस्य विषयविषयिभावस्य तत्र समारोपमात्रेणातीतादौ विषयविषयिभावव्यवहारो भवति। यथा वर्तमानेषु वस्तुषु सिद्धायाः शत[सङ्ख्यायाः] (क्वचिन्मुख्याभावे तु समारोपोऽपीत्यादौ) समारोपेण व्यवहारः ।

॥ स्वमतरीत्या विषयविषयिभावसम्बन्धस्य अतिरिक्तत्वसमर्थनम् ॥

किं तर्हि समारोपनिमित्तमि(ति)हेति चेत्; लिङ्गादिपरम्परया प्रत्ययस्य प्रत्येतव्येन प्रतिबन्ध एव। प्रतिबन्धत्वं हि वर्तमानावर्तमानाभ्यां समानम्। संवेदनाद्वारमेव तु

---

1. द्रव्यादिषट्कस्य समवायादाववृत्तेः।

**तस्मात्कृतकत्वेऽपि नित्यसुखसंवेदनसम्बन्धस्य विनाशकारणाभावात् नित्यत्वं स्थितम् ।**

---

भिद्यते । [तच्च] द्वारं क्वचिल्लिङ्गादीति । तथा च प्रतिबन्धमात्रे सादृश्यात्समारोपः प्रवृत्तः । क्वचिन्मुख्याभावे तु समारोपोऽपि न भवेत् । तेन वर्तमानविषयेषु विषयविषयिभावो नाम मुख्य एव सम्बन्धः स्वीकरणीयः । तत्रापि वेदनवेदनीययोः प्रतिनियतस्वभाव एव तथाविधव्यवहारगोचरोऽस्तु, किमुभयनिष्ठेन संबन्धेनेति चेन्न । एवं सति त[त्र](च) मोक्षेऽभिव्यञ्जकवैयर्थ्यप्रसङ्गात् । नह्यानन्दसंवेदनयोः प्रागुक्तपरिपाट्या नित्यत्वव्यवस्थितौ विषयविषयिभावोत्पत्तिमन्तरेण मुक्तावेव परमानन्द उच्यत इति वाचोयुक्तेः सभ्योऽर्थः स्यंभवति । तस्माद्विषयविषयिभावो (न)[नाम] सम्बन्धः(स्य) षट्पदार्थातिरेकी स्वीकरणीयः । तथा च वस्तुत्वे सतीति हेतुर्विशेषणासिद्ध एवेति व्यवस्थिता । भवतु तर्हि भावत्वे सतीति विशेषणमिति चेत्; सामान्यादिसाधारणस्य भावत्वस्य सामान्यरूपतानुपपत्तेः । उपाधेश्चानुवृत्तस्यानिरूपणात् । विधिप्रत्ययविषयत्वमुपाधिरिति चेन्न; विधिभावपदयोः पर्यायत्वात्तयोः प्रवृत्तिनिमित्तस्यैकस्यानुपदर्शनात्, शब्दसाम्यादभेदिनश्चाहेतुत्वात् । अभावाति[रिक्तत्वं] भावत्वमिति चेन्न, संसारप्रध्वंसेनात्मसम्बन्धस्य अभावातिरिक्तत्वेऽपि नित्यत्वात्[1] । अन्यथाऽपुनरावृत्तिश्रुतिव्याकोपात् । अभावानां चाधारभेदैः सह सम्बन्धभेदस्य समर्थितत्वादिति ।

## ॥ उपसंहारः ॥

उपसंहरति—**तस्मात् कृतकत्वेऽपि नित्यसुखसंवेदनसम्बन्धस्य विनाशकारणाभावान्नित्यत्वमिति ।** नित्ये च ते सुखसंवेदने, तयोः सम्बन्धो विषयविषयिभावाख्यः, तस्य कृतकत्वेऽपि विनाशकारणाभावान्नित्यत्वम् । विनाश(न)-कारणाभावस्तु विषयविषयिभावस्य निमित्तकारण[मात्र]जन्यत्वात्प्रध्वंसवत् । न खलु वेदनवेदनीये एव तस्य समवायिकारणम्, वेद[नस्य] सुखस्य च वेदनीयस्य समवायिकारणत्वेन द्रव्यत्वापत्तेः । समवायिकारणासम्भवादेव च तत्प्रत्यासन्नमसमवायिकारणं न सम्भवति । ततो निमित्तकारणमात्राधीनजन्मत्वात् ध्वंसवत्

---

1. तथा च भावत्वे सति उत्पत्तिमत्वस्य तत्र व्यभिचार इति भावः ।

अविनाशो युक्तः । तथा च विनाशिनोरपि वेदनवेदनीययोः विषयविषयिभावस्याविनाशो युक्तः । किं पुनरविनाशिनोः प्रकृतयोरानन्दसंवेदनयोः ।

॥ सम्बन्धिविनाशेऽपि सम्बन्धाविनाशोपपत्तिः ॥

कथं पुनः सम्बन्धिविनाशेऽपि सम्बन्धो न विनश्येत् संयोगवदिति चेन्न; समवायसमानयोगक्षेमत्वात् । विषयविषयिभावविनाशे पुनरत्र मुक्तेरपुरुषार्थत्वप्रसङ्गो वेदनीयः । सुखसंवेदनयोर्विषयविषयिभावविनाशे संसारावस्थायामिव मोक्षेऽपि सुखानभिव्यक्तौ मोक्षस्यापि स्वर्गसदृक्षतापत्तेः । न च स्वर्गादविशेषे मोक्षस्य स्वर्गा[दिकं] केवलसुखमपहाय बहुतरप्रयाससाध्ये मोक्षे समीहा सम्भविनी । मोक्षे सुखाभिव्यक्तिपरिक्षये हि न पुनः सुखान्तरानुभवः संभवेत् अपुनरावृत्तिश्रवणात् । स्वर्गादवभ्रष्टस्य पुनः पुण्येन कर्मणा स्वर्गप्राप्तिस्सम्भविनी । तथा [स्वर्गादिक]मपहाय मोक्षे प्रवर्तमानस्य यो ध्रुवाणि परित्यज्येति न्यायो दुष्परिहरः स्यात् । तस्मादविनाशिन्येवानन्दाभिव्यक्तिरभ्युपगन्तव्या मुक्ताविति सिद्धिः ।

॥ मोक्षेच्छया प्रवर्तमानस्य रागेण बन्धप्रसक्तिः तत्समाधानं च ॥

नन्वेवं सति परमानन्दसमीहया प्रवर्तमानो मुमुक्षुर्बध्येत[1] सुखरागस्य संसारहेतुत्वात् । न, दुःखाभावसमीहयापि प्रवृत्तौ दोषस्य तदवस्थत्वात् । अत एव दुःखद्वेषात्प्रवृत्तिरित्यपोढम् । रागादिवद्द्वेषादपि प्रवर्तमानस्य संसारप्रसङ्गात् । द्वेषोऽप्ययं मोक्ष एव प्रवर्तयन्ननुकूलः; कथं प्रतिकूलपक्षे निक्षिप्यत इति चेत् । परमानन्दरागादिप्रवृत्तौ समं समाधानम् । तत्त्व[ा]ज्ञानमूला संसार[प्रवृत्तिः] तत्त्वज्ञानमूला परमानन्दसमीहा न रागः । किं तु मिथ्याज्ञाननिबन्धन एव विषय(ा)संयो(गो)[गेच्छा]राग इत्यवधेहि । तदेतदभिप्रेत्याभिहितमन्यैरपि" न हीच्छामात्रं रागः, किं तु अविद्याक्षिप्तभूतगुणाभिनिवेशं रागमाचक्षते । तत्त्वदर्शनवैमल्यात्तु तत्त्वे[ऽभिनिवेशात्] [न । राग]पक्षे व्यवस्थाप्यते यथा संसारासारतातत्त्वदर्शननिष्पन्नो द्वेष[2]स्ततो द्वेषपक्षे न व्यवस्थाप्यत इति ।

---

1. भा. बुध्येत
2. निष्पन्नद्वेष इति युक्तम् ।

**तत्सिद्धमेतत् नित्यसंवेद्यमानेन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति ॥**

**॥ इति भासर्वज्ञविरचिते न्यायसारे तृतीयः परिच्छेदः ॥**[1]

---

॥ ग्रन्थोपसंहारः ॥

उपसंहरति—**तत्सिद्धमेतत् नित्यसंवेद्यमानेन सुखेन विशिष्टा आत्यन्तिकदुःखनिवृत्तिः पुरुषस्य मोक्ष इति।** कथं तर्हीयं श्रुतिः 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति? वैषयिकविषयाभिप्रायेणेति न दोषः।

एतेन 'न प्रेत्य संज्ञास्ति' इति श्रुतिर्व्याख्याता। तस्या अपि इन्द्रियाद्याधेयविज्ञानविषयत्वात्। अन्यथा 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति वचसा विरोधप्रसङ्गात्।

तस्मात्परमानन्दे नित्ये तद्वेदनेऽपि संसिद्धे।
संसृतिमोक्षावस्थाभेदः सिद्धो यथोक्तया नीत्या ॥ १ ॥

---

1. R. Ms.

नमस्समस्तजगतामुत्पत्तिस्थितिहेतवे।
तस्मै शिवकरग्रामनिवासाय पिनाकिने ॥
शिवकरगतधाम्ना रामनाम्ना विपश्चिज्जनमहितमहिम्ना भूसुरेन्द्रेण सोऽयम्।
विनयसुभगविचाररत्नरत्नाकरेण प्रगुणतरमलेखि न्यायसारप्रबन्धः ॥
उद्दामद्वादशार्कद्युतिनिचयनिरासक्रियोपक्रमोद्य
द्देहोद्योतप्रकाण्डप्रकटितविलसन्नूत्नदुग्धाम्बुराशिम्।
नागेन्द्राबद्धकक्ष्यं नळिनभवपुरोगामिभिर्निर्जरौघै-
र्नित्यं संसेव्यमानं शिवकरनिलयं धाम कामं नताः स्मः ॥
वेदान्तवचनविचारक्षीराम्भोधिप्रसूतविज्ञानम्।
अमृतं ददतं भजतां शिवकरवसतिं भजे भवं शान्तम् ॥

इहागमे मानतया निरूपिते
प्रमाणसङ्ख्यानियतिः परीक्षिता ।
प्रमेयजातं च निरूपितं ततो
विमुक्तिरानन्दमयी निरूपिता ॥ २ ॥

उदधेरिव गम्भीराच्छास्त्रात्सारं समादाय ।
व्याधाद**परादित्यो** विवृतिमिमां न्यायसारस्य ॥ ३ ॥

विदारयन्ती दुस्तर्कतिमिरं तिमिरोपमम् ।
न्यायमुक्तावली जीयादियमाचन्द्रतारकम् ॥ ४ ॥

यशसा व्याकोशेन व्याप्तं भुवनं यदीयेन ।
अधरयति सौधलक्ष्मीं जीयादपरार्कदेवोऽसौ ॥ ५ ॥

इति महाराजाधिराज**श्रीमदपरादित्यदेव**विरचितायां
**न्यायमुक्तावल्यां** न्यायसारविवृतौ
**तृतीयः परिच्छेदः ।**

**॥ ग्रन्थश्च समाप्तः ॥**

*

अनुबन्धः १.

॥ श्रीः ॥

# ॥ न्यायसारव्याख्या ॥

॥ श्री आनन्दानुभवाचार्यविरचिता ॥

## ॥ न्यायकलानिधिः ॥

—:०:—

दिनकरकरचयशशिकरसङ्घा-
नुपहतमपि घनघननिबिडं यत् ।
नतजनहृदयकुहरगतमान्ध्यं
प्रहरति तदवतु पदमिह वाण्याः ॥ १ ॥

रतिपतिखरतरशरचयभिन्नाः
किमु दिवि कति कति नहि सुरसङ्घाः ।
जयति स पशुपतिरिह गिरिकन्या-
समवपुरपि रतिपतिजयकृद्यः ॥ २ ॥

गणपतिपदयुग्मं किं न नमति जडधीर्लोकः ।
यदखिलदुरितौघघ्नं सकलफलजनेर्हेतुः ॥ ३ ॥

महादेवाश्रमं वन्दे गुरुं चिन्तामणिं नवम् ।
[अचिन्त्य]फलदं नानाविद्याधरशिरोमणिम् ॥ ४ ॥

न्यायसारकुमुदोदरावृत-
न्यायतन्त्र [1]मधुपानकौतुकि-
श्रोतृभृङ्गसुखदो विरच्यते
युक्तिरश्मिरुचिरः कलानिधिः ॥ ५ ॥

---

1. मधुदानकौतुकी मा.

पृष्ठ

॥ मङ्गलश्लोकविवरणम् ॥

शिष्टाचारपरिपालनायाविघ्नसमाप्तिप्रचयगमनयथाशास्त्रार्थस्फुरणसिद्ध्यर्थं विशिष्टेष्टदेवतानमस्कारपूर्वकं ग्रन्थप्रतिपाद्यमर्थमाद्यश्लोकेन सुखबोधाय दर्शयति **–प्रणम्येति ।** अत्रैषाऽक्षरयोजना–**अभिधास्यते** वक्ष्यते । किं ? **प्रमाण-** 1
**तद्भेदतदन्यलक्षणम् ।** प्रमाणं च तद्भेदश्च तदन्यानि च प्रमाणतद्भेद-तदन्यानि तेषां लक्षणं प्रमाणतद्भेदतदन्यलक्षणमिति । समुच्चये जात्येकवचनम् । प्रमाणमिति प्रमाणसामान्यं, तद्भेदाः प्रत्यक्षादयः । तदन्यानि हेत्वाभासछलजातिनिग्रहस्थानानीति । केन अभिधास्यते ? **मया** भासर्वज्ञेन, कस्मै प्रयोजनाय ? **शिशुप्रबोधाय** अव्युत्पन्नप्रबोधायेत्यर्थः । महत्कार्यारम्भे प्रवृत्तिः किञ्चिच्छ्रेयःसम्पादनं कृत्वा दृश्यते । अत्र किं कृत्वेत्यत आह— **प्रणम्येति । कं ? शम्भुम्** किंलक्षणं ? **जगतः पतिम् ।** जगतः पतित्वं महीपालानामप्यस्तीत्यत आह–**परमिति ।** सर्वजगत्स्वामिनमित्यर्थः । सर्वाधिपतित्वं तस्य कथमित्यत आह—**समस्ततत्त्वार्थविदमिति ।** समस्तानि तत्त्वानि समस्ततत्त्वानि प्रमाणानि वा चतुर्दशविद्यास्थानानि वा, तेषामर्थः, समस्ततत्त्वार्थः । अथवा समस्तः तत्त्वार्थः, तं वेत्तीति समस्ततत्त्वार्थवित् समस्ततत्त्वार्थवित्त्वं ब्रह्मादीनामप्यस्तीत्यत आह—**स्वभावत** इति । इतरेषां तदनुग्रहात्तथात्वम् । ईश्वरस्य तु स्वभावत इति ।

अथ वा जगतः पतिं परमित्येकं शम्भुलक्षणं, समस्ततत्त्वार्थविदं स्वभावत इत्यपरमुक्तम् । यद्वा इदमेव लक्षणम् । जगतः पतिं परमिति प्रमाणकथनम् ।

जगत उत्पत्त्यादौ पतिं कर्तारमिति यावत् । तथा हि–विवादाध्यासितं जगत् कर्तृजन्यं कार्यत्वात् कुम्भवदिति । तर्ककर्कशचिन्तानुसारेण तद्व्यावृत्ति(वर्त)कथनं वस्तुतो नास्ति नमस्कारश्लोकत्वात् । ईशलक्षणस्य प्रमाणस्य चाऽऽगमपरिच्छेदे वक्ष्यमाणत्वादिति । प्रमाणसामान्यलक्षणाभावे तद्विशेषलक्षणायोग इत्यादौ प्रमाणसामान्यलक्षणमाह—**सम्यगिति ।** 10

॥ प्रमाणलक्षणविचारः ॥

ननु, नैतत्प्रमाणसामान्यलक्षणम्, ईश्वरज्ञाने अव्याप्तेः । तस्य सर्वानुभवसाधनत्वाभावात्, ईश्वरज्ञानस्य नित्यत्वात् । अन्यज्ञानकारणत्वे

पृष्ठ

प्रमाणाभावादिति । उच्यते—प्रमाकरणं प्रमाणमिति, प्रमितिः प्रमाणमिति पक्षद्वयमस्ति । तत्र चक्षुरादिकरणापेक्षया सामान्यलक्षणमेतत् । प्रमाण-सामान्यलक्षणं तु प्रमाकरणप्रमान्यतरत्वं, प्रमाणव्यवहारासाधारणकारणत्वं प्रमा[ण]त्वाधिकरणत्वं वेति न दोषः । अनुभवसाधनं प्रमाणमित्येवास्तु लक्षणमित्यत आह—**सम्यग्ग्रहणमिति ।** अपोहो व्यवच्छेदः व्यावृत्ततया ज्ञान[म् तस्मै ।]

॥ संशयलक्षणम् ॥

[व्यवच्छेद्यं विना] व्यवच्छेदाभावात्तस्य ज्ञानाय सन्देहस्य तावल्लक्षण-
माह—**तत्रेति ।** अनवधारणं संशय इत्युक्ते घटादिष्वतिव्याप्तिः स्यात् । 11
तन्निवृत्त्यर्थं—**ज्ञानमिति ।** ज्ञानं संशय इत्युक्ते सम्यग्ज्ञानेऽतिव्याप्तिः
स्यात् । तन्निवृत्त्यर्थ**मनवधारणमिति ।** सन्देहे केचिदेकविधत्वं मन्वते ।
तन्निराकरणार्थमाह—**स चेति ।** समानधर्मश्च अनेकधर्मश्च विप्रतिपत्तिश्च 11
उपलब्धिश्च अनुपलब्धिश्च समानधर्मानेकधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धयः, ता एव कारणभेदः । तस्मादिति, कारणभेदात् ।

॥ संशयभेदाः ॥

सन्देहभेदान् दर्शयितुमुदाहरणान्याह—**तद्यथेत्यादिना । समान-** 12
**धर्मात्सन्देहो** जायते **किमयं स्थाणुः स्यात्पुरुषो वेति** विशेषाप्रतिभासन-सध्रीचीनादूर्ध्वत्वादिसाधारणधर्मदर्शनात्सन्देह इत्यर्थः । **अनेकधर्माच्छब्दा-त्सन्देहो** जायते । अक्ष[र]योजना । अनेकेभ्यो व्यावर्तको धर्मः, अनेकधर्मः शब्दः । आकाशमितरेभ्यो भिद्यते, शब्दाधिकरणत्वात् । [न]यदेवं न तदेवं यथा संप्रतिपन्नमित्येवमाद्यनुमानाच्छब्दस्य व्यावर्तकत्वम् । तथा चाकाश-विशेषगुणत्वान्नित्यानित्येभ्ये व्यावृत्तः किं नित्यः स्यादनित्यो वेति भवति
सन्देहः । नित्यानित्यव्यतिरिक्तपदार्थासंभवादिति । **विप्रतिपत्ते(त्ति)रिति ।** 19
**एके भौतिकानीन्द्रियाण्याहुरन्ये त्वभौतिकानीति** विप्रतिपत्तेः सन्देह इत्यर्थः । **एके वैशेषिकादयः** इन्द्रियाणि भौतिकानीत्याचक्षते । **अन्ये तु साङ्ख्या** अभौतिकानीति । मध्यस्थस्य मन्दमतेः सन्देहो जायते ।
**उपलब्धेरिति ।** येन सत्यमुदकमुपलब्धमसत्यं च, तस्योभयथोपलब्धेः 20

पृष्ठ

वेलान्तरे सन्देह इत्यर्थः । **अनुपलब्धेरिति** । कस्यचिद्विद्यमानस्यानुपलब्धि- 20
रस्ति, अविद्यमानस्यापि, तेनोभयथानुपलब्धेः सन्देह इत्यर्थः ।

॥ नैयायिकमते सन्देहस्य त्रैविध्यम् ॥

सन्देहस्य पञ्चधात्वमेकदेशीयमतेनोक्तम् । नैयायिकमते तु समानधर्मानेकधर्मविप्रतिपत्तिज इति त्रिधा सन्देहः, उपलब्ध्यनुपलब्धिजं सन्देहद्वयं समानधर्मजा(न)न्तर्भूतम् । इह तु प्रयोजनवशेनोक्तम् । प्रयोजनं तु यन्मीमांसका मन्यन्ते जायमाना बुद्धिः प्रमाणमिति, यच्च चार्वाका यन्नोपलभ्यते तन्नास्तीति, तदुभयनिराकरणमिति ।

॥ संशये त्रैविध्याक्षेपः ॥

ननु सर्वत्र समान(ा)दर्शनाद्विशेषादर्शनसध्रीचीनात्सन्देहो भवति । न हि समानधर्म[ा]दर्शने विशेषदर्शने वा सन्देहः क्वापि भवति। अनुच्छेदप्रसङ्गात् । तथा च[कथं]त्रैविध्यमपि सन्देहस्येति ।

॥ तत्समाधानम् ॥

उच्यते—यत्र स्थले समानधर्मात्सन्देहो जायते स्थाणुर्वा पुरुषो वेति । न तदतिरिक्तस्थलान्तरे । स्थाणौ पुरुषे वोर्ध्वत्वलक्षणो धर्मः समानो दृश्यते यथा तथाऽनेकधर्मोदाहरणे नास्ति, तस्यासाधारणत्वात् । न च व्यावृत्त्या साधारणत्वम् । नित्यानित्यव्यावृत्तत्वस्याप्यन्यत्रापि प्रसिद्धत्वात् । अतो वैषम्यम् । एवं विप्रतिपत्त्युदाहरणेऽपि बोद्धव्यम् । विप्रतिपत्तिः (अत्रपातः) ।

॥ द्वितीयपरिच्छेदे अन्वयव्यतिरेकिनिरूपणप्रस्तावे—साध्यतद्विपरीतयोरिति ॥

॥ असत्प्रतिपक्षितत्वनिरूपणम् ॥

**साध्यतद्विपरीतयोः साधनस्यात्रिरूपत्वमसत्प्रतिपक्षत्वम् ।** 207
अत्रिरूपत्वमित्युक्ते साकाङ्क्षता स्यात् । तन्निरासार्थं—**साधनस्येति** । साधनस्यात्रिरूपत्वमित्युक्ते केवलसाध्यसाधने तदभावसाधने वा स्यात । तन्निरासार्थं **साध्यतद्विपरीतयोरिति** ग्रहणम् । अन्वयव्यतिरेकिविषयमेतदत्रिरूपत्वम् ।

पृष्ठ

यत्र तु केवलान्वयिना केवलव्यतिरेकिणा वा सत्प्रतिपक्षत्वं, यथा पृथिवी अबादिभ्यो भिद्यते, पृथिवीत्वादित्यत्र केवलव्यतिरेकिणि पृथिव्यबादिभ्यो न भिद्यते प्रमेयत्वादित्यनेन । अदृष्टादिकं कस्यचित् प्रत्यक्षं, प्रमेयत्वादित्यत्र केवलान्वयिनि अदृष्टादिकं कस्यचित् प्रत्यक्षं न भवति, अस्मदाद्यप्रत्यक्षत्वात् व्यतिरेकेण(न)घटवदित्यनेन । तत्राद्विरूपत्वं ज्ञेयम् । तयोः सपक्षविपक्षासंभवेन तत्र वृत्त्यवृत्तिशङ्कानुदयात् ।

तदेवं पञ्चरूपत्वमन्वयव्यतिरेकिणो लक्षणम् । तत्र पक्षधर्मत्वेनासिद्धस्य निराकरणम् । सपक्षे सत्त्वेन केवलव्यतिरेकिणः, विपक्षव्यावृत्त्या केवलान्वयिनः, अबाधितविषयत्वेन कालात्ययापदिष्टस्य, असत्प्रतिपक्षत्वेन सत्प्रतिपक्षस्येति ।

॥ सपक्षव्यापकोदाहरणम् ॥

**कार्यत्वादिति** भावत्वे सति कार्यत्वादिति ज्ञेयम् । अन्यथा प्रध्वंसेनानैकान्तिकः स्यात् । यदा त्वनित्यशब्देनासर्वकालत्वं विवक्षितं, तदा न विशेषणप्रक्षेपः । प्रध्वंसस्यासर्वकालत्वादिति ।

॥ सपक्षैकदेशवृत्तेरुदाहरणम् ॥

**सामान्यवत्त्वे सतीति ।** इन्द्रियग्राह्यत्वादनित्य इत्युक्ते आत्मनि- 207
व्यभिचारः । तन्निरासार्थं बाह्यपदम् । बाह्येन्द्रियग्राह्यत्वादित्युक्ते योगिबाह्येन्द्रियग्राह्यपरमाण्वादानेकान्तः । तन्निरासार्थमस्मदादिपदम् । अस्मदादिबाह्येन्द्रियग्राह्यत्वादित्युक्ते सामान्येऽनैकान्तिकत्वं, तन्निरासार्थं सामान्यवत्त्वपदम् । अनित्यत्वे साध्ये अनित्यानां सपक्षता, तत्रानित्ये घटादौ हेतुर्वर्तते, द्व्यणुकादौ न वर्तत इति सपक्षैकदेशवृत्तित्वमिति ।

॥ केवलान्वयिलक्षणम् ॥

केवलान्वयिनो लक्षणमाह—**पक्षव्यापक इत्यादिना ।** पक्षव्यापकः 208
केवलान्वयीत्युक्तौ केवलव्यतिरेकिणि व्यभिचारः[1] । तन्निरासार्थं **सपक्षवृत्ति**पदम् । पक्षव्यापकः सपक्षवृत्तिः केवलान्वयीत्युक्ते अन्वयव्यतिरेकिणि व्यभि-

---

1. अतिव्याप्तिः एकमुत्तरत्रापि

चारः । तन्निरासार्थम**विद्यमान**विपक्षपदम् । अविद्यमानविपक्षः केवलान्वयीत्युक्ते अनध्यवसिते व्यभिचारः । तन्निवृत्त्यर्थं **सपक्षवृत्ति**पदम् । अविद्यमानविपक्षः सपक्षवृत्तिः केवलान्वयीत्युक्ते अदृष्टादीनि कस्यचित् प्रत्यक्षाणि । कार्यत्वादित्यस्मिन् भागासिद्धे व्यभिचारः, तन्निरासार्थं **पक्षव्यापक**पदम् । अत्राप्यबाधितविषयत्वं असत्प्रतिपक्षत्वं च कालातीतसत्प्रतिपक्षनिराकरणार्थं ज्ञेयम् । एवं केवलव्यतिरेकिलक्षणेऽपिव्यावृ(तं)तिः ज्ञेया(म्) । अग्निरनुष्णः पदार्थत्वादित्यादेः बाधितस्य केवलान्वयिनः, अयं विप्र एतन्महाराष्ट्रकर्ता एतद्विप्रत्वात्, न य एवं न स एवं यथान्य इत्यादिषु केवलव्यतिरेकिणो दर्शनात्, (प्रतिपक्षसभाववत् पूर्वमेवोक्ता) ।

॥ केवलान्वयिविभागः ॥

**पूर्ववत् द्विविध इति**, अन्वयव्यतिरेकिवत् सपक्षवृत्तिभेदाद्द्विविध 208
इत्यर्थः । द्वैविध्यमाह — **तद्यथेत्यादिना** । अदृष्टादीनि प्रत्यक्षाणीत्युक्ते सिद्धसाधनता स्यात्, तन्निरासार्थं **विवाद**पदम् । विवादास्पदीभूतानि प्रत्यक्षाणीत्युक्ते साकाङ्क्षता स्यात्, तन्निरासार्थं **अदृष्टादीनीति** । विवादास्पदीभूतान्यदृष्टादीनि प्रत्यक्षाणीत्युक्ते सर्वपुरुषप्रत्ययं प्रति प्रतिभासनं स्यात् । तन्निवृत्त्यर्थं **कस्यचिदिति** । अत्र धर्माधर्मपूर्वकसर्वादृष्टपक्षीकारेण प्रत्यक्षत्वे साध्ये पक्षातिरिक्तानां सपक्षत्वात् विपक्षो नास्ति । तत्र सपक्षे प्रमेयत्वहेतुर्व्याप्य वर्तत इति ।

॥ सपक्षैकदेशवृत्तेरुदाहरणम् ॥

सपक्षैकदेशवृत्त्युदाहरणमाह—**सैवेति** । विवादास्पदीभूतान्यदृष्टादीनि कस्यचित् प्रत्यक्षाणीति या पूर्वानुमाने प्रतिज्ञा, सैवेत्यर्थः । अदृष्टादीनि कस्यचित् प्रत्यक्षाण्यप्रत्यक्षत्वादित्युक्ते विरोधः । दृष्टान्तासिद्धिरन्यतरासिद्धिर्वा स्यात् । तन्निरासार्थं **मीमांसक**पदम् । अत्र च पक्षसपक्षविवेको विपक्षाभावस्तु पूर्ववत् ज्ञेयः । तत्र मीमांसकानामप्रत्यक्षत्वादिति हेतुर्मीमांसक(ा)सुखादौ न वर्तत इति सपक्षैकदेशवृत्तित्वमिति ।

॥ केवलव्यतिरेकिलक्षणम् ॥

केवलव्यतिरेकिणो लक्षणमाह— **पक्षव्यापक इत्यादिना** । पक्ष- 209
व्यापकः केवलव्यतिरेकीत्युक्ते अन्वयव्यतिरेकिण्यतिव्याप्तिः, तन्निरासार्थम-

पृष्ठ

**विद्यमानसपक्ष** इति पदम्, पक्षव्यापकोऽविद्यमानसपक्षः केवलव्यतिरेकीत्युक्तेऽप्यनध्यवसिते व्यभिचारः, तन्निरासार्थं, विपक्षाद्व्यावृत्त इति पदम्। अनध्यवसिते विपक्षासम्भवेन विपक्षव्यावृत्तेरसम्भवात्। पक्षव्यापको विपक्षाद्व्यावृत्तः केवलव्यतिरेकीत्युक्ते अन्वयव्यतिरेकिणि व्यभिचारः। तन्निरासार्थम**विद्यमानसपक्ष** इति पदम्। अविद्यमानसपक्षो विपक्षाद्व्यावृत्तः केवलव्यतिरेकीत्युक्ते विवादाध्यासितं सर्ववित्कर्तृपूर्वकं, सावयवत्वात् इत्यस्मिन् भागासिद्धे केवलव्यतिरेकिणि व्यभिचारः। तन्निरासार्थं **पक्षव्यापक** इत्युक्तमिति।

॥ केवलव्यतिरेक्युदाहरणम् ॥

अस्योदाहरणमाह—**यथा सर्वमिति।** कार्यं सर्ववित्कर्तृपूर्वकमित्युक्ते स्वल्पकार्यस्य पक्षत्वेनावशिष्टस्य कार्यस्य विपक्षत्वसम्भव इति शङ्का स्यात्। तन्निरासार्थं **सर्व**पदमिति। 209

॥ प्रसङ्गद्वारेणोदाहरणान्तरम् ॥

उदाहरणान्तरमाह—**प्रसङ्गद्वारेणेति।** प्रसङ्गस्तर्कः तद्द्वारेण प्रसङ्गं हेतुस्थाने निवेश्योदाहरणमित्यर्थः। तद्दर्शयति—**इदमिति।** विप्रतिपन्नमित्यर्थः। चार्वाका देहस्यात्मत्वं मन्वते, अनात्मत्वमपर इति विप्रतिपत्तिः। तत्र लोकायतं प्रत्यनुमानं, इदंशरीरं निरात्मकं न भवति, अप्राणादिमत्त्वप्रसङ्गात् लोष्टवदिति। एवं संभावितप्रतिज्ञयाऽनुमानं कर्तव्यम्। इदं शरीरं निरात्मकं न भवति, जीवच्छरीरत्वात् यन्निरात्मकं न तज्जीवच्छरीरं यथा लोष्टमिति। तदुक्तम्—

सम्भावितः प्रतिज्ञायां पक्षः साध्येत हेतुना।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः॥ इति।

॥ केवलव्यतिरेकिद्वैविध्यशङ्कासमाधाने ॥

ननु केवलव्यतिरेकिण्युदाहरणद्वयस्योक्तत्वात्, एकोऽप्रसङ्गरूपोऽपरः प्रसङ्गरूप इति द्वैविध्यं किं न स्यादिति। तन्न। किं केवलस्यैव प्रसङ्गस्य द्वितीयोदाहरणसाध्यसाधनत्वं विवक्षितं, किंवा हेतूपकरणत्वेन। नाद्यः—

पृष्ठ

शुष्कतर्कस्य नैयायिकैः साधनत्वानङ्गीकारात्। न द्वितीयः, हेतुमात्रस्य तर्कापेक्षत्वात्। नह्यनुकूलतर्कविरहेऽनुमानस्य प्रामाण्यं दृष्टम्। अतोऽनुकूलतर्कोपेतत्वं केवलव्यतिरेकिणि द्वैविध्यापादकं न भवति। तर्केण सम्भाविता प्रतिज्ञा हेतुना साधनीयेति शिक्षाविधानार्थं हेतुनिरूपणावसरे द्वितीयोदाहरणमिति नानर्थक्यम्। यदा अविद्यमानसपक्षः केवलव्यतिरेकी तदा तत्र अप्रसिद्धविशेषणत्वं गुण एव न दोषः। विशेषणप्रसिद्धौ विद्यमानसपक्षतया केवलव्यतिरेकित्वभङ्गप्रसङ्गः स्यात्।

॥ केवलव्यतिरेकाभासस्य गमकत्वनिराकरणम् ॥

नन्वेवं भूश्शशविषाणोल्लिखिता भूमित्वात्। या नैवं सा नैवं यथा सम्मता इत्यादेः केवलव्यतिरेकाभासस्यापि गमकत्वं स्यात्। तन्न, तत्साध्ये [1]प्रमाणान्तरबाधो नास्ति चेत् भवतु, प्रामाण्यम्। अस्ति चेत्तत एवाप्रामाण्यं नाप्रसिद्धविशेषणत्वेन। न ह्यसति बाधे विशेषणाप्रसिद्ध्या अप्रामाण्यं क्वचित्सम्मतमिति।

॥ हेत्वाभासनिरूपणारम्भः। तल्लक्षणम् ॥

अनुमानशुद्ध्युपयोगिहेत्वाभासरूपं निरूपयितुं प्रसङ्गमाह—**एतेनेति**। 215
हेतुस्वरूपकथनेनेत्यर्थः। के ते हेत्वाभासा इत्यपेक्षायां तल्लक्षणमाह—**हेतुलक्षणरहिता इति**। हेतुलक्षणरहिता हेत्वाभासा इत्युक्ते प्रतिज्ञादौ व्यभिचारः। तन्निरासार्थं हेतुवदवभासमाना इति। हेतुवदवभासमाना हेत्वाभासा इत्युक्ते हेतुवदवभासमाने हेत्वन्तरेऽतिप्रसक्तिः स्यात्। तन्निरासार्थं **हेतुलक्षणरहिता** इति।

॥ हेत्वाभासविभागः ॥

केषांचिदेकविधो हेत्वाभासः। केषांचित्त्रिविध इत्यादिविप्रतिपत्ति- 215
निरासार्थं हेत्वाभासानां विभागमाह—**असिद्धेत्यादिना**। अयमर्थः—लोके नैकविधस्य व्यवहारो दृश्यते नापि त्रिविधस्य। अतो लोकानुसारेण लक्षणं कर्तव्यम्।

---

1. प्रमाणोत्तर - मा.

पृष्ठ

तदुक्तम् —

सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥ (श्लोक वा.1.1.)

॥ असिद्धलक्षणम् ॥

असिद्धलक्षणमाह — **तत्रेति** । न निश्चिता पक्षे वृत्तिर्यस्यासाव- 216
निश्चितपक्षवृत्तिः । अनिश्चितपक्षवृत्तित्वं सन्दिग्धत्वेन वा स्यादसत्वेन वा । अतश्च पक्षावृत्तिसन्दिग्धासिद्धयोरुपसङ्ग्रहः । पक्षावृत्तिरसिद्ध इत्युक्ते सन्दिग्धासिद्धानुपग्रहः स्यादिति । सन्दिग्धपक्षवृत्तिरसिद्ध इत्युक्ते सिद्धे[1]ऽप्यसिद्धेप्यसिद्धता स्यात् । तन्निरासार्थ**मनिश्चितेति** । अनिश्चितोऽसिद्ध इत्युक्ते अनिश्चितस्यासिद्धत्वं स्यात् तदर्थं **पक्षवृत्ति**पदम् । अत्र हेतुत्वेनाभिमन्यमानस्यानिश्चितपक्षवृत्तित्वं लक्षणं ज्ञेयम् । अन्यथा पक्षनिष्ठधर्माणामज्ञायमानानां सन्दिग्धानां नासिद्धता स्यात् । इति ।

॥ विरुद्धलक्षणम् ॥

विरुद्धलक्षणमाह — **पक्षविपक्षयोरेवेति** । पक्षग्रहणमसिद्धव्युदा- 216
सार्थम् । विपक्षग्रहणमन्वयतिरेकिव्युदासार्थम् । एवकारग्रहणमनैकान्तिकनिरासार्थमिति ।

॥ अनैकान्तिकलक्षणम् ॥

अनैकान्तिकलक्षणे [2]पक्षवृत्तिरनैकान्तिक इत्युक्ते केवलव्यतिरेक्यपि स्यात् । तन्निरासार्थं सपक्षपदम् । सपक्षवृत्तिरनैकान्तिक इत्युक्ते अन्वयव्यतिरेक्यपि स्यात् । तन्निरासार्थं विपक्षपदम् । सपक्षविपक्षवृत्तिरनैकान्तिक इत्युक्तेऽसिद्धः स्यात् । तन्निरासार्थं पक्षपदमिति ।

---

1. निश्चिते
2. पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः इति तल्लक्षणम् ।

पृष्ठ

॥ अनध्यवसितलक्षणम् ॥

[1]साध्यासाधकोऽनध्यवसित इत्युक्ते असिद्धोऽपि स्यात। तन्निरासार्थं **पक्षपदम् ।** साध्यासाधकः पक्षे वर्तमानोऽनध्यवसित इत्युक्ते विरुद्धोऽपि स्यात् । तदर्थमेवकारः । पक्षे एव वर्तमानोऽनध्यवसित इत्युक्ते केवलव्यतिरेक्यपि स्यात । तदर्थं साध्यासाधक इति पदम् ।

॥ कालात्ययापदिष्टलक्षणम् ॥

[2]वर्तमानः कालात्ययापदिष्ट इत्युक्ते सद्धेतुरपि स्यात् । तदर्थं प्रमाणबाधितपदम् । प्रमाणबाधिते वर्तमानो हेतुः कालात्ययापदिष्ट इत्युक्ते प्रमाणबाधिते सपक्षे वर्तमानोऽपि तथा स्यात । तन्निरासार्थं **पक्षग्रहणम् ।** प्रमाणबाधिते वर्तमानः कालात्ययापदिष्ट इत्युक्ते हेतुत्वेनानभिमन्यमानः पक्षधर्मोऽपि स्यात् । तन्निवृत्त्यर्थं **हेतुपदम् । हेतुरिति,** हेतुत्वेनाभिमन्यमानः इत्यर्थः । नहि प्रमाणबाधिते वर्तमानस्य हेतुत्वं युक्तमिति ।

॥ प्रकरणसमलक्षणम् ॥

[3]त्रिरूपो हेतुः प्रकरणसम इत्युक्ते परपक्षे त्रिरूपस्यापि प्रकरणसमता स्यात् । तदर्थं **स्वपक्षपदम् ।** स्वपक्षसिद्धौ त्रिरूपो हेतुः प्रकरणसम इत्युक्ते केवलस्य पक्षसिद्धौ त्रिरूपस्यापि **प्रकरणसमता स्यात् । तदर्थं परपद-** 216
**मिति । यद्यपीति ।**

॥ असिद्धभेदः ॥

अत्रेदानीमसिद्धानां भेदा निरूप्यन्ते—इत्यध्याहृत्यैवं शङ्का कर्तव्या । असिद्धादिभेदानामानन्त्यात्तत्कथने ग्रन्थानन्त्यं स्यादिति । तत्परिहारत्वेन योजनीयो **यद्यपीति** ग्रन्थः । अन्यथा आकस्मिकः स्यादिति । यथाक्रमेण 217
भेदं दर्शयति-— **असिद्ध इत्यादिना ।**

---

1. साध्यासाध्यकः पक्ष एव वर्तमानोऽनध्यवसितः
2. प्रमाणबाधिते पक्षेवर्तमानोहेतुः कालात्ययापदिष्टः
3. पक्षपरपक्षसिद्धावपि त्रिरूपोहेतुः प्रकरणसमः

पृष्ठ

॥ स्वरूपासिद्धव्यधिकरणासिद्धयोः भेदनिरूपणम् ॥

ननु चाक्षुषत्वकृतकत्वयोः शब्दवृत्तित्वासंभवस्योक्तत्वादेकःस्वरूपासिद्धोऽपरो व्यधिकरणासिद्ध इति कथमुच्यते ? चाक्षुषत्वस्य शब्दे स्वरूपेण सम्भवो नास्ति। कृतकत्वस्य तु स्वरूपेण सम्भवोऽस्ति। शब्दनिष्ठत्वेन नास्तीति व्यधिकरणासिद्धता। **पटस्य कृतकत्वादिति** भिन्नाधिकरणत्वेन 217
प्रतीतिः नैवं चाक्षुषत्वादित्यस्येति विशेषः। विशेष्यासिद्धविशेषणासिद्धौ **स्पष्टौ**।

॥ भागासिद्धोदाहरणम् ॥

**भागासिद्ध** इति। [1]अत्रास्मदादिप्रयत्नानन्तर्यकत्वादिति ज्ञेयम्[2]।
ईश्वरप्रयत्नजन्यत्वस्य पक्षव्यापकत्वेन भागासिद्धत्वासम्भवादिति। **आश्रया-** 218
**सिद्ध इति** प्रधानस्य पक्षत्वेन, प्रधानसाधने यद्याश्रयः सिद्धः तर्हि विप्रतिपत्त्यसम्भवेन [3]पक्षलक्षणासम्भवादाश्रयसिद्धो हेतुः। असिद्धश्चेत्तर्हि सुतरामित्यर्थः। **आश्रयैकदेशासिद्ध इति**। पुरुषेश्वरौ परवादिनं प्रति यद्यपि सिद्धौ। तथापि प्रधानस्यासिद्धेराश्रयैकदेशासिद्धत्वमिति। **व्यर्थविशेषणासिद्ध इति**। अनित्यः शब्दः कृतकत्वादित्युक्ते प्रध्वंसे व्यभिचारः। तन्निरासार्थं **सामान्यवत्त्वम्**। अतो न विशेषणवैयर्थ्यमिति चेन्न, असतः सत्तासम्बन्धो हि कार्यत्वम्। न तत् प्रध्वंसे विद्यते। तस्य नैयायिकैः सत्तानङ्गीकारात्। अथ कार्यत्वाकार्यत्वशून्यपदार्थासम्भवात्कादाचित्कत्वव्यवहारस्येतरपदार्थवदभावेऽपि सम्भवात् कार्यत्वमङ्गीकर्तव्यम्। तर्हि भावत्वे सतीति हेतुर्विशेषणीयः इति। एवं व्यर्थविशेष्यासिद्धोऽपि ज्ञेयः इति।

॥ सन्दिग्धविशेषणासिद्धः ॥

**सन्दिग्धविशेषणेति**। कदाचिद्रागादियोगः कपिलस्याप्यस्तीति 219
सिद्धसाधनतापरिहारार्थमद्यापीति पदम्। ज्ञानरहितत्वादित्युक्ते त्वसिद्धिः।

---

1. अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्यत्र।
2. हेतुत्वेनेत्यर्थः।
3. साध्यधर्मविशिष्टधर्मिणः पक्षत्वात्।

नहि जीवमानस्य ज्ञानाभावः सम्भवति । तदर्थं **तत्वज्ञान**पदम् । कदाचित्तत्वज्ञानरहितत्वे योगिनामद्यापि रागादियोगासम्भवात् अनैकान्तिकः स्यात् । तन्निरासार्थं **सर्वदेति**पदम् । सर्वदा तत्वज्ञानरहितत्वेऽप्यद्यापि रागाभावः पाषणादावस्तीति **पुरुषत्वादिति** पदम् । अत्र सर्वदा तत्वज्ञानरहितत्वादिति विशेषणं सन्दिग्धम् । कपिलस्य सर्वदा तत्वज्ञानभावाभावयोः प्रमाणाभावात् । एवं सन्दिग्धविशेष्यासिद्धेऽपि योजनीयमिति । नन्वन्यतरासिद्धोभयासिद्धौ कथं नोक्ताविव्यत आह—**एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षिता** इति ।

॥ विरुद्धभेदाः ॥

**विरुद्धभेदास्त्विति** । प्रदर्श्यन्त इति शेषः । विरुद्धो द्विविधः । 220
विद्यमानसपक्षोऽविद्यमानसपक्षश्च । तत्रोभयविधस्य विभागमाह—**सति सपक्ष इति** । उदाहरणमाह—**पक्षविपक्षव्यापको यथा—नित्यः शब्दः कार्यत्वात्** । शब्दनित्यत्वे साध्ये नित्यानां सपक्षता, अनित्यानां विपक्षता तत्र कार्यत्वं पक्षे व्याप्य वर्तते विपक्षेऽपीति । ननु प्रागभावेऽनित्येऽपि कार्यत्वं नास्ति । अतोऽसौ न विपक्षव्यापक इति । उत्पत्तिनाशवत्त्वं ह्यनित्यत्वमभिप्रेतम्, तच्च प्रागभावे नास्ति । अथवा भावान्तर[मभाव] [1]इति यन्मतं तदवष्टम्भेनायं प्रयोग इति न विरोधः ।

॥ पक्षव्यापको विवक्षकदेशवृत्तिः इत्यस्योदाहरणम ॥

**पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—नित्यः शब्दः सामान्य-** 221
**वत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वादिति** । अत्र ग्राह्यत्वादित्युक्ते **पक्षत्रय**वृत्तित्वेनानैकान्तिकः स्यात् । तन्निवृत्त्यर्थ**मिन्द्रिय**पदम् । बाह्येन्द्रियग्राह्यत्वादित्युक्तेऽपि योगिबाह्येन्द्रिग्राह्यत्वं परमाणुषु वर्तत इत्यनैकान्तिकः स्यात्, तन्निरासार्थम**स्मदादि**पदम् । अस्मदादिबाह्येन्द्रिग्राह्यत्वादित्युक्ते द्रव्यत्वादिसामान्ये वर्तमानत्वेनानैकान्तिकः स्यात्, तन्निरासार्थं **सामान्य-**

1. सम्भव—मा.

पृष्ठ

**वत्त्वेति** पदम्। घटादौ वर्तते ;द्व्यणुकादौ न वर्तत इति विपक्षैकदेशवृत्तिः[1]। बाह्येन्द्रियग्राह्यत्वं तु बाह्येन्द्रियग्राह्ययोग्यत्वं विवक्षितम्। तच्च बाह्येन्द्रियग्राह्यत्वं सर्वस्य शब्दस्याप्यस्तीति पक्षविपक्षव्यापकत्वम्। प्रथमादिशब्दानां शब्दत्वादेतद्योग्यत्वम्। अथवा यः शब्दः कर्णपथमवतरति तमेव पक्षीकृत्य [प्रयोग इति]न विरोधः।

॥ विपक्षैकदेशवृत्तिपक्षव्यापकोदाहरणम् ॥

**पक्षविपक्षैकदेशवृत्तिर्यथा—नित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति।** अत्रास्मदादिप्रयत्नानन्तर्यकत्वं विवक्षितम्। तच्चास्मदादिशब्दे वर्तते वाय्वादिशब्दे नास्तीति पक्षैकदेशवृत्तिः; घटादौ वर्तते, अङ्कुरादौ न वर्तत इति[वि]पक्षैकदेशवृत्तिः। 221

॥ पक्षैकदेशवृत्तिविपक्षव्यापकोदाहरणम् ॥

**पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—नित्या पृथिवी कार्यत्वादिति।** परमाणुलक्षणायां न वर्तते, स्थूलायां तु वर्तत इति पक्षैकदेशवृत्तिः। विपक्षव्यापकत्वं स्फुटमिति।

॥ असति सपक्षे विरुद्धभेदाः ॥

**अथासति सपक्षे चत्वारो विरुद्धभेदाः। पक्षविपक्षव्यापको यथा—आकाशविशेषगुणः शब्दः प्रमेयत्वादिति।** आकाशविशेषगुणत्वं साध्यं शब्दादन्यत्र नास्तीति सपक्षाभावः। एवमुत्तरत्रापि सपक्षाभावो ज्ञेयः। तथाच प्रमेयत्वादिति हेतुः पक्षविपक्षव्यापक इति। **पक्षविपक्षैकदेशवृत्तिर्यथा—आकाशविशेषगुणः शब्दः प्रयत्नानन्तरीयकत्वादिति।** अत्रास्मदादिप्रयत्नानन्तरीयकत्वं ज्ञेयम्। तच्चास्मदादिशब्दे वर्तते, न तु घोषादिशब्दे वर्तत इति पक्षैकदेशवृत्तिः। घटादौ वर्तते, द्व्यणुकादौ न वर्तत इति विपक्षैकदेशवृत्तिः। **पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—आकाश-** 221

1. प्रकृतोहेतुरितिशेषः

**विशेषगुणः शब्दो बाह्येन्द्रियग्राह्यत्वादिति।** अत्र ग्राह्यत्वादित्युक्ते पक्षविपक्षव्यापकः स्यात्। तन्निवृत्त्यर्थमिन्द्रियपदम्। इन्द्रियग्राह्यत्वादित्युक्तेऽपि योगीन्द्रियग्राह्यत्वं पक्षे विपक्षे च व्याप्य वर्तत इति तन्निवृत्त्यर्थमस्मदादिपदमध्याहर्तव्यमिति। अस्मदादीन्द्रियग्राह्यत्वादित्युक्ते अनुमानज्ञानजसंस्कारसचिवमनोग्राह्यत्वं परमाण्वादिषु वर्तत इति पक्षव्यापकः स्यात्। तन्निवृत्त्यर्थं बाह्यपदम्।

॥ पक्षैकदेशवृत्तिविपक्षव्यापकः ॥

**पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा। आकाशविशेषगुणः शब्दः अपदात्मकत्वादिति।** विभक्त्यन्तं पदम्। तदात्मकोऽस्मदादिशब्दो, भेर्यादिशब्दो नेति[1] पक्षैकदेशवृत्तित्वम्। अपदात्मकत्वं शब्देतरस्मिन् पदार्थे वर्तत इति विपक्षव्यापक इति।

॥ पक्षैकदेशवृत्तीनामसिद्धत्वान्न विरुद्धत्वमिति शङ्का ॥

**ननु चत्वार इति।** ये पक्षविपक्षव्यापकास्ते चत्वार एव विरुद्धभेदाः **नान्ये** पक्षैकदेशवृत्तिनः, तेषामनिश्चितपक्षवृत्तित्वात् असिद्धलक्षणोपपन्नत्वेनासिद्धत्वादित्यर्थः।

॥ उभयव्यवहाराङ्गीकारेण उक्तशङ्कापरिहारः ॥

असिद्धलक्षणोपपन्नत्वेऽपि विरुद्धलक्षणोपपन्नत्वेनोभयव्यवहारविषय- 221
त्वादुत्पत्तिज्ञप्त्योरप्रतिबन्धकत्वान्न तद्दूषणमिति परिहरति—**नैष इति।** एकस्योभयलक्षणं[क्व]दृष्टमित्यत आह—**तुलायामिति।** पण्यद्रव्यापेक्षया प्रमाणत्वं तुलान्तरापेक्षया तु प्रमेयत्वमिति।

॥ अनैकान्तिकभेदाः ॥

**अनैकान्तिकभेदास्त्वति** निरूप्यन्त इति शेषः। **पक्षत्रयव्या-** 222
**पक इति** प्रमेयत्वस्य सकलपदार्थनिष्ठत्वेन पक्षसपक्षविपक्षव्यापकत्वम्।

---

1. तदात्मको नेत्यर्थः

॥ प्रमेयत्वं पक्षत्रयवृत्ति न भवतीति शङ्का तत्परिहारश्च ॥

ननु प्रमेयत्वं नित्यमनित्यं वा । नित्यत्वे विपक्षान्तर्भावः । तथा च प्रमेयत्वे प्रमेयत्वं वर्तते न वा ? यदि न वर्तते तर्हि न पक्षत्रयव्यापकत्वम् । वर्तते चेत्तर्हि किं तदेव वर्तते, अन्यद्वा ? नाद्यः—आत्माश्रयत्वापत्तेः । द्वितीये तु हेतुत्वेनोक्तस्यावृत्तिरेव ; इतरेतराश्रयाद्यापत्तिश्च । तस्मान्न पक्षत्रयव्यापकत्वमिति । उच्यते—प्रमेयत्वं स्वरूपे वर्तते, नचात्माश्रयत्वदोषः उत्पत्तिज्ञप्त्योरप्रतिबन्धकत्वात् । नित्यत्वान्नोत्पत्तिप्रतिबन्धः, प्रमासम्बन्धित्वान्न ज्ञप्तिप्रतिबन्धः । अथ वा सकलपदार्थवृत्तिद्वारा प्रमेयत्वं स्वरूपे वर्तते । न स्वांशे आत्माश्रयत्वम् । अध्ययनविधिवदुपपत्तेः । यथाध्ययनविधिः सकलवेदाध्ययनं प्रयुञ्जानः स्वाध्ययनमपि प्रयोजयति । न च तत्रात्माश्रयत्वं दोषो भवति । किञ्च प्रमेयत्वस्याभाव (रूपत्वात्) [वृत्तित्वात]घटादौ न संयोगसमवायाभ्यां वृत्तिः । किन्तु स्वव्यवहारजनकत्वं वृत्तिः, तच्च स्वरूपेऽप्यस्तीति । तस्मात् प्रमेयत्वस्य पक्षत्रयव्यापकत्वं सिद्धम् ।

॥ पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिः ॥

**पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा—अनित्यः शब्दः** २२२
**प्रत्यक्षत्वादिति ।** अत्रासदादिप्रत्यक्षत्वादिति ज्ञेयम् । तच्च पक्षीकृतसर्वशब्देषु वर्तते । परमाण्वादौ न वर्तते, आत्मादौ वर्तत इति । पक्षव्यापकत्वं विपक्षैकदेशवृत्तित्वं च घटादौ वर्तते, द्व्यणुकादौ न वर्तत इति सपक्षैकदेशवृत्तित्वम् । **पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा-गौरयं विषाणित्वादिति ।** विषाणिन एव पिण्डस्य पक्षत्वात् पक्षव्यापकत्वम् । विषाणित्वं तु विषणयोग्यत्वं तस्य सद्योजातवत्सादावपि विद्यमानत्वात् सपक्षव्यापकत्वम् । विपक्षैकदेश[घटा]दौ न वर्तते अजादौ वर्तते इति विपक्षैकदेशवृत्तिः ।

॥ पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिः ॥

**पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा—नायं गौः विषाणि-** २२२
**त्वादिति ।**

पृष्ठ

अत्र पूर्वानुमानवैपरीत्येन सपक्षविपक्षौ विज्ञेयाविति । **पक्षत्रयैकदेशवृत्तिर्यथा**—नित्या पृथिवी प्रत्यक्षत्वादिति । अत्राप्यस्मदादिप्रत्यक्षत्वं विवक्षितम् । तच्च स्थूलायां पृथिव्यां वर्तते । सूक्ष्मायां न वर्तत इति पक्षैदेशवृत्तिः । नित्यानित्यपदार्थेषु केषुचिद्वर्तते इति सपक्षविपक्षैकदेशवृत्तित्वमिति ।

॥ पक्षसपक्षैकदेशवृत्तिः विपक्षव्यापकः ॥

**पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा—द्रव्याणि दिक्कालमनांसि अमूर्तत्वादिति ।** दिक्कालमनसां द्रव्यत्वे साध्ये पृथिव्यप्तेजोवाय्वव्याकाशात्मनां सपक्षता गुणादीनां विपक्षता । तत्रामूर्तत्वं दिक्कालयोर्वर्तते, मनसि न वर्तत इति पक्षैकदेशवृत्तिः । आकाशात्मनोर्वर्तते पृथिव्यादिषु न वर्तत इति सपक्षैकदेशवृत्तिः । गुणादौ व्याप्य वर्तत इति विपक्षव्यापकः । 222

**पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा—न द्रव्याणि दिक्कालमनांसि अमूर्तत्वादिति ।** अत्र पूर्वानुमानवैपरीत्येन सपक्षविपक्षौ विज्ञेयाविति । 222

॥ विपक्षसपक्षव्यापकः पक्षैकदेशवृत्तिः ॥

**विपक्षसपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—न द्रव्याण्याकाशकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वादिति ।** आशुतरविनाशित्वं क्षणिकत्वम् । क्षणिकविशेषगुणरहितत्वं तु पक्षमध्ये दिक्कालमनस्स्वेव वर्तते, नात्माकाशयोरिति पक्षैकदेशवृत्तिः । गुणादौ सपक्षे विपक्षे च पृथिव्यप्तेजोवायुषु व्याप्य वर्तत इति सपक्षविपक्षव्यापकः । यद्यपि तेजोद्रव्यस्य कस्यचिदाशुतरविनाशित्वेन तद्विशेषगुणानां क्षणिकगुणत्वं तथाप्याश्रये सत्याशुतरविनाशित्वं नास्ति । तथाविधस्यैव हेतुप्रतिष्ठितत्वमिति । 223

॥ अनध्यवसितभेदानामुदाहरणम् ॥

**अनध्यवसितभेदास्त्वति । अविद्यमानसपक्षविपक्षः पक्ष-** 223

पृष्ठ

**व्यापको यथा—सर्वमनित्यं सत्वादिति ।** सर्वस्य पक्षीकारेण सपक्ष- 223
विपक्षाभावः सत्वादिति स्वरूपसत्वादित्यर्थः । उपरितनमुदाहरणद्वयं स्पष्टम् ।

॥ विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिः ॥

**विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा–सर्वं द्रव्यमनित्यं क्रियावत्त्वादिति ।** क्रियावत्त्वमाकाशादौ न वर्तते, घटादौ वर्तत इति पक्षैकदेशवृत्तिः । गुणादौ नित्ये अनित्ये च न वर्तत इति असाधारणत्वमिति। **अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा—सर्वं कार्यं नित्यं उत्पत्तिधर्मकत्वादिति ।** अत्र सर्वस्य कार्यस्य पक्षीकारेण नित्यत्वसाधने पक्षातिरिक्तानित्यपदार्थासम्भवाद्विपक्षो नास्ति । नित्यपदार्थस्य विद्यमानत्वात् सपक्षोऽस्ति । उत्पत्तिमत्त्वं पक्षे व्याप्य वर्तत इति ।

॥ अविद्यमानविपक्षविद्यमानसपक्षस्योदाहरणम् ॥

**अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा—सर्वं** 223
**कार्यं नित्यं सावयवत्वादिति ।** अत्र घटादौ वर्तते सावयवत्वं, रूपादौ नास्तीति पक्षैकदेशवृत्तिः, शेषं पूर्ववत् ।

॥ कालात्ययापदिष्टभेदोदाहरणम् ॥

**कालात्ययापदिष्टभेदास्त्विवति । प्रत्यक्षविरुद्धो यथा–अनु-** 224
**ष्णोऽग्निः कृतकत्वादिति ।** अप्रतिबद्धशक्त्यग्निप्रत्यक्षबोधानन्तरं अनुमानप्रवृत्तौ प्रत्यक्षविरुद्धकालात्ययापदिष्ट इत्यर्थः । **अनुमानविरुद्धो यथा—परमाणूनामनित्यत्वं मूर्तत्वादिति ।** अप्रतीतपरमाणुपक्षीकारे आश्रयासिद्धिः । तथा च अल्पपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् । विमतमाद्यं द्रव्यं स्वपरिमाणात् (पुनः) न्यूनपरिमाणद्रव्यान्तरकार्यं द्रव्यत्वादित्याद्यनुमानेन परमाणुसिद्धिर्वक्तव्या । तथा च निरवयवद्रव्यत्वं परमाणूनां सिद्धम् । निरवयवद्रव्यत्वे चाऽऽकाशादिवन्नित्यत्वमिति । अतो यदुपजीवनादनुमानं प्रवर्तते, तेनैव नित्यत्वबोधादनुमानविरुद्धः कालातीत इत्यर्थः ।

पृष्ठ

॥ आगमविरुद्धः ॥

**आगमविरुद्धो यथा—ब्राह्मणेनेति ।** 226

गौडी माध्वी तथा पैष्टी विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा चान्या न पातव्या द्विजोत्तमैः ॥ (मनुस्मृ. 11-94)

इत्याद्यागमविरुद्ध इति । नचानुमानेनागमबाध इति साम्प्रतम् । अनुमानेन हि सुरापानस्य पापाहेतुत्वं साध्यते । न तु कर्तव्यता(या:)तत्र सिद्धसाधनप्रसङ्गात् । तथा च क्षीरदृष्टान्ते पापाहेतुत्वमागमैकगम्यम् । अतस्तदुपजीवनेनानुमानस्य प्रवृत्तत्वादागमेनानुमानस्य बाध इति ।

॥ प्रत्यक्षैकदेशविरुद्धः ॥

**प्रत्यक्षैकदेशविरुद्ध इति ।** सुवर्णचन्द्रादितेजस्यनुष्णत्वमस्मदादिप्रत्यक्षं, अभ्रयादौ च प्रत्यक्षमिति प्रत्यक्षैकदेशविरुद्ध इति ।

॥ अनुमानैकदेशविरुद्धः ॥

**अनुमानैकदेशविरुद्धो यथा—नित्याश्रया इति ।** परमाण्वाश्रया 226
इत्यर्थः । परमाणुवृत्तित्वान्नित्या इत्युक्ते संयोगे व्यभिचारः, तन्निवृत्त्यर्थमप्रदेशपदम् । अप्रदेशवृत्तिपरमाणुवृत्तित्वादित्युक्ते परत्वापरत्वे व्यभिचारः । तन्निवृत्त्यर्थं समानजात्यारम्भकपदम् । अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वादित्युक्ते द्व्यणुके व्यभिचारः । तन्निवृत्त्यर्थं गुणत्वे सतीति विशेषणमूह्यम् ।

अत्र च नैमित्तिकद्रवत्वपार्थिवपरमाणुरूपादिनित्यत्वमनुमानविरुद्धम् । नतु सांसिद्धिकद्रवत्वापरमाणुरूपादिनित्यत्वम् । तथाहि, पार्थिवपरमाणुरूपरसगन्धस्पर्शाः पाकजाः पार्थिवविशेषगुणत्वात्, घटरूपादिवत् । पार्थिवतैजसपरमाणुद्रवत्वं पाकजं पार्थिवतैजसद्रवत्वत्वात् सुवर्णघृतद्रवत्ववदिति ।

॥ आगमैकदेशविरुद्धः ॥

**आगमैकदेशविरुद्धो यथा—सर्वेषामिति ।** अत्र सर्वेषां देवानां 226
सर्वेषामृषीणां च शरीराणि पार्थिवानीति प्रतिज्ञार्थः । सिद्धसाधनपरिहारार्थं सर्वपदम् । केषांचिद्देवरूपाणामागमेन शरीराणि पार्थिवानि गृहीतानि, केषांचित्तैजसानीत्यागमैकदेशविरुद्धत्वमिति ।

॥ प्रकरणसमोदाहरणम् ॥

**प्रकरणसमस्येति**—अत्र स्वपक्षे शब्दस्यानित्यत्वे साध्ये अनित्यानां 227
सपक्षता । नित्यानां विपक्षता । पक्षसपक्षान्यतरत्वं पक्षसपक्षे वर्तते । विपक्षे न वर्तत इति त्रिरूपत्वम् । एवं परपक्षेऽपीति । उक्तहेत्वाभासातिरिक्तमन्ये विरुद्धाव्यभिचारिणं हेत्वाभासं निरूपयन्ति । अतः षडेव हेत्वाभासा इति न युक्तमित्याशङ्क्य प्रकरणसमे तस्यान्तर्भावो लक्षणपर्यालोचनया भवतीत्यभिसन्धाय लक्षणमाह—**एकत्रेति ।** हेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्युक्ते भिन्नाधिकरणे वर्तमानहेतुद्वयस्यापि विरुद्धाव्यभिचारिता स्यात् । तन्निवृत्त्यर्थ**मेकत्रेति ।** एकत्र हेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्युक्ते एकत्रातुल्यलक्षणहेतुद्वयेऽतिप्रसक्तिः, अत**स्तुल्य**पदम् । एकत्र तुल्यलक्षणहेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्युक्ते एकत्राविरुद्धहेतुद्वयेऽतिप्रसक्तिः । तन्निवृत्त्यर्थं **विरुद्ध**पदम् । अस्य च स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसम इति प्रकरणसमेऽन्तर्भावः ।

॥ प्रकरणसमविरुद्धाव्यभिचारिणोः भेदकथनम् ॥

प्रकरणसमे यद्यप्येको हेतुः, विरुद्धाव्यभिचारिणि हेतुद्वयम् । तथापि स्वपरपक्षसिद्धौ समानत्वादन्तर्भावः इति । विरुद्धाव्यभिचारिणः स्वपरपक्षसमानत्वे चोदाहरणमाह—**यथेति ।** घटादावनैकान्तनिवारणाया**मूर्त**पदम् । रूपादौ व्यभिचारवारणार्थं **द्रव्यपद**मिति । **एवमिति ।** गुणाधारत्वादित्युक्ते मनस्यनैकान्तिकः । अतः **इन्द्रियग्राह्य**पदम् । इन्द्रियग्राह्यगुणाधारत्वादित्युक्ते आत्मन्यनैकान्तिकः । अतो **बाह्येन्द्रिय**पदम् ।

बाह्येन्द्रियग्राह्यगुणाधारत्वादित्युक्ते योगिबाह्येन्द्रियग्राह्यगुणाधिकरणपरमाणौ व्यभिचारः, तन्निरासार्थ**मस्मदादिपदमिति ।**

॥ प्रकरणसमस्य पुरुषापेक्षया हेत्वाभासत्वोक्तिः ॥

ननु अनुमानस्याङ्गद्वयं व्याप्तिः पक्षधर्मता चेति । तस्योभयत्रापि विद्यमानत्वेन प्रामाण्ये कथं हेत्वाभासतेत्याशङ्क्य, द्वयोस्तावत् प्रामाण्यं नास्ति । वस्तुनि विकल्पानुपपत्तेः । नापि द्वयोः अप्रामाण्यम् । नित्यत्वानित्यत्वहीनपदार्थासंभवात् । अतश्चैकतरस्यैव प्रामाण्यम् । तद्यो न समर्थयितुं शक्नोति तत्पुरुषविशेषापेक्षया हेत्वाभासत्वम् । यः शक्नोति तदपेक्षयाऽहेत्वाभासत्वम् । एवमत्रापीत्यभिसन्धायाह—**स खल्विति ।** 228
यद्वा वस्तुनि विकल्पानुपपत्तेरन्यतरा(नु)प्रामाण्ये सत्यसिद्धावन्तर्भावात् न पृथक् हेत्वाभासतेत्याशङ्क्याह—स खल्विति ।

यथा परं प्रत्यसिद्धं हेतुं यः समर्थयितुमसमर्थः तदपेक्षयान्यतरासिद्धो हेत्वाभासो भवति । एवमन्यतरं यः समर्थयितुं न शक्नोति तदपेक्षया हेत्वाभास इत्यर्थः । अथवा यन्मते नित्यमाकाशं तं प्रत्यनित्यत्वहेतुः हेत्वाभासोऽपरं प्रत्यपरो(यथा शब्दस्यामूर्तत्वादित्येको)ऽन्यतरासिद्ध इति ।

॥ उदाहरणलक्षणम् ॥

हेतुप्रसङ्गेन हेत्वाभासानुक्त्वोदाहरणाख्यमवयवमाह—**सम्यक् दृष्टान्ताभिधानमिति ।** सम्यगुदाहरणमित्युक्ते हेत्वादावतिव्याप्तिः । तदर्थं दृष्टान्तपदम् । एवमप्युक्ते दृष्टान्तपदार्थस्यानभिहितस्य परार्थानुमाने उदाहरणता स्यात् । तदर्थमभिधानपदमिति । उदाहरणविशेषलक्षणं कथयितुं विभागमाह—तद्द्विविधमिति । 231

॥ उदाहरणद्वैविध्यम् ॥

कथं द्वैविध्यमित्यत आह—**साधर्म्यवैधर्म्यभेदादिति ।** लक्षणमाह **तत्रेति ।** दृष्टान्ताभिधानं साधर्म्योदाहरणमित्युक्ते वैधर्म्योदाहरणमपि स्यात् । तदर्थमन्वयपदम् । एवं वैधर्म्योदाहरणे व्यतिरेकपदं साधर्म्योदाहरणव्यवच्छेदार्थम् । उदाहरणस्योदाहरणे स्यादनवस्था । तथापि शिक्षार्थं

दर्शयति । दृष्टान्तभासान्निरूपयितुं प्रसङ्गमाह—**एतेनेति** । एतेन उदाहरण-लक्षणेन, तदाभासानामनुदाहरणत्वमुक्तं भवतीत्यर्थः । उदाहरणाभासानां लक्षणमाह—**उदाहरणलक्षणरहिता** इति । 231

॥ उदाहरणाभासलक्षणम् ॥

अत्रोदाहरणवदवभासमानत्वं लक्षणम् । उदाहरणलक्षणरहितत्वं स्वरूपसङ्कीर्तनम् । यथा ब्राह्मणवदवभासमान इत्युक्ते जात्यन्तरं प्रतीयते । न ब्राह्मणापेक्षया सादृश्यम् । यत्रापि चैत्रभट्टो मैत्रभट्टवद्दृष्ट इति प्रयोगः तत्राप्यवान्तरजातिविवक्षया, न तु ब्राह्मणत्वविवक्षयेति । एवं हेत्वाभास-लक्षणेऽपि ज्ञेयम् । तत्र व्यावर्त्यं तु पक्षविकासार्थमुक्तमिति ।

॥ उदाहरणाभासानामुदाहरणानि ॥

उदाहरणभेदानामुदाहरणानि दर्शयितुं विभागमाह—**स चानेकप्रकार** इति । नन्वनेकप्रकारकथने ग्रन्थगौरवं स्यादित्यत-आह—**तथाचानित्यं मनो मूर्तत्वादित्येतस्मिन्निति** । [1]परमाणौ मूर्तत्वं विद्यते अनित्यत्वं न विद्यत इति साध्यवैकल्यम् । कर्मण्यनित्यत्वं विद्यते मूर्तत्वं तु नास्तीति साधनवैकल्यम् । आकाशे मूर्तत्वमनित्यत्वं च नास्तीत्युभयवैकल्यम् । खपुष्प-स्याभावादाश्रयहीनत्वम् । व्याप्तिमनुच्चार्य दृष्टान्ताभिधानमव्याप्त्यभिधानम् । यदनित्यं तन्मूर्तमित्यभिधाने त्वनित्यत्वं साधनमित्युक्तं स्यात् । तथा च विपरीतव्याप्त्यभिधानमिति । एतौ वचनदोषाविति । अव्याप्त्यभिधानविपरीत-व्याप्त्यभिधानलक्षणौ वचनदोषौ । 231

॥ वचनदोषस्य अर्थदोषात्पार्थक्यम् ॥

अत्र वचनदोषत्वेनोदाहरणाभासता नार्थदोषेण असत्यप्यर्थदोषे चरितार्थत्वादिति । यद्यपि दृष्टान्तवचनमुदाहरणमिति तदाभासाः सर्वेऽपि वचनदोषाः । तथापि साधनविकलत्वाद्युपजीवनेन ते वचनदोषाः नान्यथे-

---

1. सूत्रोक्तोदाहरणाभासेषु साधनवैकल्यादिकं क्रमेणोदाहरति

पृष्ठ

त्यर्थदोषा इति सन्तोष्टव्यम् । अव्याप्त्यभिधानादिः साक्षाद्वचनदोष एव साधनविकलत्वा[द्यनु](द्यु)पजीवित्वादिति । एवं व्यतिरेक्युदाहरणाभासेऽप्य-व्याप्त्यभिधानविपरीतव्याप्त्यभिधानयोर्ज्ञेयमिति ।

|| मतान्तरेणोदाहरणप्रदर्शनम् ||

मतान्तरेणोदाहरणं दर्शयति—**अन्ये त्विति** । सन्दिग्धं साध्यं 234
यस्मिन्नसौ सन्दिग्धसाध्यः विवक्षितराजपुरुषे महाराज्यकरणं सोमवंशोत्पन्न्वं सन्दिग्धमिति सन्दिग्धसाध्यः । रथ्यापुरुषे त्वसन्दिग्धमसर्वज्ञत्वमिति । (रागादिमत्त्वमसर्वज्ञत्वमिति) रागादिमत्त्वं सन्दिग्धमिति सन्दिग्धसाधनः । [1]अपरिचिते देवदत्ते समुपार्जितशुक्लधर्मत्वं स्वर्गगमनं चोभयमपि(मिति) सन्दिग्धमिति(मपि)सन्दिग्धोभयः भविष्यद्देवदत्तपुत्रे सम्भवाभावयोः प्रमाणं नास्तीति सन्दिग्धाश्रयः । एवं व्याख्यानं व्यतिरेक्युदाहरणाभासेषु च
बोद्धव्यमिति । 234

|| उपनयनिरूपणम् ||

**दृष्टान्ते प्रसिद्धाविनाभावस्येति** । अत्र वचनमुपनय इत्युक्ते प्रतिज्ञादिवचनेऽतिव्याप्तिः । अतो व्याप्तिख्यापकमिति, व्याप्तिख्यापकं वचनमुपनय इत्युक्ते यत् कृतकं तदनित्यमिति वचनेऽतिप्रसक्तिः । तन्निराकरणाय पक्ष इति । पक्षे व्याप्तिख्यापकं वचनमुपनय इत्युक्ते, कस्येति साकाङ्क्षता स्यात् । तन्निरासार्थं साधनस्येति । साधनस्य पक्षे व्याप्तिख्यापकं वचनमुपनय इत्युक्ते दृष्टान्ताभासनिष्ठसाधनस्य पक्षे व्याप्तिख्यापकं वचनमुपनयः स्यात् । तन्निरासार्थं दृष्टान्ते प्रसिद्धाविनाभावस्येति । एवमप्युक्ते विमतं नित्यं कार्यत्वात् , यत् कार्यं तदनित्यं कार्यत्वात् । इदं च कार्यमिति दृष्टान्तानभिधानपूर्वकवाक्ये व्यभिचारः, दृष्टान्ते प्रसिद्धाविनाभावसाधनं पक्षेऽस्तीति वाक्ये वा । तन्निरासार्थं दृष्टान्तोपमानेनेति पदम् । द्वौ नञौ प्रकृतमर्थं गमयत इति

1. सन्दिग्धोभयो यथा गमिष्यत्ययं विवक्षितः पुरुषः स्वर्गं समुपार्जितशुक्लधर्मत्वात् अपरिचितदेवदत्तवत् इति मूलपाठाभिप्रायेणाह—अपरिचितेति

पृष्ठ

न्यायेन साधर्म्योपनयवैधर्म्योपनययोरर्थभेदासंभवेऽपि वृद्धव्यवहारे प्रयोगभेदादुदाहरणद्वयं कथनीयमिति विभागपुरस्सरमाह—**तथाचेति ।** 235

॥ निगमनम् ॥

अनुमानावयवचतुष्टयमुपपाद्य पञ्चमावयवलक्षणमाह—**उपनयानन्तरमिति ।** 239 वचनं निगमनमित्युक्ते हेतुवचनमपि निगमनं स्यात् , तन्निरासार्थं प्रतिज्ञापदम् । केवलप्रतिज्ञावचनेऽतिव्याप्तिनिरासार्थं वद्ग्रहणम् । सहेतु प्रतिज्ञावचनं निगमनमित्युक्ते नित्यः शब्दः कृतकत्वादिति वचनेऽतिप्रसक्तिः तन्निवारणार्थमुपन**यानन्तरमिति ।** उपनयानन्तरं प्रतिज्ञावचनं निगमनमित्युक्ते तथा चायं कृतकोऽयमनित्य इति वाक्ये व्यभिचारः तन्निरासार्थं **सहेतुकमिति ।** निगमनलक्षणस्यासिद्धिपरिहारार्थमुदाहरणमाह—**तस्मादनित्य एवेति ।**

॥ उपनयस्य वैयर्थ्यशङ्कापरिहारः ॥

**ननु दृष्टान्तेन हेतोर्व्याप्तिः** प्रतिपादिता, उपनयेन व्याप्तस्य पक्षधर्मता, अतश्चाङ्गद्वयस्य सिद्धत्वान्निगमनस्य वैयर्थ्यमित्यत आह—**नचेदमिति ।** तत्र हेतुमाह—**साध्यविरुद्धेति ।** साध्येन विरुद्धं साध्यविरुद्धं । साध्यविरुद्धस्याभावः साध्यविरुद्धाभावः । तत्प्रतिपादकं यत्प्रमाणं तर्कः तत्सूचकत्वादस्य निगमनस्य सार्थक्यमित्यर्थः । साध्ये विरुद्धप्रतिपादकप्रमाणाभाव(।)-सूचकत्वादिति । तर्कस्तु सुगमः ।

॥ साध्यविरुद्धाभावसूचनफलकथनम् ॥

**ननु तत्सूचकत्वेनापि किं स्यादत आह—न च तदन्तरेणेति ।** 240
अयं भावः । द्विधा हि साध्यसिद्धिः साधकभावात् बाधकाभावाच्च । यत्र पुनर्व्याप्तिपक्षधर्मताबलोपेतं लिङ्गं साधकमभूत् । तथापि बाधकप्रमाणानिरासे साध्यं न सिद्ध्यतीति तत्सूचनार्थं निगमनमिति । तस्मादनित्यएवेत्यादिनिगमनेन यथा साध्यविरुद्धाभाव**प्रतीतिः तथा दृष्टान्तोपनयाभ्यां न** भवतीति तस्यैव सूचकत्वम् ।

पृष्ठ

॥ उक्तार्थे सूत्रसम्मतिः ॥

उक्ते पक्षे(दक्षे) सूत्रसम्मतिमाह—**तथाचोक्तमिति।** स्वपक्षप्रमाणं 240
पर्यालोच्य परपक्षे प्रमाणाभावं पर्यालोच्य योऽर्थनिश्चयो जायते स निश्चय इत्यर्थः। एवं निगमनस्य सार्थक्यमभिधाय नैरर्थक्ये बाधकमाह—**निगमनाभिधानमिति।** निगमनाभिधानमसाधनाङ्गमभ्युपगम्य यः साध्यं साधयितुं प्रवर्तते, तस्य स्वपक्षबाधकप्रमाणाभ्युपगमः प्रसज्यते, बाधकप्रमाणमभ्युपगच्छतश्च निग्रहस्थानं प्रसज्यत इत्यर्थः। निगमनानभ्युपगमे कथं बाधकप्रमाणाभ्युपगम इत्यत आह—**निगमनार्थत्वात् बाधकस्येति।** निगमन- 241
स्यार्थः प्रयोजनं बाधकनिरसन**मित्यर्थः।** यदा च निरासकनिरसनाङ्गीकारानभ्युपगमस्तदा बाधकप्रमाणानिरासः इति भावः।

॥ बौद्धस्य निगमनानङ्गीकारे निग्रहस्थानप्राप्तिः ॥

अथवा **निगमनाभिधानमसाधनाङ्गमभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो** वादिनो **निग्रहस्थानं प्रसज्यते(ततो) निगमनार्थत्वाद्बाधकस्येति** निगमनावयवार्थो हि परपक्षे बाधकम्। कारणानङ्गीकारे फलाङ्गीकारे च निग्रहस्थानं प्रसज्यत इति। तस्मादनित्य एवेति वादिनोपसंहारे परवादिनो दूषणदानावसरे दत्ते दूषणं बाधकं वक्तव्यम्। निगमनाभिधानं विना बाधककथने त्वप्राप्तकालं निग्रहस्थानं भवतीति भावः।

॥ निग्रहस्थानप्रसञ्जनम् ॥

निग्रहस्थानप्रसङ्गं प्रतिपादयति—**निगमनार्थविप्रतिपत्तौ हीति।** तस्मादनित्य एवेत्यादि निश्चयो निगमनार्थः। तत्र विप्रतिपत्तौ सत्यां बाधकप्रमाणोपन्यासो युक्तः। प्राप्तकालत्वात्, युक्त इति पदेनान्यथाऽप्राप्तकालत्वं द्योतितम्। उक्तेऽर्थे दृष्टान्तमाह—**हेत्वर्थविप्रतिपत्ताविति।** हेतूपन्यासे 241
सति हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासो युक्तो नादावेव। तथेहापीत्यर्थः।

पृष्ठ

॥ निगमनाभ्युपगमे कारणान्तरम् ॥

अथवा निगमनाभ्युपगमे हेत्वन्तरमाह—**निगमनार्थविप्रतिपत्ता-** 241
**विति** । निगमार्थे, तस्मादनित्य एवेत्यादिनिश्चये विप्रतिपत्तौ सत्यां यद्य-नित्यो न स्यात् तर्हि कृतकोऽपि न स्यात् इति बाधकोपन्यासो युक्तो दृश्यते । (तदर्थविप्रतिपत्तौ बाधकोपन्यासो युक्तः । तत्साधकं) यथा—विमता पृथिवी सकर्तृका, कार्यत्वात्, कुम्भवदिति । अत्र हेत्वर्थविप्रतिपत्तौ, पृथिवी कार्या सावयवत्वात कुम्भवदिति प्रमाणोपन्यासेन हेतुसार्थक्यमित्यर्थः ।

॥ परार्थानुमानस्य परमन्यायत्वेन प्रशंसा ॥

ननु, द्विविधमनुमानं—स्वार्थं परार्थंच, तत्र परार्थमनुमानमेव किमिति
प्रपञ्चितमित्यत आह—**सोऽयं परमो न्याय इति**—कथमयं परम इत्यत 242
आह—[ विप्रतिपन्नेति । ]

॥ कथालक्षणम् ॥

ननु किंलक्षणा कथेत्यत आह—**वादिप्रतिवादिनोरिति** । कौतूहलनिमित्तपक्षप्रतिपक्षपरिग्रहस्य कथात्वव्यवच्छेदार्थं **वादिप्रतिवादिनो-रिति** । [तावति]उक्ते साकाङ्क्षता स्यात् । तन्निवृत्त्यर्थं—**पक्षप्रतिपक्षे इति** ।

॥ कथाविभागः ॥

कथाविशेषलक्षणं कर्तुं विभागमाह—**सा द्विविधेति** । वीतरागकथा-यास्तत्त्वबोधफलत्वेन पूज्याभ्यर्हितत्वादादौ निर्देशः । यथाविनियोगं लक्षणमाह—**यत्रेति** । यस्यां कथायां प्रारभ्यमाणायां वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं स्वपक्षे साधनं परपक्षे चोपालम्भं करोति सा वीतरागकथेत्यर्थः । वीतरागो यां कथां विजिगीषुणापि करोति तत्रातिव्याप्तिव्यवच्छेदार्थं**मेव-कारः** । वीतरागश्चेत् वीतरागेण करोतीत्यसम्भवपरिहाराय **तत्त्वनिर्ण-यार्थमिति** ।

पृष्ठ

॥ वीतरागकथायाः वादसंज्ञयैव प्रसिद्धिः सूत्रसम्मतिश्च ॥

लक्षणान्तरमाह—**वादसंज्ञयैवेति** । या कथा वादसंज्ञयैवोच्यते, 242
सा वीतरागकथेत्यर्थः । वादसंज्ञा विजिगीषुकथायामप्यस्तीति तद्व्यवच्छेदार्थमेवकार इति । वीतरागकथा वादसंज्ञयैवोच्यते इत्यत्र लक्षकं वादलक्षणपरं सूत्रमुदाहरति—**तथाचोक्तमिति** । पक्षप्रतिपक्षपरिग्रहो वाद इत्युक्ते जल्पेऽतिप्रसङ्गः । तद्व्यवच्छेदार्थं **प्रमाणतर्कसाधनोपालम्भ** इति । प्रमाणतर्काभ्यां स्वपक्षसाधनं समर्थनं प्रमाणतर्काभ्यां परपक्षोपालम्भो दूषणमित्यर्थः । अत्र प्रमाणतर्काभ्यामेव साधनोपालम्भाविति ज्ञेयम् । अन्यथा
जल्पपरा कथा स्यादिति । **सिद्धान्ताविरुद्ध** इत्यादिपदं शिक्षार्थम् । सिद्धान्ता- 243
विरुद्धो वादः कर्तव्यः । न तु शुष्कतार्किकवदीश्वरस्य शरीरित्वाभ्युपगमेनेत्यर्थः ।

॥ पञ्चावयवत्वस्य प्रकारविशेषः ॥

तत्राद्यं स्वपक्षसाधनं, साधनसमर्थनं, प्रतिपक्षसाधनदूषणं दूषणसमर्थनं अपशब्दादिवर्जनमिति पञ्चावयवाः तदुपेतो वादः कर्तव्य इत्यर्थः । अथवा पञ्चावयवानुमानोपेतो वादः कार्यः । न तु द्विन्यवयवापेत इत्यर्थः ।

॥ वादद्वैविध्यम् ॥

वादो द्विविधः-प्रतिपक्षयुतः तद्रहितश्चेति । अस्मिन्नर्थे सूत्रं योजयति—
**तं प्रतिपक्षहीनमपि वा कुर्यादिति** प्रतिपक्षहीनो वादो न दृष्ट इति सूत्रव्या- 245
ख्यानव्याजेन परिहरति—**यथा शिष्यो गुरुणा सह प्रश्नद्वारेणैवेत्यर्थः ।**
विजिगीषुकथाप्युभयविजिगीषुकथैकतरविजिगीषुकथेति द्विविधा ।

॥ विजिगीषुकथालक्षणम् ॥

यथाक्रमेण लक्षणमाह—**यत्रेति । विजिगीषुर्विजिगीषुणा सह** यत्र साधनोपालम्भौ करोति सा विजिगीषुकथेत्यन्वयः । फलमाह—**लाभेत्यादिना ।** अप्राप्तोपार्जनं लाभः पूजावस्त्रादिकम् । ख्यातिःकीर्तिः ।

आत्मनो जयः परस्य पराजयः, तदर्थं प्रवर्तत इति। विजिगीषुणा सह साधनोपालम्भौ करोति सोभयविजिगीषुकथेति लक्षणम्। लाभपूजाद्यन्यतमफलायोभयविजिगीषुकथेति वादलक्षणम्।

॥ एकतरविजिगीषुकथालक्षणम् ॥

एकतरविजिगीषुकथां लक्षयति—**वीतरागो वेति**। यत्र वीतरागो 245
विजिगीषुणा सह साधनोपालम्भौ करोति सैकतरविजिगीषुकथेत्यर्थः। ननु वीतरागश्चेत्, कथं विजिगीषुणा कथां करोतीत्यसंभवपरिहारायाह—**परानुग्रहार्थमिति**। विजिगीषुकथायाः सामान्यलक्षणमाह—**सा चतुरङ्गेति**। 246

॥ कथायाः चतुरङ्गत्वोपपादनम् ॥

अङ्गानि दर्शयति—**वादीति**। वादी च प्रतिवादी च, सभापतिश्च प्राश्निकश्च वादिप्रतिवादिसभापतिप्राश्निकाः, त एवाङ्गानि यस्याः। सा तथोक्ता, वादिप्रतिवाद्यङ्गेत्युक्ते वीतरागकथायामतिव्याप्तिः। तदर्थं सभापतिप्राश्निकग्रहणम्। सभापतिप्राश्निकाङ्गेत्येतावन्मात्रोक्तावसम्भवः। तदर्थं वादिप्रतिवादिग्रहणमिति।

॥ जल्पवितण्डयोर्लक्षणं विजिगीषुकथान्तर्भावश्च ॥

ननु सा द्विविधा—वीतरागकथा—विजिगीषुकथेत्युक्तम्। तन्न, सा चतुर्विधा; वीतरागकथा, विजिगीषुकथा, जल्पकथा, वितण्डाकथा चेति वक्तव्यम्। जल्पे वितण्डायां च कथात्वप्रसिद्धेरविशेषादित्याशङ्क्याह—**सा जल्पवितण्डासंज्ञोक्तेति**। विजिगीषुकथाकेनचिदाकारेण जल्पवितण्डासंज्ञाभ्यामुक्तेत्यर्थः। जल्पवितण्डासंज्ञोक्ता विजिगीषुकथा वीतरागेण परानुग्रहार्थं ज्ञानाङ्कुररक्षणार्थं कर्तव्येत्यत्र सूत्रं प्रमाणयति—**तथाचाहेति**। 247
**आत्मतत्त्वाध्यवसायसंरक्षणार्थं** शिष्यतत्त्वाध्यवसायसंरक्षणार्थं वा जल्पवितण्डे कथे वीतरागेणापि कर्तव्ये शाल्यादिबीजोत्पत्तिसंरक्षणार्थं कण्टकस्कन्धाद्यावरणवत्। अन्यथा कोमलं ज्ञानं सन्देहादिना नश्यतीति सूत्रार्थः।

पृष्ठ

॥ जल्पलक्षणम् ॥

तत्र जल्पलक्षणमाह—**यथेति** । यथोक्तेन लक्षणेनोपपन्नो वादः । 247
छलजातिनिग्रहस्थानानि साधनोपलम्भो जल्प इत्यन्वयः । प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रहो वादः, छलजातिनिग्रहस्थानैः साधनोपालम्भः स जल्पलक्षणमनुभवतीत्यर्थः ।

॥ वितण्डालक्षणम् ॥

वितण्डालक्षणमाह—**स इति** । स जल्पः पक्षप्रतिपक्षस्थापनहीनो 248
वितण्डेत्यर्थः । पक्षप्रतिपक्षस्थापनहीनो वितण्डेत्युक्ते गुरुशिष्यवादेऽतिव्याप्तिः स्यात् । तन्निरासार्थं **स** इति पदम् । स वितण्डेत्युक्ते जल्पवितण्डाशब्दयोः पर्यायत्वं स्यात् । तन्निरासार्थं **प्रतिपक्षस्थापनाहीनो वितण्डेति** ।

॥ छललक्षणम् ॥

छलस्य तावल्लक्षण माह—**वचनविघात इति** । वचनविघातः 250
छलमित्युक्ते प्रतिज्ञाहान्यादावतिव्याप्तिः । तन्निरासार्थम**र्थविकल्पोपपत्त्येति** पदम् । अर्थविकल्पो विरुद्धत्वं तदुपपत्त्येत्यर्थः । अर्थविकल्पोपपत्त्याच्छलमित्युक्ते साकाङ्क्षता स्यात् । तन्निरासार्थं **वचनविघात** इति ।

॥ छलत्रैविध्यम् वाक्छललक्षणं च ॥

छलविशेषणं कर्तुं विभागमाह—**तत् त्रिविधमिति** । वाक्छलस्य लक्षणमाह—**अविशेषाभिहित इति** । अर्थान्तरकल्पना वाक्च्छलमित्युक्ते परवाद्यभिप्रेतार्थान्तरकल्पनापि वाक्छलं स्यात् । तन्निरासार्थं **वक्तुरभिप्रायादिति** । एवमप्युक्ते सामान्यछलादावतिव्याप्तिः । तदर्थं **अविशेषाभिहित** इति ।

अस्योदाहरणं—**नवकम्बल इति** । नवः कम्बलोऽस्येति, नवकम्बला 251
अस्येति वा, समाससम्भवादविशेषाभिहितत्वमुदाहरणे बोद्धव्यम् । छलवादिनो दूषणमाह—**तस्येति । अप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यमिति** । अत्र हेतुमाह—**नवः कम्बलोऽस्येति वक्तुरभिप्रायापरिज्ञानादिति** ।

पृष्ठ

अभिप्रायापरिज्ञानस्य सन्दिग्धत्वशङ्कया हेत्वन्तरमाह—**उत्तरेति** । तस्यापि सन्दिग्धत्वाशङ्कया विप्रतिपत्तिलक्षणनिग्रहस्थानमाह—**विप्रतिपत्तिर्वेति** । अत्र हेतुमाह—**विपरीतपरिज्ञानादिति** । तत्र यद्यन्यतरनिग्रहस्थानं देश-कालादिलिङ्गेन वक्तव्यमित्यर्थः ।

॥ सामान्यच्छललक्षणम्

सामान्यच्छलस्य लक्षणमाह—**सम्भवतोऽर्थस्येति** । सम्भावनयो- 251
क्तार्थस्य अतिसामान्ययोगात् । अतीत्य सामान्ययोगोऽतिसामान्ययोगः व्याप्तियोगः । तस्मादसद्भूतार्थकल्पना अविद्यमानार्थकल्पना सामान्यच्छल-मित्यर्थः । असद्भूतार्थकल्पना वाक्छलेऽप्यस्तीति तद्व्यवच्छेदार्थं **सम्भवतो-ऽर्थस्येति** । सम्भवतोऽर्थस्यासद्भूतार्थकल्पना कथं भवतीत्यत आह—**अतिसामान्ययोगादिति** । यद्वा, अतिसामान्ययोगादित्यस्यायमर्थः । अतीत्य हेतोर्विपक्षयोगोऽतिसामान्ययोगः । तस्मादसद्भूतार्थकल्पना सामान्य-साध्यछलमित्यर्थः । अत्रापि व्यावर्त्यं पूर्ववत् । अस्योदाहरणं स्पष्टम् ।

॥ उपचारच्छललक्षणम् ॥

उपचारच्छलस्य लक्षणमाह—**उपचारप्रयोग** इति । मुख्यार्थकल्प-नया प्रतिषेधो वाक्छलेऽप्यस्तीति तदर्थ**मुपचार** इति पदम् । वाक्छले नवकम्बलशब्दस्योभयथा समाससंभवादुपचारप्रयोगाभावात् । उपचार-प्रयोगे प्रतिषेधः उपचारछलमित्युक्ते यत्र मुख्यार्थकल्पनं विना हेत्वन्तरेण प्रतिषेधः तत्रापि छलव्यवहारः स्यात् । तद्व्यवच्छेदार्थं **मुख्यार्थकल्पनयेति** पदम् । अस्योदाहरणं स्पष्टमिति ।

॥ जातिलक्षणम् ॥

जातेर्लक्षणमाह—**प्रयुक्ते हेताविति** । प्रसङ्गः प्रतिषेधः, स च भ्रान्तप्रत्यक्षादावस्ति । नच तस्या जातित्वमिति प्रयुक्ते हेताविति । प्रयुक्ते हेतौ प्रतिषेधोऽसिद्धत्वादिर्भवति । न चासौ जातिः तद्व्यवच्छेदार्थं **समीकर-**

पृष्ठ

**णाभिप्रायेणेति ।** न ह्यसिद्धत्वादीनां प्रयोगः समीकरणाभिप्रायेण । किन्तु परपक्षनिराकरणायेति ।

॥ निग्रहस्थानलक्षणम् ॥

निग्रहस्थानं लक्षयति—**पराजयनिमित्तमिति ।** पराजयो भङ्गः 254
तत्र यदसाधारणं निमित्तं, तन्निग्रहस्थानमित्यर्थः । सूत्रकारस्याप्येषां जातिनिग्रहस्थानभेदानां निरवशेषाणामनभिधानहेतुं ब्रुवन् प्रघट्टकसङ्गतिमाह—**बह्वश्चेति ।** तेषामिति निर्धारणे; तेषां भेदानां मध्य इत्यर्थः ।

॥ साधर्म्यवैधर्म्यसमौ ॥

साधर्म्यवैधर्म्ययोर्जातिभेदयोर्लक्षकं सूत्रमाह—**साधर्म्यवैधर्म्या-** 255
**भ्यामिति ।** साधर्म्यं समानधर्मत्वं, वैधर्म्यं असमानधर्मत्वं, ताभ्यां पक्षे साधर्म्यस्योपसंहारे सति तद्धर्मविपर्ययोपपत्तेरिति । साध्यधर्मविपर्ययोपपत्तेः । यत्र प्रत्यवस्थानं जायते, तौ साधर्म्यवैधर्म्यसमौ द्वौ जातिभेदौ भवत इति सूत्रार्थः । साधर्म्यमात्रेण सामान्यापादनं साधर्म्यसम इति लक्षणं ज्ञेयम् ।

॥ अनयोरुदाहरणम् ॥

जातिद्वयस्योदाहरणं क्रमेण दर्शयति—**यथेति । विशेषाभावादिति ।** यद्यनित्यसाधर्म्यादनित्यत्वं तर्हि नित्यसाधर्म्यान्नित्यत्वं किं न स्यात् । विशेषाभावादित्यर्थः ।

॥ अनयोः समयोरुत्तरम् ॥

परिहारत्वेन सूत्रं योजयति—**अनयोरुत्तरमिति ।** सूत्रं पठति— 256
**अविनाभाविन इति**—यदि साधर्म्यवैधर्म्यमात्रस्य साधकत्वमङ्गीकुर्महे । तर्हि स्यादेवम् । न त्वेतदस्ति । अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युपगमात् विशेषात् अप्रतिषेधोऽयं धूमादिवत् । यथा पर्वतो वह्निमान् धूमवत्त्वादित्युक्ते यद्यग्निमत्त्वसाधर्म्याद्धूमवत्वादग्निमानिष्यते, तर्हि अनग्निमत्त्ववैधर्म्यात् प्रदेशान्तरवत् वृक्षवत्त्वादनग्निमान् किं नेष्यत इति प्रसङ्गादेव

धूमाद्यनुमानप्रलयो न भवति। प्रलये च अग्न्यर्थिना धूमज्ञानात् प्रवृत्त्यादिव्यवहारो न स्यात्। स तु दृश्यते, अतो धूमानुमानप्रामाण्यम्, एवमत्रापीत्यर्थः।

॥ उत्कर्षसमादीनां लक्षणानि ॥

उत्कर्षादीनां लक्षकं सूत्रमाह[1]—**साध्यदृष्टान्तयोरिति**। अत्र 256
साध्यशब्देन पक्ष उच्यते। साध्यदृष्टान्तयोर्धर्मविकल्पाद्धर्मवैचित्र्यादुत्कर्षापकर्षविकल्पसमास्त्रयो जातिभेदा भवन्ति। उभयसाध्यत्वापादनात् साध्यसमो भवतीति ज्ञेयम्।

॥ उत्कर्षापकर्षसमयोर्लक्षणे ॥

सूत्रव्याख्यानमुखेनोत्कर्षापकर्षयोर्लक्षणमाह—**साध्ये दृष्टान्तादिति**। 257
अनिष्टधर्मप्रसङ्ग उत्कर्षसम इत्युक्ते दृष्टान्तेऽप्यनिष्टधर्म उत्कर्षसमः स्यात्। तदर्थं साध्य इति। साध्ये अनिष्टधर्मप्रसङ्ग उत्कर्षसम इत्युक्ते प्रतिज्ञाहान्यादिकः स्यात्। तदर्थं दृष्टान्तपदम्। अपकर्षसमलक्षणे साध्ये दृष्टान्तादिति पदद्वयमनुवर्त्यम्। व्यावर्त्यं तु पूर्ववत्। व्यवस्थितधर्मसाम्येन प्रत्यवस्थानं विकल्पसमः। उभयसाम्ये साध्यत्वसाम्येन प्रत्यवस्थानं साध्यसम इति लक्षणं ज्ञेयम्।

॥ उत्कर्षसमोदाहरणम् ॥

तत्रोत्कर्षसमस्योदाहरणमाह— **यदि कृतकत्वात् घटवदनित्यः शब्दस्तर्हि घटवदेव सावयवः स्यात् इति**। एतदेव व्यतिरेकमुखेनोपपादयति—**अथ नैवं अनित्योऽपि तर्हि न स्यादविशेषादिति**। अपकर्षसमस्योदाहरणमाह—**अश्रावणश्च घटो दृष्ट इति**।

---

1. सूत्रमिदं वर्ण्यावर्ण्यपदाघटितं, वर्ण्यावर्ण्यसमोदाहरणवाक्यरहितञ्च साध्यसमाद्युदाहरणप्रदर्शकवाक्यं केषुचित्कोशेषु दृश्यते। तदनुसारेणेदं व्याख्यानं बोध्यम्।

पृष्ठ

॥ विकल्पसमोदाहरणम् ॥

विकल्पसमस्योदाहरणमाह—**अथ विकल्पसमः** कृतकत्वे समानेऽपि 257
शब्दघटयोर्यथा मूर्तामूर्तत्वादिधर्मविकल्पः । शब्दोऽमूर्तो घटो मूर्त इति व्यवस्था । तथा नित्यः शब्दः अनित्यो घट इति व्यवस्था किं न स्यादित्यर्थः ।

॥ साध्यसमोदाहरणम् ॥

साध्यसमस्योदाहरणमाह—**अथ साध्यसम इति ।** यदि कृतक- 258
त्वात् साध्यदृष्टान्तयोरनित्यत्वं तर्हि साध्यत्वमप्यनयोः स्यादित्यर्थः । यदि घटस्य कृतकत्वादनित्यत्वं न साध्यते, तर्हि शब्दस्यापि न साधनीयमित्याह—**न वेति ।** परिहारत्वेन सूत्रमवतारयति—**एतेषामुत्तरमिति ।** तदुदाहरति—**किं चित्साधर्म्यादिति ।** किं चित्साधर्म्यात् दृष्टान्तसिद्धिर्यदि तर्हि वैधर्म्यात्तदसिद्धिः किं न स्यादिति शङ्कापरिहाराय सूत्रं व्याचष्टे—**किं चित्साधर्म्याद्धूमवत्त्वादिलक्षणादिति।** पर्वतो वह्निमान् धूमवत्त्वादित्यादौ पर्वतमहानसयोः उग्रव्याघ्रलोलव्यालस्फटाटोपफूत्कारगलितविषानलज्वालावलीकबलितत्वादिबालकलीलालालापकबलितत्वादिधर्मवैरूप्ये व्यवस्था दृष्टा । तस्यापलापे लोकादिविरोधः, तद्वदत्रापीत्यर्थः । पर्वतमहानसयोर्व्याघ्रादिमत्त्वधर्मविकल्पेऽपि अग्निमत्त्वे धर्मविकल्पोऽपि न भवति । पर्वते धूमवत्वेनाग्निमत्वस्य साध्यत्वेऽपि महानसे धूमवत्वेनाग्निमत्त्वस्य साध्यत्वं नास्ति । तद्वदत्रापि बोध्यमिति ।

॥ प्राप्त्यप्राप्तिसमयोर्लक्षणम् ॥

प्राप्त्यप्राप्तिसमयोर्जातिभेदयोर्लक्षकं सूत्रमुदाहरति—**प्राप्य साध्य-** 259
**मप्राप्य वेति ।** हेतोरिति पदं पञ्चम्यन्तं, षष्ठ्यन्तं वा, उभयथाप्याञ्जस्येनान्वयाभावात् विभक्तिविपरिणामेनान्वयं करोति—**यद्यं हेतुरिति ।** प्राप्य-साध्यं साधयेदित्यप्राप्य वेति पक्षो ज्ञेयः । तत्राद्ये दूषणमाह—**उभयोरिति ।** उभयोः साध्यसाधनयोः प्राप्त्योः समानत्वात् किं कस्य साध्यं साधनं स्यात् । समानकालयोरङ्गुल्योरिवेत्यर्थः । द्वितीये दूषणमाह—**अप्राप्य वेति ।** काष्ठाग्निवदिति । यथा अप्राप्य काष्ठमग्निः काष्ठसाधको न भवति, तद्वदि-

पृष्ठ

त्यर्थः । प्राप्तिरूपप्रतिषेधेन हेतुसाम्यापादनं प्राप्तिसमः । अप्राप्तिरूपप्रतिषेधेन हेतुसाम्यापादनमप्राप्तिसम इति वोभयोर्लक्षणं ज्ञेयमिति ।

॥ प्राप्त्यप्राप्तिसमयोरुत्तरम् ॥

परिहारसूत्रमवतारयति—**अनयोरुत्तरम्** । सूत्रं पठति—**घटादिनिष्पत्तिदर्शनादिति** । प्राप्य घटादिनिष्पत्तिदर्शनात् । अप्राप्य चाभिचाराच्छत्रुपीडने दृष्टे सति नात्र प्रतिषेध इत्यर्थः । घटं प्राप्य घटनिष्पत्तिर्नास्ति । प्राप्तनिष्पत्तेरसंभवात् । अप्राप्य च शत्रुमरणमभिचारे नास्ति । मन्त्रादिना देवतायास्तत्प्राप्तेरिति शङ्कां परिहर्तुं सूत्रम् । तात्पर्यतो व्याचष्टे—**प्राप्त्यप्राप्त्यविशेषेऽपीति** । प्राप्त्याऽप्राप्त्या वा हेत्वाभासेनाविशेषेऽभिधीयमानेऽपि भोजनस्य तृप्तिसाधनत्वं दृष्टं, तृप्तेश्च भोजनसाध्यत्वमिति प्रतिनियतार्थवृत्तय एवैते साध्यसाधनत्वादयो धर्मा दृष्टाः । ते निराकर्तुमशक्याः । नहि दृष्टेऽनुपपन्नं नाम किंचिदस्ति । अन्यथा सर्वत्र प्रमाणविरोधात्तु कुत्राप्यर्थसिद्धिर्न भवतीत्यर्थः । 259

॥ अनुत्पत्तिसमलक्षणम् ॥

**अनित्यः शब्दः कार्यत्वादित्युक्ते** इति । शब्दोत्पत्तेः प्रागनित्यत्वे कारणासंभवः, कृतकत्व(।)हेतोरसम्भवान्नित्यः प्रसक्तः । सम्भव(त्वा)व्याघातः उत्प[त्ते](त्तिः) पूर्वं, तस्योत्पत्तिरनुपपन्नेत्यर्थः । अनुत्पत्तिसाम्येन प्रति(रो)षेधाभिधानमनुत्पत्तिसम(र्थ) इति लक्षणं ज्ञेयमिति । 261

॥ अनुत्पत्तिसमस्योत्तरम् ॥

परिहारसूत्रमाह—**तथा भावादुत्पन्नस्येति** । उत्पन्नस्यैव शब्दस्य, तथाभावात् नित्यत्वानित्यत्वविप्रतिपत्त्यालम्बनानुभवात् धर्मविप्रतिपत्तौ हि धर्मिग्रहणं कारणं, अनुत्पन्ने शब्दे धर्मिग्रहणाभावात् विप्रतिपत्तेरनुदय इत्यतो नायं प्रसङ्ग इति तत्राक्षरार्थः । अनुत्पन्नेऽप्याकाशादौ धर्मविप्रतिपत्तिः । तद्वदत्रापि स्यादिति विशिष्टाशङ्कां निराकर्तुं सूत्रतात्पर्यार्थमाह—**अनुत्पन्नः**

पृष्ठ

**शब्द एव नास्ति ।** अनुत्पन्नशब्दं पक्षीकृत्य यदाऽनुमानं तदोभयवादि- 262
सिद्धो ध(र्मो)र्मी वाच्यः । स नास्ति । परैस्तथाविधधर्मिणोऽनङ्गीकारादित्यर्थः ।

॥ अहेतुसमलक्षणम् ॥

अहेतुसमलक्षकं सूत्रमुदाहरति—**त्रैकाल्यासिद्धेर्हेतोरिति ।** हेतो- 264
स्त्रैकाल्यासिद्धेरहेतुसमो जातिभेदो भवतीत्यन्वयः । त्रैकाल्यासिद्धिः सर्वहेतूनामस्ति । नहि भूतभविष्यद्वर्तमानकालवर्तित्वं सर्वहेतूनां सम्भवतीत्याशङ्कां निराकर्तुं त्रैकाल्यासिद्धिं व्याचष्टे—**यदि पूर्वं साधनमित्यादिना ।** यदि साध्यपूर्वकाले साधनं तदा शङ्क्यते—असति साध्ये कस्य साधनं? अथ साध्योत्तरकाले, तदाऽविद्यमानं कथं साधनम् । अथ साध्यसमकाल एव साधनं तदा किं कस्य साधनं साध्यं[वा]स्यात् । द्वयोरङ्गुल्योरिव तुल्यकालत्वादित्यर्थः । **हेतोरहेतुत्वापादनेन प्रतिरोधाभिधान**महेतुसम इति लक्षणं ज्ञेयमिति ।

॥ अहेतुसमस्योत्तरम् ॥

परिहारसूत्रमाह—**न हेतुतः साध्यसिद्धे**रिति [1]सूत्राक्षरार्थः । उक्तखण्डनग्रहग्रस्तत्वात् कथं हेतोः साध्यसिद्धिरिति शङ्कानिराकरणाय सूत्रतात्पर्यार्थमाह—**प्रवृत्त्यादिविरोधः** इति । यदि हेतोः साध्यं न सिद्ध्यति तदा इदं भोजनमिष्टसाधनं भोजनत्वात् समानवदित्याद्यनुमानात् प्रवृत्त्यादिव्यवहारो न स्यात । स च दृश्यत इत्यर्थः । व्यवहारोऽपि भ्रान्त इति यो
मनुते तं प्रतीदं सूत्रमाह—**प्रतिषेधानुपपत्तिश्चेति ।** प्रतिषेधस्य प्रतिषेध्य- 265
साधनत्वं वक्तव्यम् । तत्रापि त्रैकाल्यासिद्धेः समत्वात् प्रतिषेधानुपपत्तिरित्यर्थः ।

॥ अत्र निग्रहस्थानप्राप्तिप्रसक्तिः तद्वारणं च ॥

ननु प्रतिषेधानुपपत्तेश्चेति वदतो भवांश्चोर इत्युक्ते त्वमपि चोर इतिवत् [मता]नुज्ञालक्षणं निग्रहस्थानं स्यादित्याङ्कानिरासाय सूत्रतात्पर्यार्थमाह—

---

1. हेतोः साध्यं सिध्यतीति पूरणीयम्

पृष्ठ

**त्रैकाल्यासिद्धेः स्ववचनेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थ** 265
इति। अपवादापवादे सत्युत्सर्गस्य स्थितेरिति न्यायादित्यर्थः।

॥ अविशेषसमलक्षणं उदाहरणं च ॥

अविशेषसमस्य लक्षणं सूत्रमुदाहरति—**एकधर्मोपपत्तेरिति**। 266
कस्यैकस्य धर्मोपपत्तेरविशेष इति साकाङ्क्षत्वात् सूत्रमुदाहरणमुखेन व्याचष्टे—**यदि घटशब्दयोरिति**। अविशेषमात्रेण प्रतिरोधाभिधानमविशेषसमलक्षणम्। इदं तु परिहारसूत्रम् क्वचिद्धर्मोपपत्तेः "क्वचिच्चानुपपत्तेः, प्रतिरोधाभावः" इति, तस्य तात्पर्यं व्याचष्टे—**सर्वथेति**। अविशेषाभिहितेऽर्थे वक्तुरभिप्रायापरिज्ञाने दूषणाभिधानं वाक्छलं स्यात्। तत्परिहारायाभिधानज्ञानार्थं विकल्प्य दूषणमाह—**सर्वथाऽविशेषे इत्यादिना**।

॥ सद्भावोपपत्तेः त्रिधा विकल्प्य दूषणम् ॥

सद्भावोपपत्तेर्हेतोः, सर्वभावानां सर्वथाऽविशेषः साध्यते ? किंवाऽनित्यत्वेन ? किंवा केनचिद्धर्मेण ? नाद्य इत्याह—**सर्वथेति**। न द्वितीय इत्याह—**अनुमानागम इति**। न तृतीय इत्याह—**प्रमेयत्वादिनेति**। यदि घटशब्दयोरेकस्य कार्यत्वस्योपपत्तेरनित्यत्वेनाविशेष इष्यते, सर्वभावानां तद्विशेषः प्रसज्यत इति यदा तर्कस्तदा आपाद्यापादकयोर्व्याप्त्यभावात्तर्काभासत्वं बोद्धव्यमिति।

॥ उपलब्धिसमलक्षणम् ॥

उपलब्धिसमस्य लक्षकसूत्रमुदाहरति—**निर्दिष्टेति**—उक्तस्य हेतोर- 267
भावेऽपि साध्योपलम्भादहेतुरिति यत्र प्रत्यवस्थानं स उपलब्धिसमो जातिभेद इति सूत्रार्थः। अत्रोदाहरणं विनाऽर्थविशेषा[ज्ञाना](साना) दुदाहरणमुखेन सूत्रतात्पर्यार्थमाह—**पृथिव्यादिष्विति**। विमतं सकर्तृकं कार्यत्वात् कुम्भवदिति। अत्र हेतोरसिद्धत्वे शङ्किते, पृथिव्यादिकं कार्यं सावयवत्वात् सन्निहितवदित्यभिहिते, सावयवत्वस्याप्यभावे बुद्ध्यादौ कार्यत्वमुपलब्धम्। अतोऽयं हेत्वाभास इत्युदाहरणार्थः। हेतोरभावे साध्यस्योपलब्ध्या प्र[त्यवस्था)नमुपलब्धिसमलक्षणम्।

पृष्ठ

॥ उपलब्धिसमस्योत्तरम् ॥

परिहारसूत्र[1]माह— **सपक्षैकदेशस्यापीति** । सपक्षैकदेशवर्तमानस्यापि धूमादेर्गमकत्वदर्शनान्नायं प्रतिषेध इति सूत्रार्थः । सावयवत्वाभावे कथं बुद्ध्यादेः कार्यत्वमिति शङ्कामुत्तरसूत्रमवतारयितुं करोति—**कथं-तर्हीति** । सूत्रं पठति—**कारणान्तरादपीति** । कारणान्तरपदस्य तद्धर्मपदस्य चानिश्चितार्थत्वाद्व्याचष्टे—**प्रमाणान्तरादपीति** । प्रमाणं दर्शयति—**प्रमाणं चेति** । बुद्ध्यादिकं कार्यं, अनुपलब्धिकारणे(त्व)[ष्व]-सत्सु प्रागूर्ध्वं चानुपलभ्यमानत्वात् घटवदित्यर्थः । प्रागूर्ध्वं चानुपलभ्य-मानत्वादित्युक्ते गोत्वादिसामान्ये व्यभिचारः । गोत्वादिसामान्यानां तद्व्यक्तेः प्रागूर्ध्वमनुपलम्भात्तेषां व्यक्त्यभिव्यङ्ग्यत्वात् तन्निरासार्थमनुपलब्धिकारणे-(धर्मश्र)[ष्वसत्सु इ]ति पदम् । प्रागूर्ध्वशब्दौ व्यवहारापेक्षया प्रवृत्तौ, न तूत्पत्तिविनाशापेक्षया, येन प्रागूर्ध्वं चानुपलम्भादिति हेतुः साध्यसिद्धेः सिध्यतीति परस्पराश्रयत्वं स्यादिति । 268

॥ अनुपलब्धिसमलक्षणम् ॥

अनुपलब्धिसमजातिभेदस्य लक्षकं सूत्रमुदाहरति—**तदनुपल-ब्धेरिति** । तच्छब्दद्वयस्यार्थाप्रतीतेः सूत्रं व्याचष्टे—**तस्य बुद्ध्यादिकार्य-स्येति** । तस्य बुद्ध्यादिकार्यस्य प्रागूर्ध्वमनुपलब्धिर्या हेतुत्वेनाभिहिता तस्या उपलम्भो नास्ति । प्रागूर्ध्वसमयावच्छिन्नानुपलब्धिग्राहकं तावत् प्रत्यक्षं न भवति, तस्य वर्तमानग्राहकत्वात्, नाप्यनुमानं, लिङ्गाभावात् । अतः प्रागूर्ध्वमनुपलब्धेरनुपलम्भाद्धेतोरभावसिद्धौ बुद्ध्यादेः कार्यत्वं न सिद्ध्यति । अभावाभावनियमादनुपलब्धिविरोधोपलब्ध्युपपत्तेःप्रागूर्ध्वमपि बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्रायः । प्रत्यनुमानं सिद्धं भवतीति व्याख्यानार्थः ।

अनुपलब्धिमात्रेण प्रतिरोधाभिधानमनुपलब्धिसम इति लक्षणम् ।

---

1. सूत्रमिति प्रामादिकम् सूत्रपाठेऽदर्शनात् न्यायमञ्जर्यादावनुक्तेश्च

॥ अनुपलब्धिसमस्योत्तरम् ॥

परिहारसूत्रमाह—**अनुपलम्भात्मकत्वादिति** । अनुपलब्धेरनु- 269
पलम्भात्मकत्वेन स्फुरमाणत्वादनुपलम्भादित्ययमहेतुरिति सूत्रार्थः ।

प्रागूर्ध्वमनुपलब्धेरनुपलम्भात्मकत्वेन स्फुरणं चक्षुरादिना न संभवतीति शङ्कानिराकरणाय सूत्रतात्पर्यार्थमाह—**नास्तीति ज्ञान**मिति । नास्तीति ज्ञानमनुपलब्धिरित्यतः तत्स्वभावतया अनुपलब्धेः प्रत्यात्मवेद्यतया निराकरणायोग्य इत्यर्थः ।

॥ नित्यसमलक्षणम् ॥

नित्यसमजातिभेदलक्षकं सूत्रमाह—**नित्यमनित्यभावादिति** । 270
अत्र पदार्थस्याप्यज्ञानाद्व्याचष्टे—**अनित्यत्वधर्मस्य** किं सर्वदा सद्भावः शब्दे साध्यते, न वेति विकल्प्याऽऽद्ये दूषणमाह—**धर्मिणोऽपि शब्दस्येति** । नहि निराश्रयस्य धर्मस्यावस्थानं भवतीति भावः । द्वितीयं दूषयति —**अथानित्यत्वं सर्वदा नास्ति, तथाप्यनित्यत्वाभावान्नित्यः शब्दः इति** । अनित्यत्वधर्मस्य नित्यं सत्वेन अनित्ये नित्यत्वापादनं नित्यसम इति लक्षणम् ।

॥ नित्यसमस्योत्तरम् ॥

परिहारसूत्रमाह—**अनित्यत्वस्येति** । अयमर्थः—अनित्यत्वधर्मस्य सर्वदा सद्भावे धर्मिणोऽपि शब्दस्य सर्वदा सद्भाव इति वदता किमनुमानं विवक्षितं, तर्को वा? आद्ये शब्दो नित्यः सर्वदा अनित्यत्वयुक्त(यु)त्वादित्युक्तं भवति । तद्विरुद्धमित्याह—**अनित्यत्वस्य सर्वदाभ्युपगमान्नित्यत्वविरोध इति** ।

अथैतद्दोषपरिजिहीर्षया अनित्यत्वस्य सर्वदाऽनङ्गीकारः तदा दूषणमाह—**अनभ्युपगम इति** । तर्कपक्षेऽपि अनित्यत्वस्य सर्वदा यदि सद्भावः स्यात्तर्हि शब्दस्यापि सर्वदा सद्भाव इत्यापाद्यापादकयोरन्यत्र व्याप्तेरसम्भवादिति ।

पृष्ठ

ननु धर्म्यवस्थानमन्तरेण धर्मावस्थानं नास्तीति व्याप्तया कथमनित्यत्वस्यावस्थानं स्यादित्याशङ्क्याह—**प्रध्वंसश्चानित्यत्वमिति** । प्रध्वंसरूपा- 271
नित्यत्वेऽपि कथं धर्मिसद्भावो न स्यादित्याशङ्क्याह—**न च तस्मिन् सतीति** । प्रध्वंसे जाते प्रतियोगिनः सद्भावो व्याहत इत्यर्थः । प्रध्वंसलक्षणधर्मस्य निराश्रयत्वं प्रतियोग्याश्रयत्वं वा कल्पत इति भावः ।

॥ अवशिष्टजातिभेदानामतिदेशेन समाधानम् ॥

अवशिष्टजातिभेदानामेतेन न्यायेनातिदेशेन दूषणमाह—**एतेनेति** । जातेः सर्वत्र स्वव्याघातकत्वं दूषणं पर्यवसितं तेनेत्यर्थः । आत्मा पृथिव्यादिभ्योऽन्यः इच्छाद्याश्रयत्वात् । न य एवं न स एवं, यथा घट इत्युक्ते किमन्यत्वमात्मनोऽन्यत्, अनन्यद्वा, प्रथमे आत्मा(न)न्यत्वयोर्मध्ये अन्यत्वान्तरमायातम् । तदप्यात्मनोऽन्यदनन्यद्वा, प्रथमे अन्यत्वेऽनवस्था स्यात् । द्वितीये त्वन्य[त्व]स्यात्मनोऽनन्य(व)त्वाद(न)न्यत्वं नास्ति । आत्मैवान्यत्वमुक्तं भवतीत्यर्थः । आत्मन(श्चेत्)श्च पूर्वमेव सिद्धत्वादन्यत्वसाधनं व्यर्थं स्यात् । अनन्यत्वे चाश्रयासिद्धिरित्यादीन्यसदुत्तराणि प्रत्युक्तानीत्यर्थः ।

॥ अतिदेशे हेतुकथनम् ॥

तत्र हेतुमाह—**निमित्तान्तरादिति** । निमित्तान्तराद्युक्त्यन्तरात 273
संज्ञान्तरे नामान्तरे योज्यमाने आपाद्यमाने सत्यर्थतथाभावस्यार्थतात्त्विकत्वरूपस्य पराकर्तुमशक्यत्वादित्यर्थः । नन्वाहत्य दूषणं जात्यन्तराणां कथं नोच्यते । किं पूर्वोक्तेन न्यायेनातिदेशेनेत्यत आह—**आनन्त्यादिति** । यद्यनन्ता जातिभेदास्तर्हि सूत्रकारेण कथमुक्ता इत्यत आह—**सूत्राणामपीति** । चतुर्विंशतिव्यतिरिक्तजात्यन्तरेण स्थलान्तरे सूत्रकारेणापि प्रत्यवस्थानकरणेन सूत्राणामुदाहरणार्थत्वं ज्ञायत इति ।

॥ निग्रहस्थाननिरूपणम् ॥

वृत्तानुद्रवणपूर्वकमुत्तरप्रघट्टकेन सुखबोधार्थं सङ्गतिमाह—**उक्तेत्यादिना** ।

ननु ग्रन्थगौरवभयाज्जातयः समस्ता नोक्ताः, तर्हि कथं निग्रहस्थानान्युच्यन्त इति प्रतिज्ञा स्यादित्यत आह —**तान्यपीति ।** तान्यपि संक्षेपतो 273
व्युत्पाद्यन्त इत्यन्वयः । तत्र हेतुमाह—**असङ्ख्यातानीति ।** कथमसङ्ख्यातानीत्यत आह — **विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पानन्त्यादिति ।** विप्रतिपत्तिर्विरुद्धं ज्ञानं, अप्रतिपत्तिरज्ञानं, तयोर्विकल्पो भेदः, तस्यानन्त्यात् कार्यभूतानि निग्रहस्थानान्यनन्तानीत्यर्थः ।

॥ निग्रहस्थानसूत्रम् ॥

अस्ति दण्डकसूत्रं—**प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासन्यासो, हेत्वन्तरमर्थान्तरं, निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं, न्यूनमधिकं, पुनरुक्तमननुभाषणमज्ञानमप्रतिभाविक्षेपो- मतानुज्ञा, पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानीति ।**

॥ प्रतिज्ञाहानिलक्षणम् ॥

सूत्रक्रमेण लक्षणोदाहरणे दर्शयति—**साध्येति ।** साध्ये पक्षे[प्रति] 274
**दृष्टान्तधर्मानुज्ञा** विपरीतदृष्टान्तधर्मस्वीकारः **प्रतिज्ञाहानिरि**त्यर्थः । उदाहरणमाह—**यदि कृत(क)त्वादिति ।** स्पष्टमेतत् ।

॥ हेतुहानिः पक्षहानिरित्यनयोरुदाहरणे ॥

प्रतिज्ञाहान्युदाहरणन्यायेन हेत्वादिहानिरपि ज्ञेया । तथाहि, अनित्यश्शब्दः प्रयेयत्वादित्यस्यानैकान्तिकत्वेन प्रतिषेधे कृते भवतु तर्हि कृतकत्वादिति ब्रुवतो **हेतुहानिः ।** अनित्ये वाङ्मनसे कार्यत्वादित्यस्य भागासिद्धत्वेन प्रतिषेधे कृते भवतु तर्हि वागेव पक्ष इति ब्रुवतः **पक्षहानिः ।** एवमुदाहरणादौ ।

॥ प्रतिज्ञान्तरलक्षणम् ॥

प्रतिज्ञान्तरस्य लक्षणमाह—**प्रतिज्ञातार्थ इति ।** प्रतिज्ञातार्थ- 275
प्रतिषेधे कृते प्रतिज्ञातार्थविशेषणं प्रतिज्ञान्तरमिति तात्पर्यतः सूत्रार्थः । प्रति-

पृष्ठ

ज्ञातार्थविशेषणं प्रतिज्ञान्तरमित्युक्ते प्रतिषेधात्पूर्वमपि स्यात् । तन्निरासार्थं **प्रतिज्ञातार्थप्रतिषेध** इति । उदाहरणमुखेन पदार्थाभिधानपुरस्सरं सूत्रं व्याचष्टे—**सर्वमनित्यमित्यादिना** । प्रतिज्ञाहानौ तु नित्यत्वस्वीकारे 275
अनित्यत्वहानिर्भवति । इह प्रतिज्ञायां विशेषणस्वीकारे प्रतिज्ञा न गच्छतीति भेदः ।

॥ प्रतिज्ञाविरोधलक्षणम् ॥

**प्रतिज्ञाहेत्वोरिति** । विरुद्धे हेत्वाभासे यद्यपि विरोधोऽस्ति । तथा- 276
प्युच्चारणसमये एवात्र द्वयोः विरोधप्रतीतिः । अतः पृथगभिधानं कृतमिति ।

॥ प्रतिज्ञासन्यासलक्षणम् ॥

**पक्षप्रतिषेध इति** । प्रतिज्ञातार्थापनयनं [1]प्रतिज्ञासन्यास इत्युक्ते प्रतिज्ञाहानावतिव्याप्तिः तन्निरासार्थं पक्षप्रतिषेध इति । पक्षप्रतिषेध इत्युक्ते साकाङ्क्षता स्यात् । तन्निरासार्थं प्रतिज्ञातार्थापनयमिति । अस्योदाहरणं स्पष्टम् ।

॥ हेतुसन्यासादीनामुपलक्षणम् ॥

प्रतिज्ञासन्यासो निग्रहस्थानमित्युपलक्षणम् । हेत्वादिसन्यासोऽपि भवति । तथाहि—अनित्यः शब्दः पदार्थत्वादित्यस्यानैकान्तिकत्वेन प्रतिषेधे नाहं पदार्थत्वादिति ब्रवीमीति । एवमुदाहरणादिष्वपि योजनीयमिति । अविशेषोक्ते हेतौ विशेषणमिच्छतो हेत्वन्तरमित्युक्ते प्रतिषेधात्पूर्वमपि स्यात् । तदर्थं
**प्रतिषिद्ध इति** । हेताविति पदं प्रतिज्ञानिषेधे तद्विशेषणस्वीकारेऽतिव्याप्ति- 279
परिहारार्थम् । उक्तपदं अविशेषपदं च प्रतिषेधप्राप्तिद्योतनार्थमिति ।

॥ अर्थान्तरलक्षणम् ॥

**अर्थान्तरमिति प्रकृतादर्थाद्यदप्रतिसंबद्धार्थं** भवति तदर्थान्तर- 280
मित्यर्थः अप्रतिसम्बन्धार्थमर्थान्तरमित्युक्ते अपार्थकेऽतिव्याप्तिः तन्निरासार्थं **प्रकृत**पदम् । उदाहरणं स्पष्टम् ।

---

1. प्रतिज्ञातोर्थेपनयनं—मा.

॥ निरर्थकलक्षणम् ॥

**वर्णक्रमनिर्देशवदिति ।** प्रत्याहारादिभ्योऽन्यत्र वर्णक्रमनिर्देशव- 281
द्वाक्यं निरर्थकमित्यर्थः । उदाहरणं स्पष्टम् ।

॥ अविज्ञातार्थलक्षणम् ॥

**परिषदिति ।** परिषत्प्रतिवादिभ्यां न ज्ञायते तदविज्ञातमित्युक्ते एक- 282
वारमभिहितं प्रमादेनाज्ञातं निग्रहस्थानं स्यात् तन्निरासार्थं **परिषत्प्रतिवादि-
भ्यामिति ।** ननु त्रिरभिहितमपि वाक्यं यदि परिषत्प्रतिवादिभ्यां न ज्ञायते
तर्हि तयोरेव निग्रहस्थानं स्यात् न तु वादिन इत्याशङ्क्य सूत्रं व्याचष्टे—
**यद्वाक्यं त्रिरभिहितमप्यप्रतीतप्रयोगे**त्यादिना "उदारामृषादारान्वा
कदारवत्" इत्यादिकोऽप्रतीतप्रयोगः । अतिद्रुतोच्चारणमतिशीघ्रोच्चारणम् ।
आदिशब्देन चेष्टादिप्रयोग इति ।

॥ अपार्थकलक्षणम् ॥

**पौर्वापर्यायोगादिति ।** अप्रतिसंबन्धार्थमपार्थकमित्युक्ते सत्यर्था- 283
न्तरे अतिप्रसक्तिः, तदर्थं **पौर्वापर्यायोगादिति ।** विवेकज्ञानार्थमुदा-
हरणमाह—**यथा दशदाडिमानीति ।**

॥ अप्राप्तकालन्यूनाधिकानां लक्षणानि तेषामन्तर्भावश्चेतरेषु ॥

[1]**अवयवविपर्यासवचनमप्राप्तकालम्**—इति सूत्रान्तरम् । प्रतिज्ञा-
द्यवयवानां मध्ये व्यत्यासेन वचनमप्राप्तकालं निग्रहस्थानमित्यर्थः । **हीन-** 286
**मन्यतमेनाप्यवयवेन न्यूनमिति** सूत्रान्तरम् । प्रतिज्ञाद्यवयवानां मध्ये
यदन्यतमेनाप्यवयवेन हीनं तत् न्यूनमित्यर्थः । **हेतूदाहरणाधिकमधिक-
मिति** सूत्रान्तरम् । हेतूदाहरणमधिकमिति सर्वाधिकस्योपलक्षणार्थं ज्ञेयम् ।
अप्राप्तकालमपार्थेऽन्तर्भूतं अधिकं पुनरुक्ते न्यूनमपसिद्धान्त इत्येवं निग्रहस्थानं
न ग्रन्थकारेणोक्तम् । अथ वा स्पष्टत्वेन । अथ वा ग्रन्थगौरवादिति ।

---

1. अप्राप्तकालादिकं निग्रहस्थानत्रयं मूले नोक्तमिति एतद्ग्रन्थकर्तुराशयः
अत एव सूत्रान्तरमित्यवतरणम् । अत एव तेषां इतरेषु अन्तर्भावः प्रतिपादितः ।

पृष्ठ

॥ पुनरुक्तलक्षणम् ॥

**शब्दार्थयोरिति ।** पुनर्वचनं पुनरुक्तमित्युक्ते अनुवादेऽपि निग्रहस्थानत्वं स्यात् । तदर्थम**न्यत्रानुवादादिति ।** अनुवादादन्यत्रेत्येतद्वाक्यं साकाङ्क्षं स्यात् तदर्थं **पुनर्वचनमिति ।** अन्यत्रानुवादात्पुनर्वचनं पुनरुक्तमिति सामान्यलक्षणम् ।

॥ पुनरुक्तस्य द्वैविध्यम् ॥

तस्य द्वैविध्यार्थं **शब्दार्थयोरिति ।** तत्रोक्तस्यार्थस्य तेनैव शब्देनाभिधानं शब्दपुनरुक्तम् । तस्यैव पर्यायान्तरेणाभिधानमर्थपुनरुक्तमिति विशेषलक्षणं वेदितव्यम् । क्रमेणोदाहरणं दर्शयति—**यथेति ।** पुनरुक्तविशेषान्तरलक्षकं सूत्रान्तरमाह—**अर्थादापन्नस्येति ।** स्वशब्देनाभिधानं पुनरुक्त- 287
मित्युक्ते प्रथमप्रयोगेऽतिव्याप्तिः । तदार्थ**मापन्नस्येति ।** आपन्नस्य स्वशब्देनाभिधानमित्युक्ते शब्दपुनरुक्तेऽतिव्याप्तिः । तदर्थ**मर्थादिति ।** उक्तपुनरुक्ताद्विवेकसिद्ध्यर्थमुदाहरणमाह—**यथा साधर्म्योदाहरण** इति ।

॥ अननुभाषणस्य लक्षणम् ॥

**विज्ञातस्येति ।** परिषदा विज्ञातवाक्यार्थस्य, वादिना च त्रिरभिहि- 288
तस्य यदप्रत्युच्चारणमननुवदनं तदननुभाषण निग्रहस्थानमित्यर्थः । त्रिरभिधानं परिषदनुज्ञोपलक्षणार्थम् । यावत्परिषदा वादिनोरन्यतरस्य सामर्थ्यं निश्चीयते तावद्वाच्यमिति भावः । अननुभाषणं कस्य निग्रहस्थानमित्यपेक्षायामाह—**प्रतिवादिन इति ।** अप्रत्युच्चारणमननुभाषणमित्युक्ते परिषदाऽविज्ञातस्याप्रत्युच्चारणं निग्रहस्थानं स्यात् । अतो **विज्ञातस्य परिषदेति ।** एवमप्युक्ते वादिव्यतिरिक्तप्रमाणान्तरेण परिषदा विज्ञातस्याप्रत्युच्चारणं निग्रहस्थानं स्यात् । **अतः त्रिरभिहितस्येति ।** आदौ वादिना वक्तव्यम् । पश्चात्प्रतिवादिनाऽनूद्य दूषणं देयमिति सङ्केतः समयः, निराकरणं, तल्लङ्घनं निग्रहस्थानं स्यादित्याह—**अप्रत्युच्चारयन्निति ।**

पृष्ठ

॥ अज्ञानलक्षणम् ॥

**अविज्ञातार्थं चाज्ञानमिति** सूत्रान्तरम् । परिषदा विज्ञातार्थं 290
वादिना त्रिरभिहितमपि यदविज्ञातार्थं प्रतिवादिनो वाक्यं तदज्ञानमित्यर्थः ।

॥ अप्रतिभालक्षणम् ॥

अप्रतिभालक्षकं सूत्रमाह—**कथामभ्युपगम्येति** । तूष्णीम्भावो- 291
ऽप्रतिभेत्युक्ते कथावसानेऽ[पि] कथां विना तूष्णींभावोऽप्रतिभा स्यात् । **अतः कथामभ्युपगम्येति** । अननुभाषणे चानुवादाभाव एव, न तु तूष्णींभाव इति भेदः । यदा वादी तूष्णींभावं करोति, तदा वादिनो निग्रहस्थानम् । यदा प्रतिवादी, तदा प्रतिवादिन इत्याह—**वादिप्रतिवादिनोरिति** ।

॥ विक्षेपलक्षणम् ॥

**कार्यव्यासङ्गादिति** । कथाविच्छेदो विक्षेप इत्युक्ते दूषणादिभिः 292
कथाविच्छेदोऽपि विक्षेपःस्यात् । अतः कार्यव्यासङ्गादिति । कथामभ्युपगम्य सभ्येषु अमिलितेषु कथाविच्छेदो निग्रहस्थानं माभूदित्युदाहरणं दर्शयति—**सभ्येषु मिलितेष्वितिपदम्** । कार्यव्यासङ्गादिति पदं शाठ्योपलक्षणार्थमिति ।

॥ मतानुज्ञालक्षणम् ॥

**स्वपक्षे दोषाभ्युपगमादिति** । परपक्षे दोषप्रसङ्गो मतानुज्ञेत्युक्ते 294
दूषणमात्राभिधाने मतानुज्ञा स्यात् । अतः **स्वपक्षे दोषाभ्युपगमादिति** । मतानुज्ञायाःप्रतिब[न्दिदूषणा](न्धका)द्वैषम्यसिद्धये व्याचष्टे—**स्वपक्ष इत्यादिना** । प्रतिबन्धान्तू(तू)भयोरपि दोषपरिग्रहः । अत्र तथा नास्तीत्याह—**स्वयं दोषाभ्युपगमात् परेण चानभ्युपगमादिति** ।

॥ पर्यनुयोज्योपेक्षणलक्षणम् ॥

**निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणमिति** सूत्रान्तरम् । अनिग्रहः पर्यनुयोज्योपेक्षणमित्युक्ते निग्रहाप्राप्तावपि स्यात् । **अतो निग्रह-**

पृष्ठ

**प्राप्तस्येति ।** अत्र परं प्रति निगृहीतोऽसीति वक्तव्यम् । परेण च ममायं दोष इत्युद्भावनं विरुद्धम् । अतः परिषदा दूषणं वक्तव्यमित्यर्थः ।

॥ निरनुयोज्यानुयोगलक्षणम् ॥

**अनिग्रहस्थान(मि)इति ।** निग्रहस्थानाभियोगो निरयोज्यानुयोग- 296
इत्युक्ते निग्रहस्थाने प्राप्ते तदभिधानमपि स्यात् । अतः **अनिग्रहस्थान** इत्युक्तम् । यथा सावयवत्वेनेत्यस्योदाहरणं स्पष्टम् ।

॥ अपसिद्धान्तलक्षणम् ॥

**सिद्धान्तमिति ।** अनियमात् कथाप्रसङ्गोऽपसिद्धान्त इत्युक्ते
वैतण्डिकस्य(1)प्रतितन्त्रसिद्धान्तानभ्युपगमेनानियमेन कथाप्रसङ्गोऽपसिद्धान्तो 297
निग्रहस्थानं स्यात् । अतः **सिद्धान्तमभ्युपेत्येति ।** यथा मीमांसामभ्युपगम्येत्यस्योदाहरणं स्पष्टम् । स्वीकृतपरित्यागसाम्यादपसिद्धान्तसूत्रस्य प्रतिज्ञाहानिसूत्रेण पौनरुक्त्यमाशङ्क्याह—**प्रतिज्ञातार्थविपर्ययस्त्विवति ।** स्वीकृतविपर्ययः प्रतिज्ञाहानिः स्वदर्शनस्वीकृतविपर्ययोऽ(पि)पसिद्धान्त इत्यर्थः ।

॥ हेत्वाभासाः ॥

सूत्रान्तरमाह—**हेत्वाभासाश्च यथोक्ता** इति । यथोक्ता इति पदं 298
सूत्रे दृष्टान्तार्थं प्रतीयते । तस्य प्रकृतोपयोगाभावादानर्थक्यमाशङ्क्य सूत्रं व्याचष्टे—**यथोक्तेनेति ।** [1]चशब्दात् दृष्टान्ताभासा अपि निग्रहस्थानानि भवन्तीति सूचितम् ।

॥ अत्र सूत्रविरोधपरिहरणम् ॥

सूत्रकारेण द्वाविंशतिनिग्रहस्थानान्युक्तानि । ततः सूत्रविरोध इति शङ्का न कर्तव्या । सूत्रे द्वाविंशतिग्रहणं नियमार्थं न भवति । किन्तूपलक्षणार्थम् । अतो न विरोध इत्याह–**एतेनेति ।** आदिशब्देन **हास्यादि-**

1. सूत्रस्थचशब्दात्

पृष्ठ

संग्रहः । अपशब्दादीनां निग्रहस्थानत्वं कुत्र स्यादित्यत आह—**नियम-** 299
**कथायां त्विति** निग्रहस्थानं वेदितव्यमित्यनुषङ्गः । यत्रापशब्दवर्जित-नियमेनाविरलसंस्कृतेन वदामीत्यादिनियमकथा, तत्रापशब्दादीनामपि निग्रह-स्थानत्वमित्यर्थः ।

**॥ इत्यानन्दानुभवाचार्यकृते न्यायकलानिधौ**
**अनुमानपरिच्छेदः समाप्तः ॥**

—: * :—

# ॥ अथ आगमपरिच्छेदः ॥

—:*:—

नन्वनुमाने समाप्ते समाप्त एवागमः । तस्य सङ्केतापरपर्यायव्याप्ति-
बलेन सम्यक् परोक्षानुभवसाधनत्वेनानुमानेऽन्तर्भावादित्यत आह—**अवसित-** 1
**मिति** । अनुमानमेव समाप्तम् । नागमः, लक्षणभेदसम्भवात् इत्यर्थः ।

॥ आगमलक्षणम् ॥

पृथक् लक्षणमाह—**समयबलेनेति** । सम्यक्परोक्षानुभवसाधन-मागम इत्युक्ते अनुमानेऽतिव्याप्तिः स्यात् । अतः **समयबलेने**त्युक्तम् । समयः सङ्केतः पुरुषकृतः, अनुमानं त्वविनाभावबलेन परोक्षानुभवसाधनम् । स्वाभाविको नियतबोधकश्चाविनाभावः । नहि धूमोऽग्निना व्याप्त इति केनचित्कृतम् । तथा नहि धूमेन कदाचिज्जलादिज्ञानं भवति । अनियत-बोधकश्च(सेकतः)सङ्केतः यदा कश्चित्पानीयमानेयमित्युक्ते वह्निरानेय इति सङ्केतं कृत्वा पानीयमानेयमिति वक्ति तदा[पा]नीयशब्दो वह्निबोधको भवति, इत्यनुमानव्यवच्छेदार्थं **समयबलेने**त्युक्तम् । आगमाभासस्य व्यवच्छेदार्थं **सम्यक्**पदम् । प्रमाणसामान्यलक्षणानुवादनिष्ठं वा, अनुवादश्च स्मारणीयः, तद्विना विशेषे विधानानुपपत्तेः, आगमस्य स्वाभिमतप्रामाण्यं वक्तुं द्वैविध्य-
माह—**स द्विविध इति** । दृष्टादृष्टप्रयोजनभेदात् द्विविध इत्यर्थः । 7

॥ दृष्टार्थानां प्रामाण्योपपत्तिः ॥

दृष्टार्थानां प्रामाण्यं व्युत्पादयति—**दृष्टार्थानामिति** । पुरुषधौरेय-प्रवृत्तिकरत्वम् अदृष्टार्थानां दृश्यते । अतो न वैशेषिको हेतुरित्यत आह—**प्रायेणेति** । उत्सर्गतो हि लोको दृष्टार्थे प्रवर्तत इत्यर्थः । अथवा प्रवृत्तिफलं दृष्टफलं तत्सामर्थ्यात् प्रामाण्यं गम्यत इत्यर्थः । ननु कारीर्यादियागानां कदाचित्फ(लो)लानुपलम्भात् कथं तद्वाक्यानां दृष्टफलतया प्रामाण्यमित्यत आह—**प्रायेणेति** । उत्सर्गेण दृष्टफलतया प्रामाण्यं सिद्धम् । यत्र कदाचित् फलं न दृश्यते, तत्र समग्रयागस्वरूपानिष्पत्तेः फलाभावः । प्रतिबन्धक-

सद्भावाच्च । यथा चक्षुरादेः रूपादिविज्ञानोत्पादनसामर्थ्येऽपि कदाचित् सामग्रीवैकल्यात् ज्ञानं न जायते, नैतावता अप्रामाण्यम् । एवमत्रापीति भावः ।

॥ अदृष्टार्थानां प्रामाण्यनिरूपणम् ॥

न तर्ह्यदृष्टार्थानां प्रामाण्यमित्यत आह—**अदृष्टार्थानां पुनरिति ।** 7
आप्तोक्तत्वावधारणं कथमित्याशङ्कते—**कथमिति । पुत्रकामे** इति । अयमर्थः—पुत्रकामो यजेतेत्येवमादिवाक्यानां वेदैकदेशभूतानां स(मे)म्मतवत् प्रामाण्यमनुमाय तद्वाक्यप्रणेतुः पितृवाक्यदृष्टान्तादाप्तत्वमवधार्येश्वरस्यातीन्द्रियार्थदर्शित्वात् परमाप्तत्वे विज्ञाते तत्प्रणीतानामदृष्टार्थानां सर्ववाक्यानामाप्तोक्तत्वादप्रामाण्ये कारणाभावात् दृष्टार्थवाक्यवत् प्रामाण्यमवसीयत इति ।

॥ वेदस्य नित्यत्वेन प्रामाण्याङ्गीकर्तृमीमांसकमतम् तद्दूषणं च ॥

अप्रामाण्यकारणाभावात् प्रामाण्यमवसीयत इत्युक्तम् । पौरुषेयत्वे वेदस्य सम्भावितदोषतयाऽप्रामाण्याशङ्का स्यात् । अतो नित्यत्वेन प्रामाण्यमित्यत आह—**न नित्यत्वेने**ति । तत्र हेतुमाह—**वाक्यानां** हीति । 13
वेदो नित्यः सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादिति चेत्; सम्प्रदायो नाम वृद्धव्यवहारानुगतपदवर्णस्वरनियतिः, तस्याविच्छेदो यथापूर्वमुच्चारणं, तस्य च पक्षे वर्तमानतया दृष्टान्ताभावः । अस्मर्यमाणकर्तृत्वस्य च जीर्णकूपादौ व्यभिचारादिति । शब्दो नित्यः श्रावणत्वाच्छब्दत्वादिवदिति चेन्न, उदात्तादिषु व्यभिचारादित्यलमतिविस्तरेण ।

॥ वेदानित्यत्वे प्रमाणकथनम् ॥

यद्यपि नित्यत्वे प्रमाणं नास्ति, तथाप्यनित्यत्वे किं प्रमाणम्? अथवा वेदवाक्यानि, नित्यानि, अनित्यत्वे प्रमाणाभावात्, आत्मवदित्याशङ्क्याह—
**अनित्यत्वे पुन**रिति । वेदोऽनित्यो वाक्यत्वात् कालिदासवाक्यवत् । 14

पृष्ठ

शब्दोऽनित्यः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् । वेदप्रामाण्यं वक्तृगुणाधीनं वाक्यप्रामाण्यशब्दाभिधेयत्वात्, आप्तवाक्यप्रामाण्यवदित्याद्यनुमानान्यादिशब्देन गृहीतानि ।

॥ अनुमाने अनुकूलतर्कप्रदर्शनम् ॥

ननु वाक्यत्वादिति हेतुर्भवतु, अनित्यत्वं माभूत्, किं तद्विपक्षे बाधकमित्याशङ्क्य बाधकं तत्राह—**सर्वदोपलब्ध्यनुपलब्धिप्रसङ्ग** 14
इति । नित्यत्वे कादाचित्कोपलब्ध्यभावप्रसङ्ग इत्यर्थः । सामान्यवन्नित्यत्वेऽपि शब्दस्याभिव्यञ्जकनिबन्धना तथाप्रतीतिः स्यादिति गूढाभिसन्धिशङ्कां **अभिव्यञ्जकानिरूपणादिति** गूढाभिसन्धिरेव परिहरति—**विपर्यये नियमकाभावादिति** । पूर्वपक्षगूढाभिसन्धिमाविष्करोति—**अभिव्यञ्जकेति** । प्रकटाभिसन्धिः सिद्धान्ती दूषयति—**नेति** । ताल्वोष्ठादिप्रदेशेन वायुसम्योगविभागौ शब्दाभिव्यञ्जकावित्याह—**वायुसम्योगेति** । वायुसम्योगविभागयोरभिव्यञ्जकत्वे प्रदीपादिव्यञ्जकेनानेकघटानां युगपत् ग्रहणवत्
सर्वशब्दानां युगपद्ग्रहणं स्यादिति परिहरति—**न सर्वशब्दानामिति** । 23

॥ शब्दानां युगपद्ग्रहणप्रसङ्गोपपादनम् ॥

ननु श्रोत्रं कादिग्रहणे प्रतिनियतसहकारि युक्तम् । शब्दो वा श्रोत्रग्राह्यत्वे प्रतिनियतसहकार्युपेतः, अतो न शब्दानां युगपद्ग्रहणप्रसङ्ग इत्याह—**कथमिति** । श्रोत्रसंस्कारपक्षे युगपद्ग्रहणमापादयितुमाह—**श्रोत्रं तावदिति** । श्रोत्रं प्रतिनियतसंस्कारसंस्कार्यं न भवति इत्येकेनैव संस्कारे[ण] संस्कृतपदार्थानां ग्राहकं भवतीत्यर्थः । एतावत्साध्याङ्गीकारे स्पर्शने व्यभिचारः । तस्य स्पर्शसंस्कारेण संस्कृतत्वेऽपि रूपादिग्राहकत्वाभावात्, साध्यविकलश्च दृष्टान्तः । चक्षुषोऽपि रूपसंस्कारेण संस्कृतस्यापि रसादिग्राहकत्वाभावात्, तदर्थं समानेन्द्रियग्राह्यत्वग्रहणम् । तथापि स्पर्शने व्यभिचारः । तस्य भिन्नदेशवर्तिनः स्पर्शादीनेकेन्द्रियग्राह्यान् [ग्रहीतुः] (गृहीतः) प्रतिनियतसंस्कारसंस्कार्यहीनत्वाभावात्, तत्रापि स्यात् साध्यविकलो दृष्टान्तः, चक्षुषो भिन्नदेशकालघटादीनेकेन्द्रियग्राह्यानवबोधयतः प्रति-

६५

नियतसंस्कार्यत्वरहितत्वासम्भवात् । तदर्थं समानदेशग्रहणम् । समानदेशत्वं युगपदिन्द्रियसम्बन्धत्वं विवक्षितम् । अत एवोपरितने अनुमाने समानदेशेतीत्यनुक्त्वा युगपदिन्द्रियसम्बन्धत्वादिति कथयिष्यति । एवमप्येकेन्द्रियग्राह्ययोर्युगपदिन्द्रियसम्बन्धयोश्शीतोष्णस्पर्शयोः ग्रहणे स्पर्शनेन्द्रियस्य प्रतिनियतशीतोष्णद्रव्यसंस्कारसंस्कार्यत्वं, [ तेन ]तद्रहितत्वे साध्ये इन्द्रियत्वहेतोर्व्यभिचारः । तथा शुक्लकृष्णरूपयोरुक्तरूपयोर्यदा मन्दोद्योतसहकारिसचिवलोचनग्राह्यत्वेन दृष्टान्तस्य साध्यविकलता स्यात् । तदर्थं धर्मापन्नग्रहणम्[1] । समानो धर्मः सामान्यं, तेनापन्नानां विजातीयत्वहीनानामित्यर्थः । शब्दसंस्कारपक्षेऽपि युगपद्ग्रहणमापादयितुमाह—**शब्दा वेति** । अत्राप्युक्तरीत्या व्यावर्त्यानि करणीयानि ।

॥ मतान्तरेण दलकृत्यप्रदर्शनम् ॥

केचिदेवं व्यावर्त्यानि कुर्वन्ति । इन्द्रियत्वादर्थानां ग्रहणाय प्रतिनियतसहकारिसचिवं न भवतीत्युक्ते मनस्यनैकान्तिकम् । मनोऽपि रूपादिग्रहणाय तत्तदिन्द्रियसहकारिसहितमेव प्रवर्तते । ततः समानेन्द्रियग्रहणम् । एवमपि भिन्नदेशकालावस्थितघटादिग्रहणे चक्षुः प्रतिनियतसहकारिणमपेक्ष्य वर्तत इति तत्रानैकान्तः । तदर्थं समानदेशग्रहणम् । समानदेशत्वं च युगपदिन्द्रियसम्बन्धत्वं विवक्षितम् । समानेन्द्रियसमानदेशार्थानां ग्रहणाय प्रतिनियतसंस्कार्यं न भवतीत्युक्ते शुक्लकृष्णरूपग्राहकचक्षुषाऽनैकान्तः । शुक्लं हि रूपं मन्दालोकयुतेनापि चक्षुषा गृह्यते, कृष्ण तु प्रचुरालोकयुतेन । तदर्थं समानधर्मापन्नग्रहणम् ।

नन्वकारादीनां समानधर्मत्वाभावात् सिद्धसाधनं स्यात्, यदि शब्दरूपत्वाश्रयत्वेन समानधर्मापन्नता सर्वशब्दानां, तर्हि रूपत्वाश्रयत्वेन समानधर्मापन्नता शुक्लरूपकृष्णयोरिति न व्यभिचार इति । तन्न, समान-

1. समानदेशसमानधर्मापन्नानां ग्रहणाय इति साध्यम्

धर्मापन्नत्वशब्देन विजातीयत्वरहितत्वं विवक्षितम् । विजातीयत्वरहितत्वं शब्दादीनामस्त्येव । भट्टैरकारत्वादिसामान्यानङ्गीकारात् ।

॥ शब्दानां संस्कार्यत्वाभावसाधनम् ॥

शब्दसंस्कारपक्षे दोषमाह—**शब्दा वेति** । शब्दाः प्रतिनियत- 23
संस्कारसंस्कार्या न भवन्ति, समानेन्द्रियग्राह्यसमानधर्मापन्नत्वे सति युगपदिन्द्रियसम्बद्धत्वादेकदेशस्थघटादिवदिति प्रयोगः । युगपदिन्द्रियसम्बन्धित्वादित्येवोच्यमाने रूपरसादौ व्यभिचारः। तेषामेकद्रव्यसमवेतानां युगपदिन्द्रियसम्बन्धित्वेऽपि आलोक[तद]न्तर्गतोदकादिप्रतिनियतव्यञ्जकव्यङ्ग्यत्वात् । अतः समानेन्द्रियग्राह्यत्वग्रहणं, समानेन्द्रियग्राह्यत्वादित्येवोच्यमाने युगपदिन्द्रियासम्बन्धपदार्थेषु व्यभिचारः । तदर्थं युगपदिन्द्रियसम्बन्धित्वादिति । एवमप्युक्ते सितासितरूपयोर्व्यभिचारः। तदर्थं समानधर्मापन्नत्वादिति । भट्टैः सर्वशब्दानां नित्यत्वव्यापकत्वाङ्गीकाराद्युगपदिन्द्रियसम्बन्धत्वमस्तीति नासिद्धो हेतुः ।

॥ उत्पत्तिपक्षे दोषसाम्यपरिहारः ॥

शङ्कते—**उत्पत्तिपक्षेऽपीति** । अयमर्थः—वायोः शब्दोत्पाद- 26
कत्वपक्षेऽप्येको वायुः सर्वशब्दोत्पादकः स्यादविशेषात् । यदि प्रतिनियतवर्णोत्पादनाय प्रेरितः प्रतिनियतमुत्पादयति, तर्ह्यभिव्यञ्जकत्वपक्षेऽपि तुल्यम् । तदुक्तम्—

अन्यार्थं प्रेरितो वायुर्यथान्यं न करोति वः ।
तथान्यवर्णसंस्कारशक्तोऽन्यं न करिष्यति ॥

परिहरति—**नेति** । एको मृत्पिण्डः कर्तुरिच्छावशेन घटाद्यन्यतममारभते । प्रदीपस्तु कटकप्रकाशेच्छया प्रेरितो मुकुटादिकमपि प्रकाशयतीति मृत्पिण्डप्रदीपदृष्टान्ताभ्यां लोके कारकव्यञ्जकवैधर्म्यसिद्धेरित्यर्थः ।

॥ भाट्टमतेऽपि वाक्यस्यानित्यत्वप्रसाधनम् ॥

किञ्च क्रमवन्तो वर्णाः पदं पदानि च क्रमवन्ति वाक्यमिति स्थितिः । तत्र भाट्टपक्षे वर्णानां विभुनित्यानां देश(क्रमता:)कालक्रमाभावादुच्चारणगतो

वा ज्ञानगतो वा क्रमो वर्णेष्वनुषज्येत । तथा च क्रमस्यानित्यत्वेन तद-
वच्छिन्नानां वर्णानां पदत्वमनित्यम् । तदनित्यत्वे च तद्घटितवाक्यस्या-
नित्यत्वमित्यादिदूषणं चेतसि निधायाह—**अलमतिप्रसङ्गेनेति** । अति- 26
विस्तरेण पूर्यतामित्यर्थः ।

॥ प्रत्यक्षानुमानागमेषु इतरप्रमाणान्तर्भावः ॥

प्रमाणत्रयं प्रतिपाद्योपसंहरति—**एवमेतानीति** । ननु त्रीण्येव 33
प्रमाणानीत्येवकारो नावकल्पते, उपमानादीनां प्रमाणान्तराणां विद्यमान-
त्वादित्याशङ्क्याह—**एतेष्विति** । एतेष्वितरेषामन्तर्भावः । नत्वितरेषा-
मेतेष्वन्तर्भाव इति ज्ञापयितुमेतेष्वेवेत्यवधारणम् ।

॥ वृद्धनैयायिकाभिमतोपमानस्य शब्देऽन्तर्भावः ॥

**वृद्धमीमांसक**मतोपमानस्य[1] तावदन्तर्भावमाह-**तत्रेति** । उपमान-
स्वरूपपर्यालोचनया शब्देऽन्तर्भावो विसंवादी न भवतीत्यभिप्रेत्य स्वरूपमाह-
**यथा गौरेवं गवय इत्युपमानमिति** । नागरिकः पृच्छति—कीदृग्गवयः
इति । तं प्रत्यारण्यको ब्रवीति–यथा गौर्गवयस्तथेति । तथाच समयबलेन
सम्यक्परोक्षानुभवसाधनत्वादागमस्वरूपमित्यर्थः ।

॥ मीमांसकाभिमतोपमानस्य पृथक्त्वशङ्का ॥

मीमांसकाभिमतमुपमानं शङ्कते-**अनेनेति** । अटव्यामटतो नागरि-
कस्य गोपिण्डसदृशोपलम्भादनेन सदृशी मदीया गौरिति ज्ञानं जायमानं न
तावत्प्रत्यक्षम् । गोपिण्डस्यासन्निकृष्टत्वात् । नापि स्मरणम् । गवयसादृश्याव-
च्छेदेन पुरानुभवाभावात् । नाप्यनुमानं, लिङ्गायोगात्, गौरनेन सदृशी,
अस्य तत्सदृशत्वादित्युक्ते हेतोर्व्यधिकरणासिद्धत्वं स्यात् । दृष्टान्ताभावश्च ।
नाप्यर्थापत्तिः । अनुपपद्यमानार्थाभावात् । अत इदमुपमानं मानान्तरमिति
भावः ।

---

1. वृद्धनैयायिकेति युक्तं तथैव पदपञ्जिकादर्शनात्

पृष्ठ

॥ तस्यापि स्मृतावन्तर्भावः ॥

परिहरति—**न, अस्य स्मृतित्वादिति** । अनुभवाभावे कथं 33
स्मृतित्वमित्यत आह—**पूर्वमेवेति** । ननु गवयग्रहणात्पूर्वं भूयोवयव-सामान्यसादृश्यं कथं गवि गृहीतमिति साटोपं पृच्छति—**कस्मादिति** । परिहरति—**उपलब्धियोग्यत्वादिति** ।

**अयमर्थः**—गवयसादृश्यं गवि ग्रहणयोग्यं, नवा? आद्ये योग्यत्वाद्-गृहीतमेव। अयोग्यत्वे गवये दृष्टेऽपि न गृह्येत। अदृष्टवदतीन्द्रियत्वादिति। ननु सादृश्यस्य द्विनिरूप्यत्वात् कथं गवयाग्रहणे गृह्येत। यदा गृहीतं तर्हि सादृश्योपलब्ध्यभिमानस्तदा किं न स्यादित्याशङ्क्याह—**निर्विकल्पकेनेति** । निर्विकल्पकेन गवयदर्शनात्पूर्वं गोपिण्डवस्तुमात्रतया उपलब्धं सादृश्यतया-नुपलब्धं इति कुतस्दा गवयसादृश्योपलब्ध्यभिमानो भवति। तदा वस्तु-मात्रग्रहणादिरूपत्वं नास्तीति भावः।

॥ निर्विकल्पकादपि स्मृतिप्रदर्शनम् ॥

ननु क्व निर्विकल्पकात स्मृतिर्दृष्टेत्यत आह—**निर्विकल्पकोप-** 34
**लम्भेऽपीति** । यथा गवयवृत्तिधर्माभावो गवयदर्शनात्पूर्वं निर्विकल्प-केनाश्वादावुपलभ्यते । पश्चात् सहकारिसामर्थ्यात् गवयगतासाधारण-धर्मावगमात् स एवाश्वादौ स्मर्यते, अश्वः गवयधर्माभाववानिति। **अभा-वादिष्विति** । आदिशब्देन निर्विकल्पप्रतीतस्य गवयधर्मविरुद्धधर्मस्य स्मरणं गृहीतम्। अश्वोऽयं गवयधर्मविधर्मवानिति।

॥ नव्यनैयायिकसम्मतोपमानस्य शब्दान्तर्भावकथनम् ॥

नैयायिकोपमानं दूषयितुमनुवदति—**संज्ञेति** । गोसदृशो गवय 36
इति सादृश्यवाक्यं ब्रुवतोऽटव्यामटतो गोसदृशपदार्थदर्शनादयं गवय इति संज्ञासंज्ञिसंबन्धप्रतिपत्तिर्जायमानोपमानफलमिति। दूषयति—**आप्तवचन-कार्येति** । गवयग्रहणात्पूर्वमेव गोसदृशो गवय इत्याप्तवचनात् संज्ञा-संज्ञिसम्बन्धप्रतिपत्तिर्जातेत्यर्थः । संज्ञासंज्ञिसम्बन्धप्रतिपत्तेराप्तवचनकार्यत्वे

पृष्ठ

हेतुमाह—**तथा प्रश्नोत्तरादिति** । संज्ञासंज्ञिसम्बन्धप्रतिपत्तिराप्तवचन-
कार्येतीममर्थं द्रढयितुमाह—**अन्यप्रमाणानिर्देशाच्चेति** । अस्यायमर्थः— 37
कथं त्वं जानीषे गवयसंज्ञोऽयमिति केनचिदाक्षिप्तः शबरवचनाज्जानामीति
वदति । न पुनरुपमानप्रमाणेनेति ।

॥ उक्तोपमानस्य प्रमाणान्तरत्वमावश्यकमिति नैयायिकप्रत्यवस्थानम् ॥

शङ्कते—**अस्येति** । **अस्य गवयशब्दः संज्ञेति** कस्यचिद्ग्रामादरण्यं प्राप्तस्य जायते प्रतिपत्तिः, अस्यां **प्रतिपत्तौ** कारण**त्वेनोपमानसिद्धिः** । **तथा शब्दाश्रवणात्** अरण्येऽप्यश्रवणादित्यर्थः ।

॥ उक्तशङ्कापरिहारः ॥

अतिप्रसङ्गस्यापादनेन परिहरति—**एवं तर्हीति** । **सास्नादिमद्गौरयमित्येवं सङ्केते कृते अस्य गोशब्दः संज्ञेति** परस्य या प्रतिपत्तिर्जायते तत्राप्याप्तवाक्यातिरिक्तं **प्रमाणान्तरं वाच्यम्** । अस्य गोशब्दः संज्ञेति प्रतिपत्तौ न प्रमाणान्तरम्, तत्प्रतिपादित एव गोपिण्डे ज्ञानोदयात् । प्रकृते त्वसन्निहिते पिण्डान्तरे अस्य गवयशब्दः संज्ञेति ज्ञानं प्रमाणान्तरमित्याशङ्क्याह—**गोपिण्डान्तरेऽपीति** । यस्मिन् गोपिण्डे सङ्केतो गृहीतः तस्य गोपिण्डान्तरेऽपि ग्रहणे प्रमाणान्तरा(भाव)[भिधान] प्रसङ्गः । तथाशब्दानभिधानन्यायस्य तुल्यत्वादित्यर्थः ।

॥ पूर्ववादिनः विशेषशङ्का ॥

अतिप्रसङ्गं परिहर्तुं पूर्वपक्षी विशेषं शङ्कते—**तथाशब्दानभिधानेऽपीति** । **ईदृशस्य सर्वस्य गोशब्दः संज्ञेति** । शब्दाभावे कथं प्रति-
पत्तिरित्यत आह—**सामर्थ्यादेवमिति** । गौरयमित्यस्य तस्मिन्नर्थे
तात्पर्यादित्यर्थः । (एवन्ना)[यदि]एतस्मिन्नर्थे प्रमाणान्तरत्वाभावः तर्हि गो-
सदृशो गवय इत्यत्रापि समानमिति परिहरति—**समानमेतदत्रापीति** । 38

ननु गवयस्याप्रत्यक्षत्वात् कथं वाक्यात् संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरतः प्रमाणान्तरं वाच्यमित्याशङ्कां नियमासम्भवेन परिहरति—**न च प्रत्यक्ष**

पृष्ठ

**एवार्थ इति ।** सहस्राक्षः शक्रः चतुर्मुखो ब्रह्मेति । तथा देशान्तरे [वर्तमान पुत्रा]देर्दूरस्थेन पित्रा संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः कृता दृश्यत इत्यर्थः ।

॥ विभागसूत्रविरोधशङ्का तत्परिहारश्च ॥

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति विभागसूत्रविरोध इति शङ्कते—**सूत्रविरोध इति चेदिति ।** परिहरति—**नेति ।** 41
प्रमाणप्रमेयप्रयोजनसंशयदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगम इति षोडशपदार्थगणनसूत्रे प्रमाणशब्देन सङ्गृहीतस्य दृष्टान्तस्य, अनुमानावयवेषु प्राधान्यज्ञानप्रयोजनवशेन पृथगभिधानम् । हेत्वाभासछलजातीनां निग्रहस्थानपदेन गृहीतानां पृथगभिधानं प्रमाणसदृशतया प्रमाणभ्रान्तिपराकरणवशेनैव, एवमत्रापीत्यर्थः ।

॥ पृथगभिधानस्य प्रयोजनकथनम् ॥

प्रयोजनं पृच्छति—**तर्हीति ।** प्रयोजनं निर्दिशति—[1]**वेदप्रामाण्यसमर्थनमिति ।** वेदप्रामाण्यशङ्काभावे कथं प्रामाण्यसमर्थनं प्रयोजनमित्याशङ्कते—**कथमिति ।** सिद्धान्ती शङ्कां दर्शयति—**केचिदाहुरिति ।** अयमर्थः—प्रत्यक्षानुमानेऽर्थे शब्दः प्रवर्तते किं वा, न? आद्ये दूषणमाह—**प्रत्यक्षानुमानविषयत्वे शब्दस्यानुवादकत्वमिति ।** द्वितीयं दूषयति—**तदविषयत्व इति ।** प्रत्यक्षानुमानागृहीतार्थविषयत्वे शब्दस्यावाचकत्वं स्यात् । सम्बन्धग्रहणाभावादित्यर्थः । तत्र हेतुमाह—**पदार्थस्याप्रसिद्धत्वा-** 42
**दिति ।** पदार्थस्याप्रसिद्धत्वमसिद्धं, तद्वाचकपदेन प्रसिद्धेरित्याशङ्क्याह—**न पदेनेति ।** तत्र हेतुमाह —**इतरेतराश्रयत्वं चेति ।** तत्पदेन पदार्थसिद्धौ सम्बन्धग्रहणं भवेत् सम्बन्धग्रहणे च तत्पदेन पदार्थग्रहणं इतीतरेतराश्रयत्वम् । चकारो हेतौ । यद्वा चक्रकत्वं सूचितं—पदेन पदार्थसिद्धौ

1. शब्दप्रामाण्य. मू.

सत्यां सम्बन्धग्रहणं, सम्बन्धग्रहणे जाते पदस्य पदार्थवाचकत्वं, पदस्य पदार्थवाचकत्वे च पदार्थप्रसिद्धिरिति । पदस्य पदार्थे प्रामाण्याभावेऽपि
वाक्यस्य वाक्यार्थे प्रामाण्यं भविष्यतीत्याशङ्क्याह—**वाक्यार्थस्त्विति ।** 42
यदा प्रसिद्धानां पदा[र्था]नामन्वयो वाक्यार्थः, तदा पदार्थप्रसिद्ध्यभावे पदसमुदायरूपवाक्यस्य वाक्यार्थे प्रामाण्यं न सिद्ध्यतीत्यर्थः ।

॥ केषाञ्चिन्मतनिराकरणायोपमानस्य पृथक्कथनम् ॥

एवं परोक्तं दूषणमनूद्य तन्निराकरणायोपमानप्रयोगमाह—**तन्निराकरणार्थमित्यादिना ।** निमित्तस्य प्रसिद्धत्वात् अप्रसिद्धे सङ्गतिग्रह इत्यविरुद्धम् । अनुमानेऽपि लिङ्गिन एवाप्रसिद्धत्वम्, लिङ्गस्य निमित्तस्य प्रसिद्धत्वम्, एवमत्रापीति भावः ।

॥ उपमानस्य पार्थक्याभावे सूत्रान्तरविरोधशङ्का ॥

ननूपमानस्य प्रमाणान्तरत्वाभावे "अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः (2-1-44) ।" "प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः" (2-1-43) । इति सूत्राभ्यामुपमानस्याप्रामाण्यशङ्कापूर्वकं प्रामाण्यसमर्थन-
रूपा परीक्षा किमर्था कृतेत्याशङ्क्याह—**परीक्षा त्विति ।** (अप्रमाण) प्रमा- 44
णान्तरान्तर्भावाभावात् प्रामाण्यपरीक्षा कृता न प्रमाणान्तरत्वाभिप्रायेणेत्यर्थः ।

॥ सूत्रोक्तपरिहारविरोधशङ्का तत्समाधानं च ॥

ननूपमानस्यान्तर्भावमाशङ्क्य परिहारं सूत्रकारश्चकार । तथाहि—उपमानं 'प्रत्यक्षेणाप्रत्यक्षसिद्धेः' (2-1-46) परार्थानुमानमिति चेत्, न, स्वयमप्यध्यवसायभावात् । "तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः" (2-1-48) इति । अतः कथमन्तर्भावः सूत्रविरुद्धो न भवतीत्याशङ्क्याह—**अन्तर्भावस्त्विति ।**

॥ सूत्रे चतुष्ट्वसमर्थनविरोधः तत्परिहारश्च ॥

ननु, न चतुष्ट्वं ऐतिह्यार्थापत्तिसम्भवाभावप्रामाण्यादिति सूत्रेण (2-1-11) । प्रमाणचतुष्कमाक्षिप्य "शब्दैतिह्यानर्थान्तरभावात्, अनुमाने

पृष्ठ

अर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेध " इति (2-3-2) सूत्रे चतुष्कं समर्थितम् ।

अतः सौत्रचतुष्कविरोधात् त्रित्वमयुक्तमित्याशङ्क्याह—**चतुष्टाभिधानं सूत्रे पञ्चत्वादिसङ्ख्यानिराकरणार्थमिति** । तत्र हेतुमाह—**प्रमाणसिद्धत्वादन्तर्भावस्येति** । 44

॥ त्रित्वानभिधाने सूत्रकाररीत्युदाहरणम् ॥

ननु यदि त्रित्वमभिप्रेतं सूत्रकारस्य किमिति नावोचत् । अतोऽयुक्तमेतदित्याशङ्कते—**त्रित्वानभिधानादिति** । परिहरति—**नास्येति** । 45
**यथेति**—कृत्स्नैकदेशवृत्तित्वादवयावानामित्याद्यैः तस्मादवयव्यभिमानः इत्येवमन्तैः सूत्रैः अवयविनिराकरणे सिद्धान्तानभिधानं शिष्याणामूहाद्यतिशययुक्तानामेवात्राधिकार इति ज्ञापनार्थम् । एवमत्रापीत्यर्थः । यस्मात् समयबलेन सम्यक् परोक्षानुभवसाधनमुपमानम् सूत्रविरोधश्च नास्ति तस्माच्छब्देऽन्तर्भूतमुपमानमित्युपसंहरति—**तस्मादिति** ।

॥ अर्थापत्तेरनुमानेऽन्तर्भावः ॥

प्रमाणत्रित्वसिद्ध्यर्थमर्थापत्तेरन्तर्भावमाह—**अर्थापत्तेरिति** । अर्थापत्तिरनुमानमविनाभावबलेन सम्यक् परोक्षानुभवसाधनत्वात्, सम्मतवदित्यर्थः नन्वनुपपत्त्यार्थापत्तिरनुभवसाधनं नाविनाभावेनेत्याशङ्क्याह—**अन्यथेति** । भोजनरहितस्य पुष्टत्वं रात्रिभोजनं विना न कल्पत इत्युक्ते, रात्रिभोजनेनैव कल्पते इति ज्ञायते ।

॥ अर्थापत्तेरनुमानरूपत्वसमर्थनम् ॥

**अयमेवाविनाभावः** । यथा पर्वतस्य धूमवत्त्वं प्रतीयमानं वह्निं विना नावकल्पते इत्युक्ते वह्निसद्भाव एव कल्पत इति गम्यते, तच्चानुमानम् एवमिदमपीत्यर्थः ।

पृष्ठ

॥ सामान्याकारेणान्वयाग्रहणस्थले तत्प्रामाण्यशङ्का ॥

48 शङ्कते— **यत्रेति** । अयं पट उत्पद्यमान एव त[न्तु]समूहस्य मुख्यकारणत्वं कल्पयति—तथाऽयं स्फोट उत्पद्यमानोऽस्याग्नेरप्रतिबद्धशक्तिं कल्पयतीत्यत्र(स्या)पटस्यासाधारणकारणं तन्तवः अयमग्निरेतत्स्फोटोत्पादने अप्रतिबद्धशक्तिरित्येतस्य सामान्याकारेण(त्वेटा)[व्याप्ति]ग्रहणाभावात् अर्थापत्तिर्नानुमानमित्यर्थः ।

॥ तत्रापि केवलव्यतिरेक्यङ्गीकारः ॥

50 केवलव्यतिरेकव्याप्तेर्विद्यमानत्वात् केवलव्यतिरेक्यनुमानादव्यतिरेक इति परिहरति—**न, तत्रापीति** ।

॥ न्यायप्रयोगः ॥

प्रयोगस्तु—अयं पटः एतत्तन्तुमुख्यकारणजन्यः, एतत्पटत्वात्, न यदेवं न तदेवं, यथा पटान्तरं, अयमग्निरेतत्स्फोटोत्पादने अप्रतिबद्धशक्तिरेतदग्नित्वात्, न यदेवं न तदेवं, यथा अग्न्यन्तरमिति । यदि चैवं रूपा अर्थापत्तिः स्यात्तदा न नाम्नि नो विप्रतिपत्तिरित्याह—**केवलव्यतिरेक्यर्थापत्तिरिति संज्ञाभेदमात्रमिति** । अनुमानसंज्ञाभेदमात्रम् । इदमनुमानं न भवति अन्वयाभावात् सम्मतवदित्याशङ्कते—**अन्वयाभावादिति** । अतिप्रसङ्गापादनेन परिहरति—**केवलान्वयिनोऽपीति** ।

॥ तत्रैव दूषणान्तरकथनम् ॥

51 दूषणान्तरमाह—**अपि च प्रत्यक्षादिभेदानामिति** । योगिप्रत्यक्षत्वायोगिप्रत्यक्षत्वं, सविकल्पकत्वं निर्विकल्पकत्वमिति प्रत्यक्षभेदवैधर्म्यम्, स्वार्थत्वं, परार्थत्वमनुमानभेदवैधर्म्यं, दृष्टादृष्टार्थत्वमागमभेदवैधर्म्यम् । नैतावता प्रमाणान्तरम् । एवमत्रापीत्यर्थः । उपसंहरति - **तस्मादिति** ।

॥ सम्भवस्यानुमानेऽन्तर्भावकथनम् ॥

केनचित्कथिते शते, पञ्चाशत्सम्भवतीति ज्ञाने सम्भवाख्यं पृथक् प्रमाणमिति केचिदाहुः । तन्निराकरोति-—बहुत्वसङ्ख्याविषयत्वे सतीति ।

पृष्ठ

भूतलादिग्राहकमिन्द्रियं तन्निष्ठाभावं गृह्णाति । अन्यथा रूपज्ञानमप्रत्यक्षं स्यादित्यर्थः ।

॥ पूर्वपक्षिणः गूढाभिसन्धिः ॥

इदानीं पूर्वपक्षी गूढाभिसन्धिं प्रकटयति—**सम्बन्धाभाव इति** । 53
रूपग्रहणे संयुक्तसमवायः सम्बन्धो विद्यते । अतस्तस्य प्रत्यक्षत्वं युज्यते । अभावस्य द्रव्यगुणादिष्वन्तर्भावाभावात् संयोगादिसम्बन्धाभावेनाप्रत्यक्षत्वमित्यर्थः ।

॥ गूढाभिसन्धिपरिहारः ॥

परिहरति—**न, स्वपक्षपरपक्षयोरिति** । मीमांसकस्य पक्षोऽत्र स्वपक्षः । तदेव विवृणोति—**स्वपक्षे तावदित्यादिना** । विशेषणविशेष्यभावस्य सम्बन्धान्तरपूर्वकत्वदर्शनात्, प्रकृते च तदभावात् कथं विशेषणविशेष्यभाव इति शङ्कते—**संयोगसमवायरहितस्येति** । यदि प्रकृते 54
विशेषणविशेष्यभावो न स्यात्, तर्हि विशिष्टप्रत्ययवशेन तत्सम्बन्धसिद्धिरिति परिहरति—**न, विशिष्टप्रत्ययवशेनेति** ।

॥ ऐतिह्यस्य शब्देऽन्तर्भावकथनम् ॥

ऐतिह्यस्यान्तर्भावं वक्तुं स्वरूपमाह—**अनिर्दिष्टेति** । अनिर्दिष्ट- 57
प्रवक्तृकमैतिह्यमित्युक्ते भूनिखातवस्त्वनिर्दिष्टप्रवक्तृकं भवति, नचैतदैतिह्यम् । अतः **प्रवादपारम्पर्यमित्युक्तम्** । प्रवादपारम्पर्यमैतिह्यमित्युक्ते कश्चिद्वाक्यं विरच्य शिष्यं प्रति कथयति । शिष्यश्च स्वशिष्यं प्रतीति तदप्यैतिह्यं स्यात् । अतोऽनिर्दिष्टप्रवक्तृकमित्युक्तम् । अत्राबाधितपदं ज्ञेयम् । बाधितस्याप्रमाणत्वेन प्रमाणान्तर्भावस्य वक्तुमशक्यत्वादिति । अन्तर्भावमाह—**आगम इति** । समयबलेन सम्यक्परोक्षानुभवसाधनत्वादित्यर्थः । ऐतिह्यस्वरूपमुदाहरति—**यथेति** ।

पृष्ठ

॥ चेष्टायाः उक्तप्रमाणेष्वन्तर्भावः ॥

ऐतिह्यादीनामित्यादिशब्दसूचितस्यार्थप्रमाणस्यान्तर्भावं वक्तुं स्वरूप- 57
माह—**प्रयत्नजनितेति**। वाय्वादिकारितक्रियानिवृत्त्यर्थं—**प्रयत्नजनितेति पदम्**। प्रयत्नजनित(मार्ग....णा)[घटा]दिक्रियापि चेष्टा स्यात्। तदर्थं शरीरतदवयवान्यतमा[श्रिता]क्रियेत्यर्थः। क्रियेत्युपलक्षणम्। करमुखादिसंयोगविशेषस्यापि पिपासादिबोधजनकत्वादिति। अन्तर्भावमाह—**सा नागमाद्भिद्यत इति**। हेतुमाह—**नाटचशास्त्रादिसमयबलेन पुरुषाभिप्रायमर्थविशेषं च बोधयन्तीति**। नाटचशास्त्रादीत्यादिपदसूचितं व्यवहारोपादानम्। चेष्टायाः शेषस्वरूपसम्भवेन[1] कथमागमेऽन्तर्भाव इत्याशङ्क्याह—**लिप्यक्षरादिति**। लिप्यक्षरादि(द)रूपात् समययुतात् प्रतिपत्तिर्जायते। सागमका यथा, तथेयमित्यर्थः।

॥ अन्तर्भावप्रतिपादनफलम् ॥

अन्तर्भावप्रतिपादनात् फलमुपसंहरति—**तदेवमिति**। प्रमाणा- 58
धीनत्वात् प्रमेयसिद्धेरिति प्रमाणपदार्थं निरूप्य प्रमेयपदार्थं निरूपयितुं प्रश्नद्वारेण [पातनिका] माह—**किंपुनरिति**। उत्तरमाह—**उच्यते, प्रमेयमिति**।

॥ मोक्षोपयोगिप्रमेयनिरूपणम् ॥

प्रमेयमात्रज्ञानस्य मोक्षोपयोगित्वाभावात् पृच्छति—**किंलक्षण**- 59
**मिति**। लक्षणेनोत्तरमाह—**यद्विषयमिति**। प्रमाविषयः प्रमेयमिति प्रत्यक्षपरिच्छेदे प्रमेयसामान्यलक्षणं कृतम्। इदं मोक्षोपयोगिप्रमेयलक्षणमिति न पौनरुक्त्यम्। अत्र प्रमेयस्य स्वरूपेण मोक्षसाधनत्वासम्भवाद्यद्विषयं ज्ञानमित्युक्तं; यद्विषयं ज्ञानं निःश्रेयससाधनं तत्प्रमेयमित्युक्ते प्रमाणेऽतिव्याप्तिः। तदर्थं अन्यज्ञानानुपयोगित्वपदम्। प्रमाणज्ञानस्यात्मादिप्रमेयज्ञानोपयोगितया निःश्रेयससाधनत्वादिति। नियमविधानमाह—

---

1. अवशिष्टवस्तुरूपत्वसम्भवेनेत्यर्थः

पृष्ठ

**तदेवेत्यादिना । तज्ज्ञानस्येति** कीटादिज्ञानस्य व्यतिरिक्तात्मज्ञानोपयोगितया मोक्षसाधनत्वात् साक्षादनुपयोगादिति ज्ञेयम् । 59

॥ प्रमेयस्य इतरभिन्नत्वेन ज्ञानस्य प्रयोजनं मोक्ष इति व्याख्यानान्तरम् ॥

अथवा प्रमेयस्यान्यव्यावृत्ततया तत्वज्ञानलक्षणस्य प्रयोजनमाह— **तदेव तत्त्वतो ज्ञातव्यमिति ।** अन्यथा व्यावृत्ततयापि साक्षात्ज्ञानं निष्फलं स्यात् । तज्ज्ञानवतामपि मोक्षा[भाव]दर्शनादित्यत आह—**सर्वदेति ।** यावदीश्वरसाक्षात्कारो जायते तावदित्यर्थः । तदेव तत्त्वतो ज्ञातव्यमित्युक्तम् । तत्रैवकारस्य व्यावर्त्यं दर्शयति—**न कीटेति ।**

॥ प्रमेयविभागः ॥

प्रमेयं विभजते—**तच्चतुर्विधमिति ।** तद्यथा आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुः खापवर्गास्तु प्रमेयं द्वादशविधमिति सूत्रकारेण कीर्तितम् । तथापि तस्य चतुर्विधे अन्तर्भावान्न विरोधः । द्वादशविधस्य चतुर्विधत्वव्युत्पादनप्रयोजनं च ग्रन्थलाघवप्रयोजनम् उपायोपेयभावकथनम् । हेयं त्याज्यम् । **तस्य निर्वर्तकं** तस्योत्पादकं, **हानमात्यन्तिकम् ।** आत्यन्तिकस्त्यागः, **तस्योपायः ।** अत्यन्तिकनाशोपायः ।

॥ हेयस्वरूपम् ॥

हेयस्वरूपमाह—**तत्र हेयं दुःखमिति ।** नन्वतीतानागतयोर्दुःखयोरसिद्धस्वरूपत्वेन निराकर्तुमशक्यत्वाद्वर्तमानदुःखस्य भोगेन विना त्यागायोगात् कथं तदुपायकथनमित्याशङ्क्याह—**अनागतमिति ।** यद्यप्यनागतस्य स्वरूपासिद्धत्वेन नाशो न भवति । तथापि तदुत्पत्तिकारणसामग्रीविघटने प्रागभावपरिपालनं भवतीति न दोषः । हेयव्यतिरिक्तात्मसिद्धये हेयस्य चानेकप्रकारत्वेन त्यागसाधनेऽतिप्रयत्नो भवतीति धिया हेयं विभजते— **एकविंशतिप्रकारमिति ।**

॥ एकविंशतिदुः खनिरूपणम् ॥

ननु दुःखस्य जात्याकारेणैकत्वात् व्यक्त्याकारेणानन्त्यात् कथमेकविंशतिप्रकारत्वमित्याशङ्क्य दुःखशब्दस्य शरीरादिपरत्वमङ्गीकृत्यैकविंशति-

पृष्ठ

प्रकारमाह—**शरीरमित्यादिना** । **षडिन्द्रियाणीति** । घ्राणरसनचक्षु- 62
स्त्वक्श्रोत्रमनांसि । **षड्विषया इति** । गन्धरूपरसस्पर्शशब्देच्छादय इति ।
**षड्बुद्धय इति** । विषयाणां षड्विधत्वात् तद्बुद्धीनां षड्विधत्वमिति ।
विषयशब्देनोपात्तयोरपि सुखदुःखयोः सुखं दुःखं चेति पृथक्ग्रहणं प्राधान्येन
हेयत्वसिद्ध्यर्थम् ।

॥ शरीरादीनां दुःखत्वोपचारः ॥

ननु शरीरादीनां दुःखादत्यन्तभिन्नत्वात्कथं दुःखत्वमित्यत आह—
तत्रेति । **दुःखायतनत्वादिति** । यद्यपि] दुःखायतनत्वमात्मन एव,
तथापि शरीरोपाधिकात्मप्रदेशे दुःखोत्पादात् शरीरस्य दुःखायतनत्वमुच्यते ।
नच शरीरोपाधिकात्मप्रदेशे जायमानस्य दुःखस्य शरीरनिष्ठत्वं; ताटस्थ्येन
कार्यनिर्वाहकःउपाधिरित्युपाधेर्लक्षणात् । अन्यथा भेर्याद्युपाधिकाकाशप्रदेशे
जायमानस्य शब्दस्य भेर्यादि(नित्य)[वृत्ति]त्वं स्यात् ।

॥ इन्द्रियाणां दुःखत्वनिमित्तत्वम् ॥

तर्हि इन्द्रियादीनां दुःखायतनत्वासम्भवे कथं दुःखत्वमित्यत आह—
**इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावाद्दुःखमिति** । तर्ह्युभयविध-
निमित्तस्य दुःखे असम्भवाद्दुःखत्वं न स्यादित्यत आह—**दुःखं त्विति** ।
**बाधनापीडासन्तापात्मकं दुःखं मुख्यया वृत्त्या** दुःखशब्दार्हमित्यर्थः ।
**बाधनापीडासन्तापात्मकमिति** । बाधनापीडासन्तापजन्यमिति भावः ।
ननु सुखस्य दुःखत्वं व्याहतमित्यत आह—सुखमपीति । **दुःखानुषङ्गाद्**-
दुःखाविनाभावादित्यर्थः ।

॥ हेयनिर्वर्तकविवरणम् ॥

हेयं व्याख्याय निर्वर्तकं व्याचष्टे—**तस्येति** । निर्वर्तकस्य देशादेः 63
सुप्रसिद्धत्वात् प्रतिपादनानर्थक्यमित्याशङ्क्याह—**असाधारणं कारणमिति** ।
किं तदित्यत आह—**अविद्येति** । अविद्यादीनामपि(सुप)लक्षणमाह—
**सम्यगित्यादिना** । विपरीतज्ञानमविद्येत्युक्ते असम्यगात्मविद्भिः प्रदर्शितार्थ-

पृष्ठ

विपरीतज्ञानमविद्या स्यात् । तन्निरासार्थे—**सम्यगध्यात्मविद्भिरिति** पदम् । 63
सुषुप्तादावेवंविधा विद्या तत्वज्ञानं विना नश्यति । तथा च तत्त्वज्ञानानर्थक्या-
लक्षणम(पि)[वि]विवक्षितं स्यादिति शङ्कानिरासार्थं **सह वासनासंस्कारे-
णेति** ग्रहणम् । यद्यपि सुषुप्त्यादावपि अविद्या नश्यति, तथा समूला
न नश्यति, समूलाविद्यानाशो ज्ञानाद्भवतीत्यर्थः ।

॥ तृष्णानिरूपणम् ॥

तृष्णां लक्षयति—**पुनरिति** । प्रार्थना तृष्णेत्युक्ते मोक्षप्रार्थनापि तृष्णा स्यात् । तदर्थं भवपदम् । अतीते वर्तमाने च संस्कारे प्रार्थना न संभवतीत्यतः पुनरिति ग्रहणम् । धर्माधर्मौ लक्षयति—**सुखदुःखयोरिति** । सुखदुःखयोर्हेतूधर्माधर्मावित्युक्ते दोषादेरपि तथाभावः स्यात् । तदर्थ—**मसाधारणाविति** ।

॥ हाननिरूपणम् ॥

हानं व्याचष्टे—**दुःखविच्छेद** इति । आत्यन्तिकमिति पदस्यार्थ- 64
माह—**आत्यन्तिकमिति** । कदाचिद्दुःखसम्बद्धो नेत्यर्थः । इति ज्ञाना-
देकविंशातिप्रकारदुःखस्य नाशे पुनः कदाचिदपि दुःखसम्बन्धो न भवतीति
भावः । हानोपायमाह—**तस्येति** । आत्मविषयं तत्त्वज्ञानं प्राधान्येन 65
तस्योपाय इत्यर्थः । उक्तेऽर्थे परमेश्वरवाक्यं प्रमाणयति - **तथा चोक्तम्— आत्मा वा अरे द्रष्टव्य इति** । येनाहं नामृता स्यां किमहं तेन कुर्यामिति यदेव भगवान्वेद तदेव मे ब्रूहीति अमृतत्वस्य प्रकृतत्वादात्मज्ञानममृतत्व-साधनमिति गम्यते ।

॥ आत्मज्ञानोपायकथनम् ॥

केचितु श्रवणादेव साक्षात्कार इति । तन्निरासायोदाहरति-**श्रोतव्यः** श्रुतिवाक्येभ्य इति । श्रवणमननिदिध्यासनसंस्कारसचि(वोऽ)वादन्तः करणादीश्वरसाक्षात्कारो जायत इत्यर्थः । आत्मज्ञानस्य निःश्रेयससाधनत्वे श्रुतिमाह—**तरति शोकमात्मविदिति** । चकारात्—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ इति ।

इत्यादिका श्रुतिः सूचिता ।

॥ आत्मद्वैविध्यकथनम् ॥

आत्मैक्यज्ञानान्निःश्रेयसमिति मतनिरासायात्मनो द्वैविध्यमाह— 65
**स द्विविध इति ।** उक्तेऽर्थे संवादमाह–**तथा चोक्तम्**—**द्वे ब्रह्मणी इति ।** आदिशब्दात् 'द्वा सुपर्णा' इत्याद्या मन्त्राः संगृहीताः ।

॥ परात्मलक्षणम् ॥

परस्य लक्षणमाह —**तत्रेति ।** ऐश्वर्यविशिष्ट इत्येकं लक्षणम् । ऐश्वर्यं पालनं तद्विशिष्ट इत्यर्थः । अत्र तु सामान्योक्तमैश्वर्यं(न)राजप्रभृतिष्वतिव्यापकमिति **संसारधर्मैः ईषदप्यसंस्पृष्ट** इत्यपरम् । ईषदपीतिसदेत्यर्थः । अन्यथा-मुक्तानामपि संसारधर्मैरीषदप्यसंस्पृष्टत्वात् परमेश्वरत्वं स्यादिति । **पर** इति लक्ष्यनिर्देशः । परत्वनिर्वचनं भगवानिति । भगवानिति पदस्य निर्वचनं शास्त्रैः कृतम् । तथाहि—

उत्पत्तिं प्रळयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

महेश्वर इत्यपरम् असंकुचद्वृत्तिमहेश्वरवाच्यत्वं लक्षणमित्यर्थः । सर्वज्ञ इत्यपरम् । स्वभावसिद्धसर्वज्ञ इत्यर्थः । सकलजगद्विधातेत्यपरम् । सकलजगत्कर्तेत्यर्थः

॥ ईश्वरसद्भावे प्रमाणकथनम् ॥

एवंविधेश्वरस्य सद्भावे प्रमाणं नास्तीत्याशङ्कते—**स कथमिति ।** परिहरति—**अनुमानादागमाच्चेति ।** अनुमानं तावदाह–**विवादाध्यासितमिति ।** धर्मिविशेषा(ष्य)कथनात् सन्दिग्धाश्रयासिद्धत्वं हेतोरित्यवाच्यम् । उपलब्धिमत्पूर्वकत्वसाध्यविशेषोपादानाद्यत्राङ्कुरादावुपलब्धिमत्पूर्व- 66

पृष्ठ

कत्वे विवादः, तस्य पक्षत्वसिद्धेः । अभूत्वा भावित्वं भवतु, उपलब्धिमत्पूर्व-
कत्वं माभूत् । किं विपक्षे बाधकमिति नच वाच्यम् । उपलब्धिमत्पूर्व-
कत्वाभावे कार्यत्वं न स्यात् आकाशवदिति प्रतिकूलतर्कसद्भावात् । तदेत- 76
दाह—**सामान्यव्याप्तेरनवद्यत्वेनेति ।**

॥ कर्तृसिद्धावपि ईश्वरसिद्धावुपायकथनम् ॥

ननूपलब्धिमत्पूर्वत्वे सिद्धे कथमीश्वरसिद्धिरित्यत आह—**ततः सामान्यसिद्धाविति ।** पर्वतादिकार्यविशेषो जीवकर्तृको न भवति । तस्य तद्विषयज्ञानसामर्थ्याभावात् । तद्विषयज्ञानसामर्थ्ये वा जीवत्वं पारिभाषिकं स्यात् । तदेतदाह -- **परिशेषात्कार्यविशेषात् कर्तृविशेषसिद्धिरिति ।** सुन्दरतरचित्रपटादिकार्यात् असाधारणपुरुषनिष्पाद्यत्वाद्यथा कर्तृविशेषसिद्धिस्तद्वदित्यर्थः ।

॥ ईश्वरे आगमप्रमाणोदाहरणम् ॥

अनुमानमुक्त्वा आगमं प्रमाणयति—**एको रुद्र इति ।** एको रुद्रः 80
अत एव द्वितीयाय न तस्थे, द्वितीयाय स्थानं न करोति । द्वितीय ईश्वरः स्थानं न भवतीत्यर्थः । कथम्भूतः ? य ईशते । कान् ? इमांल्लोकान् । काभिः ? ईशनीभिः नियमशक्तिभिरिति । आदिशब्दात् "भीषास्माद्वातः पवते, भीषोदेति सूर्य" इत्याद्यागमग्रहणम् ।

॥ अपरात्मस्वरूपकथनम् ॥

अपरात्मनः स्वरूपमाह—**संसारफलोपभोक्तेति ।** भोगो नाम 82
सुखदुःखभोगित्वम् । तथा च भोक्तैव लक्षणम् । इतरदाकाङ्क्षितकीर्तनम् । स कथं ज्ञातव्य इत्यत आह—**स खलु बुद्ध्यादिकार्याणामिति ।**

अयमर्थः :— बुद्ध्यादिकं साश्रयं कार्यत्वात् कुम्भवदिति । कार्यत्वं भवतु साश्रयत्वं मा भूत् । किं विपक्षे बाधकमित्याशङ्क्य निराश्रयत्वे कार्यत्वं न स्यादित्याह—**नहि कार्यमनाधारमिति ।**

पृष्ठ

॥ इन्द्रियात्मवादनिरासः ॥

तर्हीन्द्रियाणामाश्रयत्वं भवतु । रूपादिज्ञाने चक्षुरादेः साधारणतयाऽन्वयव्यतिरेकोपलम्भात्तानि कैश्चिदात्मत्वेन निश्चि(हि)तानीति सिद्धसाधनं स्यादित्याशङ्क्याह—**न चेन्द्रियाणामिति** । तत्र हेतुमाह—**उपहतेन्द्रियविषयेति** । उपहतं नष्टं च तदिन्द्रियं च उपहतेन्द्रियं तस्य विषयः रूपादिः तद्विषयस्मरणाभावप्रसङ्गादित्यर्थः । 84

॥ मन आत्मवादनिराकरणम् ॥

ननु रूपादिस्मरणं मनोनिष्ठं भविष्यतीत्याशङ्क्याह—**अन्यानुभूतेऽर्थ इति** । इन्द्रियनाशे शरीरस्यानाशात् शरीरमनुभवति । शरीरमेव स्मरतीति तस्यैवात्मत्वमित्यत्राह—**अत एवेति** । यतोऽन्यानुभूते अन्यस्मरणादर्शनम् । अत एव बाल्यकौमारादिभेदभिन्नत्वादस्मरणं शरीरे इत्यर्थः ।

॥ बौद्धमतनिराकरणम् ॥

पूर्वबुद्ध्याऽनुभूतेऽर्थे उत्तरबुद्धेः स्मरणं भवति । पूर्वबुद्ध्युत्तरबुद्ध्योः कार्यकारणभावादिति बौद्धमतमतिदेशेन निराकरोति—**एतेनेति** । 86
पूर्वन्यायं स्मारयति—**अन्यत्वाविशेषादिति** । अन्यत्वस्यापरित्यागादित्यर्थः । अलक्तकभावितात् कार्पासबीजात् रक्तमेव बीजमनित्यत्वेऽपि जायते । एवं पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्ध्या स्मरणं स्यादिति शङ्कते—**कार्पास इति** । तद्दूषयति—**न, साधनदूषणासंभवादिति** । कथं साधनदूषणासंभव इत्यत आह—**अन्वयाद्यभावादिति** । पूर्वबुद्ध्यनुभूतोऽर्थ उत्तरबुद्ध्या स्मर्यते । कारणभावात् । यत्र कार्यकारणभावः, तत्र स्मृतिः कार्पासे रक्ततावदित्युक्ते अन्वयाभावात्, यत्र न स्मृतिः तत्र न कार्यकारणभाव इति व्यतिरेकाभावात् न स्वपक्षसाधनं, पूर्वबुद्ध्यननुभूतोऽर्थ उत्तरबुद्ध्या न स्मर्यते, अन्यत्वादित्यस्य हेतोरसिद्ध्याद्यनुद्भावनान्न परपक्षदूषणमित्यर्थः । कार्पासे निरन्वयविनाशमङ्गीकृत्य परिहारोऽभिहितः । इदानीं

पृष्ठ

सोऽपि नास्तीत्याह—**न च कार्पासेऽपीति** । यदि निरन्वयविनाशेऽपि रक्ततोत्पद्यते, तर्हि बीजान्तरेऽप्युत्पद्येत विशेषाभावात् । अतो भावित-(वापित्व)बीजावयवानामेवोत्तरत्रान्वयात् रक्ततोत्पद्यत इति । 93

॥ प्रपञ्चक्षणिकत्वनिराकरणम् ॥

यत्सत् तत् क्षणिकं, यथा जलधरः इत्युक्तानुमानेन क्षणिकत्वे सिद्धे निरन्वयविनाशः स्यादित्याशङ्कां अतिदेशेनापाकरोति—**एतेन क्षणिकत्वमिति** । (अनुभवाभावेऽ)अन्यानुभूतेऽर्थेऽन्यस्य स्मरणायोग इत्यनेन प्रतिकूलतर्केणेत्यर्थः । 94

॥ क्षणिकत्वानुमाने कालात्ययापदिष्टता ।

क्षणिकत्वानुमानस्य कालात्ययापदिष्टत्वं दूषणान्तरमाह—**प्रत्यभिज्ञेति** । प्रत्यभिज्ञानमिदं भ्रान्तं प्रत्यभिज्ञानत्वादिति शङ्कते—**प्रदीपादिष्विवेति** । किं स्फटिकप्रत्यभिज्ञाने बाधकदर्शनाद्भ्रान्तत्वं, किं वा प्रदीपप्रत्यभिज्ञाने बाधकदर्शनात् तद्दृष्टान्तेनास्यापि बाध्यत्वाद्भ्रान्तत्वं कल्प्यते । नाद्य :—असिद्धेः । न द्वितीयोऽतिप्रसङ्गादिति दूषयति—**न एकत्रेति** । विवादाध्यासितं क्षणिकं भावत्वात्, प्रदीपवदित्यनुमानं दृष्टान्ताभावेन दूषयति—**अनभ्युपगमाच्च** । निमेषस्य चतुर्थो भागः क्षणं, क्षण 95

मात्रेण च स्थायित्वं क्षणिकत्वं, न तत् प्रत्यक्षेण गृह्यते । तत्राप्यनुमानेन साधने दृष्टान्ताभाव इत्यर्थः । किंच प्रत्यभिज्ञानं भ्रान्तमिति वदता सादृश्यस्य भ्रान्तिबीजत्वमङ्गीक्रियते (प्रसङ्गात्क्रियते) तस्याक्षणिकत्वेऽपसिद्धान्तः । क्षणिकत्वे द्विनिरूप्यसादृश्यस्यैकस्मिन् क्षणे ग्रहणाभावाद्भ्रान्तिमूलाभाव इत्याह—**सादृश्यस्य क्षणिकत्व** इति । उपसंहरति—**तत्सिद्धमिति** । 113

**तदिति** । तस्मात्कारणाद्देहादौ चैतन्यासमवायाद्देहादिव्यतिरिक्त आत्मेत्येतत्सिद्धमिति । 114

॥ आत्मनः नित्यत्वं व्यापित्वं च ॥

देहादिव्यतिरिक्तत्वेऽप्यात्मनोऽहमि[हैवास्मि]सदन इति परिच्छिन्न-

पृष्ठ

त्वेन ज्ञायमानत्वात् नित्यत्वाभावे कस्य मोक्षप्राप्तिरित्याशङ्क्याह—**व्यापको नित्य इति** ।

॥ नित्यत्वे प्रमाणम् ॥

नित्यत्वे प्रमाणाभावं शङ्कते—**नित्यत्वं कुत इति** । हेतु- 114
माह—**अनादित्वात्** । भावत्वे सतीति(वि)शेषः । अन्यथा प्रागभावे (पृथगग्वादे) व्यभिचारः । कुतः अनादित्वमिति शङ्कते—**तदेवेति** । परिहरति—**जातमात्र इति** । जातमात्रे (जातो) जन्मान्तरानुभवसूचकं यत्स्मरणं, तस्य लिङ्गं हर्षभयशोकादि च । अस्योपलम्भादनादित्वमिति । अयमर्थः—स्तन्याभिलाषः इष्टसाधनस्मृतिजन्योऽभिलाषत्वात् संमतवदिति । सा च स्मृतिः संस्कारजन्या, स्मृतित्वात् संमतवत् । स च संस्कारोऽनुभवजन्यः संस्कारत्वात् सम्मतवत् । न चानुभवः इदानीन्तनो(न)भवतीति जन्मान्तरानुभवाश्रयत्वेनात्मनोऽनादित्वसिद्धिरिति । व्यापकत्वे हेतुमाह—
**धर्मादेरिति** । 116

॥ आत्मनो व्यादित्वे प्रमाणम् ॥

प्रयोगस्तु—वाय्वादिक्रिया धर्मजन्मा, कार्यत्वात् संमतवत् । धर्मादिः स्वाश्रयसंयोगापेक्षवाय्वादिक्रियाजनकः, क्रियाजनकगुणत्वात्, गुरुत्ववदिति । अनेन सर्वमूर्तसंयोगित्वं व्यापकत्वं सिद्धमिति । व्याकत्वे युक्त्यन्तरमाह—**आणिमाद्युपेतस्येति** । अणिमाद्युपेतस्य युगपदनेकशरीराधिष्ठातृत्वे प्रमाणमाह—**तथाचोक्तमित्यादिना** ।

॥ आत्मज्ञानस्य मोक्षे उपयोगप्रकारकथनम् ॥

ननु शिवदर्शनान्मोक्ष इति स्वसिद्धान्तेऽभिप्रेतं, तत्रापरात्मज्ञानं निष्प्रयोजनं कथं व्युत्पादितमित्याशंक्य सप्रयोजनमुपसंहरति—**तदेवमिति** । अयमर्थः—अपरात्मज्ञानं नाप्रयोजनं परलोकप्रवृत्त्युपयोगित्वात् । परलोकासंभवे कथं तत्प्रयोजनकप्रवृत्त्युपयोगितेत्याह—**परलोकसद्भावेनेति** । 130
श्रुत्यादिभिरिति शेषः । प्रयोजनान्तरमाह—**अधर्मक्षयहेतुत्वादिति** ।

पृष्ठ

॥ परमात्मज्ञानस्य मोक्षोपयोगप्रकारः ॥

परमात्मज्ञानस्य निःश्रेयससाधनत्वप्रकारमाह—**परमात्मज्ञानं** 131
**चेति ।** तस्य परमेश्वरस्योपासनमाराधनं तदङ्गत्वेनेति । तर्हि केन प्रकारे-
णाराधनं कर्तव्यमित्यपेक्षायामाह—**स चोपासनविधिरिति ।** आराधने 142
प्रकारो वक्ष्यमाण इत्यर्थः । तं दर्शयति—**क्लेशकर्मक्षयसमाधिलाभार्थ-
मनुष्ठानमिति ।** येनानुष्ठानेन कर्मक्षयः क्लेशक्षयश्च जायते परमेश्वरे च चित्तैकाग्रतारूपतासमाधिर्भवति, तदनुष्ठानं परमेश्वरोपासनविधिरित्यर्थः । उक्तेऽर्थे पातञ्जलसूत्रसंवादमाह—

**तथाचोक्तम्—तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः क्लेशतनूकरणार्थः समाधिलाभार्थश्चेति ।**

॥ पातञ्जलसूत्रविवरणम् ॥

सूत्रं व्याचष्टे—**तत्रेत्यादिना । आध्यात्मिकादिदुःखसहिष्णुत्वं तपः**—इत्युक्ते चोरादीनां तत्सहिष्णुत्वमपि तत्स्यात् । तदर्थमुन्मादकामादिव्यपोहार्थमिति पदम् । उन्मादः उन्मत्तता, कामोऽभिलाषः, आदिशब्देन द्वेषादिः, तस्य नाशायाध्यात्मिकादिदुःखसहिष्णुत्वं तप इति । आत्मा देहस्तत्स्थमधिकृत्य जायमानं रोगादिदुःखमाध्यात्मिकम् । (मनुधिभूतिकृत्य) भूतान्यधिकृत्य प्रवर्तमानमाधिभौतिकम्, दैवनिर्मितवृष्ट्यादिकमधिकृत्य जायमानमाधिदैविकम् । इत्येवं दुःखद्वयमादिशब्देन गृहीतम् ।

॥ स्वाध्यायस्वरूपकथनम् ॥

स्वाध्यायस्वरूपमाह—**प्रशान्तमन्त्रस्येति ।** चटकादिमन्त्राभ्यास- 144
परिहारार्थं **ईश्वरवाचिन** इति पदम, ईश्वरवाचिनोऽपि क्षुद्रप्रसिद्धिहेतोर्निरासाय **प्रशान्त**पदमिति । ईश्वरप्रणिधानस्य स्वरूपमाह—**परमेश्वरतत्वस्येति । प्रबन्धेन** नैरन्तर्येणानुचिन्तनं स्त्र्यादिपदार्थेऽप्यस्तीति तन्निरासार्थं **परमेश्वरतत्वस्येति** ग्रहणम् । अयं तपस्स्वाध्यायेश्वरप्राणिधानात्मकः क्रियाविशेषो योगसाधनत्वात् क्रियायोग इत्युच्यते । क्रियायोगस्य प्रयोजनं स्पष्टीकर्तुं क्लेशपदार्थमाह—**समासतो रागद्वेषमोहाः क्लेशा इति ।**

पृष्ठ

समासत इति—संक्षेपेण । विस्तरेण त्वविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशा इति । त्रिष्वितरयोरन्तर्भावादित्थम् । गौरवापाताद्वा(चिरा)विस्तनाभिधाने । क्लेशशब्दवाच्यं दुःखमेव, कथं रागादेः क्लेशतेत्याशङ्क्य मुख्यं क्लेशत्वमाह—**समाधीति** । 144

॥ योगाङ्गप्रदर्शनम् ॥

यथा क्रियायोगः क्लेशनाशे हेतुः, तथा योगाङ्गानीति मत्वा तानि दर्शयति—**तथेत्यादिना** । परमेश्वरसाक्षात्कारो योगः, तस्याङ्गानि साधनानीत्यर्थः । तेषु यमानां लक्षणमाह—**तत्र देशकालेति** । पुरुषस्य 145
शुद्धिरधर्ममदादिक्षयः, वृद्धिः धर्मोपचयः । देशः पुण्यदेशः, कालः प्रातरादिः, अवस्था तारुण्यादिकेति । नियमव्यवच्छेदार्थं देशकालावस्थाभिरनियता इति पदम् ।

॥ यमानां स्वरूपम् ॥

यमानां स्वरूपं दर्शयति—**अहिंसेति** । अविहितभूतद्रोहाकरणमहिंसा । अविहितस्त्रीभाषणाद्यकरणम् ब्रह्मचर्यम्, अविहितचौर्याद्यकरणमस्तेयम् । आदिशब्दादसत्याभाषणमप्रतिग्रहणम् च ।

॥ नियमलक्षणम् ॥

नियमानां लक्षणमाह—**देशेति** । क्रियाविशेषाः नियमा इत्युक्ते हिंसादयोऽपि भवन्ति, तदर्थं **पुण्यहेतव** इति । एवमप्युक्ते यमेऽतिव्याप्तिः, तद्व्यवच्छेदार्थं **देशकालावस्थापेक्षयेति** । नियमानां स्वरूपं दर्शयति—**देवताप्रदक्षिणसन्ध्योपासनजपादय इति** । आदिशब्देन देवतापूजादि ।

॥ आसननिरूपणम् ॥

आसनस्य लक्षणमाह—**योगेति** । करणबन्ध आसनमिति लक्षणम् । 146
योगबन्धः पादादिबन्धः, योगकर्मविरोधिक्लेशजयार्थमिति प्रयोजनकथनम् । आसनस्वरूपं दर्शयति—**पद्मकेति** ।

॥ प्राणायामस्वरूपम् ॥

प्राणायामस्य लक्षणमाह—**कौष्ठ्यस्येति** । वायोर्गतिविच्छेदः प्राणायाम इत्युक्ते बाह्यस्यापि वायोर्गतिविच्छेदः प्राणायामः स्यात् । तदर्थं **कौष्ठ्यस्येति** । कौष्ठ्यस्य वायोर्गतिमात्रं श्रेयः साधनं न भवतीति विच्छेद इति । अवान्तरप्रकारमाह—**रेचकपूरककुम्भकप्रकार इति** । आत्तस्य वायोर्बहिर्निस्सरणं रेचकः । बाह्यस्य देहे पूरणं पूरकः । पूरितस्य धारणं कुम्भक इति । ननु वायोर्निरोधे मनोनिरोधाद्रोगादिप्रसङ्ग इत्याशङ्क्याह—**शनैरिति** । 146

॥ प्रत्याहारलक्षणम् ॥

प्रत्याहारं लक्षयति—**समाधिप्रत्यनीकार्थेभ्यः इति** । अर्थेभ्यः समन्ताच्चेतसो व्यावर्तनं प्रत्याहार इत्युक्ते समाध्यविरोध्यर्थेभ्यो व्यावर्तनं प्रत्याहारः स्यात् । तदर्थं **प्रत्यनीकार्थेभ्य** इति । 147

॥ धारणास्वरूपम् ॥

धारणां लक्षयति—**चित्तस्येति** । देशसम्बन्धो धारणा इत्युक्ते घटस्य पटदेशे सम्बन्धो धारणा स्यात् । तदर्थं **चित्तस्येति** । गुरूपदिष्टदेशे सम्बन्धो धारणेत्यर्थः ।

॥ ध्यानलक्षणम् ॥

ध्यानं लक्षयति—**तत्रैकाग्रतेति** । तस्मिन् गुरूपदिष्टे परमात्मन्येकाग्रता तन्निष्ठता(निषण्णा) तत् ध्यानम् । एकाग्रता ध्यानमित्युक्ते अन्यत्रापि स्यात् । तदर्थं तत्रेति । समाधिं लक्षयति—**तदेवेति** । लयावस्थानिवृत्त्यर्थम**र्थनिर्भासमात्रमिति** पदम् । विक्षेपावस्थानिवृत्त्यर्थं **स्वरूपशून्यमिवेति** । उक्तं समाधिं व्याचष्टे—**ध्यानोत्कर्षादिति** । योगाङ्गानामुपसंहारव्याजेनाधिकारिणा सम्बन्धमाह—**एवमेतानीति** । एतानि योगाङ्गानि मुमुक्षुणाऽत्यन्ताभियोगेन सेवितव्यानीत्यन्वयः । किमाश्रित्य ? वैराग्यमाश्रित्य, केषु ? ब्रह्मादिस्थानेषु; कया ? अनेकप्रकारदुःखभावनया न केवलं वैराग्यं, महेश्वरे च परां भक्तिमाश्रित्येति ।

पृष्ठ

॥ योगानुष्ठानात् शिवदर्शनम् ततो मोक्षश्च ॥

एवमनुष्ठाने फलं दर्शयति—**तत इति ।** भगवति दृष्टेऽपि किं स्यादित्यत आह—**तं दृष्ट्वेति ।** मोक्षं प्राप्नोतीत्यर्थः । शिवसाक्षात्कारे मोक्षो 148
भवतीत्यत्र किं मानमित्यत आह—**तथाचोक्तम्—यदा चर्मवदाकाशमिति** श्रुतिं प्रमाणयति । **तमेव विदित्वातिमृत्युमेतीति,** तं परमेश्वरं ज्ञात्वा संसारमतिक्रम्य गच्छति इत्यर्थः । उपसंहरति— **तस्माच्छिवदर्शना** 154
**देव मोक्ष इति ।**

॥ मोक्षस्वरूपविवरणम् ॥

मोक्षे वादिविप्रतिपत्तेः सन्देहात् पृच्छति -**कःपुनरयं मोक्ष इति ।** 155
स्वमतसौन्दर्यज्ञापनायैकदेशिमतेन तावदुत्तरमाह —

॥ दुःखध्वंसो मोक्ष इति मतनिरूपणम् ॥

**एके तावद्वर्णयन्तीत्यादिना**—बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणामत्यन्तोच्छेदे सति प्रलयावस्थाकाशवदात्मनोऽवस्थानं मोक्ष इत्यर्थः । समस्तविशेषगुणोच्छेद इति मोक्षलक्षणम् । इदरस्वरूपसङ्कीर्तनम् ।

ननु मोक्षे सकलफलवर्ये कथं सुखदुःखोच्छेद इत्याक्षिपति—**कस्मादिति ।** सुखदुःखाविनाभावात् यदि मोक्षावस्थायां सुखं स्यात् तर्हि दुःखं स्यादित्यभिप्रेत्य परिहरति – **सुखदुःखयोरिति ।** यदि मोक्षे सुखं न स्यात् तर्हि विवेकिनां प्रवृत्तिस्तत्र न स्यात् इत्याशङ्क्य दुःखपरिहारार्थाऽपि प्रवृत्तिः सम्भवतीति परिहरति—**न च सुखायैवेति ।**

॥ उक्तमोक्षनिराकरणम् ॥

एकदेश्यभिहितमोक्षं दूषयति—**तन्न, मोहावस्थात्वादिति ।** 156
अस्मिन् मोक्षे विवेकिनां प्रवृत्तिरनुपपन्ना, मोहावस्थात्वात्, मूर्छाद्यवस्थावदिति प्रयोगः । ननु कण्टकादिदुःखपरिहारार्थं लोके प्रवृत्तिर्दृष्टा, तद्वदत्रापि स्यादित्याशङ्क्य दृष्टान्ते केवलदुःखपरिहारार्था प्रवृत्तिर्न भवतीति परिहरति—**दुःखे सतीति ।** मुक्तस्य सुखोपभोगे प्रमाणाभावमाशङ्कते—**कुत इति ।**

पृष्ठ

परिहरति—**आगमात्** । **उक्तं हीति** । यत्र यस्यामवस्थायां 158
आत्यन्तिकं निरतिशयं बुद्धिग्राह्यं शास्त्रार्थसंस्कृतनित्यबुद्धिग्राह्यं, अतीन्द्रियं इन्द्रियाग्राह्यम् । तं वै मोक्षं विजानीयाद्दुःष्प्रापमकृतात्मभिरिति । अष्टाङ्गयोगेनात्मा न संस्कृतो यैस्ते अकृतात्मानस्तैरित्यर्थः । श्रुतिं चाह—**विज्ञानमानन्दमिति चेति** । आनन्दपदं[1] दुःखाभावेनौपचारिकं स्यात् इत्याशङ्क्य
मुख्यार्थे बाधकाभावान्नोपचारस्य कल्पनेति परिहरति—**मुख्यार्थे इति** । 161

॥ संसारमोक्षयोरविशेषप्रसङ्गनिराकरणम् ॥

मुख्यार्थे बाधकमाशङ्कते—**सुखसंवेदनयोर्नित्यत्वादिति** । सुखसंवेदनयोर्नित्यत्वेऽपि विषयविषयिभावः संसारदशायां नास्ति । दुःखादिप्रतिबन्धकात् । मोक्षे [च तद्][2] भावाद्भवति । अतो नाविशेष इति परिहरति—**चक्षुर्घटयोरित्यादिना** । तस्य सम्बन्धस्य कृतकत्वेन कदाचिन्नाशप्रसङ्गेन पुनर्बन्धः स्यादिति शङ्कते—**तस्य सम्बन्धस्येति** । कृतकत्वहेतुः प्रध्वंसेनानैकान्तिक इति दूषयति—**नेति** (व) भावत्वे सतीति विशेषणात् नानैकान्तिकः इति शङ्कते—**वस्तुत्व इति** । दूषयति—**तस्येति** । तस्य विषयविषययिभावसंबन्धस्य वैशेषिकमते **द्रव्यादिष्वनन्तर्भूतत्वेन तदसिद्धत्वात्** । वस्तुत्वस्यासिद्धत्वादित्यर्थः ।

अथ द्रव्यादिष्वनन्तर्भावोऽसिद्धस्तत्राह—**अन्तर्भावे चेति** । समवा- 163
यादिभिः सह समवायादिज्ञानस्य विषयविषयिसम्बन्धो न स्यादित्यर्थः । विषय(विषयि)भूतेन समवायादिना यः ज्ञानस्य विषयविषयिभावः तदस्मिन्वर्तते इत्यात्माश्रयत्वं अन्यश्चेद्वर्तते, तर्ह्यनवस्थेति भावः ।

---

1. दुःखभावनया - मा.
2. भेदभावात् मा.

॥ विषयविषयिभावस्वरूपनिरूपणम् ॥

विषयविषयिभावो धर्मिद्वयनिष्ठो न भवति। किन्तु धर्मद्वयस्वरूप-
मेवातो न दोष इति शङ्कते—**अदृष्टादीति** । प्रकृतदोषपरिहारेऽपि 164
दोषान्तरापत्त्या दूषयति—**नेश्वरज्ञानस्येति** । जन्यजनकत्वाभावेऽपि
ज्ञानं स्वरूपेण विषयी अर्थश्च स्वरूपेण विषय इति न वाच्यम्। सर्वेषां
सर्वज्ञतापातादिति। विमतः सम्बन्धो विनाशी, कार्यसम्बन्धत्वात् संयोग-
वत् (विदित्वा) इत्याशङ्कामुपसंहारव्याजेन उपसंहरति—**तस्मात् कृत-** 165
**कत्वेऽपीति** ।

॥ कृतकोऽपि नित्य एवायं सम्बन्धः अष्टमः पदार्थ इति स्वसिद्धान्तः ॥

अयमर्थः—विमतः सम्बन्धोऽविनाशी विनाशकारणहीनत्वादिति।
विमतः सम्बन्धो विनाशकारणवान् प्रध्वंसान्यत्वे सति कार्यत्वात्, घटव-
दिति चेन्न। विनाशे कारणं, धर्मादिकं वाच्यम्, मोक्षे अभावात् त(स्या)-
स्मात् केन व्याघातः? शास्त्रार्थमुपसंहरति—**तस्मादिति** । दुःखनिवृत्तिः
मोक्ष इत्युक्ते संसारदशायामप्यापत्तिः तदर्थमा**त्यन्तिकीति** । एवमप्युक्ते
वैशेषिकमोक्षेऽतिव्याप्तिः । तदर्थं सुखेन विशिष्टेति। सुखस्यानित्यत्वे
तद्विशिष्टमोक्षस्यानित्यत्वम्। तथा च संवेद्यमानं सुखं पुरुषार्थो न भवति।
अथवा ज्ञानाभिन्नं सुखं मोक्ष इति वेदान्तिमतं स्यादिति शङ्कां निराचष्टे—
**नित्यं संवेद्यमानेन सुखेनेति** । 167

॥ गुरुनमस्कारश्लोकविवरणम् ॥

[1]ननु ग्रन्थकारेण(वेदव) नमस्कृतो न गुरुस्तदनुचितमाचरितं—

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति।

---

1. न्यायसारान्ते मङ्गलश्लोकः मुद्रितपुस्तकेषु वा कोशेषु वा कुत्रापि न दृश्यते। व्याख्यातृभिः अन्यैः कैश्चिदपि च न व्याख्यातः। अनेन व्याख्यानेन परं कश्चन श्लोकः आसी-दित्यूह्यते।

पृष्ठ

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ इति शास्त्रात्तदननुग्रहाद्ग्रन्थप्रचारविरहाशङ्कां चेतसि निधाय गुरुं स्तौति—**जिता इति ।** मदीयैर्गुरुभिः समुद्रा जिताः, किं कुर्वद्भिः कथम्भूतं अलभ्यं, कैः । त्रिदशैर्देवैः कथमलभ्यमित्यत आह—यद्दीयमानमिति न केवं ···· प्रवर्तते, मुक्तिं च करोतीत्यन्वयः । गुरुभिः समु(त्रा)द्रा जितास्तर्हि तव किमायातमित्यपेक्षायामाह—**आचार्यमिति ।** तन्न्यायरत्नमाचार्यमाराध्य मयापि लब्धं स्व[प]रोपकारिभूतम् । ननु कथं परेषां तेनोपकारं वदस्यत आह—**उत्सर्जितामिति ।** द्विजानां संसारमुक्त्यै, ग्रन्थगौरवभीत्या स्वपदैर्निबध्योत्सर्जितामित्यर्थः ।

**॥ इत्यागमपरिच्छेदे न्यायसारटिप्पणे**

**आनन्दानुभवाचार्यकृते न्यायकलानिधौ**

**तृतीयः परिच्छेदः**

**समाप्तः ॥**

# INDEX OF VERSES

—:*:—

# INDEX OF CITATIONS

—: * :—

# INDEX OF WORKS AND AUTHORS

CITED IN NYĀYAMUKTĀVALI

—:*:—

# ERRATA

| Page-line | अशुद्धम् | शुद्धम् |
| --- | --- | --- |
| 3—16 | सङ्कीतम् | सङ्कीर्तन |
| 4—13 | या श | या दृश |
| 19— 9 | आहोखित् | आहोस्वित् |
| 39—22 | श्वबू | श्वश्रू |
| 79—13 | तरणकिरण | तरणिकिरणि |
| 152— 7 | एकसङ्ख्या | एकसङ्ख्या |
| 157— 7 | स्वस्मेव | स्वस्मिन्नेव |
| 164—15 | सयोगः | संयोगः |
| 165—23 | कस्मिश्चित् | कस्मिंश्चित् |
| | साभग्न्याः | सामग्र्याः |
| 165— 5 | एस | एव |
| 165— 9 | क्रियाजन | क्रियाजन |
| 213—18 | पणदनं | पपादनम् |
| 300— 7 | इति महा-वल्यां | Omit this |
| 257— 4 | अश्रवणश्च | आश्रवणश्च |
| 281— 2 | शबगड | जबगड |
| 280— 3 | र्थनन्तरं | र्थान्तरं |
| 262— 1 | दित्यत्वादि धर्मः | नित्यत्वादिधर्मः |
| 245— 1 | प्रति तक्ष | प्रतिपक्ष |

## Part II

| Page-line | अशुद्धम् | शुद्धम् |
| --- | --- | --- |
| 73— 4 | पुरुविशे | पुरुषविशे |
| 86— 3 | दूषणसंभवात् | दूषणासंभवात् |
| „ 24 | „ | „ |
| 96— 7 | क्षणिकेष्व साधन | क्षणिकत्व साधन |
| 95— 2 | एकताबाध्य | एकत्र बाध्य |
| 97—21 | उक्तावन्यि | उक्तावन्य |
| 130— 1 | परलोकि | परलोक |
| 150—13 | पुष्यत्सु | पुष्यत्सु |

न्यायकलानिधौ

| Page-line | अशुद्धम् | शुद्धम् |
| --- | --- | --- |
| 25—23 | वीतरागेण करोति | न करोति |